

रोचते यदि मे सख्यं बाहुरेष प्रसारितः। गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥११॥
एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम्। संप्रहृष्टमना हस्तं पीडयामास पाणिना ॥१२॥

किष्किन्धाकाण्डे सर्गः ५

# RÂMÂYAN

OF

## VÂLMÎKI

WITH THREE COMMENTARIES CALLED

**TILAKA, SHIROMANI, and BHOOSHANA**

WITH NUMEROUS READINGS AND NOTES

## KISHKINDHAKANDA


EDITED BY

**SHASTRI SHRINIVASA KATTI MUDHOLKARA**

SANSKRITA ADHYAPAKA IN THE ELPHINSTONE COLLEGE,—BOMBAY.





PRINTED AND PUBLISHED BY MANILAL ITCHARAM DESAI AT

**THE GUJARATI PRINTING PRESS**

No. 8, SASSOON BUILDINGS-CIRCLE, FORT,

**BOMBAY.**



SHAKA 1837 A. D. 1915

**Price Rs. 2-8-0**

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

## रामायणतिलक-रामायणशिरोमणि-गोविन्दराजीयरामायण-भूषणेतिटीकात्रयोपेतम् ।

# किष्किन्धाकाण्डम् ।

एल्फिन्स्टन्कॉलेज्संज्ञकांग्लपाठशालाया संस्कृताध्यापकैर्मुधोळकरोपाह्व-

**कट्टी-श्रीनिवासशास्त्रिभिः**

संशोधितं पाठान्तरैः सनाथीकृतं स्थलविशेषेषु टिप्पणीभिः समलंकृतं च ।

मुम्बय्याम्

'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

शकः १८३७, ख्रिस्ताब्दः १९१५.

मूल्यं सार्धं रूप्यकद्वयम् ।

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

तिलक-रामायणशिरोमणि-गोविन्दराजीये(भूषणे)ति-
टीकात्रयसमलंकृतम्

# किष्किन्धाकाण्डम् ।

## प्रथमः सर्गः ।

पम्पामुपागतो रामो लक्ष्मणं सबोधयन्पम्पातीरारण्यरामणीयकदर्शनेनोद्दीपितानङ्गव्यथः सीतां संस्मरन्बहुविधं परिदेवयते । सचिवैः सममृष्यमूके निवसन्सुग्रीवः पम्पापरिसरचारिणं रामं ददर्श ।

**स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् । रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥ १ ॥**

### तिलकटीका ।

सुग्रीवस्यावनं तुर्ये इन्द्रसूनोश्च मर्दनम् ।
मारुतेर्मुद्रिकादानं कृतं येन स मे गतिः ॥

१ ] स विराधादिवधेन प्रसिद्धपराक्रमः पम्पादर्शनोद्दीपितकामो वा तां सुग्रीवाधिष्ठितर्ष्यमूकसमीपगां पुष्करिणीं पम्पानद्यन्तरगतं पम्पाख्यं मतङ्गाख्यं वा सरोविशेषम् । विललाप पर्यदेवयत् ॥ १ ॥

### रामायणशिरोमणिः ।

प्रणम्याद्यां गङ्गां निखिलभयभङ्गां सयमुनां
सवाचं वाल्मीकिं पवनतनयं लक्ष्मणयुतम् ।
गुरुं गीतं वन्दे मुनिगणनुतं रामचरणं
सदा सीतासेव्यं सकलसुखदातारमनिशम् ॥ १ ॥
यदीयां विष्ण्वाद्या निखिलभुवनाधीशपतयः
सदा संसेवन्ते मुनिगणयुतां तत्त्वनिवहाम् ।
गिरं तां गीर्वाणाः सकलकलया कालवलयाः
समीहन्ते नित्यं सकलभयहन्त्रीं सुमुददाम् ॥ २ ॥
कथादिर्यस्यास्ते त्रिभुवनजयी जह्नुतनया
यदीयां संप्रीतिं वितरति सदा सेवकजने ।
स रामस्तीर्थानां परममभिरामः सुमनसां
जयत्युच्चैः श्रीमान् जनकतनयासक्तहृदयः ॥ ३ ॥
अथारण्ये पूर्णां विवृतिमनुकल्प्याद्यकविना
कृते काव्ये कुर्मः सुजनसुखसंपत्तिविपुलाम् ।
सुकिष्किन्धाव्याख्यां परमरसिकोपास्यसफलां
त्रिवेणीतीरे तां दशरथसुतप्रीतिवितराम् ॥ ४ ॥
किष्किन्धाया विवरणो रामायणशिरोमणिः ।
सीतारामप्रियां प्रीतिं दद्यात्सर्वसुखावहाम् ॥ ५ ॥

रामकर्तृकपम्पाप्रदर्शनमारण्यकाण्डान्ते उक्त्वा तत्रस्थरामवृत्तान्तं वर्णयन् किष्किन्धाकाण्डमुपक्रमते—स तामित्यादिभिः । सः सर्ववेदप्रसिद्धः सौमित्रिसहितो रामः पद्मादिविशिष्टां पुष्करिणीं सरसीं तां पम्पां गत्वा संप्राप्य आकुलेन्द्रियः सीतासंयोगाभावप्रयुक्तव्याकुलेन्द्रियविशिष्टः सन् विललाप अनेकविधं जगाद ॥ १ ॥

### भूषणटीका ।

क्वाहं मन्दमतिर्गभीरमधुरं रामायणं तत्क्व च
व्याख्यानेऽस्य परिश्रमस्त्वहमहो हासास्पदं धीमताम् ।
को भारोऽत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपा-
कूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ १ ॥

तत्र दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे। स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥ २ ॥
सौमित्रे शोभते पम्पा वैदूर्यविमलोदका। फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥ ३ ॥
सौमित्रे पश्य पम्पायाः काननं शुभदर्शनम्। यत्र राजन्ति शैला वा द्रुमाः सशिखरा इव ॥ ४ ॥
मां तु शोकाभिसंतप्तमाधयः पीडयन्ति वै। भरतस्य च दुःखेन वैदेह्या हरणेन च ॥ ५ ॥
शोकार्तस्यापि मे पम्पा शोभते चित्रकानना। व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा ॥ ६ ॥

श्रीरामायणराजस्य समर्प्य मणिमेखलाम्।
सारोद्धारमिमं हारमर्पयिष्यामि संप्रति ॥ २ ॥

एवं पूर्वस्मिन् काण्डे दीनजनसंरक्षणरूपो धर्मोऽनुष्ठापितः। अथ किष्किन्धाकाण्डे मित्रसंरक्षणरूपो धर्मोऽनुष्ठाप्यते। तथा पूर्वस्मिन् काण्डे मोक्षप्रदत्वरूपं परतत्त्वचिह्नमुपदर्शितम्। अत्रासंख्येयकल्याणगुणाकरत्वं प्रतिपाद्यते। वस्तुतस्तु प्रथमे काण्डे श्रीमत्त्वं श्रीमत्पदोदीरितमुक्तम्। द्वितीये सर्वजनव्यामोहविषयत्वोक्त्या नारायणशब्दार्थः। तृतीये पञ्चवटीवासपर्यन्तवृत्तान्तेन मुनिजनकृतकैङ्कर्योक्त्या चतुर्थ्यर्थ उक्तः। खरादिवधवृत्तान्तेन नमःशब्दार्थ उक्तः। अथ मारीचदर्शनवृत्तान्तमारभ्य चेतनोज्जीवनप्रकारः प्रदर्श्यते। तत्र मारीचदर्शनवृत्तान्तेन भगवन्नित्यानुभवयोग्यस्य चेतनस्याप्राप्तविषयप्रावण्यम्। तेन रावणरूपमहामोहाक्रमणम्। जटायुव्यापारेण रावणानिवृत्तिकथनात् केवलकर्मणा संसारस्यानिवर्त्यत्वम्। लङ्काप्रवेशेन सांसारिकशरीरप्रवेशः। एकाक्ष्येककर्णीप्रभृतिव्यापारैस्तापत्रयाभिहतिः। रामान्वेषणेन भगवतश्चेतनोज्जीवनोपायचिन्तनं चोक्तमारण्यकाण्डे। अथाचार्यमुखेन चेतनस्य स्वविषयभक्त्युत्पादनकृते तदन्वेषणमुच्यते किष्किन्धाकाण्डे। तत्र प्रथमे सर्गे नित्यकैङ्कर्यपरनित्यसूरिदर्शनेन एतत्तुल्यभोगस्य प्राप्तोज्जीवनवर्गः किमिति न मां प्राप्त इति भगवतः क्लेशातिशयं दर्शयति। स एकाकी न रमेतेति श्रुतम्–स तामित्यादि। पद्मोत्पलझषैः कमलेन्दीवरमत्स्यैः आकुलां तां पम्पाख्यां पुष्करिणीं सरसीं गत्वा मुखनयनकटाक्षवत्याः कान्तायाः स्मारकत्वेन व्याकुलेन्द्रियः मोहं प्रसादं च प्राप्तः स रामः तादृशधैर्यविशिष्टोऽपि सौमित्रिसहितः आश्वासकान्तरङ्गपुरुषसहितोऽपि विललाप ॥ १ ॥

२ ] ति० टी०–तां पम्पां दृष्ट्वा तज्जन्यहर्षात्तस्येन्द्रियाणि चकम्पिरे उद्रिक्तविकाराणीवाभूवन्। कामवशमापन्न इव ॥ २ ॥

रा० टी०–विलापाकारमाह—तस्येति। तां पद्मादिविशिष्टां पम्पां दृष्ट्वैव विद्यमानस्य तस्य रामस्य हर्षात् सीतावयवसदृशपङ्कजादिदर्शनजनितप्रमोदात् इन्द्रियाणि चकम्पिरे चञ्चलतां प्रापुः अत एव कामवशं सीतादर्शनविषयकातीच्छाहेतुकतदन्वेषणजनितविविधचेष्टोपलक्षितशोभाविशेषम् आपन्नः प्राप्तः स रामः सौमित्रिमब्रवीत् ॥ २ ॥

गो० टी०–आकुलेन्द्रिय इत्येतद्विवृण्वन्नाह–तस्येति। दृष्ट्वा स्थितस्य तस्य इन्द्रियाणि हर्षाच्चकम्पिरे च्युतानीत्यर्थः ॥ २ ॥

३ ] ति० टी०–वैदूर्यवत्तत्प्रभावन्निर्मलोदका पम्पा तदाख्यसरोवरावच्छिन्ना पम्पानदी। तज्जलस्यौपाधिकश्यामत्वप्रतिभासाद्वैदूर्यप्रभासादृश्यम्। उपाधिमाह—फुल्लेति। द्रुमादिच्छायया तथा भानम् ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–सौमित्र इति। वैदूर्यविमलोदका वैदूर्यमणिसदृशविमलजलविशिष्टा फुल्लपद्मोत्पलवती विकसितानेकविधपद्मविशिष्टा विविधैः द्रुमैः शोभिता संयुक्ता इयं पम्पा शोभते ॥ ३ ॥

गो० टी०–प्रलापप्रकारमाह–सौमित्रे इत्यादिना। अनेन भक्तिद्रुतहृदयस्तत्सूचकमुखप्रसादः सपरिकरः पुरुष उच्यते॥३॥

४ ] ति० टी०–पम्पायाः काननं तत्परिसरवर्तिकाननम्। यत्र कानने सशिखरा इवोन्नताग्रशाखाभिः सशृङ्गा इव द्रुमाः शैला वा शैला इव राजन्ति ॥ ४ ॥

रा० टी०–सौमित्र इति। यत्र यस्यां पम्पायां सशिखराः शृङ्गविशिष्टा इव शैलाः पर्वता इव द्रुमा वृक्षाः राजन्ति तस्याः पम्पायाः शुभदर्शनं काननं वनं पश्य ॥ ४ ॥

गो० टी०–सौमित्रे इति। यत्र कानने सशिखरा इव उन्नताग्रशाखाभिः सशृङ्गा इव स्थिताः अत एव शैलाभाः। अनेन भगवद्दयारसोपजीविन आचार्याः तदुपजीविनोऽन्तेवासिनश्चोच्यन्ते। अत्र परत्र चापीति न्यायेन नित्यविभूतावपि शिष्यवत्त्वं सिद्धम् ॥ ४ ॥

५ ] ति० टी०–शोकाभिसंतप्तं राज्यभ्रंशसीतावियोगादिना शोकतप्तम् आधयः पीडयन्तीत्युक्तम्। तानाधीनाह—भरतस्येति। दुःखेन जटावल्कलादिदुःखस्मरणेन ॥ ५ ॥

रा० टी०–मामिति। भरतस्य दुःखेन मद्वियोगजनितभरतक्लेशस्मरणेन वैदेह्याः हरणेन च शोकाभितप्तं माम् आधयः मानसव्यथाः पीडयन्ति ॥ ५ ॥

गो० टी०–मां त्विति। भरतस्य दुःखेन नगराद् बहिर्व्रतोपवासादिनियमकृतदुःखेन वैदेह्याः हरणेन च पूर्वमेव संतप्तं मां माधवो वसन्तस्तु विशेषेण पीडयन्निव भवतीत्यर्थः। वस्तुतः पीडाभावाद्विवशब्दः। अनेन संसारतो जीवस्य दुःखेन दुःखितत्वमुक्तम् ॥ ५ ॥

६ ] ति० टी०–एवं शोकार्तस्यापि शोभते सुखावहा वर्तते इत्यर्थः ॥ ६ ॥

१ तस्येति गो. रा. पाठः। २ माधवः पीडयन्निवेति गो. पाठः।

नलिनैरपि संछन्ना ह्यत्यर्थशुभदर्शना । सर्पव्यालानुचरिता मृगद्विजसमाकुला ॥ ७ ॥
अधिकं प्रविभात्येतन्नीलपीतं तु शाद्वलम् । द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ॥ ८ ॥
पुष्पभारसमृद्धानि शिखराणि समन्ततः । लताभिः पुष्पिताग्राभिरुपगूढानि सर्वतः ॥ ९ ॥
सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः । गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः ॥ १० ॥
पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम् । सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव ॥ ११ ॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः । वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२ ॥
पतितैः पतमानैश्च पादपस्थैश्च मारुतः । कुसुमैः पश्य सौमित्रे क्रीडतीव समन्ततः ॥ १३ ॥

रा० टी०–शोकार्तस्येति । चित्रकानना अनेकविधवनविशिष्टा बहुविधैः पुष्पैः व्यवकीर्णा सर्वतो व्याप्ता नलिनैः कमलैः संछन्ना सर्पैः व्यालैः तज्जातिविशेषैश्च अनुचरिता तद्गमनशोभितेत्यर्थः, पम्पा शोकार्तस्यापि मे शोभते । एतेन सीतावयवसदृशकमलादिदर्शनेन सीतैव दृश्यते इति स्वसंभावना सूचिता । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०–सर्वेषु मद्भक्तेषु सुखं वसत्सु किमर्थमेते संसारे.ए: क्लिश्यन्तीत्यभिप्रायेणाह–शोकार्तस्येत्यादिना । शोकार्तस्य.ि मे मयि, शोकार्तेऽपि शोभते इत्यर्थेयं शोभेति भावः ॥ ६ ॥

७ ] ति० टी०–०.लाः श्वापदाः ॥ ७ ॥

गो० टी०–नलिनैरिति । अपिशब्देन कुमुदादिकं समुच्चीयते । व्यालोऽजगरः, सर्पव्याला एवानुचरा ते अस्य संजाता इति सर्पव्यालानुचरिता । सर्पव्यालानुचरितत्वेऽपि नलिनसंछन्नत्वादत्यर्थं शुभदर्शना भवतीत्यर्थः । अनेन ज्ञानिनो यः कश्चिद्दोषोऽपि न तस्य हेयतापादक इत्युक्तम् 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इति स्मृतेः ॥ ७ ॥

८ ] ति० टी०–नीलानुबद्धं पीतं नीलपीतं शाद्वलं हरितप्रदेशः । परिस्तोमैः कुथैरर्पितं युक्तम् 'परिस्तोमः कुथो द्वयोः' । 'द्रुमाणामुच्छ्रितैः' इति पाठे उच्छ्रितगन्धैः । यद्वा परिस्तोमैः परिस्तोमभूतैः राशीभूतैरिव स्थितैः पुष्पैरर्पितं युक्तम् ॥ ८ ॥

रा० टी०–अधिकमिति । नीलपीतम् अनेकविधानां धातूनां तृणानां च संसर्गात् उपलक्षणतया नीलत्वपीतत्वादिविशिष्टं शाद्वलं तृणविशिष्टस्थलं विविधैः अनेकप्रकारकैः परिस्तोमैः स्वस्वजात्या संघीभूतैः द्रुमाणां पुष्पैः अर्पितं संगुम्फमिव अधिकं प्रविभाति, यद्वा विविधैः पुष्पैरर्पितमत एव म. ःमेतत् शाद्वलमधिकमेव प्रविभाति । इव एवार्थे ॥ ८ ॥

गो० टी०–अधिकमिति । एतदिति परिसरप्रदेशमङ्गुल्या निर्दिशति । नीलपीतमिति मयूरकण्ठवर्णं इत्युच्यते । परिस्तोमैः कुथैः 'परिस्तोमः कुथो द्वयोः' इत्यमरः । अनेन नानागुरुमुखलब्धज्ञानतया भगवद्दासयोग्यः पुरुष उच्यते ॥ ८ ॥

९ ] ति० टी०–शिखराणि द्रुमाग्राणि उपगूढानि व्याप्तानि । सर्वतः सर्वावच्छेदेन ॥ ९ ॥

रा० टी०–पुष्पेति । सर्वतः चतुर्दिक्षु पुष्पभारसमृद्धानि पुष्पभारैः प्रपतितबहुपुष्पैः समृद्धानि समृद्धिमन्ति शिखराणि पुष्पिताग्राभिः पुष्पिताग्रभागविशिष्टाभिः शाखाभिः समन्ततः उपगूढानि आच्छन्नानि सन्तीति शेषः ॥ ९ ॥

गो० टी०–पुष्पेति । शिखराणि वृक्षाग्राणि समन्ततः सर्वत्र प्रदेशे आमूलाग्रम् उपगूढानि शोभन्त इति शेषः । अनेन गार्हस्थ्येऽपि निरवधिकबोधा उच्यन्ते ॥ ९ ॥

१०–११ ] ति० टी०–अयं कालो वसन्तः प्रचुरमन्मथः कामोद्दीपकः । अत एव गन्धवान्कामोद्दीपनेन गर्ववान् 'गन्धो गन्धक अमोदे लेशे संबन्धगर्वयोः' इति । सुरभिर्मासो मधुमासः । जातानि पुष्पफलानि यत्र तादृग्द्रुमः ॥ ११ ॥११॥

रा० टी०–सुखेति । हे सौमित्रे ! जातपुष्पफला द्रुमा यस्मिन् अत एव प्रचुरोऽधिको मन्मथः कामो यस्मात् सः सुरभिः सुगन्धविशिष्टः अत एव गन्धवान् कामोद्दीपनं करोम्येवेति गर्वविशिष्टः अयं मासः चैत्र इत्यर्थः, कालः वियुक्तानां चित्तविक्षेपहेतुरस्तीति शेषः । क्षेपणार्थककलधातुप्रकृतिकणिजन्तप्रकृतिकोऽच् 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः ॥ १० ॥

गो० टी०–सुखेति । अनेन जनकादिवदैश्वर्ये सत्यपि भगवज्ज्ञानरत उच्यते ॥ १० ॥

रा० टी०–पश्येति । पुष्पशालिनाम् अनेकविधपुष्पविशिष्टानाम् अत एव वर्षं तोयं सृजतां त्यजतां तोयमुचां मेघानामिव पुष्पाणि सृजतां वनानां रूपाणि पश्य ॥ ११ ॥

गो० टी०–पश्येति । तोयं सृजतां तोयमुचां रूपाणीवेति पूर्णोपमा । अनेन परोपदेशप्रवृत्ता आचार्या उच्यन्ते ॥ ११ ॥

१२–१३ ] ति० टी०–प्रस्तरेषु समशिलातलेषु ॥१२॥१३॥

रा० टी०–प्रस्तरेष्विति । वायुवेगप्रचलिताः विविधाः काननद्रुमाः वनवृक्षाः पुष्पैः रम्येषु प्रस्तरेषु शिलासु गां पृथ्वीमवकिरन्ति आच्छादयन्ति ॥ १२ ॥

गो० टी०–प्रस्तरेष्विति । प्रस्तरेषु पाषाणेषु गां

१ तोयमिति गो. पाठः । २ क्रीडन्निवेति गो. पाठः ।

विक्षिपन्विविधाः शाखा नगानां कुसुमोत्कटाः । मारुतश्चलितः स्थानैः षट्पदैरनुगीयते ॥ १४ ॥
मत्तकोकिलसंनादैर्नर्तयन्निव पादपान् । शैलकन्दरनिष्क्रान्तः प्रगीत इव चानिलः ॥ १५ ॥
तेन विक्षिपताऽत्यर्थं पवनेन समन्ततः । अमी संसक्तशाखाग्रा ग्रथिता इव पादपाः ॥ १६ ॥
स एव सुखसंस्पर्शो वाति चन्दनशीतलः । गन्धमभ्यवहन्पुण्यं श्रमापनयनोऽनिलः ॥ १७ ॥
अमी पवनविक्षिप्ता विनदन्तीव पादपाः । षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ १८ ॥
गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः । संसक्तशिखराः शैला विराजन्ति महाद्रुमैः ॥ १९ ॥

भूमिं प्रस्तरभूमिमित्यर्थः । अनेन कठिनहृदयेष्वपि दयावशात् ज्ञानवर्षिण उच्यन्ते ॥ १२ ॥

रा० टी०–पतितैरिति । पतितैः भूतकालिकपतनकर्तृभिः पतमानैः वर्तमानकालिकपतनकर्तृभिः पादपस्थैः वृक्षे स्थितैश्च कुसुमैः पुष्पैः क्रीडतीव मारुतो वायुः पश्य । पश्य मृगो धावतीतिवत्प्रयोगः ॥ १३ ॥

गो टी०–पतितैरिति । पतमानैः पतद्भिः । अनेन सर्वगुरुप्रेरणैकलीलः सर्वान्तर्याम्युच्यते ॥ १३ ॥

१४ ] ति टी०–कुसुमोत्कटा बहुकुसुमाः । 'कुसुमोत्कचाः' इति पाठे कुसुमैरुद्भूतकचाः संजातकेशा इवेत्यर्थं इति कतकः । तादृशीः शाखा विक्षिपंश्चालयन्मारुतश्चलितस्थानैस्तत्तत्कुसुमस्थानतश्चलितैः आहिताग्न्यादिरयम् । षट्पदैरनुगीयते । पुष्पं हरन्मारुतोऽनुसृत्य गीयत इत्यर्थः ॥ १४ ॥

रा० टी०–विक्षिपन्निति । कुसुमोत्कटाः विविधकुसुमेनोत्कटतां प्राप्ताः शाखाः विक्षिपन् चालयन् मारुतः चलितस्थानैः कुसुमेभ्यः कुसुमान्तराणि प्राप्तैः षट्पदैः भ्रमरैः अनुगीयते गानेन प्रशस्यते इवेत्यर्थः ॥ १४ ॥

गो० टी०–विक्षिपन्निति । कुसुमोत्कचा. कुसुमोत्कटाः विक्षिपन् कम्पयन् मारुतः चलितस्थानैः स्वस्थानकुसुमोच्चलितैः षट्पदैः अनुगीयते । अनेन 'ज्ञानी त्वात्मैव मे मतम्' इत्यात्मभूतज्ञानिनां भक्तिहृदये भगवति भुवमवतीर्णे इमान् लोकान् कामान्नीकामरूप्यनुसंचरन् एतत्साम गायन्नास्ते इत्युक्तरीत्या तमनुगच्छन् भक्तलोक उच्यते ॥ १४ ॥

१५ ] ति० टी०–मत्तेति । अत्र वायोर्गानकर्तृत्वेन नर्तकाचार्यसाधर्म्यमुच्यते । मत्तकोकिलकृतैः संनादैर्मृदङ्गादिध्वनिभिर्नर्तयन्निव नृत्यं शिक्षयन्निव । शैलकन्दरनिष्क्रान्तस्तन्निष्क्रमकाले ध्वनियुतत्वात्प्रगीतवानिव ॥ १५ ॥

रा० टी०–मत्तेति । पादपान् वृक्षान् नर्तयन्निव शैलकन्दरनिष्क्रान्तोऽनिलः मत्तकोकिलसंनादैः मत्तकोकिलानां शब्दैः प्रगीत इव आसीदिति शेषः ॥ १५ ॥

गो० टी०–मत्तेति । मत्तकोकिलसंनादैः मुखवाद्यस्थानीयैः पादपान्नर्तयन् शैलकन्दरनिष्क्रान्ततया तन्निष्क्रमणध्वनियुक्ततया प्रगीत इव गातुमुपक्रान्त इव "आदिकर्मणि क्तः कर्तरि च" इति कर्तरि निष्ठा । यद्वा पादपान् नर्तयन् नर्तयितुमिव "लक्षणहेत्वोः" इति शतृप्रत्ययः । मत्तकोकिलसंनादैः प्रगीतः प्रहृष्टगीतः सन् शैलकन्दरात् नैपथ्यस्थानान्निष्क्रान्तः । अनेन वेदप्रवर्तनमुखेन लोकस्य भक्त्युत्पादनाय वैकुण्ठादवतीर्णो भगवानित्युच्यते ॥ १५ ॥

१६ ] ति० टी०–तेन मन्दत्वादिगुणवता विक्षिपता वृक्षांश्चालयता ग्रथिताः कृतग्रथना इव ॥ १६ ॥

रा० टी०–तेनेति । अत्यर्थमत्यन्तं विक्षिपता संचालयता पवनेन संसक्तशाखाग्राः संसक्तानि परस्परं संमिलितानि शाखाग्राणि येषां ते अमी पादपाः ग्रथिता इव दृश्यन्ते इति शेषः ॥ १६ ॥

गो० टी०–तेनेति । विक्षिपता विविधं प्रेरयता पवनेन अत्यर्थं समन्ततः संसक्तशाखाग्रा अमी पादपाः ग्रथिताः मालावन्निबद्धा इव भान्ति अनेन भगवत्कृपया परस्परमनुरक्ता भागवता उच्यन्ते ॥ १६ ॥

१७ ] ति० टी०–गन्धमभ्यवहन्वातीति संबन्धः ॥ १७ ॥

रा० टी०–स इति । चन्दनशीतलः चन्दनस्पर्शजनितशैत्यविशिष्टः अत एव पुण्यं गन्धम् अभ्यवहन् प्रापयन् अत एव श्रमापनयनः श्रमनिवर्तकः अत एव सुखसंस्पर्शः सोऽनिलः वाति ॥ १७ ॥

गो० टी०–मन्दमारुतं वर्णयति–स एव इति । स्पार्शनप्रत्यक्षत्वादेष इत्युक्तिः । चन्दनशीतलः मलयगतचन्दनेन शीतलः दक्षिणमारुत इत्यर्थः, चन्दनवच्छीतलो वा । गन्धं पुष्पगन्धं पुण्यं रम्यम् । सुखसंस्पर्श इत्यनेन मान्द्यमुक्तम् । एवं शैत्यमान्द्यसौरभ्यवान् अत एव श्रमापनयनः । अनेन 'सर्वगन्धः सर्वरसः' इत्युक्तस्य भगवतो भक्तेषु सांनिध्यमुक्तम् १७

१८ ] ति० टी०–अनुकूजद्भिः षट्पदैर्विनदन्तीव ॥ १८ ॥

रा० टी०–अमी इति । मधुगन्धिषु मधुगन्धविशिष्टेषु वनेषु अनुकूजद्भिः षट्पदैः उपलक्षिताः पवनविक्षिप्ताः वायुसंचालितशाखावन्तः अमी पादपाः विनदन्ति गायन्तीव ॥ १८ ॥

गो० टी०–अमी इति । अनेन भगवदनुभवबलात्कारेण एतत्साम गायन्नास्त इत्युक्तसामगानरसिका उच्यन्ते ॥ १८ ॥

१९ ] ति० टी०–संसक्तशिखराः संपन्नशेखराः इवेत्यर्थ इति कतकः । गिरिप्रस्थेषूत्पन्नैर्द्रुमैः शैलाः संबद्धाग्रभागा इत्यर्थ इति तीर्थः ॥ १९ ॥

---

१ उत्कचा इति गो पाठः । २ एष इति गो. पाठः ।

पुष्पसंछन्नशिखरा मारुतोत्क्षेपचञ्चलाः । अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २० ॥
सुपुष्पितांस्तु पश्यैतान्कर्णिकारान्समन्ततः । हाटकप्रतिसंछन्नान्नरान्पीताम्बरानिव ॥ २१ ॥
अयं वसन्तः सौमित्रे नानाविहगनादितः । सीतया विप्रहीणस्य शोकसंदीपनो मम ॥ २२ ॥
मां हि शोकसमाक्रान्तं संतापयति मन्मथः । हृष्टं प्रवदमानश्च समाह्वयति कोकिलः ॥ २३ ॥
एष दात्यूहको हृष्टो रम्ये मां वननिर्झरे । प्रणदन्मन्मथाविष्टं शोचयिष्यति लक्ष्मण ॥ २४ ॥
श्रुत्वैतस्य पुरा शब्दमाश्रमस्था मम प्रिया । मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५ ॥

रा० टी०–गिरीति । गिरिप्रस्थेषु पर्वतपृष्ठेषु संजातैरिति शेषः, पुष्पवद्भिरत एव मनोरमैः महाद्रुमैः संसक्तशिखराः शैलाः विराजन्ति ॥ १९ ॥

गो० टी०–गिरीति । गिरिप्रस्थेषु निजप्रस्थेष्वित्यर्थः । तद्रूपैर्द्रुमैः संसक्तशिखराः परस्परसंश्लिष्टाग्राः शैला भान्ति महान्तः पुष्पराशय इव भान्तीत्यर्थः । अनेन सर्वेषां ज्ञानिनामेककण्ठत्वमुक्तम् ॥ १९ ॥

२० ] ति० टी०–पुष्पैः संछन्नाः शिखराः शाखाग्रभागा येषाम् । मारुतकृतोत्क्षेपणेन चालनेन चञ्चला मधुकररूप उत्तंसश्चूडा येषां ते । प्रगीता इव प्रारब्धनृत्यगीता इवेत्यर्थः ॥ २० ॥

रा० टी०–पुष्पेति । पुष्पैः संच्छन्नानि शिखराणि शाखाग्राणि येषां ते मारुतोत्क्षेपचञ्चलाः मधुकरा एव उत्तंसाः कर्णपूरा इव शिरःसंबन्धिनः उष्णीषा इव वा येषां ते अमी पादपाः प्रगीताः प्रकृष्टं गीतं गानं येषां ते प्रकृष्टगायका इत्यर्थः, लक्ष्यन्त इति शेषः 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽथ शेखरे' इति कोशः । उत्तरपक्षे उत्तंसशब्दोऽर्शआद्यजन्तः ॥ २० ॥

गो० टी०–पुष्पेति । मधुकरा एव उत्तंसाः शिखराणि येषां ते 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इत्यमरः । पुष्पावृतशिखोपरि नीलोष्णीषधारिणः सगीतिकं नृत्यन्त इव भान्तीत्यर्थः । अनेन भगवद्भक्त्या नर्तनपरा गम्यन्ते ॥ २० ॥

२१-२२ ] ति० टी०–कर्णिकारः पीतपुष्प इत्यनेन ज्ञायते ॥ २१ ॥ २२ ॥

रा० टी०–सुपुष्पितानिति । सुपुष्पितान् समन्ततः एतान् कर्णिकारान् पीतवर्णविशिष्टकर्णिकाराभिधतरून् हाटकप्रतिसंछन्नान् ऊर्ध्वभागे स्वर्णभूषणानिबिडान् पीताम्बरान् अधोभागे पीताम्बरधारिणः नरान् इव पश्य । एतेन तत्पुष्पाणां सुवर्णवर्णत्वं फलितम् ॥ २१ ॥

गो० टी०–पुष्पितेति । पुष्पिताग्रान् पुष्पितोपरिप्रदेशान् अत एव हाटकसंच्छन्नान् पीताम्बरांश्च नरानिव पश्य । पुष्पिताग्राः कर्णिकाराः सुवर्णवर्णाभरणवन्त इव भान्तीत्यर्थः । अनेन भगवत्सारूप्यं गता उच्यन्ते ॥ २१ ॥

रा० टी०–अयमिति । नानाविहगनादितः अयं वसन्तः सीतया विप्रहीनस्य वियुक्तस्य मम शोकसंदीपनोऽस्तीति शेषः ॥ २२ ॥

गो० टी०–एवं मद्भक्तेषु सर्वेषु मदनुभवतृप्तेषु बद्धा मां दुःखीकुर्वन्तीत्याह–अयमिति । इदानीं वसन्तवर्णनेन नगरनिर्गममारभ्य त्रयोदश वत्सरा गता इति गम्यते ॥ २२ ॥

२३ ] ति० टी०–हृष्टं यथा तथा प्रवदमानः कोकिलो मां समाह्वयति स्पर्धयेवेत्यर्थः ॥ २३ ॥

रा० टी०–मामिति । शोकसमाक्रान्तं मां मन्मथः मत्प्रियमदापहारित्वं संतापयति सीतापहर्तृविज्ञानमन्तरावस्थितिं न लभत इत्यर्थः, हृष्टं यथा भवति तथा प्रवदमानः कोकिलः समाह्वयति प्रियया संयोक्तुं प्रेरयतीवेत्यर्थः ॥ २३ ॥

गो० टी०–एवं वासन्तपुष्पसमृद्धिं वर्णयित्वा तथैवोद्दीपनभूतपक्षिरुतानाह–मामित्यादिना । पूर्वार्धं स्पष्टम् । मां शोकिनं मा हृष्टः कोकिलः प्रवदमानः प्रवदन् विजयघोषं कुर्वन् सन् आह्वयति । स्पर्धत इवेति गम्योत्प्रेक्षा । ज्ञानैकवत्सलं मामविज्ञाय केवलं कर्मठा मां स्पर्धन्त इति भावः ॥ २३ ॥

२४ ] ति० टी०–दात्यूहको जलकुक्कुटः हृष्टः कामावेशेन । वननिर्झरे वनमध्यगे प्रस्रवणे ॥ २४ ॥

रा० टी०–एष इति । हृष्ट एष दात्यूहको जलकुक्कुटः प्रणदन् सन् मन्मथाविष्टं मदापहारकत्वविशिष्टं मां शोचयिष्यति प्रियापहारिणो विशेषज्ञानाभावात् तन्मदापहरणस्याशक्यतया शोक एव तिष्ठतीत्यर्थः ॥ २४ ॥

गो० टी०–एष इति । नत्यूहकः कुक्कुटभेदः वननिर्झरे प्रणदन्नित्यन्वयः । अनेन केवलजपपरा उच्यन्ते । ज्ञानभक्त्योरेव भगवतः सद्यः प्रीत्यावहत्वात् साधनान्तरपरो नातिप्रिय इति रहस्यम् । 'ज्ञानी त्वात्मैव मे मतम् । भक्तिक्रीतो जनार्दनः' इत्यादिवचनात् ॥ २४ ॥

२५ ] ति० टी०–मामाहूय प्रदर्शनार्थमिति शेषः । परममतिशयेन ॥ २५ ॥

रा० टी०–श्रुत्वेति । मम प्रिया सीता पुरा पूर्वमेतस्य दात्यूहस्य शब्दं श्रुत्वा प्रमुदिता मामाहूय परममत्यन्तं प्रत्यनन्दत ॥ २५ ॥

१ हृष्ट इति गो. पाठः । २ मामिति गो. पाठः । ३ नत्यूहक इति गो. पाठः ।

एवं विचित्राः पतगा नानारावविराविणः । वृक्षगुल्मलताः पश्य संपतन्ति समन्ततः ॥ २६ ॥
विमिश्रा विहगाः पुंभिरात्मव्यूहाभिनन्दिताः । भृङ्गराजप्रमुदिताः सौमित्रे मधुरस्वराः ॥ २७ ॥
अस्याः कूले प्रमुदिताः सङ्घशः शकुनास्त्विह । दात्यूहरतिविक्रन्दैः पुंस्कोकिलरुतैरपि ॥ २८ ॥
स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपकाः । अशोकस्तबकाङ्गारः षट्पदस्वननिःस्वनः ॥ २९ ॥
मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति । नहि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् ३० ॥
अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम् । अयं हि रुचिरस्तस्याः कालो रुचिरकाननः ॥ ३१ ॥
कोकिलाकुलसीमान्तो दयिताया ममानघ । मन्मथायाससंभूतो वसन्तगुणवर्धितः ॥ ३२ ॥

गो० टी०–किमयं सर्वदेत्थं शोकावहः नेत्याह–श्रुत्वेति । श्रुत्वा प्रमुदिता प्रिया मामाहूय परमं प्रकामं प्रत्यनन्दत । नत्यूहरवाकर्णनोद्दीपिता मामाहूय विविधं क्रीडारसमनुभूतवती-त्यर्थः । अनन्यप्रयोजनस्य जपः प्रीत्यावह इति भावः ॥ २५ ॥

२६ ] ति० टी०–पतगाः कर्तारो वृक्षादीन्कर्मभूतान्संप-तन्ति पश्य ॥ २६ ॥

रा० टी०–एवमिति । विचित्रा अनेकविधरागादिवि-शिष्टाः नानारावविराविणः अनेकविधशब्दवन्तः पतगाः पक्षिणः वृक्षगुल्मलताः समन्ततः संपतन्ति त्वं पश्य ॥ २६ ॥

गो० टी०–एवमिति । स्पष्टम् ॥ २६ ॥

२७ ] ति० टी०–पुंभिर्विहगैर्विमिश्राः संबद्धाः आत्म-व्यूहेषु स्वस्वजातिसमूहेषु अभिनन्दिताः प्राप्तानन्दाः भृङ्ग-राजप्रमुदिताः प्रमुदितभृङ्गराजा इव मधुरस्वनाः अस्याः कूले सन्तीति शेषः । यद्वा भृङ्गराजसंबन्धेन प्रमुदिता मधुरस्वरा भृङ्ग्यश्चात्र सन्तीति शेषः ॥ २७ ॥

रा० टी०–विमिश्रा इति । पुंभिः पक्षिभिः विमिश्रा आत्मव्यूहाभिनन्दिताः आत्मव्यूहैः स्वस्वज्ञातिसमूहैः अभिन-न्दिताः परस्परं प्रापितानन्दाः भृङ्गराजप्रमुदिताः भृङ्गराज-शब्देन च प्राप्तप्रमोदाः मधुरस्वराः विहगाः स्त्रीत्वविशिष्टप-क्षिणः सन्तीति शेषः ॥ २७ ॥

गो० टी०–विमिश्रा इति । विहगाः स्त्रियः पुंभिः पुंविहगैः विमिश्राः आश्लिष्टाः सत्यः आत्मव्यूहाभिनन्दिताः अनुरूपेण कान्तेन सहितास्सीत्येवं सजातीयैः श्लाघिताः । भृङ्गराजप्रमुदिताः भृङ्गराजझङ्कारश्रवणसंतुष्टाः तदुद्दीपनेन मधुरस्वराः रम्यरतिकूजिताः वर्तन्ते । एतान् पश्येति शेषः । अनेनाचार्यपरतन्त्राः सामगानपरा उच्यन्ते ॥ २७ ॥

२८ ] ति० टी०–तथास्या इह कूले शकुनाश्च प्रमुदिताः सन्ति । दात्यूहानां रतिसंबन्धिनो विक्रन्दा दात्यूहरति-विक्रन्दास्तैः ॥ २८ ॥

रा० टी०–अस्या इति । अस्या पम्पायास्तीरे विद्यमानाः संघशः शकुनाः पक्षिणः दात्यूहरतिविक्रन्दैर्दात्यूहानां प्रीत्युत्पाद-कशब्दविशेषैः पुंस्कोकिलरुतैरपि प्रमुदिताः सन्तीति शेषः॥२८॥

गो० टी०–नत्यूहेति । विक्रन्दैः शब्दैः स्वनन्ति स्वन-न्तीव । अनेन नानाविधभगवन्नामकीर्तनपराः श्लाघ्यन्ते ॥२८॥

२९-३० ] ति० टी०–अशोकस्तबकरूपा अङ्गारा यस्य । अग्नेः सशब्दत्वादाह—षट्पदस्वन एव निःस्वनो यस्य । पल्लवरूपा अर्चिषो यस्य ॥ २९ ॥ ३० ॥

रा० टी०–स्वनन्तीति । ममानङ्गप्रदीपकाः इमे पाद-पाः स्वनन्ति स्वनविशिष्टबहुपक्षिमत्तया ते अपि स्वनन्तीवे-त्यर्थः । अर्धं पृथक्–अशोकेति । अशोकस्तबक एव अङ्गारो यस्य सः षट्पदस्वन एव निःस्वनः शब्दो यस्मिन् सः पल्लव-ताम्रः अरुणपल्लव एव अर्चिर्ज्वाला यस्मिन् स वसन्ताग्निर्मां प्रधक्ष्यति दहतीवेत्यर्थः । अर्धद्वयमेकान्वयि ॥ २९ ॥

गो० टी०–अशोकेति । षट्पदस्वननिःस्वन इति । अग्नेः निःस्वनवत्त्वं ज्वलनावस्थायां दृष्टम् । अनेन स्वप्रेम-जनकभक्तियुक्ता उच्यन्ते ॥ २९ ॥

रा० टी०–नहीति । सूक्ष्मपक्ष्मे अक्षिणी यस्यास्तां सीतामपश्यतो मे जीविते प्राणपोषणे प्रयोजनं नास्ति ॥३०॥

गो० टी०–नहीति । एतेष्वेवं मत्प्रेमपरतन्त्रेषु संसारि-चेतनो दुःखमनुभवतीत्येतन्ममासह्यमिति भावः ॥ ३० ॥

३१ ] ति० टी०–अयं हीति । अयं कालो वसन्तका-लस्तस्या मम दयिताया रुचिर इष्टः ॥ ३१ ॥

रा० टी०–अयमिति । रुचिराणि काननानि यस्मिन् सः कोकिलैः आकुलो व्याप्तः सीमान्तः वनमर्यादापर्यन्तं यस्मिन् सः अयं कालः वसन्तः मम प्रियायाश्च रुचिरः प्रिय इत्यर्थः । एतेन यदीदानीं सा इह स्यात् तदातीव प्रमोदप्रवृद्धिः भवेदिति सूचितम् ॥ ३१ ॥

गो० टी०–अयमिति । अयं कालो मम दयितायाः रुचिरो हि प्रियतरो हीत्यर्थः । यदीहेदानीं दयिता स्यात्तदा-ऽतीव तुष्येदिति भावः। कोकिलाकुलसीमान्तः कोकिलरवाकुल-चतुःसीम इत्यर्थः ॥ ३१ ॥

३२ ] ति० टी०–कोकिलैराकुलः सीम्नां वनसीम्नामन्तो म-ध्यप्रदेशो येन सः। मन्मथायासेन कामपीडया संभूतो जनितः व-सन्तगुणैर्मन्दानिलपुष्पितकाननत्वादिरूपैर्वर्धितः प्रज्वलितः ३२

रा० टी०–मन्मथेति । मन्मथायाससंभूतः मन्मथेन

१ अर्धमेतत् गो. नास्ति । २ नत्यूहेति गो. पाठः । ३ प्रदीपना इति गो. पाठः । ४ सुकेशमिति रा. पाठः । ५ दयित इति गो. पाठः

अयं मां धक्ष्यति क्षिप्रं शोकाग्निर्न चिरादिव । अपश्यतस्तां वनितां पश्यतो रुचिरान्द्रुमान्[1] ॥ ३३ ॥
ममायमात्मप्रभवो भूयस्त्वमुपयास्यति । अदृश्यमाना वैदेही शोकं वर्धयतीह मे[2] ॥ ३४ ॥
दृश्यमानो वसन्तश्च स्वेदसंसर्गदूषकः । मां हि[3] सा मृगशावाक्षी चिन्ताशोकबलात्कृतम् ३५ ॥
संतापयति सौमित्रे क्रूरश्चैत्रवनानिलः[4] । अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः[5] ॥ ३६ ॥
स्वैः पक्षैः पवनोद्धूतैर्गवाक्षैः स्फाटिकैरिव । शिखिनीभिः परिवृतास्त एते मदमूर्छिताः ॥ ३७ ॥
मन्मथाभिपरीतस्य मम मन्मथवर्धनाः । पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति ॥ ३८ ॥

स्वनिष्ठमदमथनसामर्थ्यं निरोधेन यः आयासः तन्निरोधजनितश्रमः तस्मात्संभूतः वसन्तगुणवर्धितः अयं शोकाग्निः न चिरात् शीघ्रमेव क्षिप्रं सीताप्राप्तौ अतित्वराविशिष्टं मां धक्ष्यतीव ॥ ३२ ॥

गो० टी०–मन्मथेति । मन्मथायाससंभूतः मदनपीडाजनितः वसन्तस्य गुणेन रामणीयकेन वर्धितः क्षिप्रं धक्ष्यति नतु चिरात् । इवशब्दो वाक्यालंकारे ॥ ३२ ॥

३३ ] ति० टी०–न चिरादिवेदानीमेव । 'अचिरादिव' इति पाठान्तरम् ॥ ३३ ॥

रा० टी०–अपश्यत इति । वनितां तां सीतामपश्यतः रुचिरद्रुमान्पश्यतः मम आत्मप्रभवः मनोजनितः खिन्नेत्यर्थः, भूयस्त्वमधिकत्वमुपयास्यति प्राप्नोतीत्यर्थः ॥ ३३ ॥

गो० टी०–अपश्यत इति । आत्मप्रभवः मन्मथः । भूयस्त्वं प्रवृद्धत्वम् ॥ ३३ ॥

३४ ] ति० टी०–आत्मप्रभवः कामः । भूयस्त्वं वैपुल्यम् ॥ ३४ ॥

रा० टी०–अदृश्यमानेति । अदृश्यमाना दृष्टिपथमप्राप्ता वैदेही स्वेदसंसर्गदूषकः मलयसंबन्धिपवनद्वारा घर्मादिजनितप्रस्वेदसंबन्धनिवर्तकः दृश्यमानः वसन्तश्च इह अस्मिन्वने मे शोकं वर्धयति ॥ ३४ ॥

गो० टी०–अदृश्यमानेति । दृश्यमानः पुष्पादिद्वारा स्वेदसंसर्गदूषकः मलयमारुतद्वारा स्वेदसंबन्धनिवर्तकः । रतिश्रान्तिहर इत्यर्थः ॥ ३४ ॥

३५ ] ति० टी०–स्वेदसंसर्गः कामविकारजस्तेन दूषयति मलिनीकरोति तादृशः । यद्वा तं दूषयति नाशयति मलयानिलसंबन्धात्तादृशः । चिन्ताशोकाभ्यां बलात्कृतं बलात्कृतपीडम् ॥ ३५ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–मामिति । मृगशावाक्षी मृगबालनयनसदृशनयनविशिष्टा सा सीता वियुक्तानां दुःखप्रदत्वेन क्रौर्यविशिष्टः चैत्रवनानिलश्च चिन्ताशोकबलात्कृतं चिन्ताशोकबलहेतुकविविधकृतिमन्तं मां संतापयति अविवक्षितकर्मकत्वेनाकर्मकत्वात्कर्तरि निष्ठा ॥ ३५ ॥

गो० टी०–मां हीति । क्रूरः मन्मथोद्दीपकत्वात् । अत्र चकारो द्रष्टव्यः ॥ ३५ ॥

३६ ] ति० टी०–चैत्रसंबन्धी वनानिलः ॥ ३६ ॥

रा० टी०–अमी इति । स्फाटिकैः स्वच्छत्वेन स्फटिकनिर्मितैः गवाक्षैरिव पवनोद्धूतैः पवनेन कम्पितैः स्वैः पक्षैः इतस्ततो नृत्यन्तोऽमी मयूराः शोभन्ते ॥ ३६ ॥

गो० टी०–अमी इति । ततस्ततः तत्र तत्र प्रदेशे पवनोद्धूतैः अत एव स्पष्टदृष्टगुञ्जनालजालत्वात् स्फाटिकैर्गवाक्षैरिव स्थितैः । यद्वा स्फाटिकैः स्फटिकप्रधानैः चन्द्रार्कपरम्परायास्तत्तुल्यत्वादिति भावः । अनेन भगवत्कृपाप्रवर्तितविविधकर्मपरा उच्यन्ते ॥ ३६ ॥

३७ ] ति० टी०–शिखिनीभिर्मयूरीभिः । मदमूर्च्छिता मत्ताः ॥ ३७ ॥

रा० टी०–शिखिनीभिरिति । शिखिनीभिः परिवृताः मदमूर्छिताः मदेन हर्षेण मूर्छिताः प्रवृद्धा नृत्यन्त एते मयूराः मन्मथाभिपरीतस्य गर्वापहारित्वधर्मविशिष्टस्य मम मन्मथवर्धनाः गर्वापहारित्वप्रवर्धकाः सीतासंयोगार्थं तदपहारिगर्वध्वंसाय प्रेरयन्त इवेत्यर्थः ॥ ३७ ॥

गो० टी०–शिखिनीभिरिति । शिखिनीभिः मयूरस्त्रीभिः परिवृताः अत एव मदमूर्च्छिताः मदव्याप्ताः त एते पूर्वश्लोकोक्ता एते शिखिनः मन्मथाभिपरीतस्य पूर्वमेव मन्मथाभिव्याप्तस्य मम पुनर्मन्मथवर्धनाः अन्यरतिदर्शनस्य उद्दीपनत्वादिति भावः । सशिष्यभक्तदर्शनं मे सर्वत्र भक्त्युत्पादनव्यामोहं जनयतीत्यर्थः ॥ ३७ ॥

३८ ] ति० टी०–अभिपरीतस्य व्याप्तस्य ॥ ३८ ॥

रा० टी०–पश्येति । मन्मथार्ता एषा शिखिनी नृत्यन्तं भर्तारं मयूरमुपनृत्यति त्वं पश्य ॥ ३८ ॥

गो० टी०–पश्येत्यादि श्लोकद्वयमेकान्वयम् । नृत्यन्तं स्वयं लीलारसप्रवृत्तं भर्तारं प्रति मन्मथार्ता रत्यर्थं तमाकाङ्क्षमाणा शिखिनी उपनृत्यति । तामेव रामां कान्तां मनसा उपधावति समीपमागन्तुमिच्छतीत्यर्थः । उपधावनं च रत्यर्थमिति द्योतयति–वितत्येति । रुतैः रतिकूजितैः उपलक्षितः । पक्षविस्तारणं च रत्यर्थव्यापारः । उपहसन्निव प्रसन्नमुख इत्यर्थः । यद्वा कान्ताविरहिणं मामुपहसन्निवेत्युत्प्रेक्षा । अत्र शिष्याचार्ययोरन्योन्यप्रावण्यमुच्यते ॥ ३८ ॥ ३९ ॥

१ रुचिरद्रुमानिति गो. पाठः । २ वर्धयते ममेति गो. पाठः । ३ अथेति गो. पाठः । ४ चैत्रो वनानिल इति गो. पाठः । ५ इतस्तत इति रा. पाठः ।

शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुनि । तामेव मनसा रामां मयूरोऽप्यनुधावति ॥ ३९ ॥
वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव । मयूरस्य वने नूनं रक्षसा न हृता प्रिया ॥ ४० ॥
तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया । मम त्वयं विना वासः पुष्पमासे सुदुःसहः ॥ ४१ ॥
पश्य लक्ष्मण संरागस्तिर्यग्योनिगतेष्वपि । अधुना शिखिनी कामाद्भर्तारमभिवर्तते ॥ ४२ ॥
ममाप्येवं विशालाक्षी जानकी जातसंभ्रमा । मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥ ४३ ॥
पश्य लक्ष्मण पुष्पाणि निष्फलानि भवन्ति मे । पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४ ॥
रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया । निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५ ॥
नंदन्ति कामं शकुना मुदिताः सङ्घशः कलम् । आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६ ॥

३९ ] ति० टी०—अनुधावति नृत्यप्रसङ्गेनाग्रे गताम् ॥३९॥

रा० टी०—तामिति । रुचिरौ पक्षौ वितत्य प्रसार्य रुतैः शब्दैस्तां रामामुपहसन्निव मयूरोऽपि मनसा अनुधावति रामासमीपं गन्तुमिच्छति ॥ ३९ ॥

४० ] ति० टी०—रुतैरुपहसन्निव मामिति शेषः ॥ ४० ॥

रा० टी०—मयूरस्येति । यस्मात् मयूरस्य वने प्रिया सीता न हृता तस्मात् कान्तया सह नृत्यति मयूर इति शेषः । एतेन सीतापहरणदर्शने मयूराणामपि शोकातिशयः स्यादिति सूचितम् ॥ ४० ॥

गो० टी०—मयूरस्येति । वने उपभोगयोग्ये देशे रावणः सीतां हृतवान् नतु नगर इति हार्दो भावः । न हृता अस्य भाग्यवशादिति भावः । तस्मादित्यादि । एतादृशरम्यदेशकालेषु धन्याः कान्ताभिः क्रीडन्तीति भावः ॥४०॥

४१ ] ति० टी०—यतो न हृता तस्मान्नृत्यतीत्यर्थः । विना सीतां विनाऽयं मम पुष्पमासे चैत्रे वासः सुदुःसहः अतिपीडाजनकत्वात् ॥ ४१ ॥

रा० टी०—ममेति । पुष्पमासे चैत्रे इत्यर्थः, विना सीतयेति शेषः, ममायं वासस्तु सुदुःसहः । अर्थं पृथक् ॥ ४१ ॥

गो० टी०—अमुमेवाशयमुद्घाटयति—मम त्विति । विना सीतयेति शेषः ॥ ४१ ॥

४२-४३ ] ति० टी०—नन्वेतावान्रागस्तवानुचितस्तत्राह—पश्येति । संरागोऽतिशयितो रागः ॥ ४२ ॥ ४३ ॥

रा० टी०—पश्येति । तिर्यग्योनिगतेष्वपि संरागः जातः अधुना वसन्तसमये शिखिनी कामात् भर्तारं मयूरं यथाऽभिवर्तते एवं तथैव विशालाक्षी जानकी यदि अपहृता न भवेत् तदा मदनेन अतिहर्षेणोपलक्षिता जातसंभ्रमा मत्कर्मकादरविशिष्टा सती ममाप्यभिवर्तेत मत्समीपमेव तिष्ठेदित्यर्थः, इति त्वं पश्य जानीहि । श्लोकद्वयमेकान्वयि ॥ ४२ ॥ ४३ ॥

गो० टी०—पश्येति । सम्यग्रागः संरागः तं कान्तानुरागमित्यर्थः । तिर्यग्योनिगतेषु तिर्यग्योनिजातेषु । यदेषेति । लोके स्त्रियं पुमाननुवर्तते न तु स्त्री पुरुषम् अतोऽत्रास्याः कामः । अहो वसन्तवैभव इति भावः ॥ ४२ ॥

गो० टी०—ममाप्येवमिति । विशालाक्षी मदवलोकनविस्फारितेक्षणा जातसंभ्रमा जातत्वरा यदि नापहृता भवेत् तदा मामेवाभिवर्तेत । अत्र चापलं नाम संचारीभावः ॥ ४३ ॥

४४ ] ति० टी०—अन्यानि पुष्पाणि मे सीतावियोगाद्भोगसाधनत्वाभावान्निष्फलानि भवन्ति ॥ ४४ ॥

रा० टी०—पश्येति । हे लक्ष्मण ! शिशिरात्यये वसन्ते इत्यर्थः, पुष्पभारसमृद्धानां वनानां पुष्पाणि मम निष्फलानि प्रियया विना निष्प्रयोजनकानि भवन्ति ॥ ४४ ॥

गो० टी०—पश्येति । शिशिरात्यये वसन्ते पुष्पभारसमृद्धानां पुष्पाणि अमितानि पुष्पाणीत्यर्थः । संसारिदुःखं पश्यतो मे ज्ञानिलाभोऽकिंचित्कर इव भातीत्यर्थः ॥ ४४ ॥

४५] ति० टी०—उक्तस्यैव विवरणं पुष्पाणीत्यादि । अतिश्रिया रुचिराणीत्यन्वयः । मधुकरोत्करैर्मधुकरसमूहैः ॥ ४५ ॥

रा० टी०—ग्राहकान्तराणामप्यभावात्पुष्पाणां वैयर्थ्यमेवेति बोधयन्नाह—रुचिराणीति । अतिश्रियाऽतिशोभया रुचिराण्यपि पादपानां पुष्पाणि निष्फलानि निष्प्रयोजनकानि अत एव मधुकरोत्करैः मधुकरसमूहैः समं महीं यान्ति ॥४५॥

गो० टी०—उक्तमर्थं विशिष्य दर्शयति—रुचिराण्यपीति । अतिश्रिया अत्यन्तकान्त्या रुचिराण्यपि अस्मदनुप्रयोजनान्निष्फलानि भवन्ति । निर्भरमकरन्दभरिततया मधुकरसमूहैः समं महीं यान्ति ॥ ४५ ॥

४६ ] ति० टी०—आह्वयन्त इव नदन्तीत्यन्वयः ॥ ४६ ॥

रा० टी०—नदन्तीति । शकुनाः पक्षिणः अन्योन्यम् आह्वयन्त इव मम कामोन्मादकराः सीतासंयोगविषयकोत्कटेच्छयोन्मादप्रवर्तकाः सन्तः कामं यथेच्छं कलं मनोहरं नदन्ति॥४६॥

गो० टी०—वदन्तीति । शकुनाः मम कामोन्मादकराः सन्तः अन्योन्यमाह्वयन्त इव कलं मधुरं रावं वदन्ति शब्दं कुर्वन्तीत्यर्थः । मम कामोन्मादकरणार्थं संघीभवितुमन्योन्यमाह्वयन्त इवेत्युत्प्रेक्षा । अनेन स्वदयोत्तम्भकज्ञानिव्यापार उक्तः ॥ ४६ ॥

१ संरागमिति गो. पाठः । २ यदेषेति गो. पाठः । ३ वदन्ति रावं मुदिताः शकुना इति गो. पाठः ।

वसन्तो यदि तत्रापि यत्र मे वसति प्रिया । नूनं परवशा सीता सापि शोचत्यहं यथा ॥ ४७ ॥
नूनं न तु वसन्तस्तं देशं स्पृशति यत्र सा । कथं ह्यसितपद्माक्षी वर्तयेत्सा मया विना ॥ ४८ ॥
अथवा वर्तते तत्र वसन्तो यत्र मे प्रिया । किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९ ॥
श्यामा पद्मपलाशाक्षी मृदुभा[2]षा च मे प्रिया । नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम् ॥ ५० ॥
दृढं हि हृदये बुद्धिर्मम संपरिवर्तते । नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१ ॥
मयि भावो [3]हि वैदेह्यास्तत्त्वतो विनिवेशितः । ममापि भावः सीतायां सर्वथा विनिवेशितः ॥ ५२ ॥
एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः । तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३ ॥

४७ ] ति० टी०—यदि सीतावासदेशेऽपि वसन्तोऽस्ति तदा मद्वदेव सापि शोचति सामग्र्याः समत्वात् ॥ ४७ ॥

रा० टी०—वसन्त इति । यत्र मे प्रिया सीता परवशा सती वसति तत्रापि यदि वसन्तः वसन्तहेतुकमयूरादिशब्दश्रवणं पुष्पोत्करादिदर्शनं च भवेदिति शेषः, उपवनादौ तिष्ठेदित्यर्थः, तदा अहमिव शोचति शोचेत् ॥ ४७ ॥

गो० टी०—वसन्त इति । शोचति शोचेत् ॥ ४७ ॥

४८ ] ति० टी०—यद्यपि तत्र वसन्तो न भवेत्कदाचित्. तथापि मया विना सा कथं वर्तयेज्जीवेत् । मद्विरह एव तन्नाशे पर्याप्त इति भावः ॥ ४८ ॥

रा० टी०—संभावनान्तरमाह—नूनमिति । यत्र सा सीता अस्ति तं देशं वसन्तः वसन्तचिह्नं नैव स्पृशति सा नैव जानातीत्यर्थः, नूनं निश्चितमेतत् । तत्र हेतुमाह—असितपद्माक्षी अरुणकमलनयना सा सीता मया विना कथं वर्तयेत् नैव तिष्ठेदित्यर्थः । एतेन मद्वियोगसमये वसन्तचिह्नदर्शनादेव मद्वियोगमसहमाना सती द्रुतं साकेतं गच्छेदिति तात्पर्यम् ॥ ४८ ॥

गो०टी०—गूढदेशप्रापणेन तद्देशे वसन्तप्रसङ्गाभावान्न तस्याः शोकप्रसक्तिरित्याशङ्क्य वसन्ताभावेऽपि मां विना न जीवितं धारयिष्यतीत्याह—नूनमिति ॥ ४८ ॥

४९ ] ति० टी०—अथवा वर्तते तत्र वसन्तस्तथापि परैः शत्रुभिः पीडिता यतः सा, अतस्तस्या वसन्तः किं करिष्यति । परकृतपीडासत्त्वे कामपीडानवकाशादिति भाव इति प्राञ्चः । परे तु तत्र वसन्तो नास्त्येव । तत्सत्त्वे मया विना सा कथं तत्र तिष्ठेत् । आगतैव स्यादित्यर्थः । तदेव सूचयन्नाह—अथवेति । परनिर्भर्त्सनवशान्नायातीत्याशय इत्याहुः ॥ ४९ ॥

रा० टी०—संभावनान्तरमाह—अथवेति । अथवा यत्र मे प्रिया तत्र वसन्तः वर्तते वर्तेत सा तं जानीयादित्यर्थः । परंतु परैः शत्रुभिः निर्भर्त्सिता सती सा सीता किं करिष्यति । एतेन रावणस्य सामर्थ्यातिशयो व्यञ्जितः ॥ ४९ ॥

गो० टी०—वसन्तप्राप्तिमङ्गीकृत्याह—अथ वेति ॥ ४९ ॥

५० ] ति० टी०—सर्वथा तस्याः कामपीडया नाश एव प्राप्त इत्याह—श्यामेति ॥ ५० ॥

रा० टी०—श्यामेति । श्यामा नित्यं षोडशवार्षिकीत्वेन प्रतीयमाना पद्मपलाशाक्षी कमलपत्रनयना मे प्रिया वसन्तमासाद्य प्राप्य जीवितं स्वशरीरपालनं परित्यक्ष्यति नूनं निश्चितमेतत् ॥ ५० ॥

गो० टी०—श्यामेति । श्यामा यौवनमध्यस्था ॥ ५० ॥

५१ ] ति० टी०—तदेव विवृणोति—दृढमिति । साध्वी सीता मद्विरहं गता संप्राप्ता, वसन्तसत्त्वेऽसत्त्वे वा सर्वथा वर्तयितुं जीवितुं नालं न समर्था ॥ ५१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—दृढमिति । मद्विरहं वियोगं गता प्राप्ता सीता अलं वर्तयितुं शोभनतया स्थातुं न शक्ष्यतीति शेषः, हि इति बुद्धिः मम हृदये दृढं संपरिवर्तते ॥ ५१ ॥

गो० टी०—उक्तमर्थं सहेतुकं द्रढयति—दृढं हीति । अस्यान्ते इतिकरणं द्रष्टव्यम् । वर्तयितुं जीवितुं नालं न समर्था ॥ ५१ ॥

५२ ] ति० टी०—एवंनिश्चयकारणं परस्परानुरागसाम्यं दर्शयति—मयि भाव इति ॥ ५२ ॥

रा० टी०—तत्र हेतुं बोधयन्नाह—मयीति । वैदेह्याः भावः प्रीतिः मयि तत्त्वतो विनिवेशितः संस्थापितः, ममापि भावः सीतायां सर्वथा तत्त्वतो विनिवेशितः । एतेन द्वयोः प्रीत्योरचाल्यत्वं व्यञ्जितम् ॥ ५२ ॥

गो० टी०—अत्र हेतुमाह—मयीति । भावोऽनुरागः तत्त्वतः एकतरत्वतया सर्वथा । न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वेत्युक्तप्रकारेण । अनेन स्वस्य जीवसंबन्धः स्वाभाविक उक्तः ॥ ५२ ॥

५३ ] ति० टी०—हिमावहोऽपि पावकप्रतिमोऽत्युष्ण इति विरोधाभासः ॥ ५३ ॥

रा० टी०—एष इति । पुष्पवहः सुगन्धवानित्यर्थः, हिमावहः शैत्यं प्राप्तः अत एव सुखस्पर्शः एष वायुस्तां सीतां चिन्तयतो मम पावकप्रतिमः वह्निसदृशः, प्रतीयते इति शेषः ॥ ५३ ॥

गो० टी०—एवं वसन्तोद्दीपनतामुक्त्वा मलयमारुतोद्दी-

१ अयमिति गो. पाठः । २ पूर्वाऽभिभाषिणीति गो. पाठः । ३ त्विति गो. पाठः ।

सदा सुखमहं मन्ये यं पुरा सह सीतया । मारुतः स विना सीतां शोकसंजननो मम ॥ ५४ ॥
तां विनाऽथ विहङ्गोऽसौ पक्षी प्रणदितस्तदा । वायसः पादपगतः प्रहृष्टमभिकूजति ॥ ५५ ॥
एष वै तत्र वैदेह्या विहगः प्रतिहारकः । पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति॥ ५६ ॥
पश्य लक्ष्मण संनादं वने मदविवर्धनम् । पुष्पिताग्रेषु वृक्षेषु द्विजानामवकूजताम् ॥ ५७ ॥
विक्षिप्तां पवनेनैतामसौ तिलकमञ्जरीम् । षट्पदः सहसाभ्येति मदोद्धूतामिव प्रियाम्॥ ५८ ॥
कामिनामयमत्यन्तमशोकः शोकवर्धनः । स्तवकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः ॥ ५९ ॥

पनतामाह—एष इत्यादिना । पुष्पवहः पुष्पगन्धवहः । अनेन सौरभ्यमुक्तम् । सुखस्पर्श इत्यनेन मान्द्यम् । हिमावहः हिमवत्त्वावह इति शैत्यम् । 'तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः' इत्यमरः । तां विचिन्तयतः विरहिणः इत्यर्थः । पावकप्रतिमः संतापकर इत्यर्थः ॥ ५३ ॥

५४ ] ति० टी०—यं वायुं सीतया सह स्थितिकाले सदा सुखं मन्ये इत्यन्वयः ॥ ५४ ॥

रा० टी०—सदेति । यं मारुतं पुरा सीतया सहाऽहं सदा सुखं मन्ये स मारुतः सीतां विना मम शोकसंजननः ॥ ५४ ॥

गो० टी०—उक्तमर्थं विवृणोति—सदेति । आभ्यां संसारिण्यकिंचित्करी स्वदया स्वस्याप्यसह्येत्युच्यते ॥ ५४ ॥

५५–५६] ति० टी०—तदा सीतासंयोगकालेऽसौ वायसः पक्षी विहङ्ग आकाशगः सन्प्रणदितस्तेन च तद्वियोगं सूचितवानित्याशयः । अथ तां विना तद्वियोगावस्थायां पादपगतः प्रहृष्टमभिकूजति तेन तत्संयोगं सूचयतीत्याशयः । तदेव विवृणोति—विहगः सन्प्रतिहारकः । अपहारक इत्यर्थः । तु इदानीं तु स पक्षी तस्याः समीपं मां नेष्यतीत्यर्थः । कतकस्तु—'पक्षी प्रणदितस्तथा' इति, 'विहगः प्रीतिकारकः' इति च प्राचीनः पाठः । असौ पक्षी तथाऽतिसुखं यथा भवति तथा विहगः सन्नाकाशगः प्रणदितो नादं कृतवान् । अस्य पूर्वमिति शेषः । तत्संयोगकाले इत्यर्थः । अथेदानीं तां विना तद्वियोगकाले । अन्यथेति शेषः । दुःखनाद इत्यर्थः । अथ कंचिच्छकुनमाह—पादपगतो वायसः प्रहृष्टं यथा कूजति । एष विहग एवंनादविशिष्टो विहगो वायसो यत्र सीता तिष्ठति तत्र तस्याः प्रीतीकारकोऽतिपीडाभावसूचकः । मां तु मां च तस्याः समीपं तत्समीपगमनद्वारमुपनेष्यत्युपस्थापयिष्यतीत्यर्थं इत्याह ॥ ५५ ॥ ५६ ॥

रा० टी०—तामिति । योऽसौ वायसः काकः पक्षी विहङ्गः आकाशं प्राप्तः सन् तदा सीतासंयोगकाले प्रणदितः वियोगसूचकप्रणादं कृतवान् स वायसस्तां विना सीतावियोगसमय इत्यर्थः, पादपगतः वृक्षं प्राप्तः सन् प्रहृष्टमभिकूजति संयोगसूचकनादं करोतीत्यर्थः । एतेन सीतासंयोगो ध्रुवं भविष्यतीति सूचितम् ॥ ५५ ॥

गो० टी०—मध्ये यत्किंचिदाश्वसनं दृष्टमनुवदति द्वाभ्याम्—तामिति । तदा प्रथमदर्शनकाले सीताया वियोगपूर्वकाले वा वायसः पक्षी विहङ्गः आकाशगतः सन् यः प्रणदितः परुषं वाशितवान् स इदानीं तां विना तद्विरहावस्थायां पादपगतः सन् प्रहृष्टं यथा तथा अभिनर्दति । पूर्वमाकाशगतः सन् परुषनादेन तद्विश्लेषं सूचितवान् इदानीं पादपगतः सन् प्रहृष्टनादेनास्याः संश्लेषं सूचयतीत्यर्थः ॥ ५५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—एष इति । विहगः आकाशगः सन् य एष वायसः प्रतिहारकः वियोगसूचकशब्दवत्त्वेन अपहरणहेतुः स एव पक्षी विशालाक्ष्याः सीतायाः समीपं मामुपनेष्यति प्रापणसूचकसुशब्दवत्त्वेन हेतुना प्रापयिष्यति ॥ ५६ ॥

गो० टी०—एतदेव विवृणोति—एष इति । तत्र तदानीं प्रतिहारकः वियोजकः सन् । आभ्यां यादृच्छिकप्रासङ्गिकसुकृतदर्शनमुक्तम् ॥ ५६ ॥

५७ ] ति० टी०—पुनः कामपीडां नाटयति—पश्येति । शृण्वित्यर्थः । अवकूजतां शब्दं कुर्वताम् ॥ ५७ ॥

रा० टी०—पश्येति । वने पुष्पिताग्रेषु वृक्षेषु अवकूजतां द्विजानां पक्षिणां मदविवर्धनं संनादं पश्य जानीहि ॥ ५७ ॥

गो० टी०—पश्येति । अनेन परमपदे ज्ञानप्रधाने सामगायिनां नित्यमुक्तानां स्थितिरुक्ता ॥ ५७ ॥

५८–५९] ति० टी०—मदोद्धूतां मदेन स्खलन्तीम् ५८॥५९

रा० टी०—विक्षिप्तामिति । पवनेन विक्षिप्तां संचालितां तिलकमञ्जरीम् असौ षट्पदो भ्रमरः मदोद्धूतां मदहेतुकप्रकम्पविशिष्टां सहसाऽभ्येति प्राप्नोति । एतेन प्रियया संयोक्तुं मामपि प्रेरयतीवेति सूचितम् ॥ ५८ ॥

गो० टी०—विक्षिप्तामिति । पवनेन विक्षिप्तां कम्पितां प्रियामिव स्थितां तिलकमञ्जरीं षट्पदः भृङ्गोऽभ्येति । अनेन भगवद्दयाविषयभूतस्योत्तरक्षणे द्वयप्राप्तिर्भवितेत्युच्यते ॥ ५८ ॥

रा० टी०—कामिनामिति । अयमशोकः कामिनां प्रियाविषयकेच्छावतां वियुक्तानामित्यर्थः, अत्यन्तं शोकवर्धनः अत एव पवनोत्क्षिप्तैः स्तबकैः मां तर्जयन्निव स्थितः ॥ ५९ ॥

गो० टी०—कामिनामिति । कामिनां विरहिणां शोकवर्धनः दुःखवर्धनस्वभावः स्वभावतो दुष्टप्रकृतिरित्यर्थः ।

१ शोकं वर्धयते इति गो. पाठः । २ य इति गो. पाठः । ३ नर्दतीति गो. पाठः । ४ उपेति गो. पाठः ।

अमी लक्ष्मण दृश्यन्ते चूताः कुसुमशालिनः । विभ्रमोत्सिक्तमनसः साङ्गरागा नरा इव ॥ ६० ॥
सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु । किंनरा नरशार्दूल विचरन्ति [1]ततस्ततः ॥ ६१ ॥
इमानि शुभगन्धीनि पश्य लक्ष्मण सर्वशः । नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ ६२ ॥
एषा प्रसन्नसलिला पद्मनीलोत्पलायुता । हंसकारण्डवाकीर्णा पम्पा सौगन्धिकायुता ॥ ६३ ॥
जले तरुणसूर्याभैः षट्पदाहत[2]केसरैः । पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ६४ ॥
चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा । मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ॥ ६५ ॥
पवना[3]हतवेगाभिरूर्मिभिर्विमलेऽम्भसि । पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ ६६ ॥
पद्मपत्रविशालाक्षीं सततं [4]प्रियपङ्कजाम् । अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ॥ ६७ ॥
अहो कामस्य वामत्वं यो गतामपि दुर्लभाम् । स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ॥ ६८ ॥

अशोकः पवनोत्क्षिप्तैः वायुना पत्राणां बहिश्चालितैः स्तबकैः मां तर्जयन्निव स्थितः । त्वत्संहारार्थमिमे तप्तबाणाः पञ्चबाणेन स्थापिता इति भीषयन्निव स्थित इत्युत्प्रेक्षा । संसारिणमनुजीवयन्तं मां ज्ञानिनो लज्जितं कुर्वन्तीत्यर्थः ॥ ५९ ॥

६०] ति० टी०–विभ्रमोत्सिक्तमनसः शृङ्गारोद्रिक्तचित्ताः ६०

रा० टी०–अमी इति । हे लक्ष्मण ! कुसुमशालिनः प्रशस्तकुसुमाश्रयाः अमी चूताः विभ्रमोत्सिक्तमनसः विभ्रमेण श्रृङ्गारविषयकविचारविशेषेण उत्सिक्तं युक्तं मनो येषां ते अत एव साङ्गरागाः अङ्गरागसहिताः नरा इव दृश्यन्ते ॥ ६० ॥

गो० टी०–पुनरपि ज्ञानिनां समृद्धिं दर्शयन्वर्णयति–अमी इत्यादिना । कुसुमशालिनः अत एव साङ्गरागाः विभ्रमोत्सिक्तमनसः विलासगर्वितमनसः रागिण इति यावत् । नरा इव भान्ति ॥ ६० ॥

६१ ] ति० टी०–विचरन्ति किंनरीभिः सहेति शेषः । स्वनायिकासहितनायकान्तरदर्शनमुद्दीपनम् ॥ ६१ ॥

रा० टी०–सौमित्र इति । चित्रासु पम्पायाः वनराजिषु वनपङ्क्तिषु किंनराः यतस्ततो विचरन्तीति पश्य ॥ ६१ ॥

गो० टी०–सौमित्र इति । स्पष्टम् ॥ ६१ ॥

६२ ] ति० टी०–नलिनान्यत्र रक्तकमलानि ॥ ६२ ॥

रा० टी०–इमानीति । जले तरुणसूर्यवत् उदयकालिकसूर्य इव इमानि नलिनानि अरुणकमलानि प्रकाशन्ते । अभूतोपमैषा ॥ ६२ ॥

गो० टी०–इमानीति । नलिनानि रक्तोत्पलानि जले तरुणसूर्यवत् प्रतितरङ्गं प्रतिफलितबालसूर्यवत् ॥ ६२ ॥

६३ ] ति० टी०–नीलोत्पलैरासमन्तायुतः ॥ ६३ ॥

रा० टी०–एषेति । प्रसन्नसलिला स्वच्छजलविशिष्टा पद्मैः नीलोत्पलैश्चायुता व्याप्ता हंसकारण्डवाकीर्णा हंसैः कारण्डवैश्च आकीर्णा युक्ता सौगन्धिकायुता सौगन्धिकेन कमलजातिविशेषकह्लारेणायुता व्याप्ता असौ पम्पाऽस्तीति शेषः ॥ ६३ ॥

गो० टी०–विरजावृष्ट्या पम्पां वर्णयति–एषेत्यादिभिः चतुर्भिः। 'सौगन्धिकं तु कह्लारम्' इत्यमरः। शोभत इति शेषः६३

६४ ] ति० टी०–जले षट्पदाहतकेसरैर्जले भ्रमरपतितपुष्पधूलिभिरभिसंवृता व्याप्ता शोभते ॥ ६४ ॥

रा० टी०–जल इति । तरुणसूर्याभैः उदयकालिकसूर्यसदृशैः षट्पदैः आहतानि केशराणि येषां तैः पङ्कजैररुणकमलैः समन्तादभिसंवृता पम्पा शोभते ॥ ६४ ॥

गो० टी०–जल इति । पङ्कजैरभिसंवृतेत्यन्वयः ॥ ६४ ॥

६५ ] ति० टी०–चित्रप्रस्थानि चित्रप्रदेशानि वनान्तराणि यस्याः सा ॥ ६५ ॥

रा० टी०–चक्रेति । नित्यचक्रवाकयुता चित्रप्रस्थवनान्तरा चित्रप्रस्थानि चित्रप्रदेशकानि वनान्तराणि वनमध्यानि यस्याः सा पम्पा सलिलार्थिभिः जलं पातुकामैः मातङ्गैर्गजैः मृगयूथैश्च शोभते ॥ ६५ ॥

गो० टी०–चक्रवाकेति । चित्रप्रस्थवनान्तरा चित्रतीरवनपरिधाना । अन्तरं परिधानम् ॥ ६५ ॥

६६ ]ति० टी०–पवनाहतवेगाभिः पवनाघातजनितवेगाभिः । अम्भसि पङ्कजानि विराजन्त इत्यन्वयः ॥ ६६ ॥

रा० टी०–पवनेति । पवनेन आहताः वेगाः यासां ताभिः ऊर्मिभिः लहरीभिस्ताड्यमानानि पङ्कजानि विमले अम्भसि जले विराजन्ते ॥ ६६ ॥

गो० टी०–पवनेति । पवनाहितवेगाभिः पवनोत्पादितवेगाभिः । ताड्यमानानि कशाभिस्ताड्यमानानीव ॥ ६६ ॥

६७ ] ति० टी०–अपश्यतो मे । आत्मने इति शेषः । यद्वा कर्तुः शेषत्वविवक्षायां मे इति षष्ठी ॥ ६७ ॥

रा० टी०–पद्मेति । सततं प्रियपङ्कजां वैदेहीमपश्यतो मे जीवितं प्राणपालनं नाभिरोचते ॥ ६७ ॥

गो० टी०–एवं पम्पादर्शनजकामोद्रेकमरस्यवस्थया दर्शयति–पद्मेति । स एकाकी न रमेतेतिवद्भिरजातीरवासो मे न रोचत इति लक्ष्मणायाभिव्यनक्ति ॥ ६७ ॥

६८ ] ति० टी०–वामत्वं कौटिल्यं गतः । वियुक्तां दुर्ल-

१ तत इति गो. पाठः । २ केशरैरिति रा. पाठः । ३ आहितेति गो. पाठः । ४ पङ्कजप्रियामिति गो. पाठः ।

शक्यो धारयितुं कामो भवेदभ्यागतो मया । यदि भूयो वसन्तो मां न हन्यात्पुष्पितद्रुमः ॥ ६९ ॥
यानि स्म रमणीयानि तया सह भवन्ति मे । तान्येवारमणीयानि जायन्ते मे तया विना ॥ ७० ॥
पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते । सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ॥ ७१ ॥
पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः । निःश्वास इव सीताया वाति वायुर्मनोहरः ॥ ७२ ॥
सौमित्रे पश्य पम्पाया दक्षिणे गिरिसानुषु । पुष्पितां कर्णिकारस्य यष्टिं परमशोभिताम् ॥ ७३ ॥
अधिकं शैलराजोऽयं धातुभिस्तु विभूषितः । विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ॥ ७४ ॥

भामयाप्राप्यां स्मारयिष्यति स्मारयतीत्यर्थः । चित्तवैकल्यबोधनद्वारान्यथाप्रयोगो विरहपरिपोषाय ॥ ६८ ॥

रा० टी०—अहो इति । यः गतामन्यत्र प्राप्ताम् अत एव दुर्लभां दुःखेन लब्धव्यां कल्याणीं नित्यं कल्याणसंयुक्तामत एव कल्याणतरवादिनीं सीतां स्मारयिष्यति स्मरयति तस्य कामस्य संयोगेच्छाविशेषस्य अमत्वं प्राप्तिः अहो सुखप्रदं, वाशब्दो हेत्वर्थे । एतेन भविष्यत्कालिकी तस्याः प्राप्तिर्यदि न स्यात्तर्हि ईदृगिच्छाविशेषो न स्यादिति सूचितं तेन तस्याः प्राप्तिर्ध्रुवं भविष्यतीति ध्वनितम् ॥ ६८ ॥

गो० टी०—अहो इति । वामत्वं वक्रत्वं गतां दूरगतां स्मारयिष्यति स्मारयति । कल्याणतरवादिनीं शुभतरवचनशीलाम् । मृगमाहरेति चरमश्रुतमेव वाक्यमस्य हृदये वर्तते ॥ ६८ ॥

६९ ] ति० टी०—कामः कामकृततापः । भूयोऽधिकम् ॥ ६९ ॥

रा० टी०—शक्य इति । पुष्पितद्रुमः वसन्तः यदि मां न हन्यात् तर्हि अभ्यागतः संप्राप्तः कामः सीताप्राप्तिविषयकोत्कटेच्छा धारयितुं मया शक्यः भवेत् । एतेन वसन्तहेतुकेन प्रियावियोगजनितदुःखेन यदि शैथिल्यं प्राप्नुयात् तर्हि तादृगिच्छाऽपि निवर्तेत तर्हि इच्छाहेतुकोद्योगाभावात् तत्प्राप्तिर्न भविष्यतीति ध्वनितम् ॥ ६९ ॥

गो० टी०—शक्य इति । अभ्यागतः इदानीं वर्तमानः । पुष्पिताः द्रुमाः येन स पुष्पितद्रुमः सर्वथा कामो दुःसहः इति उच्यते ॥ ६९ ॥

७० ] ति० टी०—रमणीयानि भवन्ति स्म ॥ ७० ॥

रा० टी०—यानीति । सीतया सह यानि पुष्पादीनि मे रमणीयानि भवन्ति तान्येव तया विना अरमणीयानि जायन्ते ॥ ७० ॥

गो० टी०—भोग्यस्य वसन्तस्य कुतो बाधकत्वं तत्राह—यानीति ॥ ७० ॥

७१ ] ति० टी०—पद्मकोशस्य पलाशानि दलानि कामोद्दीपकान्यपि तन्नेत्रकोशाभ्यां तन्नेत्रपुटाभ्यां सदृशानीति द्रष्टुं दृष्टिर्मन्यत इत्यर्थ ॥ ७१ ॥

रा० टी०—पद्मेति । पद्मकोशपलाशानि पद्मकोशदलानि सीतायाः नेत्रकोशाभ्यां नेत्रपक्ष्मप्रदेशाभ्यां सदृशानि इति हेतोः द्रष्टुं दृष्टिः चक्षुः मन्यते इच्छति । पद्मकोशपलाशानीत्युभयान्वयि एकत्रशब्द अपरत्रार्थः ॥ ७१ ॥

गो० टी०—पद्मेति । नेत्रकोशाभ्यां नेत्रदलाभ्यां सीतानेत्रे स्मारयित्वा संतापयन्तीत्यर्थः ॥ ७१ ॥

७२-७४ ] ति० टी०—पद्मकेसरेत्यादिना शैत्यसौरभ्ये वृक्षान्तरेत्यादिना मान्द्यम् ॥ ७२-७४ ॥

रा० टी०—पद्मेति । पद्मकेशरसंसृष्टः पद्मकेशरसंबन्धी वृक्षान्तरविनिस्सृतः वृक्षयोर्मध्यादागतः मनोहरो वायुः सीतायाः निःश्वास इव वाति ॥ ७२ ॥

गो० टी०—सर्वप्राणिनां प्राणहेतुर्वायुरेवास्मत्सर्वस्वापहारं कुरुत इत्याह—पद्मकेसरेति । पद्मकेसरसंसृष्टः । धूलीकरणं वायुकार्यम् । तथा च सर्वप्राणहेतुरेव सर्वधूलीकरणप्रवृत्तः सर्वसंहारप्रवृत्त इत्यर्थः । यद्वा पद्माविरहात् पद्मकेसराणि प्रतिकूलानि सन्ति वायोः साहाय्यं कुर्वन्ति । पादारुन्तुदमेव पङ्कजरज इति स्वजनसहजबाधकं कथं नास्मद्बाधकम् । राजसप्रकृतित्वादस्मानपि बाधितुमुपक्रमते । केसरशब्देन तत्स्थरजसोऽत्र विवक्षितत्वात् किञ्जल्कानामानयनायोगात् । एतन्मूलं कण्टकिसंसर्गः । पद्मकेसरसंसृष्टः नायं वातः किंतु केसरी सिंहः इत्यपि ध्वनिः । यद्वा पद्मकेसरैः संसृष्टः स्वयमेव संहारक्षमः तदुपरि ससहायः । यद्वा रूपवान् ससहायशूरः रूपराहितोऽयं कथं न सहायमपेक्षेत । रूपवान् दृढशरीर इत्यपि ध्वनिः । वायुर्बाधकश्चेत्त्वया पूर्वमेव परिहृत्य वर्तितव्यं तत्राह—वृक्षान्तरविनिःसृतः दूरे दृष्ट्वा परिहर्तुं शक्यते वृक्षषण्डे पूर्वमात्मानं सङ्गोप्य स्थित्वा झटिति विनिर्गतः । यद्वा यथा राजकुमारः सौकुमार्येण छायामार्गेणागच्छति तथायमपीत्यर्थः । यद्वा मन्मथतापेन विश्रमाय तरुच्छायमपि नाश्रयितुं क्षमते । यदि तेऽहं बाधकः तर्हि दूरादपसरेत्यत्राह—निःश्वास इव सीतायाः पूर्वपरिचितवदनभासमानतया परिहर्तुमपि न शक्नोमि । यद्वा सीता निःश्वासतुल्यतया सात्र किं वृक्षमूले निलीना समागच्छतीति चापलातिशयनान्यत्र न चलितुं शक्नोमि । सुरभिनिःश्वसिते दधतस्तृषामिति निःश्वासस्य सौरभ्यं कविभिरुक्तम् । यद्वा न केवलमनिलः सपरिकर एव बाधते किं तु स्मारकतयापि वाति न कदाचिदायाति सर्वदा याति सकलमपि काननं सविलासं संचरति । यद्वा वाति "वा, गतिग-

१ अयेति गो. पाठः । २ केशरेति रा. पाठ. । ३ सानुनीति गो. पाठः । ४ शोभनामिति गो. पाठः ।

गिरिप्रस्थास्तु सौमित्रे सर्वतः संप्रपुष्पितैः । निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ॥ ७५ ॥
पम्पातीररुहाश्चेमे संसिक्ता मधुगन्धिनः । मालतीमल्लिकापद्मकरवीराश्च पुष्पिताः ॥ ७६ ॥
केतक्यः सिन्दुवाराश्च वासन्त्यश्च सुपुष्पिताः । मातुलिङ्गाश्च पूर्णाश्च कुन्दगुल्माश्च सर्वशः ॥ ७७ ॥
चिरिबिल्वा मधूकाश्च वञ्जुला बकुलास्तथा । चम्पकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ॥ ७८ ॥
[ नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः ]
पद्मकाश्चैव शोभन्ते नीलाशोकाश्च पुष्पिताः । लोध्राश्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः ॥ ७९ ॥

न्धनयोः" स्वार्जितगन्धेन सर्वान् परवशीकरोति । एतादृशबाधकोऽपि न यः कश्चिदित्याह—वायुः सर्वोज्जीवनहेतुः । यद्वा "भीषाऽस्माद्वातः पवते" इति मत्तो भीतो मां भर्त्सयति । बाधनप्रकारमाह—मनोहरः आन्तरमपि पदार्थमपहरति । पद्मकेसरसंसृष्ट इत्यनेन शैत्यमुक्तम् । वृक्षान्तरविनिःसृत इत्यनेन मान्द्यम् । निःश्वास इव सीताया इति सौरभ्यम् । यद्वा पद्मकेसरसंसृष्ट इत्यनेन चोरसमा भीरुच्यते । स्वस्वरूपापरिज्ञानाय भीरुजनभषिणाय च भस्मोद्धूलितवदनः समायाति । वृक्षान्तरविनिःसृतः पथिकानां स्वसमीपागमनपर्यन्तं गूढतया स्थित्वा तेषु समीपमागतेषु सपदि समुत्तिष्ठन्निव भाति । निःश्वास इव सीतायाः चिरपरिचित इव सरससंल्लापविशेषैः कस्ते ग्रामः किं ते नामेति संभाषमाण इव स्थितः वाति । धनस्य हस्तगतिपर्यन्तं निःस्पृहतया ततस्ततः संचरन्निव स्थितः वायुः चौर्यं दृष्ट्वा केनचित् ग्रहीतुमुद्युक्तश्चेल्लाघवेन हस्तग्रहणानर्हः । मनोहरः नापाततोऽपाहरत् अपि तु सुगुप्तमपि । अनेन निर्हेतुकहार्दयाप्रवाह उपवर्ण्यते । पद्मकेसरसंसृष्टः "ङ्यापोः संज्ञाछन्दसोः" इति ह्रस्वः । पद्मायाः केसरैः तत्तुल्यानुरागैः संसृष्टः पुरुषकारभूतलक्ष्मीप्रणयप्रवृत्त इत्यर्थः । पितेव त्वत्प्रेयान् जनविपरिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ।" वृक्षान्तरविनिःसृतः 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति वृक्षत्वेनोक्ते संसारमण्डले प्रवृत्तः । निःश्वास इव सीतायाः । स्त्रीप्रायमितरत्सर्वमिति परतन्त्रतया स्त्रीतुल्यानां लोकानाम् आश्वासको धारकश्चेत्यर्थः । वाति अनवरतं प्रवहति । वायुः सार्वत्रिकः मनोहरः मानसिकसकलकल्मषहरः । ( द्रविडोपनिषद्व्याख्याकारैर्व्याख्यातोऽयं श्लोकः )॥ ७२ ॥

रा० टी०—सौमित्र इति । पम्पायाः दक्षिणे गिरिसानुनि पर्वतशिखरे पुष्पितां कर्णिकारस्य यष्टिं कर्णिकारवृक्षमित्यर्थः, पश्य ॥ ७३ ॥

गो० टी०—अथ विरजाया अर्वाक्प्रदेशवर्तिनां राजसतामससात्त्विकभेदभिन्नानां चेतनानां स्वरूपं स्वकटाक्षविषयभूतं दर्शयति—सौमित्र इत्यादिना । दक्षिण इत्यनेन पम्पादक्षिणतीरं क्रमेण प्रविष्ट इत्यवगम्यते । अनेन कर्णिकारवर्णनेन सत्यलोकादिषु जृम्भमाणा राजसी वृत्तिरुच्यते । यष्टिं लताम् ॥ ७३ ॥

रा० टी०—अधिकमिति । धातुभिः गैरिकादिभिः विभूषितः अयं शैलराजः वायुवेगविघट्टितं वायुवेगेन संप्रापितं विचित्रमनेकविधं. सुगन्धैः रङ्गैश्च विशिष्टं रेणुं सृजते ॥ ७४ ॥

गो० टी०—अधिकमिति । अनेन ऋष्यमूकसमीपगमनं द्योतितम् । रजोवर्धकलोक उक्तः ॥ ७४ ॥

७५ ] ति० टी०—किंशुकैः प्रदीप्ता इवेत्यन्वयः ॥ ७५ ॥

रा० टी०—गिरीति । हे सौमित्रे ! गिरिप्रस्थाः शैलप्रदेशाः सर्वतः संप्रपुष्पितैः अत एव निष्पत्रैः अत एव रम्यैः किंशुकैः पलाशैः सर्वतः प्रदीप्ताः प्रज्वलिता इव भान्तीति शेषः ॥ ७५ ॥

गो० टी०—गिरीति । प्रदीप्ताः ज्वलिताः ॥ ७५ ॥

७६ ] ति० टी०—पम्पातीररुहास्तत्तीरवृक्षाः संसिक्तास्तज्जलसेकेन वर्धिताः । मालती जातिः ॥ ७६ ॥

७७ ] ति० टी०—वासन्ती हेमपुष्पिका ॥ ७७ ॥

७८ ] ति० टी०—चिरिबिल्वो नक्तमालः ॥ ७८ ॥

७९ ] ति० टी०—पद्मका गन्धवृक्षविशेषाः । सिंहकेसरापिञ्जरा येस्ते ॥ ७९ ॥

रा० टी०—पम्पेति । संसिक्ताः पम्पाजलकर्तृकसेकविशिष्टाः मधुगन्धिनः मालत्यादयः पम्पातीररुहाः गिरिपृष्ठेषु नीलाशोकादयश्च शोभन्ते । श्लोकचतुष्टयमेकान्वयि ॥ ७६–७९ ॥

गो० टी०—पम्पेत्यादिसार्धसप्तश्लोकाः । इमे उपशोभन्त इत्यन्वयः । तदुपरि दृश्यन्त इत्यन्वयः । संसक्ताः अविरलाः । मधुगन्धिन इति सर्वविशेषणम् । लिङ्गवचनविपरिणामः कार्यः । एवं पुष्पितपदमपि । पम्पातीररुहा इमे मालत्यादयः पदार्था उपशोभन्ते इत्येकोऽन्वयः । मालती जातिः । मल्लिकाषण्डाः मल्लिकासमूहाः । करवीराः प्रसिद्धाः । सिन्धुवाराः निर्गुण्डयः । वासन्त्यः पीतवर्णपुष्पाः लताः । 'अत्र पीतायां वासन्ती हेमपुष्पिका' इति वैजयन्ती । माधव्यः अतिमुक्तलताः । गन्धेन पूर्णाः गन्धपूर्णाः । कुन्दानां गुल्माः कक्षा कुन्दगुल्माः । चिरिबिल्वाः नक्तमालाः । मधूकाः मधुद्रुमाख्या वृक्षाः । वञ्जुलाः वेतसाः । बकुलाः प्रसिद्धाः । तिलकाः क्षुरकाः । नागवृक्षाः नागकेसराः । नीपाः जलकदम्बाः । वरणाः वरणवृक्षाः । खर्जूराः प्रसिद्धाः । पद्मकाः पद्मपर्ण्याख्या

१ षण्डा इति गो. पाठः । २ सिन्धुवाराश्चेति गो. पाठः । ३ माधव्यो गन्धपूर्णा इति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे । ५ उपेति गो. पाठः ।

अङ्कोलाश्च कुरण्टाश्च चूर्णकाः पारिभद्रकाः । चूताः पाटलयश्चापि कोविदाराश्च पुष्पिताः ॥ ८० ॥
मुचुकुन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु । केतकोद्दालकाश्चैव शिरीषाः शिंशपा धवाः ॥ ८१ ॥
शाल्मल्यः किंशुकाश्चैव रक्ताः कुरबकास्तथा । तिनिशा नक्तमालाश्च चन्दनाः स्यन्दनास्तथा ८२ ॥
[3]हिन्तालास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः । पुष्पितान्पुष्पिताग्राभिर्लताभिः परिवेष्टितान् ॥ ८३ ॥
द्रुमान्पश्येह सौमित्रे पम्पाया रुचिरान्बहून् । वातविक्षिप्तविटपान्यथासन्नान्द्रुमानिमान् ॥ ८४ ॥
लताः समनुवर्तन्ते मत्ता इव वरस्त्रियः । पादपात्पादपं गच्छञ्शैलाच्छैलं वनाद्वनम् ॥ ८५ ॥
वाति नैकरसास्वादसंमोदित इवानिलः । केचित्पर्याप्तकुसुमाः पादपा मधुगन्धिनः ॥ ८६ ॥
केचिन्मुकुलसंवीताः श्यामवर्णा इवाबभुः । इदं मृष्टमिदं स्वादु प्रफुल्लमिदमित्यपि ॥ ८७ ॥
रागरक्तो मधुकरः कुसुमेष्वेवे लीयते । निलीय पुनरुत्पत्य सहसाऽन्यत्र गच्छति ॥
मधुलुब्धो मधुकरः पम्पातीरद्रुमेष्वसौ ॥ ८८ ॥

वृक्षविशेषाः । लोध्राः शाबरवृक्षाः सिंहकेसरपिञ्जराः सिंहकेसरवर्णा इत्यर्थः । अङ्कोलाः निकोचकाः । कुरण्टाः पीतवर्णपुष्पा महासहाख्या गुल्माः । पूर्णकाः शाल्मलिभेदा वृक्षविशेषाः । पारिभद्रकाः निम्बाः । पाटलयः इकारान्त आर्षः । कोविदाराः युगपत्रकाख्या वृक्षाः । मुचुलिन्दाः नारङ्गवृक्षाः । अर्जुनाः ककुभवृक्षाः । केतकानि हेमवर्णपुष्पाणि इति पूर्वस्माद्विशेषः । उद्दालकाः श्लेष्मातकवृक्षाः । शिरीषाः कपीतनाख्या वृक्षाः । शिंशुपाः भस्मगर्भाख्या वृक्षाः । धवाः मधुराख्या वृक्षविशेषाः । कुरबकाः रक्तवर्णपुष्पा महासहाख्या गुल्माः । रक्तपदं विस्पष्टार्थम् । तिनिशाः नेमिद्रुमाः । नक्तमालाः चिरिबिल्वभेदाः । चन्दनाः प्रसिद्धाः । स्पन्दनाः वृक्षविशेषाः ॥ ७६–८२ ॥

८० ] ति० टी०—चूर्णकाः शाल्मलीविशेषाः पारिभद्रको मन्दारः ॥ ८० ॥

८१–८२ ] ति० टी०—मुचुकुन्दाः । 'मुचिलिन्दाः' इति पाठान्तरम् ॥ ८१ ॥ ८२ ॥

रा० टी०—अङ्कोला इति । गिरिसानुषु गिरिशृङ्गेषु अङ्कोलादयः दृश्यन्ते । सार्धश्लोकत्रयमेकान्वयि ॥ ८०–८२ ॥

८३ ] ति० टी०—पुष्पिताः सन्तीति शेषः । तान्पश्येत्याह—पुष्पितानिति । समासोक्त्यलंकारः ॥ ८३ ॥

रा० टी०—पुष्पितानिति । पुष्पिताग्राभिः लताभिः परिवेष्टितान् पुष्पितान् अत एव सुरुचिरान् पम्पायाः बहून् द्रुमान् पश्य । अर्धद्वयमेकान्वयि ॥ ८३ ॥

गो० टी०—पुष्पितानिति । पम्पायाः संबन्धिन इति शेषः ॥ ८३ ॥

८४–८५ ] ति० टी०—तानेवोपमामुखेनोपपादयति—वातेति ॥ ८४ ॥ ८५ ॥

रा० टी०—वातेति । वातेन विक्षिप्ताः संचलिताः विटपाः शाखाः येषां तान् अत एव संनतान् नम्रीभूतान् इमान् द्रुमान् लताः मत्ताः वरस्त्रिय इव यथा यथावत् समनुवर्तन्ते संवेष्टयन्ति ॥ ८४ ॥

गो० टी०—वातेति । वातविक्षिप्तविटपान् वायुविधूतशाखानिति तात्कालिककान्तिविशेषोक्तिः । यथासन्नान् यथा संस्प्रष्टुं शक्यते तथा आसन्नान् समीपवर्तिन इत्यर्थः । इयता ग्रन्थेन विषयान्तरप्रवणाः प्राकृता उक्ताः ॥ ८४ ॥

रा० टी०—पादपादिति । पादपात् वृक्षात् पादपं वृक्षान्तरं शैलात् शैलं वनाद्वनं गच्छन् अनिलो वायुः नैकरसास्वादेन अनेकविधरसानुभवेन संमोदितः प्राप्तानन्द इव वाति॥८५॥

गो० टी०—पादपात्पादपमिति । कच्छात् कच्छमित्यपि ज्ञेयम् । नैकरसास्वादः अनेकमधुरसकवलनेन संमोदितः संजातसंमोद इव ॥ ८५ ॥

८६ ] ति० टी०—नैकरसास्वादसंमोदित इवानेकरसास्वादेन जातहर्ष इव ॥ ८६ ॥

रा० टी०—केचिदिति । पर्याप्तकुसुमाः पर्याप्तानि परिपूर्णानि कुसुमानि येषु ते मधुगन्धिनः केचित्पादपाः आबभुः । मुकुलसंवीताः कुड्मलैः पूर्णाः अत एव श्यामवर्णा इव केचित्पादपाः आबभुः ॥ ८६ ॥

गो० टी०—केचिदिति । पर्याप्तकुसुमा इत्यनेन मुकुलाल्पत्वम् । मुकुलसंवीताः मुकुलैः समन्तात् वेष्टिता इत्यनेन विकासितपुष्पस्वल्पत्वं चावगम्यते । श्यामवर्णाः वृन्तवर्णेनेति भावः, आबभुः आभान्ति लडर्थे लिट् ॥ ८६ ॥

८७–८८ ] ति० टी०—मधुलिप्सया पुष्पात्पुष्पान्तरं गच्छन् । उत्प्रेक्षते–इदं मृष्टमिति । मृष्टं मधुरम् ॥८७॥८८॥

रा० टी०—इदमिति । इदं मृष्टं स्वच्छम् इदं स्वादु इदं प्रफुल्लमित्यपि इति च रागयुक्तः अनुरागविशिष्टो मधुकरः कुसुमेषु अवलीयते ॥ ८७ ॥

गो० टी०—इदमिति । मृष्टं रम्यम् । स्वादु रसवत् ।

१ एवेति गो. पाठः । २ स्पन्दना इति गो. पाठः । ३ अर्धमेतत् गो. नास्ति । ४ अवेति गो. रा. पाठः ।

इयं कुसुमसंघातैरुपस्तीर्णा सुखाकृता । स्वयं निपतितैर्भूमिः शयनप्रस्तरैरिव ॥ ८९ ॥
विविधा विविधैः पुष्पैस्तैरेव नगसानुषु । [1]विस्तीर्णाः पीतरक्ताभाः सौमित्रे प्रस्तराः कृताः ॥ ९० ॥
हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसंभवम् । पुष्पमासे हि तरवः संघर्षादिव पुष्पिताः ॥ ९१ ॥
आह्वयन्त इवान्योन्यं नगाः षट्पदनादिताः । कुसुमोत्तंसविटपाः शोभन्ते बहु लक्ष्मण ॥ ९२ ॥
एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् । रमते कान्तया सार्धं काममुद्दीपयन्निव ॥ ९३ ॥
मन्दाकिन्यास्तु यादिदं रूपमेतन्[2]मनोरमम्[3] । स्थाने जगति विख्याता गुणास्तस्या मनोरमाः ॥ ९४ ॥
यदि दृश्येत सा साध्वी यदि चेह वसेमहि । स्पृहयेयं न शक्राय नायोध्यायै रघूत्तम ॥ ९५ ॥

रागमत्तः अभिनवपुष्पकृतहलाकुल इत्यर्थः । अवलीयते सक्तो भवति ॥ ८७ ॥

रा० टी०—अवलीनप्रकारमाह—निलीयेति । मधुकरो भ्रमरः पम्पातीरद्रुमेषु केषुचित् द्रुमपुष्पेषु निलीय पुनरुत्पत्य निःसृत्य सहसा अन्यत्र पुष्पान्तरेषु गच्छति ॥ ८८ ॥

गो० टी०—पुनर्मधुकरस्य चापलं दर्शयति—निलीयेति । निलीय क्वचित् पुष्पे क्षणमात्रं स्थित्वा पुष्पान्तरे भूयसीमिव मधुसमृद्धिं दृष्ट्वा तत्क्षणादन्यत्र पुष्पे गच्छति । एवं सर्वत्रेति ज्ञापयितुं पम्पातीरद्रुमेष्वित्युक्तम् ॥ ८८ ॥

८९ ] ति० टी०—स्वयं निपतितैः कुसुमसमूहैरुपस्तीर्णेयं भूमिः शयनप्रस्तरैः शयनार्थतल्पप्रसरणैरिव सुखाकृता सुखकरी । 'सुखप्रियादानुलोम्ये' इति डाच् ॥ ८९ ॥

रा० टी०—इयमिति । शयनप्रस्तरैः शय्यास्तरणैरिव स्वयं निपतितैः कुसुमसंघातैः पुष्पसमूहैः उपस्तीर्णा आच्छादिता अत एव सुखाकृता सुखसंपादिका इयं भूमिरस्तीति शेषः ॥ ८९ ॥

गो० टी०—इयमिति । इयं भूमिः स्वयं निपतितैः अतिसुकुमारैरित्यर्थः, कुसुमसंघातैः उपस्तीर्णा व्याप्ता सती शयनप्रस्तरैः शयनास्तरणैरिव सुखाकृता सुखावहा कृता ॥ ८९ ॥

९० ] ति० टी०—विविधैस्तैः पुष्पैर्नगसानुषु विस्तीर्णाः पीतरक्ताभाः, अत एव विविधाः प्रस्तराः शय्याः कृता इत्युत्प्रेक्षा ॥ ९० ॥

रा० टी०—विविधा इति । विविधैस्तैः स्वयं पतितैरेव पुष्पैः विविधा अनेकविधाः विस्तीर्णाः विशालाः पीतरक्ताभाः प्रस्तराः शय्या इव गिरिसानुषु पर्वतश्रृङ्गेषु कृताः ॥ ९० ॥

गो० टी०—विविधा इति । नगसानुषु विकीर्णैः विविधैः इतस्ततः स्वयं पतितैः पुष्पैः विविधाः प्रस्तराः कृता हीत्युत्प्रेक्षा । विविधा इत्यस्य विवरणं पीतरक्ता इति । इदमुपलक्षणम् नानावर्णा इत्यर्थः । क्वचित्पीतवर्णचम्पकादिपुष्पाणि पतितानि हेममयपर्यङ्क इव भवति । क्वचिद्रक्तवर्णकर्णिकारादिपुष्पाणि पतितानि पट्टवस्त्रचिततल्पानीव । इत्येवं नानावर्णनानाशय्या इव भान्तीति भावः ॥ ९० ॥

९१ ] ति० टी०—हिमान्ते शिशिरान्ते । पुष्पमासे चैत्रे संघर्षः स्पर्धा ॥ ९१ ॥

रा० टी०—हिमान्त इति । हिमान्ते शिशिरावसाने पुष्पमासे चैत्रे तरवः हि यतः संघर्षात् परस्पराभिभवेच्छयेव पुष्पिताः अतः वृक्षाणां पुष्पसंभवं पुष्पसंपत्तिं पश्य ॥ ९१ ॥

गो० टी०—हिमान्त इत्यर्धम् । हिमान्ते वसन्ते वृक्षाणां पुष्पसंभवं पुष्पसमृद्धिं वक्ष्यमाणस्य संक्षेपेणोक्तिः ॥ ९१ ॥

गो० टी०—पुष्पेति । पुष्पमासे वसन्ते संघर्षात् पुष्पिता अमी तरवः षट्पदनादिताः सन्तः परस्परमाह्वयन्त इव यूयं वयमिव न पुष्पिता इत्यन्योन्यं भृङ्गरवेण व्याजेन वदन्तीवेत्युत्प्रेक्षा । अर्धत्रयमेकान्वयं वा । आह्वयन्त इवेत्युक्त्वा कुसुमोत्तंसविटपाः पूर्वोक्ताः तरवः बहु अधिकं शोभन्त इति॥९२॥

९२ ] ति० टी०—नगा वृक्षाः विटपाः शाखाः कुसुमयुक्तशाखावन्त इत्यर्थः ॥ ९२ ॥

रा० टी०—आह्वयन्त इति । कुसुमोत्तंसविटपाः कुसुमशिरस्कशाखावन्तः अत एव षट्पदनादिताः अत एव अन्योन्यमाह्वयन्त इव नगाः वृक्षाः शोभन्ते ॥ ९२ ॥

९३ ] ति० टी०—उद्दीपयन्निव ममेति शेषः ॥ ९३ ॥

रा० टी०—एष इति । कारण्डव एष पक्षी कामं सीतासंयोगेच्छामुद्दीपयन्निव सलिलं विगाह्य कान्तया सार्धं रमते॥९३॥

गो० टी०—एष इति । काममुद्दीपयन् अन्यरतिदर्शनस्य उद्दीपकत्वादिति भावः ॥ ९३ ॥

९४ ] ति० टी—मन्दाकिन्यास्तत्सदृशपम्पायाः । अतिशयोक्तिरत्र । यत इदं मनोरममतो यज्जगति तस्या गुणा विख्याता एतत्स्थाने युक्तमित्यर्थः ॥ ९४ ॥

रा० टी०—मन्दाकिन्या इति । यत् यस्मात् हेतोः मन्दाकिन्याः तत्सदृश्याः पम्पायाः इदमेतत् रूपं मनोरमम् अतः तस्याः मन्दाकिन्याः मनोरमाः गुणा जगति विख्याताः प्रसिद्धाः अतः स्थाने युक्तमेतत् ॥ ९४ ॥

गो० टी०—मन्दाकिन्या इति । यदिदं पम्पायाः रूपम् एवं मन्दाकिन्याश्च मनोहरं रूपम् । कथमेतत्सादृश्यं तस्या इत्यत्राह—स्थान इति । मनोरमाः जगति विख्याताः तस्या गुणाः स्थाने युक्ताः ॥ ९४ ॥

९५ ] ति० टी०—वसेमहि तया सहेति शेषः । शक्राय शक्रपदप्राप्तये ॥ ९५ ॥

१ विकीर्णैः पीतरक्ता हीति गो. पाठः । २ एवमिति गो. पाठः । ३ मनोहरमिति गो. पाठः ।

नह्येवं रमणीयेषु शाद्वलेषु तया सह । रमतो मे भवेच्चिन्ता न स्पृहाऽन्येषु वा भवेत् ॥ ९६ ॥
अमी हि विविधैः पुष्पैस्तरवो विविधच्छदाः । काननेऽस्मिन्विना कान्तां [1]चिन्तामुत्पादयन्ति मे ९७ ॥
पश्य शीतजलां चेमां सौमित्रे पुष्करायुताम् । चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥ ९८ ॥
प्लवैः क्रौञ्चैश्च संपूर्णां [2]महामृगनिषेविताम् । अधिकं शोभते पम्पा विकूजद्भिर्विहङ्गमैः ॥ ९९ ॥
दीपयन्तीव मे कामं विविधा मुदिता द्विजाः । श्यामां चन्द्रमुखीं स्मृत्वा प्रियां पद्मनिभेक्षणाम्
पश्य सानुषु चित्रेषु मृगीभिः सहितान्मृगान् ॥ ॥ १०० ॥
मां पुनर्मृगशावाक्ष्या वैदेह्या विरहीकृतम् । व्यथयन्तीव मे चित्तं संचरन्तस्ततस्ततः ॥ १०१ ॥
अस्मिन्सानुनि रम्ये हि मत्तद्विजगणा[3]कुले । पश्येयं यदि तां कान्तां ततः स्वस्ति भवेन्मम ॥ १०२ ॥
जीवेयं खलु सौमित्रे मया सह सुमध्यमा । [4]सेवेत यदि वैदेही पम्पायाः पवनं शुभम् ॥ १०३ ॥

रा० टी०–यदीति । रघूत्तम हे लक्ष्मण ! सा सीता यदीह दृश्येत अत एव यदि वसेम तदा शक्राय इन्द्रसुखाय अयोध्यायै च न स्पृहयेयम् ॥ ९६ ॥

गो० टी०–यदीति । ननु परपुरुषेणापहृता कथं रतये प्रार्थ्यते तत्राह–साध्वीति । 'वसेम हि । भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते' । इत्युक्तवता त्वया सह वसेमेत्याशयेन बहुवचनम् । शक्राय शक्रत्वाय । ऐश्वर्ये इन्द्रत्वस्य प्राथमिकत्वात्तथोक्तम् । "रुच्यर्थानां प्रीयमाण." इति चतुर्थी । उत्तमं पुरुषं प्रति नास्त्यसुच्यत इत्याशयेन रघूत्तमेत्युक्तिः ॥ ९६ ॥

९६–९७ ] ति० टी०–उक्तमेवानुरागातिशयेन पुनराह–नहीति । अन्येषु सुखान्तरेषु ॥ ९६ ॥ ९७ ॥

रा० टी०–तदेव सहेतुकमाह–नहीति । शाद्वलेषु तया सीतया सह रमतो मम अन्येषु लोकादिषु चिन्तास्मृतिर्न भवेत् एवं स्पृहा इच्छा न भवेत् ॥ ९६ ॥

गो० टी०–उक्तेर्थे हेतुमाह–नहीति । रमतः रममाणस्य हि यस्मात् चिन्ता न भवेत् अयोध्यायाः अलाभकृता चिन्ता न स्यात् । अन्येषु शक्रत्वादिषु रहस्यप्येवंविधमातुवत्वभावनानुरूपं वचनं योगिनो बुध्येरन्निति ॥ ९६ ॥

रा० टी०–अमी इति । विविधच्छदाः अनेकविधपत्रविशिष्टाः अमी तरवः कान्तां विना मे चिन्तामुत्पादयन्ति॥९७॥

गो० टी०–अमी इति । विना वर्तमानस्येति शेषः ॥९७॥

९८–९९ ] ति० टी०–इमां पम्पाम् । पुष्करैरासमन्तायुताम् ॥ ९८ ॥ ९९ ॥

रा० टी०–पश्येति । शीतजलां पुष्करायुतां चक्रवाकानुचरितां चक्रवाकैः सेवितां महामृगनिषेविताम् इमां पम्पां पश्य । सार्धश्लोक एकान्वयी ॥ ९८ ॥ ९९ ॥

रा० टी०–अधिकमिति । विकूजद्भिर्विहङ्गमैः पम्पा अधिकं शोभते । अर्धं पृथक्–दीपयन्तीति । मुदिता द्विजाः पक्षिणः श्यामां षोडशवार्षिकीत्वेन प्रतीयमानां प्रियां स्मृत्वा वियमानस्य मे कामं संयोगेच्छां दीपयन्तीव दीपयन्त्येव । अर्धद्वयमेकान्वयि ॥ १०० ॥

गो० टी०–पश्येत्यादिसार्धश्लोकः । पुष्करैः पद्मैः आयुतां व्याप्ताम् । कारण्डवाः जलकाकाः । प्लवैः जलकुक्कुटैः । वराहेति तीरे इति शेषः ॥ ९८ ॥

गो० टी०–अधिकमित्यर्धम् । विहङ्गमैः उक्तभिन्नैः॥९९॥

१०० ] ति० टी०–स्मृत्वा स्मारयित्वा दीपयन्तीवेत्यन्वयः ॥ १०० ॥

रा० टी०–पश्येति । चित्रेषु सानुषु मृगीभिः सहितान्मृगान्पश्य । एतेन संयुक्तदर्शनमपि मम प्रियास्मारकमिति सूचितम् ॥ १०१ ॥

गो० टी०–दीपयन्तीति । स्मृत्वा वर्तमानस्येति शेषः ॥ १०० ॥

गो० टी०–पश्येति । पुनस्त्वर्थः । विरहीकृतं विरहिणमित्यर्थः । मृगीभिः सहितान् मृगान् पश्य । वैदेह्या विरही कृतं मां पुनः पश्येत्यन्वयः । एतेषु सकलत्रेषु सुखं संचरत्सु ममैकस्याहो कष्टावस्थेति भावः ॥ १०१ ॥

१०१–१०२ ] ति० टी०–विरहीकृतं विरहितं कृतम् । पश्येत्यनुकर्षः । संचरन्तः मृगीभिः सहिता मृगाः इति शेषः ॥ १०१ ॥ १०२ ॥

रा० टी०–ननु किं तेनेत्यत आह–मामिति । मृगशावाक्ष्या मृगबालनयनया वैदेह्या विरहीकृतं मां ततस्ततः संचरन्तः मृगीसहिताः मृगाः मे चित्तमतीव व्यथयन्ति संयोगकालिकसुखानुभवस्मृत्या व्यथां संपादयन्तीत्यर्थः ॥ १०२ ॥

गो० टी०–व्यथयन्तीति । संचरन्तः मृगादय इति शेषः ॥ १०२ ॥

रा० टी०–अस्मिन्निति । रम्ये मत्तद्विजगणाकुले उन्मत्तपक्षिसमूहैर्व्याप्ते अस्मिन्सानुनि यदि कान्तां पश्येयं तर्हि मम स्वस्ति भवेत् ॥ १०३ ॥

गो० टी०–पश्येयमित्यर्धम् । ततः तदा स्वस्ति शुभम् ॥ १०३ ॥

१०३ ] ति० टी०–स्वस्ति भवेदित्यस्यैव विवरणम्—

१ चित्तमुन्मादयन्तीति गो. पाठः । २ वराहमृगसेवितामिति गो. पाठः । ३ युते इति गो. पाठः । ४ सेवते इति गो. पाठः ।

पद्मसौगन्धिकवहं शिवं शोकविनाशनम् । धन्या लक्ष्मण सेवन्ते पम्पाया वनमारुतम् ॥ १०४ ॥
श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया । कथं धारयति प्राणान्विवशा जनकात्मजा ॥ १०५ ॥
किं नु वक्ष्यामि धर्मज्ञं राजानं सत्यवादिनम् । जनकं पृष्टसीतं तं कुशलं जनसंसदि ॥ १०६ ॥
या मामनुगता मन्दं पित्रा प्रस्थापितं वनम् । सीता धर्मं समास्थाय क नु सा वर्तते प्रिया ॥ १०७ ॥
तया विहीनः कृपणः कथं लक्ष्मण धारये । या मामनुगता राज्याद्भ्रष्टं विहतचेतसम् ॥ १०८ ॥
तच्चार्वञ्चितपद्माक्षं सुगन्धि शुभमव्रणम् । अपश्यतो मुखं तस्याः सीदतीव मतिर्मम ॥ १०९ ॥

जीवेयमिति । यदि सा मया सहैवंभूतं पद्मानां सौगन्धिकानां च गन्धवहं पवनं सेवेत तदा जीवेयमित्यन्वयः ॥ १०३ ॥

रा० टी०–तदाकारमाह–जीवेयमिति । वैदेही यदि पम्पायाः पवनं मया सह सेवेत तर्हि जीवेयं शरीरपालनं कुर्याम ॥ १०४ ॥

गो० टी०–जीवेयमिति । स्पष्टम् ॥ १०४ ॥

१०४ ] ति० टी०–पम्पावनवायुं ये नायिकया सह सेवन्ते ते धन्या इत्यर्थः ॥ १०४ ॥

रा० टी०–पद्मेति । पद्मसौगन्धिकयोः वहं सुगन्धप्रापकम् अत एव शोकविनाशनं पम्पायाः वनमारुतं ये सेवन्ते धन्याः । पद्मसौगन्धिकशब्दो लक्षणया स्वस्वगन्धपरः अवान्तरजातिभेदात्र पौनरुक्त्यम् ॥ १०५ ॥

गो० टी०–पद्मेति । पद्मकह्लारगन्धवहमिति लक्षणयाऽर्थः । धन्याः सकान्ताः । पदप्रयोजनं त्वाचार्या ऊचुः । पद्मं च सौगन्धिकं च पद्मसौगन्धिके ते वहति प्रापयतीति पद्मसौगन्धिकवहम् । अत्र पद्मसौगन्धिकयोर्वहनानुपपत्तेस्तद्गन्धो लक्ष्यते । लक्षणायाश्च प्रयोजनेन भवितव्यम् यथा गङ्गायां घोष इत्यत्र पावनत्वादि तथात्र प्रयोजनम् । यथा पद्मस्यैव घ्राणसमीपानयनेऽपि उपरि स्थितः परिमलः शीतलो गृह्यते नान्तःस्थित उष्णमिश्रः तथाऽयं वायुरपि उपरिस्थशीतलपरिमलमादाय समागच्छतीत्यर्थः । यद्वा पद्मकेसरसंसृष्ट इत्यनुक्तेः पद्मसौगन्धिकोपरिवर्तिपरिमलावह इत्यर्थः । गुणगुणिनोरभेदविवक्षया पद्मसौगन्धिकेत्युक्तिः । उभयोक्त्या नानापुष्पग्रथितमालिकाधारिण इव नानापुष्पपरिमलं वहतीत्युच्यते । शिवं शुद्धम् । तथा चान्यासंस्पर्शितोक्त्या प्राथमिकमलयमारुत इत्युच्यते । शोकविनाशनं विरहिणो दक्षिणपवनः शोकवर्धनः न तु शोकविनाशनः तथा च जीवतो हि शोकं कुर्यात् जीवितापायकरणेन शोकधर्म्यभावाच्छोकविनाशनम् । धन्याः एवंविधे मलयानिले वाति सति एकान्तस्थलमन्वेष्य शयनपराः केचन सन्ति हि सेवन्ते कदा समागविष्यत्ययं पवन इत्यवसरप्रतीक्षा भवन्ति । सेवा ह्यवसरप्रतीक्षा । पम्पोपवनमारुतम् आकरादागताग्निमिव स्थितं समुद्रादुत्थितवडवानलमिवेत्यर्थः । प्रत्येकश्लोकव्याख्यानेऽप्ययमेवाभिप्राय उक्तः ॥ १०६ ॥

१०५ ] ति० टी०–विवशा शत्रुवशत्वात् ॥ १०६ ॥

रा० टी०–श्यामेति । श्यामा नित्यं षोडशवार्षिकीत्वेन प्रतीयमाना मया विरहिता जनकात्मजा प्राणान्कथं धारयति ॥ १०६ ॥

गो० टी०–श्यामेति । विवशा प्राणत्यागेऽपि न स्वतन्त्रेत्यर्थः ॥ १०६ ॥

१०६ ] ति० टी०–पृष्टा सीता क्वेति येन तं किंनु कुशलं वक्ष्यामि ॥ १०६ ॥

रा० टी०–किमिति । पृष्टसीतं पृष्टा सीता येन तं सत्यवादिनं जनकं किं कुशलं वक्ष्यामि नु महान्विस्मयोऽयम् ॥१०७॥

गो० टी०–कि न्विति । सीतया सह मम कुशलं पृष्ट इत्यर्थः ॥ १०७ ॥

१०७ ] ति० टी०–मन्दं मन्दभाग्यम् ॥ १०७ ॥

रा० टी०–यामिति । या सीता पित्रा वनं प्रस्थापितं मां धर्मं समास्थाय मन्दं शनैः अनुगता सा सीता क्व वर्तते ॥ १०८ ॥

गो० टी०–येति । मन्दं भाग्यरहितम् 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युः' इत्यमरः । सत्पथं पतिव्रतामार्गमास्थाय अनुगतेत्यन्वयः ॥ १०८ ॥

१०८ ] ति० टी०–धारये प्राणानिति शेषः ॥ १०८ ॥

रा० टी०–तयेति । राज्याद्भ्रष्टम् इहागतम् अत एव विहतचेतसं निवर्तितराज्यविषयकचित्तं मां या सीता अनुगता तया विहीनः अत एव कृपणोऽहं कथं धारये प्राणानिति शेषः ॥ १०९ ॥

गो० टी०–तयेति । धारये जीवामि । विगतचेतसं विकलहृदयम् ॥ १०९ ॥

१०९ ] ति० टी०–अञ्चिते पूजिते पद्मतुल्ये अक्षिणी यत्र तादृशम् ॥ १०९ ॥

रा० टी०–तदिति । अञ्चिते पूजिते विद्भिः प्रशंसिते इत्यर्थः, पद्मतुल्ये अक्षिणी यस्मिन् सुगन्धि शोभनगन्धविशिष्टं शुभं सकलमङ्गलहेतुभूतम् अव्रणं विस्फोटकादिहेतुकव्रणरहितं तस्याः सीतायाः चारु मुखम् अपश्यतो मम मनः सीदत्येव । इवशब्द एवार्थे ॥ ११० ॥

गो० टी०–तदिति । अञ्चितपक्ष्माक्षम् अञ्चितानि पूजितानि स्निग्धानीति यावत्, पक्ष्माणि ययोस्ते अञ्चितपक्ष्मणी

१ पम्पोपवनेति गो.पाठः । २ सीताया जनकं पृष्ट इति गो.पाठः । ३ प्रव्राजितमिति गो पाठः । ४ सत्पथमिति गो.पाठः । ५ मन इति गो.पाठः ।

स्मितहास्यान्तरयुतं गुणवन्मधुरं हितम् । वैदेह्या वाक्यमतुलं कदा श्रोष्यामि लक्ष्मण ॥ ११० ॥
प्राप्य दुःखं वने श्यामा मां मन्मथविकर्शितम् । नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत ॥ १११ ॥
किं नु वक्ष्याम्ययोध्यायां कौसल्यां हि नृपात्मज । क्व सा स्नुषेति पृच्छन्तीं कथं चापि मनस्विनीम् ११२ ॥
गच्छ लक्ष्मण पश्य त्वं भरतं भ्रातृवत्सलम् । नह्यहं जीवितुं शक्तस्तामृते जनकात्मजाम् ॥ ११३ ॥
इति रामं महात्मानं विलपन्तमनाथवत् । उवाच लक्ष्मणो भ्राता वचनं युक्तमव्ययम् ॥ ११४ ॥
संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम । नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥ ११५ ॥
स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने । अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्राऽपि दह्यते ॥ ११६ ॥

अक्षिणी यस्य तत् शुभं शोभमानम् अव्रणं निर्दोषमित्यर्थः, व्रणकिणरहितं वा ॥ ११० ॥

११० ] ति० टी०—स्मितेनेपद्धास्येन विनोदवचनेनान्तरे मध्ये एव युतम्, न त्वोष्ठप्रदेशाद्बहिरिति पतिव्रतालक्षणसूचनम् । इदं पूर्ववर्णितसुखान्वयि । कश्चित्तु प्रसन्नहास्यविशेषेण युतमिति वाक्यविशेषणमाह । गुणवत्प्रसादवत् । मधुरमपरुषाक्षरम् ॥ ११० ॥

रा० टी०—स्मितेति । स्मितहास्यान्तरयुतं स्मितम् ईषदेव हास्यं यस्मिंस्तदेव अन्तरं मुखमध्यं तत्रैव युतं संयोगो यस्य तत् गुणवत् प्रसादादिगुणविशिष्टं मधुरं मधुरवर्णविशिष्टं हितम् उपकारकम् अत एव अतुलम् उपमारहितं वैदेह्याः वाक्यं कदा श्रोष्यामि ॥ १११ ॥

गो० टी०—स्मितेति । स्मितहास्यान्तरयुतम् 'कान्तस्मिता लक्ष्मण जातहासा' इत्युक्तरीत्या स्मितेन नैसर्गिकस्मितेन हास्यान्तरेण आगन्तुकहास्येन च युक्तं गुणवत् स्ववचनापेक्षया उत्कर्षवत् मधुरं हितं प्रियहितम् अतुलम् 'प्रियवादि च भूतानाम्' इत्युक्तरामवचनमप्यस्य न सदृशमित्यर्थः। संसारादुत्तीर्णस्य चेतनस्य एतत्साम गायन्नास्त इत्युक्तसामध्वनि कदा श्रोष्यामीति व्यञ्जयति ॥ १११ ॥

१११ ] ति० टी०—वने दुःखं प्राप्यापि नष्टदुःखेव ॥१११॥

रा० टी०—प्राप्येति । श्यामा षोडशवार्षिकीत्वेन प्रतीयमाना साध्वी पतिव्रता सीता वने दुःखं प्राप्यापि मन्मथविकर्शितं समयाभावात् तिरोहितमदमथनकर्तृत्वकं मां प्राप्यैव नष्टदुःखा अत एव हृष्टा सती साधु यथा भवति तथा अभ्यभाषत अभिभाषेत । एक इव एवार्थे अपरो हेत्वर्थे ॥ ११२ ॥

गो० टी०—प्राप्येति । स्वयं दुःखं प्राप्य स्थिताऽपि स्वदुःखमप्रकाशयन्ती हर्षं भावयन्ती साधु मन्मथार्तिनिवर्तकं वचनमभ्यभाषत पूर्वमिति शेषः । अनादिकालं मम कैङ्कर्ययोग्यो जीव इत्यर्थः ॥ ११२ ॥

११२–११३ ] ति० टी०—क्व सा स्नुषा, कथं किंप्रकारेति च पृच्छन्तीं किं नु वक्ष्यामि । यथाजातं वक्ष्यामि वाऽन्यथा वा । उभयमपि वक्तुं न शक्यत इत्यर्थः ॥ ११२ ॥ ११३ ॥

रा० टी०—किमिति । नृपात्मज हे लक्ष्मण ! सा मया प्रेषिता स्नुषा क्व कस्मिन् स्थाने कथं केन प्रकारेणास्तीति शेषः, इति पृच्छन्तीं कौशल्यां किं नु वक्ष्यामि ॥ ११३ ॥

गो० टी०—किं न्विति । सा स्नुषा क्व कथं कीदृक्प्रकारेति पृच्छन्तीं कौसल्यां किं वक्ष्यामि । अतिमनस्विनीमित्यनेन यथार्थं वक्ष्यामि चेतदानीमेव वात्सल्यातिशयान्नश्येदित्युच्यते ॥ ११३ ॥

रा० टी०—गच्छेति । हे लक्ष्मण ! त्वं गच्छ भरतं पश्य अहं तु तां जनकात्मजामृते विना जीवितुमिह पालयितुं न शक्तोऽस्मीति शेषः ॥ ११४ ॥

गो०टी०—किमत्र युक्तं तत्राह—गच्छेति। ऋते विना॥११४॥

११४ ] ति० टी०—अव्ययमनपायार्थम् ॥ ११४ ॥

रा० टी०—इतीति । अनाथवत् नाथत्वाभाववन्तमिव इति विलपन्तं महात्मानं रामं लक्ष्मणः युक्तमुचितमव्ययं विकाररहितं वचनमुवाच ॥ ११५ ॥

गो० टी०—इतीति । अव्ययं युक्तिभिरविनाश्यम् ॥११५॥

११५ ] ति० टी०—संस्तम्भ शोकं निरुन्धीत्यर्थः । अकलुषात्मनामपीदृशानां शोकमनसां मतिर्मन्दा नेति न, अपि तु मन्दैव ॥ ११५ ॥

रा० टी०—तद्वचनाकारमाह—संस्तम्भेति । हे पुरुषोत्तम ! हे राम ! मा शुचः शोकं न कुरु संस्तम्भ समुत्पन्नं शोकं निवर्तय । तत्र हेतुः—ते भद्रमेव । तत्रापि हेतुः—अकलुषात्मनां नित्यं कलुषसंसर्गरहितानाम् ईदृशानां भवत्सदृशानां मतिरिच्छा मन्दा निष्फला न भवति । एतेन भवदीप्सितसिद्धिर्भविष्यत्येवेति तात्पर्यम् ॥ ११६ ॥

गो० टी०—संस्तम्भेति । संस्तम्भ संस्तम्भस्व धैर्यमवलम्बस्वेत्यर्थः । अकलुषात्मनां सधैर्यहृदयानामीदृशानां त्वादृशानां मन्दा अल्पा कलुषितेत्यर्थः ॥ ११६ ॥

११६ ] ति० टी०—अतः—स्मृत्वेत्यादि । 'संयोगा विप्रयोगान्ताः' इति न्यायेन प्रियविषयेऽवश्यंभावि वियोगदुःखं स्मृत्वा स्नेहं त्यज । विपक्षे बाधकमाह—अतिस्नेहेति । आर्द्रा जलसिक्ताऽपि । एवं शान्तमपि चित्तमतिस्नेहसंबन्धेन तद्वियोगजशोकदीपेन दीप्यतैवेति भावः ॥ ११६ ॥

रा० टी०—अप्रीतिप्राप्तौ कृत्यमाह—स्मृत्वेति । वियो-

१ सा मां मन्मथेति गो. पाठः । २ कौसल्यामयोध्यायामिति गो. पाठः ।

यदि गच्छति पातालं ततोऽभ्यधिकमेव वा। सर्वथा रावणस्तात न भविष्यति राघव ॥११७॥
प्रवृत्तिर्लभ्यतां तावत्तस्य पापस्य रक्षसः। ततो हास्यति वा सीतां निधनं वा गमिष्यति ॥११८॥
यदि याति दितेर्गर्भं रावणं सह सीतया। तत्राप्येनं हनिष्यामि न चेद्दास्यति मैथिलीम् ॥११९॥
स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः। अर्थो हि नष्टकार्यार्थैरयत्नेनाधिगम्यते ॥१२०॥
उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्। सोत्साहस्य हि लोकेषु न किंचिदपि दुर्लभम् ॥१२१॥
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु। उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम् ॥१२२॥
त्यज्यतां कामवृत्तत्वं शोकं संन्यस्य पृष्ठतः। महात्मानं कृतात्मानमात्मानं नावबुद्ध्यसे ॥१२३॥

गजं दुःखं स्मृत्वा प्रिये अतिप्रीतविषयीभूते अजने विधानरि स्नेहं प्रीतिं त्यज राममात्रैकवध्यो रावण इति ब्रह्मवरप्रदानं दूरीकुर्विल्यर्थः। एतेन वरप्रदानस्य मृषात्वे मां महाकालं वा संप्रेर्य द्रुतं रावणं घातयेति सूचितम् ॥ ११७ ॥

गो० टी०–स्मृत्वेति। वियोगजं दुःखं भवतीत्येतल्लोकवृत्तं स्मृत्वा तद्धेतुभूतं प्रियजनविषयातिस्नेहं त्यजेत्यर्थः। तत्र श्लेषगर्भमर्थान्तरं न्यस्यति–अतीति। स्नेहः प्रीतिः तैलं च अतः वात्सल्यप्रवृत्तिं विहाय चेतनसंतरणोपायं चिन्तयेत्यर्थः ॥ ११७ ॥

११७ ] ति० टी०–ततोऽभ्यधिकं पातालादभ्यधिकं गुप्तदेशम्। न भविष्यति न जीविष्यतीत्यर्थः ॥ ११७ ॥

रा० टी०–ननु रावणो यदि पलायेत तर्हि कथं तद्विघात इत्यत आह–यदीति। रावणो यदि पातालं गच्छति गच्छेत् ततोऽभ्यधिकमधो वा गच्छति तदाऽपि रावणः सर्वथा न भविष्यति विनङ्क्ष्यतीत्यर्थः ॥ ११८ ॥

गो० टी०–यदीति। न भविष्यति विनाशिष्यतीत्यर्थः ११८॥

११८ ] ति० टी०–तावत्प्रथमम्। प्रवृत्तिर्वासन्तान्तः ॥ ११८ ॥

रा० टी०–ननु ब्रह्मवरप्रदानस्य मृषात्वे मर्यादाभङ्गः स्यात् अतः उपायान्तरं वक्तव्यमित्याशङ्क्यासुद्भाव्य उपायान्तरमाह–प्रवृत्तिरिति। तस्य रावणस्य प्रवृत्तिः संस्थितिः तावत्प्रथमं लभ्यतां यत्नतो ज्ञायतां, ततः प्रवृत्तिज्ञानानन्तरं सीतां वा हास्यति निधनं विनाशं वा गमिष्यति प्राप्स्यति। तत्र गत्वा जहीत्यर्थः ॥ ११९ ॥

गो० टी०–प्रवृत्तिरिति। प्रवृत्तिर्वार्ता ॥ ११९ ॥

११९ ] ति० टी०–दितेरसुरमातुः ॥ ११९ ॥

रा० टी०–ननु पलायितश्चेत्कथमस्मत्कर्तृकवधः स्यादित्यत आह–यदीति। चेत् यदि मैथिलीं न दास्यति तदा सीतया मह रावणो यदि दितेः अवध्यदैत्यमातुः गर्भं याति तदा तत्र गर्भे एनं रावणं हनिष्यामि रावणं संताड्य सीतामानेतास्मीति तात्पर्यम् ॥ १२० ॥

गो० टी०–यदीति। अदितेः इन्द्रस्य मातुः ॥ १२० ॥

१२० ] ति० टी०–स्वास्थ्यं धैर्यं स्वस्वभावरूपम्। नष्टः कार्योऽवश्यं सेव्योऽर्थो येषां तैः पुंभिः सोऽर्थोऽयत्ने यत्नाभावे सति नाधिगम्यते ॥ १२० ॥

रा० टी०–स्वास्थ्यमिति। हे आर्य! भद्रं कल्याणकारकं स्वास्थ्यं धैर्यं भजस्व स्वीकुरु अत एव कृपणा सीतावियोगहेतुककार्पण्यविशिष्टा मतिः त्यज्यताम्। एतेन तस्या अन्वेषणे यत्नः कर्तव्य इति व्यञ्जितम्। यत्नाभावे दोषमाह–अयत्ने यत्नाभावे सति नष्टकार्यार्थैः नष्टौ कार्यार्थौ प्रयत्नधने येषां तैः अर्थः नष्टधनं न लभ्यते ॥ १२१ ॥

गो० टी०–स्वास्थ्यमिति। स्वास्थ्यं धैर्यम्। नष्टकार्यार्थैः नष्टकार्यरूपप्रयोजनैः पुरुषैः अयत्नेन यत्नाभावेन॥१२१॥

१२१ ] ति० टी०–अत –उत्साह इति। बलवान्कार्यसाधनसमर्थः ॥ १२१ ॥

रा० टी०–यत्नोऽप्युत्साहमूलक इति बोधयन्नाह–उत्साह इति। हि यतः उत्साहात् उत्साहं परित्यज्य बलं परमुत्कृष्टं कार्यसाधकमित्यर्थः, नास्ति अतः उत्साह एव बलवान् प्रशस्तबलप्रवर्तकः अतः सोत्साहस्य पुरुषस्य लोकेषु किंचिदपि न दुर्लभम् ॥ १२२ ॥

गो० टी०–अतो यत्नः कर्तव्य इत्याह द्वाभ्याम्- उत्साह इत्यादिभ्याम् ॥ १२२ ॥ १२३ ॥

१२२] ति० टी०–उत्साहमात्रं शत्रुसंहारे पौरुषम् ॥१२२॥

रा० टी०–उत्साहवन्त इति। उत्साहवन्तः प्रशस्तोत्साहविशिष्टाः पुरुषाः कर्मसु दुष्करक्रियास्वपि नावसीदन्ति अतः उत्साहमात्रमाश्रित्य जानकीं प्रतिलप्स्यामः ॥ १२३ ॥

१२३ ] ति० टी०–कामवृत्तत्वं कामपरतन्त्रत्वम्। शोकं पृष्ठतः संन्यस्य कामजशोकसेवने कामस्य वृद्धेस्तत्सेवनं पृष्ठतः कृत्वेत्यर्थः। महात्मानं रजस्तमोमलास्पृष्टचित्तं निरतिशयशौर्यधैर्यादिस्वभावचित्तं च कृतात्मानं श्रुतिस्मृत्यादिषु गुरुभिः शिक्षितस्वरूपं किं नावबुद्ध्यसे। यद्यपीश्वरस्य लोकवद्धर्माधर्माश्रयं चित्तं नास्ति तथापि मायिकं तदाश्रयं तदस्ति तत्स्वीकारे बाधकाभावात् ॥ १२३ ॥

रा० टी०–त्यज्यतामिति। महात्मानं महान्तं सर्व

१ तावदिति गो. पाठः। २ अदितेरिति गो. पाठः। ३ हास्यतीति गो. पाठः। ४ भद्रमिति गो. रा.पाठः। ५ नायत्नेनाधीति गो पाठः। ६ ऽस्ति लोकेऽस्मिन्निति गो. पाठः। ७ सीता प्रति लभेमहीति गो. पाठः।

एवं संबोधितस्तेन शोकोपहतचेतनः । त्यज्य शोकं च मोहं च रामो धैर्यमुपागमत् ॥ १२४ ॥
सोऽभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः । रामः पम्पां सुरुचिरां रम्यां पारिप्लवद्रुमाम् ॥ १२५ ॥
निरीक्षमाणः सहसा महात्मा सर्वं वनं निर्झरकन्दरं च ।
उद्विग्नचेताः सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥ १२६ ॥
तं मत्तमातङ्गविलासगामी गच्छन्तमव्यग्रमना महात्मा ।
स लक्ष्मणो राघवमिष्टचेष्टो ररक्ष धर्मेण बलेन चैव ॥ १२७ ॥
तावृश्यमूकस्य समीपचारी चरन्ददर्शाद्भुतदर्शनीयौ ।
शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव विचेष्ट चेष्टाम् ॥ १२८ ॥

पूज्यब्रह्मादित्रयाणामात्मानं नियन्तारमत एव कृतात्मानं तैः कृतः आत्मा मनो यस्मिंस्तमात्मानं स्वस्वरूपं किं किमर्थं न बुध्यसे स्मरसि । बोधप्रयोजनमाह—शोकं पृष्ठतः संन्यस्य कृत्वा त्यक्त्वेत्यर्थः, कामवृत्तत्व राक्षसकर्तृकयथेच्छवर्तनं त्यज्यतां त्याज्यताम् ॥ १२४ ॥

गो० टी०—त्यज्यतामिति । कामे वृत्तो व्यापारो यस्य स तथा त्वं पृष्ठतः संन्यस्य तिरस्कृत्येत्यर्थः, आत्मानं कृतात्मानं शिक्षितमनस्कं महात्मानं महाधैर्यं नावबुध्यसे तस्मात्त्यज्यता-मित्यन्वयः । किं वात्सल्येन तप्यसे 'साधुकारी साधुर्भवति पापकारी पापी भवति' इति भवद्भिरेव कृतां शास्त्रमर्यादां किं नावबुध्यस इत्यर्थ. ॥ १२४ ॥

१२४ ] ति० टी०—एवं द्वित्रिवचनमात्रेण शुद्धसत्त्वप्रकृतिकत्वादारोपितशोकादि संत्यज्य धैर्यमुपागमत् । मोहः कामजो मोहजश्च शोकः ॥ १२४ ॥

रा० टी०—एवमिति । शोकोपहतचेतनः प्रियावियोगहेतुकशोकव्याप्तचित्तः एवं संबोधितः लक्ष्मणेन प्रार्थितः रामः शोकं मोहं कर्तव्यविषयकविवेकराहित्यं च त्यज्य त्यक्त्वा धैर्यमुपागमत् प्राप्नोत् ॥ १२५ ॥

गो० टी०—एवमिति । अत्र शोकमोहशब्दाभ्यां दयावात्सल्ये उच्येते । तयोस्त्यागो नाम शास्त्रमर्यादानुसारेण चेतनरक्षणोद्योगः ॥ १२५ ॥

१२५ ] ति० टी०—अतिक्रामदत्यक्रामत् । पारिप्लवा वायुचञ्चलास्तीरद्रुमा यस्यां ताम् ॥ १२५ ॥

रा० टी०—स इति । अचिन्त्यपराक्रमः अव्यग्रः नित्यं व्यग्रतारहितः स रामः पारिप्लवद्रुमां वायुप्रकम्पितद्रुमविशिष्टां पम्पामभ्यतिक्रामत् अत्यजत् । आगमशास्त्रस्यानित्यत्वाददभावः ॥ १२६ ॥

गो० टी०—स इति । अभ्यतिक्रामत् अनित्यत्वाददभावः। पारिप्लवद्रुमां चञ्चलद्रुमाम्, अनेन भगवतः संसारिमण्डलाभिमुख्यं सूचितम् ॥ १२६ ॥

१२६ ] ति० टी०—विचार्य लक्ष्मणोक्तेर्युक्तत्वमिति शेषः ॥ १२६ ॥

रा० टी०—अतिक्रमणप्रकारमाह—निरीक्षमाण इत्यादिभिः । उद्विग्नचेताः वियुक्तसीतास्मरणहेतुकोद्विग्नचित्तः अत एव दुःखोपहतः दुःखव्याप्तः महात्मा रामः विचार्य सीतान्वेषणमवश्यं कर्तव्यमिति निश्चित्य सर्वं वनं निर्झरकन्दरं च निरीक्षमाणः सन् प्रतस्थे ॥ १२७ ॥

गो० टी०—सर्गार्थं पुनः संग्रहेण दर्शयति द्वाभ्याम्—निरीक्षमाण इति । विचार्य सीतामन्विष्येत्यर्थः ॥ १२७ ॥

१२७ ] ति० टी०—धर्मेण 'संस्तम्भ राम' इत्यादिनीतिरूपधर्मबोधनेन । बलेन 'गच्छति पातालम्' इत्यादिस्वबलकथनेन च ॥ १२७ ॥

रा० टी०—तमिति । गच्छन्तं राघवं तं रामं मत्तमातङ्गविलासगामी मत्तगजवत् विलासेन गच्छति तच्छीलः धर्मेण रामसेवकत्वरूपस्वस्वभावेन बलेन च उपलक्षितः अत एव इष्टचेष्टः इष्टे रघुनाथेच्छाविषयीभूते चेष्टा व्यापारो यस्य रामेप्सितसाधक इत्यर्थः, स लक्ष्मणः ररक्ष ॥ १२८ ॥

गो० टी०—तं मत्तेति । मत्तगजवत् विलासेन गन्तुं शीलमस्यास्तीति तथा । अनेन वनदुर्गप्रदेशेऽपि निर्भयसंचारित्वमुच्यते। अव्यग्रमनाः अचञ्चलचित्तः अप्रकम्प्यरामविषयप्रेमभार इत्यर्थः । महात्मा अप्रच्युतधैर्यः अप्रमत्तः गमनसौन्दर्यानुभवेऽप्यसक्तः सः 'रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति' इति सुमित्रया संदिष्टः लक्ष्मणः कैङ्कर्यलक्ष्मीयुक्तः तं सीतावियोगार्तं गच्छन्तं मत्तमातङ्गगामिनमिरयुक्तरीत्या गमनचारुतया सर्वान् वशीकुर्वन्तं राघवं धर्मेण संस्तम्भेत्यादिराजनीतिकथनेन बलेन तत्राप्येनं हनिष्यामीति स्वबलकथनेन च ररक्ष निर्दुःखमकरोत् ॥ १२८ ॥

१२८ ]ति० टी०—एवं वृत्तमनूद्य वर्तिष्यमाणं दर्शयति—ताविति । वितत्रसे वितत्रास । बाल्यानीतत्वशङ्कया त्रासः । इष्टमिष्टभोजनादिविषयचेष्टामपि नैव विचेष्ट च न चकार च ।

१ तत्रेति गो. पाठः । २ न्यस्यंति गो. पाठः । ३ नत इति गो. पाठः । ४ रम्यपारिप्लवेति गो. पाठः । ५ कन्दरानिति गो. पाठः । ६ अप्रमत्त इति गो. पाठः । ७ ऋश्येति गो. पाठः । ८ चिचेष्ट किंचिदिति गो. पाठः ।

स तौ महात्मा गजमन्दगामी शाखामृगस्तत्र चरंश्चरन्तौ ।
दृष्ट्वा विषादं परमं जगाम चिन्तापरीतो भयभारभग्नः ॥ १२९ ॥
तमाश्रमं पुण्यसुखं शरण्यं सदैव शाखामृगसेवितान्तम् ।
त्रस्ताश्च दृष्ट्वा हरयो विजग्मुर्महौजसौ राघवलक्ष्मणौ तौ ॥ १३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

रामलक्ष्मणौ पश्यन्सुग्रीवस्तयोर्वालिप्रेषितत्वमूहमानः स्वामात्यैः सम निलीनस्तस्थौ । तत्र हनुमाँस्त युक्त्या समाश्वासयति । रामलक्ष्मणयोर्भाव जिज्ञासुः सुग्रीवो हनुमन्त तत्र प्रैषयत् ।

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ । वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ १ ॥
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् । न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुंगवः ॥ २ ॥

'विश्रान्तिमत्तस्य बभूव चित्तम्' इत्याधुनिकपाठे तस्य सुग्रीवस्य चित्तं तद्दर्शनेन विश्रान्तिमत् भयवद्भूतेत्यर्थः ॥ १२८ ॥

रा० टी०—ताविति । ऋष्यमूकस्य समीपचारी शाखामृगाणां वानराणामधिपः सुग्रीवः अद्भुतदर्शनीयौ तौ रामलक्ष्मणौ ददर्श अत एव वितत्रसं वालिप्रेषितबलवत्पुरुषसंभावनया वित्रासं प्राप अत एव इष्टं किंचित् हितं न चिचेष्ट नावलुलोके । 'विश्रान्तिमत्तस्य बभूव चित्तम् इति तीर्थादिपाठः १२९

गो० टी०—अथ सीताप्राप्तिबीजमुपक्षिपति—ताविति । ऋश्यमूकस्य ऋश्यमूकाख्यपर्वतस्य समीपचारी समीपसंचरणशीलः वालिभयादिति शेषः, चरन् कदाचित्पम्पोपान्ते पर्यटन् अद्भुतं यथा भवति तथा दर्शनीयौ शाखामृगाणां वानराणाम् अधिपः सुग्रीवः तरस्वी बलवान् वितत्रसे तत्रास व्यत्ययेनात्मनेपदम् भीतोऽभूत् । न चिचेष्ट न चिचेष्टे व्यत्ययेन परस्मैपदम् । स्तब्धोऽभूदित्यर्थः ॥ १२९ ॥

१२९ ] ति० टी०—उक्तमेव विवृणोति—स ताविति । भयभारभग्नो भयभारेण भग्नोत्साहः ॥ १२९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । गजमन्दगामी शाखामृगः सुग्रीवः तत्र ऋष्यमूके चरन् सन् चरन्तौ तौ रामलक्ष्मणौ दृष्ट्वा चिन्तापरीतः कोऽयमिति चिन्तया व्याप्तः अत एव भयभारभग्नः निरस्तोत्साहश्च सन् परमं विषादं दुःखं जगाम प्राप ॥ १३० ॥

गो० टी०—स इति । तत्र पम्पावने विषादचिन्ताभयहेतव उत्तरसर्गे व्यक्तीभविष्यन्ति ॥ १३० ॥

१३० ] ति० टी०—तमाश्रमं मतङ्गशापाद्वालिना दुष्प्रवेशम्, अत एव शरण्यम् । सेवितान्तं सेवितमध्यं, सेवितप्रान्तं वा । तौ दृष्ट्वा त्रस्ता हरयो वालिप्रेरितबुद्ध्या भीता विजग्मुर्गताः ॥ १३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०—तमिति । पुण्यसुखं पुण्यसुखयोः संपादकं शरण्यं शरणहितमत एव सदैव शाखामृगसेवितान्तं शाखामृगैः सेवितः अन्तः मध्यं यस्य तं मतङ्गशापात् वालिना दुष्प्रवेशमाश्रमं महौजसौ तौ राघवलक्ष्मणौ दृष्ट्वा त्रस्ताः हरयो वानराः अभिजग्मुः ॥ १३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे प्रथमः सर्गः ॥ १ ॥

गो० टी०—न केवलं सुग्रीव एव त्रस्तः तत्सचिवा अपीत्याह—तमिति । आश्रमं मतङ्गाश्रमं पुण्यं धर्मवर्धकं सुखं सुखकरं शरण्यं मुनिजनवासयोग्यं सदैव वानरसेवितान्तं वानरसेवितमध्यमिति दुष्प्रवेशत्वोक्तिः, तौ दृष्ट्वा हरयः वानराः वित्रस्ताः मुनिवेषेण वालिप्रेरितौ समागताविति शङ्कयेति भावः । हरयः तौ दृष्ट्वा त्रस्ताः सन्त आश्रममभिजग्मुरित्यन्वयः ॥ १३१ ॥

अस्मिन् सर्गे सार्धत्रिंशदुत्तरशतश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

१] ति० टी०—तदेव विस्तारयति—तौ त्विति ॥ १ ॥

रा० टी०—सुग्रीववृत्तान्तमाह—तावित्यादिभिः । वरायुधधरौ रामलक्ष्मणौ दृष्ट्वा सुग्रीवः शङ्कितोऽभवत् ॥ १ ॥

गो० टी०—सुग्रीवेण हनुमत्प्रेषणं द्वितीये—तौ त्वित्यादि । महात्मानौ महाशरीरौ भद्राकृती इत्यर्थः, वरायुधधरौ अत एव वीरौ ॥ १ ॥

२ ] ति० टी०—न व्यतिष्ठत न व्यवस्थितोऽभूत् ॥ २ ॥

रा० टी०—उद्विग्नेति । उद्विग्नहृदयो वानरपुङ्गवः सुग्रीवः सर्वा दिशः समवलोकयन् सन् कस्मिंश्चित् देशे न व्यतिष्ठत ॥ २ ॥

गो० टी०—उद्विग्नेति । उद्विग्नहृदयः भीतमनस्कः ॥ २ ॥

१ चिरमिति गो. पाठः ।

नैव चक्रे मनः स्थातुं वीक्ष्यमाणौ महाबलौ । कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३ ॥
चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् । सुग्रीवः परमोद्विग्नः सर्वैस्तैर्वानरैः सह ॥ ४ ॥
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः । शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५ ॥
एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् । छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६ ॥
ततः सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ । जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७ ॥
ते क्षिप्रमभिगम्याथ यूथपा यूथपर्षभम् । हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८ ॥
एवमेकायनगताः प्लवमाना गिरेर्गिरिम् । प्रकम्पयन्तो वेगेन गिरीणां शिखराणि च ॥ ९ ॥
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः । बभञ्जुश्च नगांस्तत्र पुष्पितान्दुर्गमाश्रितान् ॥ १० ॥
आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम् । मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ॥ ११ ॥

३ ] ति० टी०–व्यवससाद विषण्णमभूत् ॥ ३ ॥

रा० टी०–नेति । महाबलौ रामलक्ष्मणौ वीक्षमाणः सुग्रीवः स्थातुमेकाग्रतया निवेष्टुं मनो नैव चक्रे अत एव परमभीतस्य कपेः सुग्रीवस्य चित्तं व्यवससाद दुःखं प्राप ॥ ३ ॥

गो० टी०–नैवेति । स्थाने स्वस्थाने निश्चलत्व इति यावत् । व्यवससाद दुःखितमभूत् ॥ ३ ॥

४ ] ति० टी०–अवस्थितिप्रस्थानयोर्गुरुलाघवं विमृश्य सचिवैः सह विचार्य ॥ ४ ॥

रा० टी०–चिन्तयित्वेति । धर्मात्मा स सुग्रीवः चिन्तयित्वा वालिबलं संस्मृत्य गुरुलाघवं तद्बलस्य गुरुत्वं स्वबलस्य लाघवं लघुत्वं च विमृश्य निश्चित्य सर्वैः वानरैः सह परमोद्विग्न आसेति शेषः ॥ ४ ॥

गो० टी०–चिन्तयित्वेति । धर्मे राजधर्मे आत्मा मतिर्यस्य स धर्मात्मा अनुचरैः मन्त्रिभिः सह चिन्तयित्वा गुरुलाघवं विमृश्य स्थाने पलायने च गुरुलाघवं विमृश्य च परमोद्विग्नोऽभवत् ॥ ४ ॥

५ ] ति० टी०–ततो विचारानन्तरं प्रस्थानेच्छया सचिवेभ्यः शशंस भयहेतुमिति शेषः ॥ ५ ॥

रा० टी०–तत इति । रामलक्ष्मणौ पश्यन् सन् परमोद्विग्नः सुग्रीवः सचिवेभ्य अमात्येभ्यः शशंस ॥ ५ ॥

गो० टी०–तत इति । रामलक्ष्मणौ तत्स्वभावं शशंस ॥ ५ ॥

६ ] ति० टी०–तमेवाह–एताविति । छद्मना विश्वासार्थम् ऋषिवेषेणेत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् अतो ज्ञात्वा प्रस्थातव्यमित्याशयः ॥ ६ ॥

रा० टी०–शंसनप्रकारमाह–एताविति । इदं दुर्गं वनं प्रचरन्तौ अत एव इहागतौ चीरवसनौ एतौ छद्मना कापट्येन वालिप्रणिहितौ ध्रुवं निश्चितमेतत् ॥ ६ ॥

गो० टी०–एताविति । प्रणिहितौ चारौ छद्मना ऋषिवेषव्याजेन ॥ ६ ॥

७ ] ति० टी०–ततः सुग्रीवोक्त्यनन्तरं सुग्रीवसचिवास्तौ परमधन्विनावत एव शङ्कास्पदौ दृष्ट्वा तस्मात्पूर्वमधिष्ठिताद्गिरितटादन्यत्तस्यैव गिरेः शिखरं जग्मुः सुग्रीवेण सहेति शेषः । 'अन्यं शिखरम्' इति पाठे पुंस्त्वमार्षम् ॥ ७ ॥

रा० टी०–तत इति । ततः सुग्रीववचनश्रवणानन्तरं सुग्रीवसचिवाः परमधन्विनौ रामलक्ष्मणौ दृष्ट्वा तस्मात् गिरितटात् अन्यत् शिखरं जग्मुः सुग्रीवेण सहेति शेषः ॥ ७ ॥

गो० टी०–तत इति । जग्मुः सुग्रीववचने हितत्वबुद्ध्येति शेषः ॥ ७ ॥

८ ] ति० टी०–ते क्षिप्रं शिखरान्तरमभिक्रम्य प्राप्य यूथपर्षभं वानरश्रेष्ठं सुग्रीवं परिवार्योपतस्थिरे उपविष्टाः ॥ ८ ॥

रा० टी०–ते इति । यूथपाः ते सचिवाः यूथपर्षभं सुग्रीवं परिवार्य उपतस्थिरे ॥ ८ ॥

गो० टी०–त इति । अभिगम्य नानादिक्षु पलायिताः एकत्र समागम्य ॥ ८ ॥

९–११ ] ति० टी०–उक्तमेव विवृणोति–एवमिति । उक्तरीत्या स्थितिगतिभयाभयसुखदुःखादावेकायनमेकमार्गसमानत्वं गताः । गिरेः प्रागधिष्ठितगिरिशृङ्गाद्गिरिं तस्यैव शिखरान्तरं मृगत्रासादि कुर्वन्तो ययुर्गतवन्तः ॥ ९–११ ॥

रा० टी०–वानरान्तराणां वृत्तान्तमाह–एवमिति । एवमनेन प्रकारेण भीताः अत एव एकायनगताः एकमार्गं प्राप्ताः गिरेर्गिरिं प्लवमाना गच्छन्तः गिरीणां शिखराणि वेगेन प्रकम्पयन्तः प्लवमानाः कंचित्तरुमुल्लङ्घन्तः महाबलाः सर्वे शाखामृगाः वानराः तत्र तस्मिन्समये ततः नान् नगान् वृक्षान् बभञ्जुः । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०–एकमिति । पुनरपि गिरेर्गिरिं प्लवमानाः गिरीणां शिखराण्यपि प्रकम्पयन्तः एकायनगताः क्रमेणैकस्थानगताः सन्तः एकम् एकाकिनं सुग्रीवमुपतस्थिर इत्यनुषङ्गः । 'एवमेकायनगताः' इति पाठे एवमुक्तरीत्या एकायनगतास्ते प्रकम्पयन्तोऽभवन्निति योजना ॥ ९ ॥

१ स्थाने इति गो. पाठः । २ अनुचरैरिति गो. पाठः । ३ अपीति गो. पाठ.

ततः सुग्रीवसचिवाः पर्वतेन्द्रे समाहिताः । संगम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः॥ १२ ॥
ततस्तं भयसंत्रस्तं वालिकिल्बिषशङ्कितम् । उवाच हनुमान्वाक्यं सुग्रीवं वाक्यकोविदः॥ १३ ॥
संभ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान् । मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥ १४ ॥
यस्मादुद्विग्नचेतास्त्वं विद्रुतो हरिपुङ्गव । तं क्रूरदर्शनं क्रूर नेह पश्यामि वालिनम् ॥ १५ ॥
यस्मात्तव भयं सौम्य पूर्वजात्पापकर्मणः । स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम्॥ १६ ॥
अहो शाखामृगत्वं ते व्यक्तमेव प्लवङ्गम । लघुचित्ततयाऽऽत्मानं न स्थापयसि यो मतौ १७ ॥
बुद्धिविज्ञानसंपन्न इङ्गितैः सर्वमाचर । नह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि॥ १८ ॥

गो० टी०—तत इति । दुर्गं गिरिः ॥ १० ॥

रा० टी०—आप्लुवन्त इति । तदा तस्मिन्समये तं महागिरिं सर्वत आप्लवन्तः मृगादीन् त्रासयन्तः सन्तः ययुः सुग्रीवसमीपं प्रापुः ॥ ११ ॥

गो० टी०—आप्लुवन्त इति । आप्लवन्तो ययुः नतु मन्दं ययुरित्यर्थः ॥ ११ ॥

१२ ति० टी०—सुग्रीवसचिवा हनुमदादयः॥ १२ ॥

रा० टी०—तत इति । ततः सर्ववानरसमागमानन्तरं समाहिता एकाग्रचित्ता. सुग्रीवसचिवाः कपिमुख्येन सुग्रीवेण पर्वतेन्द्रे संगम्य प्राञ्जलय. सन्तः स्थिताः ॥ १२ ॥

गो० टी०—तत इति । पर्वतेन्द्रम् ऋश्यमूकं पर्यन्तपर्वतेषु तत्र तत्र गत्वा पुनस्तमेव ऋश्यमूकं ययुरित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—वालिकिल्बिषेण वालिप्रवर्तनया किल्बिषाद्वधाच्छङ्कितम् ॥ १३ ॥

रा० टी०—तत इति । ततः सर्वसंगमानन्तरं वालिकिल्बिषशङ्कितं वालिनि भासमानस्वापराधेन भीतम् अत एव भयसंत्रस्तं भयाभ्यां वालिप्रेषिताविमाविति संभावनया भयहेतुभ्या संत्रासवन्तं सुग्रीवं वाक्यकोविदः हनूमान् उवाच॥१३॥

गो० टी०—तत इति । वालिकिल्बिषेण वालिकपटेन शङ्कितं वालिना प्रेषिताविमाविति शङ्कितमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—संभ्रमश्चित्तक्षोभः । वालिकृते वालिनिमित्तम् । सर्ववानरैः मलयो मलयपर्यायो ऋष्यमूकः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—संभ्रम इति । वालिकृते युष्मद्बाधोद्देश्यकवालिप्रयत्नार्थं संभ्रमः भ्रांतिः सर्वैः भवद्भिस्त्यज्यताम् । तत्र हेतुः—यतः अय गिरिर्मलयः मस्य भवद्विघातकवालिनः लयः ऋपिशापाद्विध्वंसो यस्मिन् सः अत इह वालिनो भयं नास्ति ॥ १४ ॥

गो० टी०—संभ्रम इति । वालिकृते वालिनिमित्तं संभ्रमस्त्यज्यताम् । मलय इति पर्वतमात्रस्य नाम अयं मलयः अयं पर्वतः गिरिवरः ऋश्यमूक इत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—यस्माद्वालिनः ॥ १५ ॥

रा० टी०—यस्मादिति । यस्मात् वालिनः विद्रुतः पलायितः अत एव उद्विग्नचेताः त्वमसि तं क्रूरदर्शनं वक्रदृष्टिं क्रूरं क्रूरकर्माणं वालिनमिह न पश्यामि, तस्येहागमनं न संभावयामीत्यर्थः ॥ १५ ॥

गो० टी०—वाली वेषान्तरधारी समागत इति भ्रमं वारयति—यस्मादित्यादिना । यस्मात् वालिनः क्रूरं क्रूरकर्माणम् ॥ १५ ॥

१६] ति० टी०—तदेवाह आदरात्—यस्मात्तवेति । पूर्वजाद्वालिन. इह पर्वते तस्मात्ते भयं न पश्यामीत्यन्वय. ॥ १६ ॥

रा० टी०—यस्मादिति—यस्मात् पूर्वजात् त्वत्तः पूर्वजन्मनः पापकर्मण. वालिनः तव भयं स दुष्टात्मा वाली यद्यपीह न अतः ते भयं न पश्यामि. तथापि हे प्लवङ्गम ! लघुचित्ततया अल्पज्ञानेन हेतुना आत्मानं स्वमनः मतौ सम्यग्विचारे यस्त्वं न स्थापयसि तस्य ते व्यक्तं प्रकटितं यत् शाखामृगत्वं प्राकृतवानरधर्मः कारणाभावेऽपि भीतत्वमित्यर्थः, तत् अहो आश्चर्यम् । अहो इत्यनेन तस्य प्राकृतवानरभिन्नत्वं व्यञ्जितम् । यद्यपि तथापीत्यनयोरध्याहारः । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०—यस्मादिति । पापकर्मणः अनुजभार्यापहारिणः भयं भयहेतुम् ॥ १६ ॥

१७ ] ति० टी०—शाखामृगत्वं बहुचेष्टचपलचित्तमर्कटत्वम् । तदेवाह—लघुचित्ततयेति । लघु चपलम् ॥ १७ ॥

गो० टी०—अहो इति । मतौ सम्यग्विचारे ॥ १७ ॥

१८ ] ति० टी०—ननु ततो भयाभावेऽपि तत्प्रेरिताद्भयम्, तत्राह—बुद्धीति । इङ्गितैरन्तराशयगमकैश्चेष्टाविशेषैर्बुद्ध्या निश्चयात्मकेन विज्ञानेन पारक्याशयज्ञानेन संपन्नः संस्तदुचितं सर्वमाचर । सर्वभूतानि निजशास्यप्रजाजातम् ॥ १८ ॥

रा० टी०—ननु वालिनः भयाभावेऽपि तत्प्रेष्याद्भयसंभावनाऽस्त्येवेत्यत आह—बुद्धीति । बुद्धिविज्ञानसंपन्नस्त्वमिङ्गितैः परचेष्टाजनितविचारैः सर्वं भीतिनिवर्तकयत्नादि आचर हि यतः अबुद्धिं विचाराभावं गतः प्राप्तो राजा सर्वभूतानि सर्वस्वप्रजाः न शास्ति शासितुमर्हतीत्यर्थः ॥ १८ ॥

गो० टी०—बुद्धीति । बुद्धिः सामान्यतो ज्ञानम्, विशेषतो ज्ञानं विज्ञानम्, इङ्गितम् अभिप्रायसूचको व्यापारः सर्वं कार्यम् अबुद्धिम् अबुद्ध्यादिकम् ॥ १८ ॥

१ पर्वतेन्द्रं समाश्रिता इति गो. पाठः । २ त भयसंविग्नमिति गो. पाठः ।

सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः । ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९ ॥
दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ । कस्य न स्याद्भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २० ॥
वालिप्रणिहितावेवं शङ्केऽहं पुरुषोत्तमौ । राजानो बहुमित्राश्च विश्वासो नात्र हि क्षमः ॥ २१ ॥
अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः । विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्त्यपि ॥ २२ ॥
कृत्येषु वाली मेधावी राजानो बहुदर्शिनः । भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३ ॥
तौ त्वया प्राकृतेनेव गत्वा ज्ञेयौ प्लवङ्गम । इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ॥ २४ ॥
लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि । विश्वासयन्प्रशंसाभिरिङ्गितैश्च पुनः पुनः ॥ २५ ॥
ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुंगव । प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६ ॥

१९ ] ति० टी०–नेदं भयं चापलमूलमित्याह–सुग्रीव इति ॥ १९ ॥

रा० टी०–सुग्रीव इति । हनूमतः शुभं वाक्यं श्रुत्वा ततस्तं हनूमन्तं सुग्रीवः शुभतरं वाक्यमुवाच ॥ १९ ॥

गो० टी०–सुग्रीव इति । ततः शुभतरं तद्वाक्यादत्यन्तशुभम् ॥ १९ ॥

२० ] ति० टी०–तदेवाह–दीर्घेति ॥ २० ॥

रा० टी०–तद्वचनाकारमाह–दीर्घेति । सुरसुतोपमौ एतौ दृष्ट्वा कस्य पुरुषस्य भयं न स्यात् ॥ २० ॥

गो० टी०–दीर्घबाहू इति । दीर्घा बाहवो ययोस्तौ दीर्घबाहू इत्येवं सर्वत्र समासः ॥ २० ॥

२१ ] ति० टी०–ननु वनचारिणा वानरेण वालिना कुतोऽनयोः प्रवर्तना, तत्राह–राजान इति । बहुमित्रा जात्यन्तरेष्वपि मित्रवन्तः यथा दशरथो गृध्रराजेन मित्रवान्, एवं वालिनापि नरमैत्र्यं संभावितमिति भावः ॥ २१ ॥

रा० टी०–तत्र हेतुमाह–वालीति । एतौ पुरुषोत्तमौ वालिप्रणिहितौ वालिना प्रेषितौ इति अहं शङ्के । शङ्काया बीजमाह–हि यतः राजानः बहुमित्राः अनेकविधमित्रवन्तः भवन्तीति शेषः, अतः अत्र राजविषये विश्वासः न क्षमः न कार्य इत्यर्थः ॥ २१ ॥

गो० टी०–वालिप्रणिहिताविति । वालिप्रणिहितौ नाहं वाली समागत इति बिभेमि किंतु तत्प्रेषिताविति मत्वेति भावः । एतादृशतदीयपुरुषस्य का प्रसक्तिस्तत्राह–राजान इति । अत्र राजविषये ॥ २१ ॥

२२ ] ति० टी०–नन्वथापि तापसाभ्यां कुतो भयम्, तत्राह–अरयश्चेति । यतस्ते छद्मचारिणः, अतो विज्ञेयाः । यतश्च विश्वस्तानां वञ्चनया प्राप्तविश्वासानामरीणां स्वयमविश्वस्ता छिद्रेषु प्रहारावकाशेषु प्रहरन्ति अतो विज्ञेया इत्यर्थः २२

रा० टी०–अरय इति । छद्मचारिणः कपटाचरणशीलाः अरयः मनुष्येण जनेन विज्ञेयाः विशेषतः शङ्कनीया इत्यर्थः, हि यतः विश्वस्तानां कथंचित् विश्वासं प्रापितानां छिद्रेषु अवसरेषु अविश्वस्ताः स्वयं विश्वासाभाववन्तः प्रहरन्ति, संबन्धसामान्ये षष्ठी ॥ २२ ॥

गो० टी०–अरयश्चेति । छन्नचारिणोऽरय. मनुष्येण शत्रुमता ज्ञेयाः । कुत इत्यत्राह–विश्वस्तानामिति । विश्वस्तानां शत्रूणां रन्ध्रेषु प्रमादेषु सत्सु स्वयमविश्वस्ताः सन्तः प्रहरन्ति हि ॥ २२ ॥

२३ ] ति० टी०–उक्तमुपनयति–कृत्येष्विति । राजानो बहुदर्शिनो नानाविधवञ्चनोपायज्ञाः परहन्तारो भवन्ति । ते एते प्राकृतैः प्राकृतवेषैश्चारैर्ज्ञेया ज्ञातव्यान्तराशयाः ॥ २३ ॥

रा० टी०–कृत्येष्विति । यतः राजानो बहुदर्शिनः अनेकविधोपायाभिज्ञाः अत एव परहन्तारः शत्रुध्वंसकाः भवन्ति अतो नरैर्जनैः प्राकृतै. स्वाभाविकोपायैरुपलक्षितास्ते शत्रुभूता राजानः ज्ञेयाः प्रतिक्षणमन्वेषणीयाः अत एव कृत्येषु राजोचितकार्येषु वाली मेधावी निपुणः । एतेन वाली अवश्यमन्वेषणीय इति ध्वनितम् ॥ २३ ॥

गो० टी०–कृत्येष्विति । कृत्येषु कर्तव्यकार्येषु वाली मेधावी दूरदर्शी । स्वभावश्चाय राज्ञामित्याह–राजान इति । राजानः बहुदर्शनाः बहूपायज्ञाः परहन्तारो भवन्ति, ते प्राकृतैः दीनवेषधरैः नरैः ज्ञेयाः ॥ २३ ॥

२४ ] ति० टी०–यत एवमतः–ताविति । प्राकृतेनेव उदासीनेनेव इङ्गितानां प्रकारैर्विशेषैः, रूपेण सौम्यासौम्याकारेण, व्याभाषणेन तत्तत्प्रसङ्गे दीयमानोत्तरेण च ॥ २४ ॥

रा० टी०–तत्प्रकारमाह–ताविति । प्राकृतेन स्वाभाविकेन गमनेन गत्वा इङ्गितानां व्यापाराणां प्रकारैः उत्कटाउत्कटादिविशेषाकारैः रूपव्याभाषणेन रूपेण मृद्वमृद्वाकाराकृत्या व्याभाषणेन सकपटाकपटाकारवचनेन च तौ नरवरा त्वया ज्ञेयौ ज्ञातव्यौ ॥ २४ ॥

गो० टी०–ताविति । प्राकृतेन प्राकृतवेषेण इङ्गितानां भावसूचककायिकव्यापाराणां प्रकारैरवान्तरभेदैः, रूपेण सौम्यासौम्यलक्षणेन, व्याभाषणेन अन्योन्यसंभाषणेन च तौ ज्ञेयौ ॥ २४ ॥

२५–२६ ] ति० टी०–तयोर्मनुष्ययोः यदि त्वयि समी-

१ एताविति गो. रा. पाठ. । २ रन्ध्रेष्विति गो पाठः । ३ हीति गो. रा पाठ. । ४ दर्शना इति गो. पाठ. ।

शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवङ्गम । व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टताऽनयोः ॥ २७ ॥
इत्येवं कपिराजेन संदिष्टो मारुतात्मजः । चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८ ॥
तथेति संपूज्य वचस्तु तस्य कपिः सुभीतस्य दुरासदस्य ।
महानुभावो हनुमान्ययौ तदा स यत्र रामोऽतिबली सलक्ष्मणः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।

धृतभिक्षुवेषो हनुमान्रामलक्ष्मणावुपेत्य कृतप्रणामः कौ युवामिति पृष्ट्वा श्रावितसुग्रीवेतिवृत्तस्तत्स्नेहसंग्रहाकाङ्क्षा न्यवेदीन् । हनुमद्व्यवहारचातुरीतुष्टो रामस्तद्वेदव्याकरणवेत्तृत्व श्लाघते । रामेणानुमतो लक्ष्मणो रामस्य सुग्रीवेण साकं स्नेहाकाङ्क्षां व्यनक्ति ।

वचो विज्ञाय हनुमान्सुग्रीवस्य महात्मनः । पर्वतादृष्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १ ॥

पस्थिते प्रहृष्टमनसावुत्तरप्रत्युत्तरादौ संतुष्टमनसौ तदा तयोरभिमुखं स्थित्वा ममैव प्रशंसाभिस्तद्बोधकवाक्यैरिङ्गितैर्मामकाभिप्रायबोधनैर्मयि तौ विश्वासयन्नस्य वनस्य प्रवेशस्य प्रयोजनं पृच्छ । यद्वा ममैवाभिमुखं यथा तथा स्थित्वा प्रशंसाभिस्तयोः स्तुतिभिः, इङ्गितैः स्वीयैस्तावात्मनि मयि च विश्वासयन्पृच्छेत्यन्वयः । स्वाभिमुखस्थितिकथनमन्यादृशवचनकथनसंभावनया तन्निरासायेति बोध्यम् ॥ २९ ॥ २६ ॥

रा० टी०–लक्षयस्वेति । तयोर्नृवरयोः भावमभिप्रायं लक्षयस्व जानीहि । यदि तौ प्रहृष्टमनसौ अनुमानादिज्ञातकापट्यरहितान्तःकरणौ तर्हि प्रशंसाभिः तत्कर्मकप्रशंसावचनैः इङ्गितैः स्वचेष्टितैश्च विश्वासयन् स्वविषयकविश्वासमुत्पादयन् ममाभिमुखमेव स्थित्वा अस्य वनस्य वनसंबन्धिनः प्रवेशस्य प्रयोजनं धनुर्धरौ नृवरौ पृच्छ । श्लोकद्वयमेकान्वयि ॥२५॥२६॥

गो० टी०–लक्षयस्वेति । यदि प्रहृष्टमनसौ यदि शुद्धभावौ तदा प्रशंसाभिः तदनुकूलेङ्गितैश्च पुनः पुनः विश्वासयन् ममैवाभिमुखम् अनुकूलं यथा भवति तथा स्थित्वा स्थापयित्वा धनुर्धरौ धनुर्धरतया अत्र वने प्रवेशस्य प्रयोजनं पृच्छ॥२५॥२६॥

२७–२९ ] ति० टी०–प्रभावसरं दर्शयति–शुद्धेति । यद्येतौ शुद्धात्मानावस्मासु द्वेषरहितौ जानीहि ज्ञास्यसि तर्ह्येव तदभिमतं प्रयोजनं पृच्छ । उपसंहरति–व्याभाषितैरिति । दुष्टताऽदुष्टता चेति तन्त्रेण पदच्छेदः ॥ २७–२९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–तत्प्रयोजनमाह–शुद्धेति । प्लवङ्गम हे वानर ! एतौ यदि शुद्धात्मानौ वालिप्रेषितत्वाभावेन शुद्धान्तःकरणौ तर्हि व्याभाषितायैः अनयोः अदुष्टता आचरणादिजनितदोषरहितत्वं विज्ञेया ॥ २७ ॥

गो० टी०–शुद्धेति । यद्येतौ शुद्धात्मानौ तदा पुनरपि जानीहि । किं तेनेत्यत्राह–व्याभाषितैरिति । वाकारश्चार्थः । अदुष्टेति छेदः ॥ २७ ॥

रा० टी०–इतीति । कपिराजेन सुग्रीवेण इत्येवं संदिष्टो मारुतात्मजः यत्र रामलक्ष्मणौ तत्र गमने गमनार्थं बुद्धिं निश्चयं चकार ॥ २८ ॥

गो० टी०–सुग्रीववचनं समीचीनममन्यतेत्याह–इतीति२८

रा० टी०–निश्चयानन्तरकालिकं वृत्तमाह–तथेति । महानुभावः कपिर्हनुमान् सुभीतस्य सुग्रीवस्य वचः तथेति संपूज्य यत्रातिबली रामस्तत्र ययौ ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किधाकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०–तथेति । संपूज्य श्लाघयित्वा । सुभीमस्य दुरासदस्येत्येताभ्यां सुनीतित्वं सूचितम् । महानुभावः वेषान्तरधारणसमर्थः सः हनुमान् यत्र रामो लक्ष्मणश्च तं देशं ययाविन्यन्वयः ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वितीयः सर्गः ॥ २

१ ] ति० टी०–विज्ञाय तात्पर्यतो ज्ञात्वा ॥ १ ॥

रा० टी०–हनुमद्गमनादिवृत्तान्तं बोधयन्नाह–वच इत्यादिभिः । हनुमान् सुग्रीवस्य वचो विज्ञाय यत्र राघवौ तत्र ऋष्यमूकात् पर्वतात् पुप्लुवे जगाम ॥ १ ॥

गो० टी०–प्रथमे सर्गे वैकुण्ठवासिनो भगवतः स्वीयेषु केषांचित्स्वपरत्वे वर्तमाने, केषांचिद्विषयान्तरप्रावण्यमवलोक्य दूयमानमानसस्य दयावृत्तिविशेषः प्रतिपादितः । द्वितीये चेतनस्य भगवदपराधदण्डभीतस्य तस्मिन्नाभिमुख्यमुक्तम् । अथ तल्लाभहेत्वाचार्यकृत्यं दर्शयति तृतीये—वच इत्यादि ॥ १ ॥

१ विज्ञेया स्याद्दुष्टादुष्टता तयोरिति गो. पाठः । २ तत्कपेरिति गो. पाठः । ३ बलश्चेति गो. पाठः ।

कपिरूपं परित्यज्य हनुमान्मारुतात्मजः। भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ॥ २ ॥
ततश्च[1] हनुमान्वाचा श्लक्ष्णया सुमनोज्ञया। विनीतवदुपागम्य राघवौ प्रणिपत्य च ॥ ३ ॥
आबभाषे च तौ वीरौ यथावत्प्रशशंस च। संपूज्य विधिवद्वीरौ हनुमान्वानरोत्तमः[2] ॥ ४ ॥
उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ। राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ[3] ॥ ५ ॥
देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ। त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ॥ ६ ॥

२ ] ति० टी०–भिक्षुरूपं प्राकृततापसरूपम्। शठबुद्धितयाऽविश्वस्तबुद्धितया ॥ २ ॥

रा० टी०–कपीति। अशठबुद्धितया वानरत्वसूचितशठबुद्धित्वाभावेनोपलक्षितो मारुतात्मजो हनुमान् कपिरूपं परित्यज्य तिरोधाय भिक्षुरूपं भेजे प्राप प्रसिद्धं च लोके वानराणां शठबुद्धित्वम् एतेन वानरत्वसूचितशठबुद्धिं मां विज्ञाय रामो न संभाषेत इति हनुमत्संभावना सूचिता, रूपान्तरमगृहीत्वा भिक्षुरूपं भेजे इत्यनेन इमौ दीनदयालू इति हनुमता ज्ञातमिति व्यञ्जितं तेन तद्बुद्धेः प्रभावातिशयो व्यक्तः ॥ २ ॥

गो० टी०–कपीति। रूपान्तरपरिग्रहसामर्थ्यमुच्यते–मारुतात्मज इति। शठबुद्धितया वञ्चकबुद्धितया भिक्षुरूपं संन्यासिवेषम् 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' इत्यमरः ॥ २ ॥

३ ] ति० टी०–विनीतवद्विनीतयोग्यम् ॥ ३ ॥

रा० टी०–तत इति। ततः भिक्षुरूपधारणानन्तरं श्लक्ष्णया मधुरया अत एव मनोज्ञया मनोहरया वाचा उपलक्षितः विनीतवत् विनीतत्ववत् स्थिरं यस्मिन् स हनुमान् वीरौ तौ राघवौ उपागम्य प्राप्य प्रणिपत्य च आबभाषे यथावत्प्रशशंस च। सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०–तत इति सार्धः। विनीतवत् सविनयम् उपागम्य प्रणिपत्य नमस्कृत्य श्लक्ष्णया अपरुषया सुमनोज्ञया अर्थतोऽतिरम्यया वाचा आबभाषे, यथावत्परमार्थतया प्रशशंस च। अत्र भिक्षुरूपस्य हनुमतः प्रणामादन्यत्रापि भिक्षोर्गृहस्थादिविषये प्रणामः कर्तव्य एवेति विज्ञायते। संन्यासिनो गृहस्थादिप्रणामनिषेधवचनान्यज्ञविषयाणीति मन्तव्यानि। यदि हि ज्ञानाधिकं दृष्ट्वा कर्ममात्रेणाधिको यतिर्न प्रणमेत् तर्हि 'विप्राणां ज्ञानतो ज्यैष्ठ्यम्' इति मनुवचनं विरुध्येत। नहि तत्प्रणामनिषेधकं मनुवचनं किंचिद्दृश्यते किं त्वनारभ्याधीतमदृष्टाकरं यत्किंचिद्यतिप्रणामनिषेधवचनं किंवदन्तीसिद्धं तस्य च विषयोऽज्ञगृहस्थादिरूपः। यत्तु कैश्चिदुक्तम् अत्यद्भुतरामलक्ष्मणरूपदर्शनसंजातातिविस्मयः सत्यङ्गीकृतं भिक्षुरूपं विस्मृत्य अवशाः प्रतिपेदिरे इतिवत् प्रणनामेति न विरोध इति, तन्न उपक्रमविरोधात्। इङ्गितवचनादिभिः परहृदयज्ञानार्थं हि प्रेषितोऽयम् नहि तथा नियुक्तः सुनिपुणमतिः सचिवधुरंधरः स्वकार्यविरोधकरं परिगृहीताकारविरुद्धमविरुद्धमविस्रम्भहेतुत्वेन परेङ्गितानाविष्कारहेतुभूतं कार्यं कुर्यात्। यदप्युक्तम् 'रूपमेवास्यैतन्महिमानं व्याचष्टे' इति न्यायेन दर्शनमात्रेणैतौ सुग्रीवविरोधिनिरसनदक्षाविति निश्चित्य परिगृहीतवेषान्तरस्य स्वस्य चारत्वं प्रकटयितुं नमस्कारं कृतवानिति न दोष इति। तदपि न, तथा सति सुग्रीवो नामेत्यादिवक्ष्यमाणमेव प्रथमं कथयेत्। केचित्तु भिक्षुर्ब्रह्मचारी अतो न दोष इत्याहुः तन्न, तादृशभिक्षुकत्वस्य पूर्वमेव सिद्धत्वेन इदानीमपरिग्राह्यत्वात्। अपरे तु सर्वथा कपिरूपं परित्यज्येत्युपक्रमात् उपरिष्टात् प्रच्छन्नत्वोक्त्या च मानुषरूपाङ्गीकारावश्यंभावात्तद्रूपविशिष्टं ब्रह्मचर्यमेवात्र भिक्षुशब्देनोच्यत इति न विरोध इत्यूचिरे। तत्पक्षे तु पूर्वोक्तया दिशा दूषणं चिन्त्यम् ॥ ३ ॥

४ ] ति० टी०–यथावत्प्रशशंस न तु मिथ्यास्तुतिरित्यर्थः। आबभाषे वक्तुमभिमुखीचकार। संपूज्य वाचा प्रशस्य ॥ ४ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–समिति। वीरौ सत्यपराक्रमौ रामलक्ष्मणौ हनुमान् विधिवत्संपूज्य कामतः सुग्रीवेच्छानुसारात् मृदुवाक्यमुवाच। अर्धद्वयमेकान्वयि ॥ ४ ॥

गो० टी०–संपूज्येति। कामतः भक्त्या पूर्वोक्तप्रशंसा भक्तिकृता न तु केवलपरीक्षाकृतेति भावः ॥ ४ ॥

५ ] ति० टी०–कामतः सुग्रीवोपदेशाविरुद्धस्वेच्छातः। राजर्षी च देवौ च तत्प्रतिमौ ॥ ५ ॥

६ ] ति० टी०–वरवर्णिनौ ब्रह्मचारिश्रेष्ठौ। अन्यांश्च रक्षोसुरादीन् ॥ ६ ॥

रा० टी०–तदाकारमाह–राजर्षीति। राजर्षीणां देवपूजिता प्रतिमा प्रतिकृतिर्ययोस्तौ वरवर्णिनौ मृगगणान् अन्यांश्च वनचारिणः त्रासयन्तौ स्वतेजसा धर्षयन्तौ भवन्तौ इमं देशं कथं केन प्रकारेण प्राप्तौ। राजर्षीणामित्यत्र द्वन्द्वस्तत्पुरुषो वा। अर्धत्रयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–राजर्षीत्यादिश्लोकद्वयम्। मृगान् अन्यान् वनचारिणश्च त्रासयन्तौ समन्ततः पम्पातीररुहान् वृक्षान् वीक्षमाणौ च भवन्तौ वरवर्णिनौ स्निग्धरूपवन्तौ कर्मधारयादपि मत्वर्थीयो दृष्टचरः, अत एव राजर्षिदेवप्रतिमौ संशितव्रतौ तीक्ष्णव्रतौ अत एव तापसौ तपस्विवेषौ भूत्वा इमं दुर्गमं देशं कथं प्राप्तौ ॥ ५ ॥ ६ ॥

१ स इति गो. पाठः। २ मारुतात्मज इति गो. पाठः। ३ शंसिनेनि रा. पाठ

पम्पातीररुहान्वृक्षान्वीक्षमाणौ समन्ततः । इमां नदीं शुभजलां शोभयन्तौ तरस्विनौ ॥ ७ ॥
धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ । निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः॥ ८ ॥
सिंहविप्रेक्षितौ वीरौ महाबलपराक्रमौ । चक्रचापनिभे चापे गृहीत्वा शत्रुनाशनौ ॥ ९ ॥
श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ । हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥ १० ॥
प्रभया पर्वतेन्द्रोऽसौ युवयोरवभासितः । राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ॥ ११ ॥
पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ । अन्योन्यसदृशौ वीरौ देवलोकादिहागतौ ॥ १२ ॥
यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुंधराम् । विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥ १३ ॥

७ ] ति० टी०–समन्ततो वीक्षमाणौ । किंचिद्वस्त्वन्वेषमाणाविवेत्यर्थः । इमां नदीमिति सरस्यपि विस्तृतत्वेन नदीत्वोपचार इति केचित्, नद्येवेत्यन्ये ॥ ७ ॥

८-९ ] ति० टी०–शोभनो वर्ण आभा कान्तिश्च ययोस्तौ निःश्वसन्तौ किंचिद्दुःखवशेनेति शेषः । इमा वन्याः प्रजाः पीडयन्तौ स्वरूपमात्रेणेति शेषः ॥ ८ ॥ ९ ॥

१० ] ति० टी०–हस्तः शुण्डादण्डः ॥ १० ॥

रा० टी०–पम्पेति । पम्पातीररुहान् पम्पायास्तीरे जातान् वृक्षान् वीक्षमाणौ इमां नदीं नदीसदृशीं पम्पां शोभयन्तौ तरस्विनौ अतिबलवन्तौ धैर्यवन्तौ सुवर्णाभौ सुवर्णसदृशशरीरौ चीरवाससौ खण्डपटधरौ निःश्वसन्तौ वरभुजौ महाबाहू इमाः अदृष्टमानुषाः वन्याः प्रजाः पीडयन्तौ, किं च इमा अस्मत्प्रभृतीन् प्रजाः पीडयन्तौ निःश्वासोपलक्षितस्वदुःखदर्शनेन पीडां प्रापयन्तौ युवां कौ । नदीशब्द आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः, नद्येव तत्र काचिदिति केचित् । श्लोकद्वयमेकान्वयि । द्रुतसुवर्णस्य श्यामत्वेन दृश्यमानत्वात् अद्रुतस्य च गौरवर्णत्वेन दृश्यमानत्वात् सुवर्णवर्णाभाविति न विरुद्धं सुवर्णशब्देन अवस्थाद्वयापन्नयोर्ग्रहणे बाधकाभावात् ॥ ७ ॥८॥

रा० टी०–सिंहेति । सिंहविप्रेक्षितौ सिंहस्येव विप्रेक्षितं प्रेक्षणं ययोस्तौ, सिंहातिबलविक्रमौ सिंहातिकामकबलविक्रमविशिष्टौ शक्रचापनिभे इन्द्रधनुस्तुल्ये चापे धनुषी गृहीत्वा शत्रुनाशना रिपुविनाशकौ वृषभश्रेष्ठविक्रमौ वृषभश्रेष्ठस्य श्रेष्ठवृषभस्येव विक्रमः पादन्यासो ययोस्तौ हस्तिहस्तोपमभुजौ शुण्डादण्डसदृशभुजविशिष्टौ अत एव राज्यार्हौ अमरप्रख्यौ देवतुल्यौ ययोः युवयोः प्रभया असौ पर्वतेन्द्रः अवभासितः प्रकाशितः तौ युवामिह अस्मिन्देशे कथं केन हेतुना आगतौ प्राप्तौ । श्लोकत्रयमेकान्वयि ॥ ९-११ ॥

गो० टी०–इमामित्यादिसार्धश्लोकत्रयमेकान्वयम् । पम्पायाः सरस्त्वेऽपि स्वल्पतया पूर्वापरप्रवाहवत्त्वेन नदीत्वमविरुद्धम् । शोभयन्तौ स्वतेजसेति शेषः । सुवर्णाभौ रामस्य श्यामत्वेऽपि लक्ष्मणस्य पीतवर्णत्वाच्छत्रिन्यायात् सुवर्णाकान्तित्वम् । निःश्वसन्तौ वनसंचारायासात् वरभुजौ सुन्दरभुजौ हस्तिहस्तेत्यनेन दैर्घ्यपीवरत्वयोर्वक्ष्यमाणत्वात् इमाः प्रजाः पक्षिमृगादीन् पीडयन्तौ अपूर्वदर्शनेन विद्रावकावित्यर्थः, सिंहस्येव विप्रेक्षितं वीक्षणं ययोस्तौ सिंहातिबलविक्रमौ सिंहातिशायिबलपराक्रमौ शक्रचापनिभेन्द्रधनुस्तुल्ये चापे गृहीत्वा शत्रुसूदनौ शत्रुसंहारकौ नीलभेदपरभागतया धनुषोराभरणत्वं शत्रुसंहारकत्वेनायुधकोटिप्रविष्टत्वं च दर्शितमाभ्यां विशेषणाभ्याम् । श्रीमन्तौ कान्तिमन्तौ रूपसंपन्नौ सौन्दर्ययुक्तौ वृषभश्रेष्ठविक्रमौ वृषभश्रेष्ठगमनौ द्युतिमन्तौ तेजस्विनौ तेजस्तु श्रियो भिन्नमिति न पुनरुक्तिः । एवंभूतौ युवां काविन्त्यन्वयः॥७-१०॥

११ ] ति० टी०–राज्यार्हौ देवतुल्यौ देशं हित्वा कथमिहागताविन्त्यर्थः । आकारतो महाराजत्वनिश्चयादेवमुक्तिः ॥११॥

गो० टी०–प्रभयेत्यर्धम् ॥ ११ ॥

गो० टी०–राज्येत्यादित्रय एकान्वयाः । अमरप्रख्यौ देवतुल्यपराक्रमौ देवलोकादागतौ वीराविव स्थितौ यदृच्छया दैवात् वसुन्धरां प्राप्तौ चन्द्रसूर्याविव स्थितौ देवरूपिणौ देवतुल्यरूपिणौ वीरौ मानुषौ युवां राज्यार्हावपि राज्यं त्यक्त्वा वीरौ जटामण्डलधारिणावविच्छिन्नजटामण्डलधारिणौ भूत्वा इहदेशं वनदेशं कथं किमर्थम् आगतौ । समस्तराजलक्षणलक्षितयोर्युवयोः राज्यभोग एवोचित. न तु वनवास इति भावः ॥ १२-१४ ॥

१२-१३ ] ति० टी०–देवलोकादिह भूतल आगताविव ॥ १२ ॥ १३ ॥

रा० टी०–पद्मेति । पद्मपत्रेक्षणौ अन्योन्यसदृशौ परस्परतुल्यौ यदृच्छया स्वेच्छया देवलोकाद्वसुन्धरां संप्राप्तौ वीरौ चन्द्रसूर्याविव इहागतौ विशालवक्षसौ वीरौ भवद्गुणज्ञानरहितेषु विशेषकं या प्रापकौ वीरौ मानुषौ नित्यमनुष्यौ देवरूपिणौ देवानामप्युत्पादकौ सिंहस्कन्धौ समदौ मदसहितौ वीरौ गोवृषाविव सकिरणवृषसदृशौ उभौ युवां ससागरवनां सागरवनसहितां विन्ध्यमेरुविभूषितां कृत्स्नामिमां पृथिवीं रक्षितुं योग्यौ अहं मन्ये अतः आयताः विस्तृताः सुवृत्ताः पुष्टाः परिघोपमाः सर्वभूषणभूषार्हा इमे बाहवः किमर्थं न विभूषिताः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ १२-१६ ॥

१ सूदनाविति गो. पाठः । २ इवेति गो. पाठः ।

सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ । आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥ १४ ॥
सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः । उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ॥ १५ ॥
ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् । इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥ १६ ॥
प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते । संपूर्णाश्च शितैर्बाणैस्तूणाश्च शुभदर्शनाः ॥ १७ ॥
जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः । महाप्रमाणौ विपुलौ तप्तहाटकभूषणौ ॥ १८ ॥
खड्गावेतौ विराजेते निर्मुक्तभुजगाविव । एवं मां परिभाषन्तं कस्माद्वै नाभिभाषतः ॥ १९ ॥
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरपुंगवः । वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ २० ॥
प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना । राज्ञा वानरमुख्यानां हनुमान्नाम वानरः ॥ २१ ॥
युवाभ्यां स हि धर्मात्मा सुग्रीवः सख्यमिच्छति । तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥ २२ ॥

१४-१५ ] ति० टी०-समदौ हृष्टौ गोवृषौ तरुणवृषभाविव ॥ १४ ॥ १६ ॥

गो० टी०-आयताश्चेति । आयताः आजानुविलम्बिनः सुवृत्ताः भुजगभोगवद्वृत्ताः बाहवः रामस्य दक्षिणो बाहुरिति लक्ष्मणस्य रामबाहुत्वात्तद्बाहुभ्यां बहुवचनम् । यद्वा हनुमतो भक्तत्वेन तस्य चतुर्भुजवेषेण दृश्योऽभवत् । यद्वा द्वयोर्बाहुचतुष्टयवत्त्वाद्बहुवचनम् । परिघोपमाः परिघो गदाविशेषः तदुपमाः स्वसौन्दर्यानुभवपराणां समस्तविरोधिनिवर्तनक्षमा इत्यर्थः, सर्वभूषणभूषार्हाः आभरणस्याभरणमित्युक्तरीत्या भूषणान्यपि भूषयितुमर्हाः किमर्थं न विभूषिताः, इमान् भूषणैरलंकृत्य आभरणाभरणत्वं किमिति न प्रकाशितमित्यर्थः । यद्वा दृष्टिदोषपरिहाराय एतादृशबाहुसौन्दर्यमाच्छादयितव्यं तत्किमर्थं नाच्छादितमिति भावः । यद्वा आभरणच्छन्नसौन्दर्यमेवालमस्मद्वशीकरणाय अधिकं निरावरणसौन्दर्यप्रदर्शनमिति भावः । यद्वा राजकुमाराणां क्षणमात्रं ताम्बूलाभावे म्लानतावत्क्षणमात्रविरहेऽपि स्थातुमनर्हा भूषाः किमर्थं विश्लेषिता इति भावः । यद्वा एवं भूषणविरहः कस्य वा शत्रोर्मूलघातायेति भावः । अनेन अप्रतिहतसंकल्पत्वेऽपि नित्यसूरीन् विहाय चतुर्धावतरणे को हेतुरित्युक्तम् ॥ १५ ॥ १६ ॥

१६ ] ति० टी०-चित्रमनुलेपनं स्वर्णजलरूषणं ययोस्ते ॥ १६ ॥

रा० टी०-इमे इति । चित्रे अनेकचित्रविशिष्टे श्लक्ष्णे चिक्कणे चित्रानुलेपने द्रुतसुवर्णादिनिर्मितचित्ररूपानुलेपनविशिष्टे इमे धनुषी हेमविभूषिते इन्द्रस्य वज्रे इव प्रकाशेते । अर्धद्वयमेकान्वयि ॥ १६ ॥

गो० टी०-इमे इति । चित्रे लोके एतादृशधनुषोरदर्शनादद्भुतावहे वज्रे इत्यभूतोपमा ॥ १७ ॥

१७-१८ ] ति० टी०-हेमभूषिते वज्रे यथा ॥ १७ ॥ १८ ॥

रा० टी०-संपूर्णा इति । शितैः तीक्ष्णैः जीवितान्तकरैः रिपुजीवनविध्वंसकैः पन्नगैरिव घोरैः ज्वलद्भिः प्रकाशमानैः बाणैः संपूर्णाः अत एव शुभदर्शनाः तूणा इषुधयः सन्तीति शेषः ॥ १७ ॥

गो० टी०-संपूर्णा इति । तूणा इति बहुवचनम् एकैकस्य पार्श्वद्वयेऽपि तूणीरद्वयसत्त्वात् ॥ १८ ॥

रा० टी०-महेति । महाप्रमाणौ अतिप्रमाणविशिष्टौ विपुलौ पुष्टौ तप्तहाटकभूषणौ द्रुतसुवर्णालिखितौ एतौ खड्गौ निर्मुक्तभुजगौ त्यक्तकञ्चुकसर्पाविव विराजेते ॥ १८ ॥

गो० टी०-महेति । महाप्रमाणाविति दीर्घत्वम् । विस्तीर्णाविति विशालता । तप्तहाटकं द्रुतकनकम् । निर्मुक्तौ निर्मुक्तत्वचौ ॥ १९ ॥

१९ ] ति० टी०-निर्मुक्तौ मुक्तकञ्चुकौ । कस्माद्वै कस्माद्धेतोर्नाभिभाषथः प्रत्युत्तरमिति शेषः ॥ १९ ॥

रा० टी०-एवमिति । एवमनेन प्रकारेण परिभाषन्तं भवद्गुणान् कथयन्तं मां कस्मान्नाभिभाषथः उत्तरं वदथः । अर्धं पृथक् । ननु त्वद्विषयकज्ञानमन्तरा नोच्यते इत्यत आह-सुग्रीव इति । वानरपुंगवः वानरश्रेष्ठः भ्रात्रा विनिकृतः निःसारितः अत एव दुःखितः कश्चित्सुग्रीवो नाम धर्मात्मा जगद्भ्रमति ॥ १९ ॥ २० ॥

गो० टी०-एवमिति । परिभाषन्तं पुनः पुनर्भाषमाणं नाभिभाषतः नाभिभाषेथे । व्यत्यय आर्षः ॥ २० ॥

२०-२१ ] ति० टी०-ननु कस्त्वं कस्य वा यस्यास्माभिः प्रत्युत्तरं देयम्, तत्राह-सुग्रीव इति । सुग्रीवस्याश्रुतत्वबोधनाय तत्स्तुतिपूर्वकमुक्तिः । विनिकृतो निरस्तः ॥ २० ॥ २१ ॥

गो० टी०-एवं स्ववाक्सौष्ठवेन तूष्णींभूतौ दृष्ट्वा स्वकार्यमावेदयति-सुग्रीव इत्यादिना । विनिकृतः वञ्चितः ॥ २१ ॥

रा० टी०-प्राप्त इति । वानरमुख्यानां राज्ञा महात्मना तेन सुग्रीवेण प्रेषितः हनुमान्नाम वानरोऽहं प्राप्तः स्वामिति शेषः ॥ २१ ॥

गो० टी०-प्राप्त इति । महात्मना महाबुद्धिना ॥ २२ ॥

२२ ] ति० टी०-ननु स्वद्राज्ञाऽस्मत्समीपे प्रेषणं किमर्थम्, तत्राह-युवाभ्यामिति ॥ २२ ॥

१ निशितैरिति गो. पाठः । २ श्वसद्भिरिति गो. पाठः । ३ विस्तीर्णाविति गो. पाठः । ४ निर्मुक्ताविव पन्नगाविति गो. पाठः । ५ यूथप इति गो. पाठः । ६ विद्धीति रा. पाठः ।

भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रिय[1]कारणात् । ऋष्यमूकादिह प्राप्तं कामगं काम[2]चारिणम् ॥ २३ ॥
एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ । वाक्यज्ञो वाक्यकुशलः पुनर्नोवाच किंचन ॥ २४ ॥
एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् । प्रहृष्टवदनः श्रीमान्भ्रातरं पार्श्वतः स्थितम् ॥ २५ ॥
सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः । तमेव काङ्क्षमाणस्य ममान्तिकमि[3]हागतः ॥ २६ ॥
तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् । वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दमम् ॥ २७ ॥
नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं [4]विभाषितुम् ॥ २८ ॥

रा० टी०—ननु त्वत्प्रेषणे तस्य किं प्रयोजनमित्यत आह—युवाभ्यामिति । धर्मात्मा सुग्रीवः युवाभ्यां सख्यमिच्छति । अर्धं पृथक् । ननु तेन तव कः संबन्धः इत्यत आह—तस्येति । भिक्षुरूपप्रतिच्छन्नं भिक्षुरूपेण प्रतिच्छन्नमाच्छादितस्ववानरस्वरूपं सुग्रीवप्रियकारणात् इह प्राप्तं कामगं यथेच्छं गमनकर्तारं कामरूपिणमीप्सितरूपधारणसमर्थं तस्य सुग्रीवस्य सचिवं पवनात्मजं वानरं मां विद्धि जानीहि सत्यवृत्तकथनेन रामस्तेन विज्ञात इति सूचितम् । श्लोकत्रयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०—युवाभ्यामिति । वित्तं विदेर्लोटि मध्यमपुरुषद्विवचनम् ॥ २३ ॥

२३-२५ ] ति० टी०—वानरराजसचिवस्य मानुषं रूपं कुतस्तत्राह—भिक्षुरूपेति । अनेन शुद्धं वानरत्वमेव नेत्यपि बोधितम् । ईदृशं वित्तमिति प्राक्तनेनान्वयः ॥ २३-२५ ॥

गो० टी०—तर्हि कथं भिक्षुरसीत्यत्राह—भिक्ष्विति ॥२४॥

रा० टी०—एवमिति । वाक्यज्ञः वाक्यतात्पर्यज्ञाता वाक्यकुशलः वाक्यप्रयोगे निपुणः हनुमान् रामलक्ष्मणौ एवमुक्त्वा पुनः किञ्चन नोवाच ॥ २४ ॥

गो० टी०—एवमिति । नोवाच तद्वचनश्रवणेच्छयेति भावः ॥ २५ ॥

रा० टी०—एतदिति । तस्य हनुमतः एतद्वचः श्रुत्वा प्रहृष्टवदनो रामः पार्श्वतः स्थितं भ्रातरमब्रवीत् ॥ २५ ॥

गो० टी०—एतदिति । हनुमन्तं स्तोतुं लक्ष्मणं प्रत्युक्तिः ॥ २६ ॥

२६ ] ति० टी०—तमेव सुग्रीवमेव । काङ्क्षमाणस्येच्छत इत्यर्थः ॥ २६ ॥

रा० टी०—तद्वचनाकारमाह—सचिव इत्यादिभिः । कपीन्द्रस्य सुग्रीवस्य अयं सचिवः तं सुग्रीवमेव काङ्क्षमाणस्य मम अन्तिकं समीपमागतः ॥ २६ ॥

गो० टी०—सचिव इति । उपागतः स एव सचिवद्वारेति शेषः ॥ २७ ॥

२७ ] ति० टी०—तमभ्यभाषाभिभाषस्वेति यावत् । वाक्येति । वाक्यज्ञं वाक्यरचनाभिज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमभ्यभाषेत्यन्वयः ॥ २७ ॥

रा० टी०—तमिति । वाक्यज्ञं तं सुग्रीवसचिवं हनुमन्तं स्नेहयुक्तं यथा भवति तथा मधुरैर्वाक्यैः अभ्यभाष अभिभाषस्व ॥ २७ ॥

गो० टी०—तमिति । स्नेहयुक्तं मयि सुग्रीवे च प्रीतियुक्तमित्यर्थः । अभ्यभाष अभिभाषस्व । अडागमपरस्मैपदे आर्षे । मन्त्रिणा स्वामिनो वचनं न नीतिरिति सौमित्रिं नियोजयति ॥ २८ ॥

२८ ] ति० टी०—विनयः प्रातिशाख्यादिज्ञानपूर्वकाभ्यासः । ऋग्वेदविषये तद्वीनो यो न भवति तेन । एकैकानुवाकेऽनुवाकान्तरसांकर्येण तद्धारणस्य दुष्करत्वाद्यजुर्वेदधारणाहीनभिन्नेन । गायनविषयोहादेर्दुर्ज्ञेयत्वात्सामवेदज्ञानहीनभिन्नेनैवं प्रभाषितुं शक्यं न तद्धीनेनेत्यर्थः । षष्ठ्यार्षी, शेषे वा । यद्वा तद्धीनैरेवं प्रभाषितुं न शक्यम् अशक्यमित्यर्थः । तेनायं सर्वथा तज्ज्ञ इति नोपेक्षार्ह इति व्यङ्ग्यम् ॥ २८ ॥

रा० टी०—अयं सकलवेदशास्त्रसंपन्न इति बोधयन्नाह—नेति । अऋग्वेदविनीतस्य साभिप्रायऋग्वेदाभ्यासरहितस्य पुरुषस्य एवंविधं प्रभाषितुं न शक्यम् । एवमन्यत्रापि योजनीयम् । अऋग्वेदविनीतादिविशेषणविशिष्टस्य न शक्यं न शक्यं न शक्यमित्यन्वयो वा । एतेन हनुमतो निखिलवेदाभिज्ञत्वं सूचितं तेन तस्यागाधबोधत्वं व्यक्तम् ॥ २८ ॥

गो० टी०—अथ चेतनोज्जीवनस्याचार्यमुखमन्तरेणासंभवादाचार्यलाभं दर्शयति—नानृग्वेदेत्यादिना । 'आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थदः शुचिः ॥ गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवंलक्षणसंपन्नो गुरुरित्यभिधीयते ॥' इत्युक्तमाचार्यलक्षणं दर्शयति । ऋग्वेदेषु विनीतस्य शिक्षितस्य विनयधारणवेदनानि सर्वत्र वेदेषु योज्यानि । यद्वा प्रतिवर्णं स्वरभूयस्त्वेन मनोनियमनेन सावधानोच्चार्यत्वादृग्वेदविनीतस्येत्युक्तिः । एकैकानुवाके अनुवाकान्तरवाक्यासांकर्येण धारणस्य दुष्करत्वाद्यजुर्वेदधारिण इत्युक्तम् । ऊहरहस्यादिगर्भितगानविशेषाणां दुर्विज्ञेयत्वात् सामवेदविदुष इति । अथर्वणस्याध्ययनादिनियमाभावादनुक्तिः । एवं प्रभाषितुं देशं कथमिमं प्राप्तावित्यारभ्य उक्तरीत्या व्यक्तं वक्तुं न शक्यमिति । अनृग्वेदविनीतस्य एवं प्रभाषितुं न शक्यम्, अयजुर्वेदधारिण एवं प्रभाषितुं न शक्यम्,

१ काम्ययेति गो. पाठः । २ रूपिणमिति गो. पाठः । ३ उपागत इति गो. पाठः । ४ प्रेति गो. पाठः ।

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहुव्याहरताऽनेन न किंचिदपशब्दितम् ॥ २९ ॥
न मुखे नेत्रयोश्चापि[1] ललाटे च भ्रुवोस्तथा । अन्येष्वपि च सर्वेषु[2] दोषः संविदितः क्वचित् ॥ ३० ॥
अविस्तरमसंदिग्धमविलम्बितमव्यथम्[3] । उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमस्वरम्[4] ॥ ३१ ॥
संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम्[5] । उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम्[6] ॥ ३२ ॥

असामवेदविदुषः एवं प्रभाषितुम् न शक्यामिति प्रत्येकमन्वयः। प्रत्येकं नञ्प्रयोगात् दार्ढ्यार्थं व्यतिरेकमुखेनोक्तिः । अनृग्वेदविनीतस्य 'उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम्' इत्यादिनोक्तसृष्टिस्थितिसंहारकर्तृत्वं वक्तुं न शक्यम् । ऐतरेयके हि "ब्रह्म वा इदमेक एवाग्र आसीत्" इत्यादिना तथात्वं प्रथमतः प्रतिपाद्यते । अयजुर्वेदधारिणः मानुषौ देवरूपिणावित्यादिना "अजायमानो बहुधा विजायते" इत्युक्तावताररहस्यं वक्तुं न शक्यम् । असामवेदविदुषः सुवर्णाभौ पद्मपत्रेक्षणावित्येवं भाषितुं न शक्यते । छान्दोग्ये हि "अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यारभ्य "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्याम्नायते ॥ २९ ॥

२९ ] ति० टी०—ननु वेदमात्राध्यायिना न किंचिद्राजमन्त्रादि ज्ञातुं शक्यं तत्राह—नूनमिति । कृत्स्नं पदतदर्थस्वरूपनिर्णयोपयोगिन्यायसहितं व्याकरणबोध्यसाधुत्वस्यार्थघटितत्वात् । अनेन सर्वज्ञत्वं सूचितम् । तथाश्रवणे हेतुमाह—बह्विति॥२९॥

रा० टी०—नूनमिति । बहुधा अनेकप्रकारं व्याकरणमनेन श्रुतमधीतम् अत एव बहु अनेकविधं व्याहरता कथयताऽनेन किंचिन्न अपशब्दितम् अशुद्धं भाषितम् ॥ २९ ॥

गो० टी०—न केवलं वेदाध्ययनम् अङ्गाध्ययनं च कृतमित्याह—नूनमिति । तत्र हेतुमाह—बह्विति । अपशब्दितम् अपकृष्ट न शब्दितम् । अत्रादौ यदित्यध्याहार्यम् । व्याकरणं श्रुतम् अतो नापशब्दितम्, कृत्स्नं श्रुतम् अतो न किंचिदपशब्दितम् । प्रकृतिप्रत्ययसमाससंध्यादिषु किंचिदपि नापभ्रंशितामित्यर्थः । बहुधा श्रुतम् एकवारश्रवणे क्वचिदन्यथाभावोऽपि स्यात् ॥ ३० ॥

३० ] ति० टी०—इङ्गितैरप्यसौ विश्वासयोग्य इत्याह—न मुखे इति । दोषः संविदितः व्यवहारकाले इति शेषः ॥ ३० ॥

रा० टी०—नेति । मुखादिषु अन्येषु पाण्यादिषु च दोषः मृषासंसर्गादिः न संविदितः ज्ञातः ॥ ३० ॥

गो० टी०—शिक्षा चानेन श्रुतेत्याह चतुर्भिः—न मुख इत्यादिभिः । लोके केषांचिद्व्यवहारदशायां मुखादिषु सर्वत्र यत्र कुत्रापि वा विकारो दृश्यते न तथात्रेति भावः । दोषः विकृतिः न संविदित इत्यनेन स्वेन सूक्ष्ममवलोकितमिति गम्यते । तदुक्तं शिक्षायाम् "गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ न शिरः कम्पयेद्गात्रं भ्रुवौ चाप्यक्षिणी तथा । तैलपूर्णमिवात्मानं तत्तद्वर्णे प्रयोजयेत्' इति ॥ ३१ ॥

३१ ] ति० टी०—अथ वचनरचनासौष्ठवमाह—अविस्तरमिति । नातिविस्तारामित्यर्थः । असंदिग्धमसंदिग्धार्थमसंदिग्धाक्षरं च । अविलम्बितम् अनेनास्खलद्गीष्ट्वम् । अव्यथं न विद्यते श्रोतृश्रुतेर्व्यथा यस्मात्तादृशं तेनाश्रुतिकटुवर्णामित्यर्थः। उरस्थं मध्यमारूपेण, कण्ठगं वैखरीरूपेण कण्ठविवराच्छ्रोतृश्रोत्रं गतम्, अत एव मध्यमस्वरं नात्युच्चैर्नातिनीचैः ॥ ३१ ॥

रा० टी०—वाक्यरचनानैपुण्यमाह—अविस्तरमिति । अविस्तरं विस्ताररहितम् असंदिग्धं संदेहरहितवर्णार्थविशिष्टम् अविलम्बितं संबन्धविघातकविलम्बोच्चारणरहितम् अव्यथं श्रोतृणां व्यथानिवर्तकं वर्णतोऽर्थतश्चातिमधुरमित्यर्थः, उरस्थं मध्यमारूपेण उरसि स्थितं कण्ठगं वैखरीत्वेन कण्ठान्निर्गतं मध्यमस्वरम् अत्युच्चैरतिनीचैरुच्चारणरहितं वाक्यं वर्तते एतस्येति शेषः ॥ ३१ ॥

गो० टी०—एवमुच्चारणशक्तिरुक्ता । अथ वाक्यप्रयोगचातुरीं दर्शयति—अविस्तरमिति । अविस्तरं शब्दप्रपञ्चरहितम् "प्रथने वावशब्दे" इति घञो निषेधात् "ऋ दोरप्" इत्यप्प्रत्ययः । असंदिग्धं पदवर्णसंदेहरहितम् । अविलम्बितं विलम्बितत्वे स्वाशक्तिः प्रकटिता स्यात् । अद्रुतं द्रुतोच्चारणे परप्रत्यायनं न स्यात् । उरःस्थं मन्द्रं कण्ठगं मध्यमम्, तादृशं वाक्यं मध्यमे स्वरे वर्तते न मन्द्रं न मध्यमं न द्रुतं न विलम्बितं चेत्यर्थः । इदं चतुर्दशदोषाभावानामुपलक्षणम् । तथाह शिक्षाकारः—"शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । काकुस्वरं शीर्षगतं तथा स्थानविवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमान्वितम् । व्याकुलं तालुभिन्नं च पाठदोषाश्चतुर्दश" इति । अन्यत्राप्युक्तम् "उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम्" ॥ ३२ ॥

३२ ] ति० टी०—संस्कारक्रमसंपन्नां संस्काराणां क्रमे क्रमेण जनने संपन्नां समर्थाम् 'विशिष्टानुपूर्वीविशेषरूपेण पदादीनां ग्रहणाय क्रमवत्तत्तद्वर्णाकारसंस्कारानन्तःकरण उत्पाद्य तत्क्रमेण क्रमवद्वर्णावभासपदवाक्यज्ञानम्' इति वाक्यप्रदीपादौ स्पष्टम् । तेन मध्यमस्वरयोच्चारणं सूचितम्, तदाह—अद्रुतामविलम्बितामिति । अत एव हृदयहर्षिणीम् ॥ ३२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—संस्कारेति । संस्कार-

१ वाणीति गो. पाठः । २ गात्रेष्विति गो. पाठः । ३ अद्रुतमिति गो. पाठः । ४ मध्यमे स्वरे इति गो. पाठः । ५ अद्रुतामिति गो. पाठः । ६ हारिणीमिति गो. पाठः ।

अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥ ३३ ॥
एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु । सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥ ३४ ॥
एवंगुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः । तस्य सिध्यन्ति सर्वेऽर्था[1] दूतवाक्यप्रचोदिताः ॥ ३५ ॥
एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् । अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥ ३६ ॥
विदिता नौ गुणा विद्वन्सुग्रीवस्य महात्मनः । तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥ ३७ ॥
यथा ब्रवीषि हनुमन्सुग्रीववचनादिह । तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥ ३८ ॥

क्रमेण शिक्षाव्याकरणादिजनितधारणाविशेषानुरोधेन संपन्नां संयुक्ताम् अत एव अद्रुतां यथोक्तवर्णग्रहणध्वंसकातिशीघ्रोच्चारणरहिताम् अविलम्बितां संबन्धविघातकविलम्बोच्चारणरहितां कल्याणीं कल्याणप्रदाम् अत एव हृदयहर्षिणीं वाचमुच्चारयति हनुमानिति शेषः ॥ ३२ ॥

गो० टी०—एवं पाठदोषा उक्ताः अथ तद्गुणानाह—संस्कारेति । संस्कारो व्याकरणकृता शब्दशुद्धिः व्यक्तपदत्वमिति यावत् । क्रमः वर्णानां क्रमिकता व्यक्ताक्षरत्वमिति यावत् । कल्याणीम् इतरगुणवतीं हृदयहारिणीं मधुरां वाणीम् उच्चारयति उच्चरति । तदिदमुक्तं शिक्षायाम् " माधुर्यमक्षरव्यक्तिः पदच्छेदस्तथाऽत्वरा । धैर्यं लयसमत्वं च षडेते पाठका गुणाः" इति ॥ ३२ ॥

३३ ] ति० टी०—त्रिस्थानव्यञ्जनस्थया त्रिषु स्थानेषूरःकण्ठशिरःसु यद्व्यञ्जनमभिव्यक्तिस्तया तिष्ठति श्रोतृग्राह्यस्वरूपं लभते तादृश्या । अनेन 'नित्य एव स्फोटरूपः शब्दः' इति सूचितम् । नाराध्यते नानुकूल्यते ॥ ३३ ॥

रा० टी०—अनयेति । त्रिस्थानव्यञ्जनस्थया त्रिषु स्थानेषु उरःकण्ठशिरस्सु व्यञ्जनमभिव्यक्तिस्तेन तिष्ठति तया चित्रया अनया वाचा उद्यतासेः वधाय उद्यतखड्गस्यापि कस्यारेः चित्तं नाराध्यते प्रसाद्यते प्रसाद्यत एवेत्यर्थः ॥ ३३ ॥

गो० टी०—माधुर्यपराकाष्ठामाह—अनयेति । चित्रया आश्चर्यावहया । त्रिस्थानानि उरःकण्ठशिरांसि व्यज्यन्ते एषु वर्णा इति व्यञ्जनानि । त्रिस्थानरूपव्यञ्जनेषु तिष्ठतीति तथा । तथात्वं च न तदुत्पन्नत्वं शिरस्यत्वस्य निषिद्धत्वात् । शीर्षगतं तथेति तुदाहृतं किंतु उदात्तानुदात्तस्वरितवत्त्वम् । तथोक्तं शिक्षायाम् " अनुदात्तो हृदि ज्ञेयो मूर्धन्युदात्त उदाहृतः । स्वरितः कण्ठमूलीयः पार्श्वास्ये प्रचयस्य तु" इति । नाराध्यते न तोष्यते । कस्येत्यस्य विवरणम्—उद्यतासेररेरपीति । उद्यतासेः छेत्तुमुद्धृतासेरित्यतिक्रूरतोक्तिः । अनेन हनुमदादिभिः रामादीनां संस्कृतभाषयैव व्यवहार इति गम्यते ॥ ३४ ॥

३४ ] ति० टी०—कार्याणां गतयः परिपाकाः ॥ ३४ ॥

रा० टी०—एवमिति । यस्य पार्थिवस्य एवंविधः एतत्सदृशो दूतो न भवेत् तस्य कार्याणां गतयः प्राप्तयः कथं सिध्यन्ति न सिध्यन्तीत्यर्थः ॥ ३४ ॥

गो० टी०—एवं हनुमतो वाक्चातुरीमभिनन्द्य बुद्धिचातुरीमभिनन्दति—एवंविध इति । एवंविधः एवंप्रष्टा अस्मत्प्रश्नव्याजेन कुलगोत्रनामधेयराज्यत्यागकारणादीनां प्रष्टा । गतयः सिद्धयः ॥ ३५ ॥

३५ ] ति० टी०—दूतवाक्यप्रचोदितास्तद्वाक्यबोधिताः ॥ ३५ ॥

रा० टी०—एवमिति । यस्य राज्ञः कार्यसाधकाः दूताः एवंगुणगुणैर्युक्ता भवन्ति तस्य सर्वे अर्थाः दूतवाक्यप्रचोदिताः सन्त एव सिध्यन्ति । एतेन नृपतिभिरेवंविधो दूतोऽवश्यं संपादनीय इति व्यञ्जितं तेन हनुमति रामस्य प्रीत्यतिशयः सूचितः ॥ ३५ ॥

गो० टी०—उक्तमर्थमन्वयमुखेनापि दर्शयति—एवमिति । दूतवाक्यप्रचोदिताः दूतवाक्यमूला एव सिध्यन्ति न प्रधानापेक्षा इति भावः ॥ ३६ ॥

३६ ] ति० टी०—एवमुक्तः रामेणेति शेषः ॥ ३६ ॥

रा० टी०—एवमिति । एवमुक्तः रामेणेति शेषः, सौमित्रिः वाक्यज्ञः सुग्रीवसचिवमभ्यभाषत ॥ ३६ ॥

गो० टी०—एवमिति । वाक्यज्ञो वाक्यज्ञमित्युक्त्या यथारीत्या हनुमतोक्तं तथैव सौमित्रिणाऽपीत्युच्यते ॥ ३७ ॥

३७ ] ति० टी०—नौ आवयोः । तमेव सुग्रीवमेव । मार्गावो मार्गयावः ॥ ३७ ॥

रा० टी०—तद्भाषणाकारमाह—विदिता इति । हे विद्वन्! नौ आवयोः सुग्रीवगुणा विदिताः ज्ञाताः अत एव आवां तं सुग्रीवमेव मार्गावः अन्वेषयावः ॥ ३७ ॥

गो० टी०—विदिता इति । विद्वन्निति हनुमत्संबोधनम् ॥ ३८ ॥

३८ ] ति० टी०—यथा ब्रवीषि सख्यमिच्छतीति यदवादीः तत्तथैव करिष्याव इत्यर्थः ॥ ३८ ॥

रा० टी०—यथेति । हे हनुमन् ! सुग्रीववचनात् यथा यत् त्वमिह ब्रवीषि तत् तव वचनात् त्वदुक्तेः करिष्यावः ॥ ३८ ॥

गो० टी०—यथेति । अनेन एतावत आचार्याभिमाननिष्ठाः तेषां कार्यं तद्वचनादेव करिष्यामीति भगवतः प्रतिज्ञा सूचिता ॥ ३९ ॥

१ सर्वार्था इति गो. पाठः ।

ततस्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः ।
मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

हनुमाञ्छ्रीरामं प्रति पम्पाऽऽगमनकारण पप्रच्छ । रामनोदितो लक्ष्मणः सीतावियोगान्त रामेतिवृत्त विनिवेद्य कबन्धप्रेरणात्सुग्रीवसख्यसपादनमत्रागमने हेतुरित्युवाच । सुग्रीवस्यापि रामसमानदुःखता निरूपयन्हनुमान्रामप्रसादापेक्षां दर्शयन्प्रकटितस्वस्वरूपस्तौ स्कन्धे निवेश्य ऋष्यमूकं प्राप ।

ततः प्रहृष्टो हनुमान्कृत्यवानिति तद्वचः । श्रुत्वा मधुरभावं च सुग्रीवं मनसा गतः ॥ १ ॥
भाव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः । यदयं कृत्यवान्प्राप्तः कृत्यं चैतदुपागतम् ॥ २ ॥
ततः परमसंहृष्टो हनूमान्प्लवगोत्तमः । प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदम् ॥ ३ ॥
किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् । आगतः सानुजो दुर्गं नानाव्यालमृगायुतम् ॥ ४ ॥

३९ ] ति० टी०–जयोपपत्तौ सुग्रीवस्येति शेषः । ताभ्यां रामसुग्रीवाभ्याम् ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०–तदिति । तत् स्वप्रार्थिताङ्गीकारबोधकं तस्य लक्ष्मणवाक्यं निशम्य श्रुत्वा प्रहृष्टरूपः पवनात्मजः जयोपपत्तौ सुग्रीवविजयसिद्धौ मनः समाधाय ताभ्यां रामलक्ष्मणाभ्यां सख्यं कर्तुमियेष ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे तृतीयः सर्गः ॥ ३ ॥

गो० टी०–तदिति । जयोपपत्तौ वालिजयोपपत्तिनिमित्तम् ॥ ४० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०–तद्वचः 'सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः । तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः ॥' इति रामवचः 'महात्मनः' इति सोपचारप्रयोगतः सुग्रीवविषये मधुरभावं सौम्यभावं श्रुत्वा 'तमेव काङ्क्षमाणः' इत्यनेन सुग्रीवे रामः किंचित्कृत्यवानिति विज्ञाय प्रहृष्टः सुग्रीवं सुग्रीवाभिमतसिद्धिं मनसा गतो दृष्टवान् ॥ १ ॥

रा० टी०–लक्ष्मणवचनश्रवणानन्तरकालिकं हनुमद्वृत्तान्तमाह–तत इत्यादिभिः । मधुरभावं सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मन इत्यादिरामोक्त्या तन्मधुरस्वभावबोधकं कृत्यवान् । तमेव काङ्क्षमाण इति लक्ष्मणोक्त्या रामः किंचित्कृत्याकाङ्क्ष इति बोधकं च तत् रामलक्ष्मणवचः श्रुत्वा प्रहृष्टो हनुमान् सुग्रीवं सुग्रीवकार्यसिद्धिं मनसा गतः निश्चितवान् ॥ १ ॥

गो० टी०–अथाचार्यमुखेन चेतनलाभश्चतुर्थे–तत इत्यादि । मधुरसंभाषं मधुरभाषणं तद्वचः श्रुत्वा कृत्यवान् कार्यवान् रामः इति हेतोः प्रहृष्टः सन् सुग्रीवं मनसा गतः तमेव चावां मार्गाव इति वचनभावतया रामस्य कृत्यवत्त्वज्ञानम् ॥ १ ॥

२ ] ति टी०–तदेव विवृणोति–भाव्य इति । अवश्यंभावीत्यर्थः । यदयं महापुरुषः कृत्यवान्, प्रयोजनसापेक्षः प्राप्तः एतत्कृत्यं चोपागतं सुग्रीवं प्राप्तमित्यर्थः ॥ २ ॥

रा० टी०–तन्निश्चयमेवाह–भाव्य इति । अयं रामः यत् यस्मात् कृत्यवान् प्रयोजनापेक्षः सन् प्राप्तः कृत्यं तत्प्रयोजनं च एतदुपागतम् एतं सुग्रीवमुपागतं सुग्रीवसाध्यत्वेन निश्चितमित्यर्थः, तस्माद्धेतोः सुग्रीवराज्यागमो भाव्यः अवश्यं भविष्यतीत्यर्थः ॥ २ ॥

गो० टी०–मनसा गत इत्येतद्दर्शयति–भव्य इति । यद्यस्मादयं कृत्यवान् प्राप्तः तस्मात् महात्मनः महाभाग्यस्य तस्य सुग्रीवस्य राज्यागमः भव्यः भावी । एतत् कृत्यं राज्यागमनरूपकार्यम् उपागतं समीपे आगतं निष्पन्नप्रायमित्यर्थः ॥ २ ॥

३ ] ति०टी०–एवं सुहृदयत्वमवगत्य स्वस्वाम्युक्तं पृच्छति–तत इति ॥ ३ ॥

रा० टी०–तत इति । ततः सुग्रीवराज्यप्राप्तिनिश्चयाद्धेतोः परमसंहृष्टो हनुमान् ततस्तं रामं प्रत्युवाच ॥ ३ ॥

गो० टी०–तत इति । अस्मिन् श्लोके प्लवगर्षभ इत्यत्र गकारो गायत्र्याः दशमाक्षरम् । नवसहस्रश्लोका गता ॥ ३ ॥

४ ] ति० टी०–पम्पाकाननेन मण्डितमलंकृतं घोर मन्यदिति शेषः ॥ ४ ॥

१ संभाषमिति गो. पाठः । २ भव्य इति गो. पाठः । ३ हनुमान् प्लवगर्षभ इति गो. पाठः । ४ विशारद इति गो. पाठः । ५ त्वमिति गो. पाठः ।

तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः । आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५ ॥
राजा दशरथो नाम द्युतिमान्धर्मवत्सलः । चातुर्वर्ण्यं स्वधर्मेण नित्यमेवा[1]भिपालयन् ॥ ६ ॥
न द्वेष्टा विद्यते तस्य स[2] तु द्वेष्टि न कंचन । स तु[3] सर्वेषु भूतेषु पितामह इवापरः ॥ ७ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः । तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः ॥ ८ ॥
शरण्यः सर्वभूतानां पितुर्निर्देशपारगः । [4]ज्येष्ठो दशरथस्यायं पुत्राणां गुणवत्त[5]रः ॥ ९ ॥
राजलक्षण[6]संयुक्तः संयुक्तो रा[7]ज्यसंपदा । राज्याद्भ्रष्टो मया वस्तुं वने सार्धमिहागतः ॥ १० ॥
भार्यया च महा[8]भाग सीतयाऽनुगतो वशी । दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ ११ ॥
अहमस्यावरो भ्राता गुणैर्दा[9]स्यमुपागतः । कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ १२ ॥
सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः । ऐश्वर्येण [10]विहीनस्य वनवासे रतस्य च ॥ १३ ॥

रा० टी०–तत्प्रतिवचनाकारमाह–किमर्थमिति । पम्पाकाननमण्डितं पम्पावनेन शोभितं नानाव्यालमृगायुतम् अत एव दुर्गं मनुष्यैर्दुर्गमं घोरं वनं सानुजस्त्वं किमर्थमागतः ॥ ४ ॥

गो० टी०–किमर्थमिति । पम्पाकाननेन पम्पोपवनेन मण्डितं वनं दण्डकारण्यम् । दण्डकारण्येऽप्येतत्प्रदेशं किमर्थमागत इति भावः । अनुजत्वमाकारसाम्यात्तमभ्यभाषेति नियोजनाच्चेति ॥ ४ ॥

५–६ ] ति० टी०–रामचोदितः इङ्गितेनेति शेषः । आचचक्षे बोधितवान् ॥ ५ ॥ ६ ॥

रा० टी०–तस्येति । तस्य हनुमतः तद्वचनं श्रुत्वा रामचोदितः लक्ष्मणः महात्मानं दशरथात्मजं रामम् आचचक्षे कथयामास ॥ ५ ॥

रा० टी०–तत्कथनाकारमाह–राजेति । दशरथो नाम राजा स्वधर्मेण राजनीत्या चातुर्वर्ण्यं नित्यमभ्यपालयत् ॥ ६ ॥

गो० टी०–तस्येति । महात्मत्वेन दशरथात्मजत्वेन चाचचक्ष इत्यर्थः ॥ ५ ॥ ६ ॥

७–८ ] ति० टी०–पितामह इव पालकत्वेनेत्यर्थः॥७॥८॥

रा० टी०–नेति । स दशरथः कंचन न द्वेष्टि अत एव तस्य दशरथस्य द्वेष्टा न विद्यते अत एव सः सर्वभूतेषु अपरः पितामह इव अभवदिति शेषः ॥ ७ ॥

रा० टी०–अग्नीति । आप्तदक्षिणैः परिपूर्णदक्षिणावि- अग्निष्टोमादिभिः यज्ञैः इष्टवान् दशरथ इति शेषः । तस्य दशरथस्य पूर्वजः ज्येष्ठः पुत्रः जनैः श्रुतः विख्यातः रामो नामायम् ॥ ८ ॥

गो० टी०–न द्वेष्टेति । सर्वेषु भूतेषु मध्ये पितामह इव श्रेष्ठ इत्यर्थः ॥ ७ ॥ ८ ॥

९ ] ति० टी०–निर्देशो नियोगस्तत्पारगः । तस्य समाप्तकल्पत्वादेवमुक्तम् ॥ ९ ॥

रा० टी०–शरण्य इति । सर्वभूतानां शरण्यः शरणे हितः पुत्राणां मध्ये गुणवत्तरः राजलक्षणसंयुक्तः राज्यसंपदा संयुक्तः दशरथस्य ज्येष्ठः पुत्रः पितुर्निर्देशपारगः निर्देशपाराय आज्ञापितसमाप्तये गच्छति सः अत एव राज्याद्भ्रष्टस्त्यक्तराज्यः दिनक्षये प्रभया दिवाकर इव सीतया भार्ययाऽनुगतोऽयं रामः वने वस्तुं मया सार्धमिहागतः । श्लोकत्रयमेकान्वयि ॥ ९–११ ॥

गो० टी०–वीर इति । पुत्राणां, पुत्राणां मध्ये ॥ ९ ॥

१०–११ ] ति० टी०–संयुक्तः संयुज्यमानः । भ्रष्टः किंचिन्निमित्तवशात् ॥ १० ॥ ११ ॥

गो० टी०–राज्यादित्यादि । भार्ययेति । ऐश्वर्यभ्रंशदशायामप्यनुवर्तनद्योतनाय दिनक्षय इत्युक्तम् ॥ १० ॥ ११ ॥

१२–१३ ] ति० टी०–अवरः कनीयान् दास्यमुपागतः अस्येति शेषः ॥ १२ ॥ १३ ॥

रा० टी०–अहमिति । कृतज्ञस्य बहुज्ञस्य अस्य रामस्य गुणैर्विलक्षणवात्सल्यादिभिर्दास्यमुपागतः प्राप्तः लक्ष्मणो नाम अवरो भ्राताऽहम् ॥ १२ ॥

रा० टी०–सुखार्हस्येति । सुखार्हस्य सकलसुखयोग्यस्य महार्हस्य महेन सर्वपूज्यब्रह्मादित्रयेण अर्हस्य पूज्यस्य अत एव सर्वभूतहितात्मनः सर्वभूतहितः आत्मा यस्य तस्य वनवासे रतस्य अत एव ऐश्वर्येण विहीनस्य विहीनत्वेन प्रतीयमानस्य अस्य रामस्य भार्या रहिते आवाभ्यां शून्यसमये कामरूपिणा रक्षसा अपहृता येनापहृता तद्रक्षश्च न ज्ञायते । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०–अहमिति । भवानस्य क इत्याकाङ्क्षायामाह–अस्यावरो भ्राता एतदभिप्रायेण भ्राताऽस्मि अहं तु गुणैर्दास्यमुपागतः गुणवशीकृतहृदयः सन् तस्य दासोऽस्मि । यद्यपि परवानस्मीत्यादौ स्वरूपप्रयुक्तदास्यमुक्तं तथापि योग्यताप्रकर्षात् गुणोत्तम्भितं तद्दास्यमिति तदविरोधो द्रष्टव्यः । उपेत्यनेन

१ अभ्यपालयदिति गो. रा. पाठः। २ न च स द्वेष्टीति गो. पाठः। ३ चेति गो. पाठः। ४ वीर इति गो पाठः । ५ तम इति गो. पाठः। ६ संपन्न इति गो. पाठः। ७ राजेति गो. पाठः। ८ तेजा इति गो. पाठः। ९ चेति गो. पाठः। १० वनवासाश्रितस्येति गो. पाठः।

रक्षसाऽपहृता भार्या रहिते कामरूपिणा । तच्च न ज्ञायते रक्षः पत्नी येनास्य वा हृता ॥ १४ ॥
दनुर्नाम दितेः पुत्रः शापाद्राक्षसतां गतः । आख्यातस्तेन सुग्रीवः समर्थो वानराधिपः ॥ १५ ॥
स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् । एवमुक्त्वा दनुः स्वर्गं भ्राजमानो[3] दिवं गतः ॥१६ ॥
एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः । अहं चैव च रामश्च सुग्रीवं शरणं गतौ ॥ १७ ॥
एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः । लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति॥ १८ ॥
सीता यस्य स्नुषा चासीच्छरण्यो धर्मवत्सलः । तस्य पुत्रः शरण्यस्य सुग्रीवं शरणं गतः ॥ १९ ॥
सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा । गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः ॥ २० ॥
यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः । स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ॥ २१ ॥

सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यं प्राप्त इत्युच्यते । इदमपि कैङ्कर्यं तन्मुखोल्लासार्थं न तु मदर्थमिति आह-कृतज्ञस्य बहुज्ञस्येति । अल्पमपि कृतं बहुतया जानत इत्यर्थः । इदमपि कैङ्कर्यं सहजमित्याशयेनाह-नाम्ना लक्ष्मणो नामेति । स्वनामतः कैङ्कर्यलक्ष्मीसंपन्न इति प्रसिद्धः । सुखेत्यादिश्लोकद्वयमेकान्वयम्, यद्वा प्रथमश्लोकस्य पूर्वेणान्वयः । सहजत्वमुपपादयति-सुखेति । महार्हस्य ऐश्वर्यसंपन्नस्य वनवासाश्रितस्य दुःखितस्येत्यर्थः । तथा च समृद्धिदशायामसमृद्धिदशायां च दास्योक्त्या सहजत्वमुपपादितम् । सहजमेव कैङ्कर्यं गुणास्तु तद्वर्धका इति भावः ॥ १२ ॥ १३ ॥

१४ ] ति० टी०-रहिते आवाभ्यां रहिते काले न ज्ञायते विशिष्येति शेषः ॥ १४ ॥

गो० टी०-रक्षसेति । रहिते आवाभ्यां रहितदेशे ॥१४॥

१५ ] ति० टी०-दनुः कबन्धः 'स ज्ञास्यति' इत्याख्यातः ॥ १५ ॥

रा० टी०-दनुरिति । दनुर्नाम दितेः पुत्रः शापात् हेतोः राक्षसतां गतः प्राप्तः मार्गे आवाभ्यां सङ्गत इति शेषः, तेन राक्षसेन समर्थः सुग्रीवः आख्यातः कथितः ॥ १५ ॥

गो० टी०-दनुरिति । दनुः दनुवंशजः कबन्धः दितेः पुत्रः पुत्रप्रायः तेन सुग्रीवः समर्थ इत्याख्यातः ॥ १५ ॥

१६-१७ ] ति० टी०-स्वर्गं गन्तुं दिवमाकाशं गत उत्पतितः ॥ १६ ॥ १७ ॥

रा० टी०-तत्कथनप्रकारमाह-स इति । महावीर्यः स सुग्रीवः तव भार्यापहारिणं ज्ञास्यति एवमुक्त्वा भ्राजमानो दनुः तत्पुत्रः सुखं यथा भवति तथा स्वर्गं गतः अत एव अहं रामश्च शरणम् आश्रयभूतं रक्षाकाङ्क्षिणं वा सुग्रीवं गतौ प्राप्तौ, पृच्छतः ते तवाग्रे एतत्सर्वं याथातथ्येन आख्यातं कथितम् । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०-स इति । स्पष्टम् ॥ १६ ॥

गो० टी०-एतदिति । ते तुभ्यं याथातथ्येनाख्यातम्॥१७॥

गो० टी०-अहमित्यर्धम् ॥ १८ ॥

१८ ] ति० टी०-नाथं रक्षकमिच्छति दैवगत्येति शेषः॥१८

रा० टी०-रामे रक्षणसामर्थ्यमस्तीति सुग्रीवविश्वासं द्रढयितुं रामगुणान्पुनः पुनर्वर्णयन्नाह-एष इत्यादिभिः । पूर्वं मयोध्यायामिति शेषः, वित्तानि दत्त्वा याचकेभ्यो यथेच्छं समर्प्य अनुत्तमं सर्वोत्कृष्टं यशः प्राप्य नाथं रक्षाकामं सुग्रीवमिच्छति रक्षकत्वेन प्राप्तुं वाञ्छतीत्यर्थः ॥ १८ ॥

गो० टी०-परत्वसौशील्ये दर्शयति-एष इति । त्रैलोक्यनाथत्वमेव सुग्रीवनाथत्वेच्छायां हेतुः परत्वं विना सौशील्यस्यागुणत्वात् । इच्छति लप्स्यते न वा स्वयमभिलषति अपर्यनुयोज्या हि स्वतन्त्रा इति भावः । चकारेण लब्धा चेत्युच्यते । अनुत्तमं परत्वापेक्षयाऽवतारप्रयुक्तातिशयवत् । लोकनाथः सर्वलोकैर्याच्यमानः सर्वस्वामी च "नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु" धातुः ॥ १९ ॥

१९-२१ ] ति० टी०-यः शरण्यो धर्मवत्सलश्चासीदित्यर्थः ॥ १९-२१ ॥

रा० टी०-सीतेति । यस्य स्नुषा पुत्रवधूः सीता आसीत् तस्य शरण्यस्य पुत्रः शरण्यः शरणहितः धर्मवत्सलः धर्मविषयकवात्सल्यवान् रामः शरणं रक्षाकामं सुग्रीवं गतः ॥ १९ ॥

गो० टी०-तदेव सौशील्यं प्रकारान्तरेणाह-पितेति । शरण्यः प्राप्यः । शरणं रक्षकम् ॥ २० ॥

रा० टी०-सर्वेति । सर्वलोकस्य शरण्यः शरणहितः शरणं रक्षकश्च मे गुरू राघवः शरणं रक्षाकामं सुग्रीवं गतः प्राप्तः ॥ २० ॥

गो० टी०-शरण्य इत्युक्तं विशेषयति-सर्वलोकस्येति । गुरुः अग्रजः ॥ २१ ॥

रा० टी०-यस्येति । यस्य रामस्य प्रसादे इमाः प्रजाः सततं प्रसीदेयुः स रामः वानरेन्द्रस्य सुग्रीवस्य प्रसादं प्रसन्नतामभिकाङ्क्षते ॥ २१ ॥

गो० टी०-यस्य प्रसाद इति । इमाः प्रजाः सततं प्रसीदेयुः तत्प्रसादलब्धसकलपुरुषार्थतया सर्वदा प्रसन्नचित्ता

१ सेति गो. चाहृतेति रा.पाठः। २ वानरर्षभ गो.पाठः। ३ गतः सुखमिति गो.पाठः। ४ ह्रीति गो.पाठः। ५ पिता यस्य पुरा ह्यासीदिति गो. पाठः।

येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः । मानिताः सततं राज्ञा सदा दशरथेन वै ॥ २२ ॥
तस्यायं पूर्वजः पुत्रस्त्रिषु लोकेषु विश्रुतः । सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥ २३ ॥
शोकाभिभूते रामे तु शोकार्ते शरणं गते । कर्तुमर्हति सुग्रीवः प्रसादं सह यूथपैः ॥ २४ ॥
एवं ब्रुवाणं सौमित्रिं करुणं साश्रुपातनम् । हनूमान्प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २५ ॥
ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः । द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः ॥ २६ ॥
स हि राज्याच्च विभ्रष्टः कृतवैरश्च वालिना । हृतदारो वने त्रस्तो भ्रात्रा विनिकृतो भृशम् ॥ २७ ॥
करिष्यति स साहाय्यं युवयोर्भास्करात्मजः । सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे २८ ॥
इत्येवमुक्त्वा हनुमाञ्श्लक्ष्णं मधुरया गिरा । बभाषे सोऽधु गच्छामः सुग्रीवमिति राघवम् ॥ २९ ॥
एवं ब्रुवन्तं धर्मात्मा हनूमन्तं स लक्ष्मणः । प्रतिपूज्य यथान्यायमिदं प्रोवाच राघवम् ॥ ३० ॥
कपिः कथयते हृष्टो यथाऽयं मारुतात्मजः । कृत्यवान्सोऽपि संप्राप्तः कृतकृत्योऽसि राघव ३१ ॥

भवेयुः । वानरेन्द्रस्य स्वप्रसादप्रजैकदेशक्षुद्रतरजनस्य प्रसादमभिकाङ्क्षते स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादिति भावः ॥२२॥

२२-२३ ] ति० टी०-सर्वगुणोपेताः मूर्धाभिषिक्ता इति यावत् । सदा प्रतिदिनम् सततमनुक्षणम् ॥ २२ ॥ २३ ॥

रा० टी०-येनेति । येन दशरथेन पृथिव्यां सर्वपार्थिवा मानिताः स्वसेवकत्वेन सत्कृताः तस्य पूर्वजः पुत्रः अयं रामः शरणं रक्षाकामं सुग्रीवम् आगतः । एतेन सुग्रीवेप्सितसिद्धिरवश्यं भवितेति सूचितं तेन तस्य भाग्यातिशयः सूचितः । श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०-येनेत्यादिश्लोकद्वयमेकान्वयम् । येन सततं सर्वगुणोपेताः सर्वोपचारोपेता यथा भवन्ति तथा सदा मानिताः । वानरेन्द्रं वनमात्रप्रसिद्धशाखामृगमिति सौशील्यातिशयध्वनिः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०-शोकाभिभूते शोकाविष्टे । शोकार्ते शोकपीडिते ॥ २४ ॥

रा० टी०-शोकेति । शोकाभिभूते शोकपराभवकारिणि इदानीं शोकार्ते शोकपीडितत्वेन प्रतीयमाने रामे शरणं रक्षाकामं सुग्रीवं गते प्राप्ते सति सुग्रीवः यूथपैः सह प्रसादं स्वप्रसन्नतां कर्तुमर्हति । एतेन इतःप्रभृति सुग्रीवे भयं न प्राप्स्यतीति सूचितम् ॥ २४ ॥

गो० टी०-शोकेति । शोकेनाभिभूते शोकपरतन्त्रे । शोकार्ते शोकपीडिते । कर्मपरतन्त्रं शोकाकुलं स्वजनमालोक्य स्वयं शोकाकुलस्याचार्यमुखं विनोभयशोकानुद्धारादिति भावः ॥२५॥

२५ ] ति० टी०-साश्रुपातनमस्माकमप्यन्यशरणापेक्षेत्यश्रुपातनसहितम् ॥ २५ ॥

रा० टी०-एवमिति । एवं ब्रुवाणं साश्रुपातनम् अश्रुपातनसहितं करुणं दयावन्तं सौमित्रिं हनूमान् प्रत्युवाच॥२५॥

गो० टी०-एवमिति । साश्रुलोचनमिति रामदुःखदर्शनाद्दुःखितत्वमुच्यते ॥ २६ ॥

२६ ] ति० टी०-द्रष्टव्या द्रष्टुं योग्याः ॥ २६ ॥

रा० टी०-तद्वचनाकारमाह-ईदृशेति । ईदृशाः भवत्सदृशा बुद्धिसंपन्नाः दर्शनमस्मद्दृष्टिपथं प्राप्ताः दिष्ट्या अतिभाग्योदयमेतत् अत एव वानरेन्द्रेण सुग्रीवेण द्रष्टव्याः समीपतोऽवलोकयितव्याः एतेन तत्र भवद्भ्यां गन्तव्यमिति सूचितम् ॥ २६ ॥

गो० टी०-ईदृशा इति । द्रष्टव्याः अन्वेषितव्याः ॥ २७ ॥

२७ ] ति० टी०-स हीत्यनेन तस्यापि सहायापेक्षत्वं दर्शितम् ॥ २७ ॥

रा० टी०-तत्र गमने भवतोऽपि प्रयोजनं सेत्स्यतीत्याह—स इति द्वाभ्याम् । स सुग्रीवः वालिना कृतवैरः अत एव विनिकृतः निःसारितः अत एव राज्याद्विभ्रष्टः अत एव हृतदारः अत एव त्रस्तः सन् वने वसतीति शेषः, अत. अस्माभिः सह भास्करात्मजः स सुग्रीवः सीतायाः परिमार्गणे अन्वेषणे साहाय्यं करिष्यति। श्लोकद्वयमेकान्वयि ॥ २७॥२८॥

गो० टी०-स हीति । विनिकृत वञ्चितः ॥ २८ ॥

२८-३० ] ति० टी०-यदेवम्, अतः परिमार्गणे साहाय्यं करिष्यतीत्यन्वयः ॥ २८-३० ॥

गो० टी०-करिष्यतीति । परिमार्गणे साहाय्यं करिष्यति ततः परं भवतोरग्रे का शत्रुवार्तेति भावः ॥ २९ ॥

रा० टी०-इतीति । मधुरया गिरा इत्येवमुक्त्वा साधु यथा भवति तथा सुग्रीवं गच्छावः इति श्लक्ष्णं वचः हनुमान् राघवं बभाषे ॥ २९ ॥

गो० टी०-इतीति । बभाषे पुनरपीति शेषः ॥ ३० ॥

रा० टी०-एवमिति । धर्मात्मा लक्ष्मणः एवं ब्रुवन्तं हनुमन्तं यथान्यायं प्रतिपूज्य सत्कृत्य राघवं राममिदं प्रोवाच ॥ ३० ॥

गो० टी०-एवमिति । यथान्यायं दूतानुरूपम् ॥ ३१ ॥

३१ ] ति० टी०-सोऽपि त्वया कृत्यवानिति यथा कथयते तथा जाने । एनं देशं संप्राप्तस्त्वं कृतकृत्योऽसीत्यर्थः॥३१॥

१ हरियूथप इति गो. पाठः । २ लोचनमिति गो. पाठः । ३ हनुमानिति गो. पाठः । ४ त्यक्त इति गो. पाठः । ५ मोऽभिगच्छमेति गो. पाठः । ६ ब्रुवाणमिति गो. पाठः ।

प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते । नानृतं वक्ष्यते वीरो हनूमान्मारुतात्मजः ॥ ३२ ॥
ततः स सुमहाप्राज्ञो हनूमान्मारुतात्मजः । जगामादाय तौ वीरौ हरिराजाय राघवौ ॥ ३३ ॥
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः । पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ३४ ॥
स तु विपुलयशाः कपिप्रवीरः पवनसुतः कृतकृत्यवत्प्रहृष्टः ।
गिरिवरमुरुविक्रमः प्रयातः स शुभमतिः सह रामलक्ष्मणाभ्याम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः

मलयस्थ सुग्रीवमुपस्थितो हनुमान्मया राघवौ ऋष्यमूकं प्रापिताविति विनिवेद्य तयोर्वृत्तं न्यवेदीत् । श्रुत्वा तद्धृष्टः सुग्रीवः परिहृतमानुषवेषो राममुपेत्य सप्रश्रस प्रसारितपाणिर्मर्यादाग्रहणाय पाणिग्राह प्रार्थयते । रामः पाणिग्रहणपूर्वकं सुग्रीवं पर्यष्वजत । एवं तयोरग्निसाक्षिके सख्ये निवृत्ते निवेदितस्ववृत्तः सुग्रीवो वालिवधमयाचत । रामस्तं प्रतिजज्ञे ।

ऋष्यमूकात्तु हनुमान्गत्वा तं मलयं गिरिम् । आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १ ॥

रा० टी०—तद्वचनाकारमाह—कपिरिति । मारुतात्मजोऽयं कपिः हृष्टः सन् यथा यथावत्कथयते तदाकारमाह सुग्रीवोऽपि कृत्यवान् त्वत्तः स्वप्रयोजनसिद्ध्यभिलाषी अतः संप्राप्तः इहागतस्त्वं कृतकृत्यः सिद्धस्वप्रयोजनोऽसि । एतेन नष्टाश्वदग्धरथन्यायेन द्वयोः सख्यमेव द्वयोः कार्यसाधकं भवितेति ध्वनितम् ॥ ३१ ॥

गो० टी०—कपिरिति । अयं हृष्टः सन् यथा यथार्थं कथयते यथार्थकथने हृष्टत्वं हेतुः । सीतापरिमार्गणं करिष्यतीति यथार्थमेव । सोऽपि सुग्रीवः कृत्यवान् प्राप्तः जातः तस्मात् कृतकृत्योऽसि ॥ ३२ ॥

३२-३३ ] ति० टी०—उक्तं समर्थयते—प्रसन्नेति । मुखवर्णो मुखशोभा ॥ ३२ ॥ ३३ ॥

रा० टी०—प्रसन्नेति । हृष्टः अत एव प्रसन्नमुखवर्णः मारुतात्मजो हनुमान् व्यक्तं स्पष्टं भाषते अनृतं च न वक्ष्यते वक्ति ॥ ३२ ॥

गो० टी०—हृष्टपदसूचितं विवृणोति—प्रसन्नेति । वक्ष्यते वक्ष्यति अनृतं न वदेदित्यर्थः ॥ ३३ ॥

रा० टी०—हनुमद्वृत्तान्तमाह—तत इति । मारुतात्मजो हनुमान् वीरौ तौ राघवौ आदाय हरिराजाय सुग्रीवाय जगाम "गत्यर्थानां–" इति कर्मणि चतुर्थी ॥ ३३ ॥

गो० टी०—तत इति । हरिराजाय वानरराजाय ॥ ३४ ॥

३४ ] ति० टी०—वानरं वानरस्येदम् । आर्षोऽण् ॥ ३४ ॥

रा० टी०—गमनाकारमाह—भिक्षुरूपमिति । कपिकुञ्जरः कपिश्रेष्ठो हनुमान् भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः स्वीकारवान् सन् वीरौ रामलक्ष्मणौ पृष्ठमारोप्य जगाम ॥ ३४ ॥

गो० टी०—उक्तं विवृणोति—भिक्ष्विति ॥ ३५ ॥

३५ ] ति० टी०—उक्तं संगृह्णाति—स त्विति । कृतकृत्यवत्तद्धर्षम् । गिरिवरं ऋष्यमूकम् ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०—स इति । विपुलयशाः बहुयशोविशिष्टः कृतकृत्यवत्सुग्रीवो रामश्च कृतकृत्य इति वक्ता उरुविक्रमः पवनसुतः गिरिवरमृष्यमूकं रामलक्ष्मणाभ्यां सह प्रयातः ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०—स त्विति । विपुलयशाः सर्वदेववरप्रसादेन विशालकीर्तिः कपिप्रवीरः सुग्रीवमपि नियन्तुं समर्थः अनेन भगवल्लाभ आचार्याधीन इत्युक्तम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

१ ] ति० टी०—ऋष्यमूकादिति । ऋष्यमूके सुग्रीववासस्थाने राघवौ स्थापयित्वा, ततः सुग्रीवानयनार्थं ऋष्यमूकैकदेशं मलयाख्यं गिरिं गत्वेत्यन्वयः ॥ १ ॥

रा० टी०—रामलक्ष्मणनयनानन्तरकालिकं हनुमद्वृत्तान्तमाह—ऋष्यमूकादित्यादिभिः । ऋष्यमूकात् मलयं तदेकदेशमलयाभिधं गिरिं हनुमान्गत्वा कपिराजाय सुग्रीवाय राघवौ रामलक्ष्मणावाचचक्षे । एतेन राघवौ ऋष्यमूके एव हनुमता संस्थापिताविति सूचितम् ॥ १ ॥

गो० टी०—अथ पापभीतस्य कर्मानुरूपं फलं दिशतो भगवतोऽपि त्रस्तस्य आचार्यमुखात् भगवद्गुणान् श्रुत्वा तदेकोपायनिष्ठा सूच्यते पञ्चमे—ऋष्यमूकात्त्वित्यादि । राम-

१ हनुमानिति गो. पाठः । २ ऋद्ध्येति गो. पाठः ।

अयं रामो महाप्राज्ञ संप्राप्तो दृढविक्रम । लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ २ ॥
इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः । धर्मे निगदितश्चैव पितुर्निर्देशकारकः ॥ ३ ॥
राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः । दक्षिणाश्च तथोत्सृष्टा गावः शतसहस्रशः ॥ ४ ॥
तपसा सत्यवाक्येन वसुधा तेन पालिता । स्त्रीहेतोस्तस्य पुत्रोऽयं रामोऽरण्यं समागतः ॥ ५ ॥
तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः । रावणेन हृता भार्या स त्वां शरणमागतः ॥ ६ ॥
भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ । प्रगृह्य चार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७ ॥
श्रुत्वा हनूमतो वाक्यं सुग्रीवो वानराधिपः । [ भयं च राघवाद्घोरं प्रजहौ विगतज्वरः ।
स कृत्वा मानसं रूपं सुग्रीवः प्लवगर्षभः ] ॥ दर्शनीयतमो भूत्वा प्रीत्योवाच च राघवम् ॥ ८ ॥
भवान्धर्मविनीतश्च सुतपाः सर्ववत्सलः । आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ ९ ॥
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो । यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ १० ॥

---

लक्ष्मणदर्शनभीतः सुग्रीवः ऋश्यमूकादुत्प्लुत्य गहनं मलयाख्यमृश्यमूकपर्यन्तपर्वतं गतः हनुमान् रामलक्ष्मणौ तत्र प्रतिष्ठाप्य सुग्रीवं तत्रानीतवानिति बोध्यम् ॥ १ ॥

२ ] ति० टी०—अयं रामः मलयस्थसुग्रीवदृष्टिपथवर्तित्वादेवं निर्देशः । पुनराहादरात्—रामोऽयमिति । सत्यविक्रमत्वदृढत्वाभ्यां स्वच्छत्रुनिरसनक्षमता व्यज्यते ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—अयमिति । महाप्राज्ञ ! हे सुग्रीव ! दृढविक्रमः अजेयपराक्रमः सत्यविक्रमः सत्याय सत्यपरिपालनाय विक्रमः पादन्यासो यस्य सः धर्मे स्वधर्माचरणे निगदितः प्रसिद्धः अत एव पितुर्निर्देशकारक आज्ञापरिपालकः आरामः सर्वाभिरामदाता अरामः अरमतिप्रकाशममति प्राप्नोति सः इक्ष्वाकूणां कुले जातः प्रादुर्भूतो दशरथात्मजो दशरथनित्यपुत्रः अयं रामः लक्ष्मणेन भ्रात्रा सह अयं शापवशेन वालिना प्राप्तुमशक्यम् ऋश्यमूकं संप्राप्तः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—अयमिति । अयं रामः संप्राप्तः । अयं रामः सत्यविक्रमः त्वच्छत्रुनिबर्हणक्षम इत्यर्थः ॥ २ ॥

३–४ ] ति० टी०—इक्ष्वाकूणामित्यनेन स्वरूपकथनम् । धर्मे स्वसत्यपरिपालनरूपधर्मनिमित्तम् । निगदितः प्रेरितः पित्रेति शेषः अत एव तस्य पितुर्निर्देशकारकः ॥ ३ ॥ ४ ॥

गो० टी०—इक्ष्वाकूणामिति । निगदितः प्रसिद्धः ॥ ३ ॥

रा० टी०—वनगमनप्रयोजनं स्पष्टतो वदन्नाह—राजेति । येन राजसूयाश्वमेधैर्वह्निरतितर्पितः शतसहस्रशः गावो दक्षिणा उत्सृष्टाः दत्ताः तपसा अतिविचारेण सत्यवाक्येन च येन वसुधा पालिता तस्य दशरथस्य पुत्रोऽयं रामः स्त्रीहेतोः भार्यानिदर्शितमुनिपरिपालनकारणात् अरण्यं समागतः संप्राप्तः । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

५–६ ] ति० टी०—स्त्रीहेतोः पित्रा स्त्रियै दत्तस्य वरस्य पालनहेतोः ॥ ५ ॥ ६ ॥

रा० टी०—तस्येति । तस्य पित्राज्ञप्तस्य अत एवारण्ये वसतः नियतस्य नित्यं यतचित्तस्यास्य रामस्य भार्या रावणेन हृता अतः स रामः शरणं स्वरक्षार्थिनं त्वामागतः प्राप्तः ॥६॥

गो० टी०—तस्येत्यादि ॥ ४–८ ॥

७ ] ति० टी०—प्रगृह्य दर्शनाकाङ्क्षिणोर्दर्शनं दत्वा ॥ ७ ॥

रा० टी०—भवतेति । भवता सख्यकामौ सख्यविषयकेच्छावन्तौ एतौ रामलक्ष्मणौ प्रगृह्य तत्संनिधिं गत्वा आनीय अर्चयस्व ॥ ७ ॥

८ ] ति० टी०—दर्शनीयतमो भूत्वा इच्छावशादिति शेषः ॥८॥

रा० टी०—श्रुत्वेति । हनुमतो वाक्यं श्रुत्वा हृष्टमानसः सुग्रीवः राघवात् भय वालिप्रेषितसंभावनया समुत्पन्नभीतिं प्रजहौ अत एव गतविज्वरोऽभवदिति शेषः ॥ ८ ॥

रा० टी०—स इति । सुग्रीवो मानुषं रूपं कृत्वा अत एव दर्शनीयतमो भूत्वा प्रीत्या राघवं प्राप्येति शेषः, उवाच ॥ ९ ॥

गो० टी०—स कृत्वेति । राघवं प्राप्येति शेषः ॥ ९–११॥

९ ] ति० टी०—धर्मविनीतो धर्मे शिक्षितः ॥ ९ ॥

रा० टी०—तद्वचनाकारमाह—भवानिति । धर्मविनीतः धर्मविषयकातिशिक्षावान् अत एव सुतपाः अतिविचारवान् अत एव सर्ववत्सलः सर्वविषयकवात्सल्यवान् भवान् अस्तीति शेषः । ननु त्वया कथं ज्ञातमित्यत आह—भवद्गुणाः वायुपुत्रेण मे मह्यं तत्त्वतः आख्याताः ॥ १० ॥

१० ] ति० टी०—एष मन्मैत्रीच्छारूपः । तदेवाह—यत्त्वमिति । वानरेण तिर्यग्योनिनाऽपि ॥ १० ॥

रा० टी०—तदिति । एष त्वं वानरेण मया सह सौहार्दं यदिच्छसि तन्मम सत्कारः उत्तमो लाभश्च ॥ ११ ॥

१ महाप्राज्ञः इति गो. पाठः । २ दृढविक्रमः इति गो. पाठः । ३ पारग इति गो. पाठः । ४ येनेति गो. पाठः । ५ त्वां शरण गत इति गो. पाठः । ६ श्लोकोऽयं चतुर्थस्थाने गो. पाठे । ७ हनुमत इति गो. पाठः । ८ हृष्टमानस इति गो. रा. पाठः । ९ श्लोकोऽयमधिकः गो. रा. पाठे । १० स इति रा. पाठः । ११ प्लवगाधिप इति रा. पाठः । १२ प्रीत्या प्रोवाचेति गो. पाठः । १३ विक्रान्त इति गो. पाठः । १४ मयेति गो. पाठः ।

रोचते यदि [1]मे सख्यं बाहुरेष प्रसारितः । गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ ११ ॥
एतत्तु वचनं श्रुत्वा [2]सुग्रीवस्य सुभाषितम् । संप्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १२ ॥
[3]हृष्टः सौहृदमालम्ब्य पर्यष्वजत पीडितम् । ततो हनूमान्संत्यज्य भिक्षुरूपमरिन्दमः ॥ १३ ॥
काष्ठयोः स्वेन रूपेण जनयामास पावकम् । दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥ १४ ॥
तयोर्मध्ये तु सुप्रीतो [4]निदधौ सुसमाहितः । ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥ १५ ॥
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ । ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ॥ १६ ॥
अन्योन्यमभिवीक्षन्तौ न तृप्तिम[5]भिजग्मतुः । त्वं वयस्योऽसि हृद्यो मे एकं दुःखं सुखं च नौ॥ १७ ॥

११ ] ति० टी०-रोचते यदीति । कार्यवशादिति शेषः। ध्रुवा मर्यादाऽनुल्लङ्घनीयोऽन्योन्यकार्यसंपादनविषयो निश्चयः । बध्यतां बुद्ध्या विचार्य प्रतिज्ञायताम् ॥ ११ ॥

रा० टी०-रोचते इति । यदि मे सख्यं रोचते भवते इति शेषः, तदा एष बाहुः प्रसारितो मयेति शेषः। तत्प्रयोजनमाह-पाणिना स्वहस्तेन पाणिः मम हस्तः गृह्यतां ध्रुवा अचाल्या मर्यादा गृहीतकरो न त्यक्तव्य इत्याकारकसदाचारः गृह्यतां स्वीक्रियताम् ॥ १२ ॥

गो० टी०-रोचत इति । मर्यादा व्यवस्था ॥ १२ ॥

१२ ] ति० टी०-हस्तं पीडयामास दक्षिणहस्तेन दक्षिणहस्तं गृहीतवान् ॥ १२ ॥

रा० टी०-एतदिति । सुग्रीवस्य सुभाषितमेतद्वचनं श्रुत्वा संप्रहृष्टमनाः रामः पाणिना हस्तं सुग्रीवपाणिं पीडयामास दृढं जग्राह ॥ १३ ॥

गो० टी०-एतत्त्विति । राम इति शेषः ॥ १३ ॥

१३ ]ति० टी०-पीडितं पर्यष्वजत गाढमालिङ्गितवान् । कृतसौहार्दस्थैर्याय दनपदिष्टाग्निसाक्षिकत्वसिद्धये च रामप्रेरितहनूमतः प्रवृत्तिः-तत इति । भिक्षुरूपं परित्यज्य 'तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवंगम' इति सुग्रीवाज्ञाकरणप्रतीतये रामागमननिवेदनसमये पुनः कृतं भिक्षुरूपं परित्यज्य ॥ १३ ॥

रा० टी०-हृष्ट इति । सौहृदमालम्ब्य प्राप्य हृष्टः सुग्रीवः पीडितं सीतावियोगदुःखितं रामं पर्यष्वजत ततोऽनन्तरम् अरिन्दमो हनूमान् भिक्षुरूपं संत्यज्य स्वेन आत्मीयेन रूपेणोपलक्षितः सन् काष्ठयोः अरण्योः पावकं वह्निं जनयामास । भिक्षुरूपं संत्यज्येत्यनेन सुग्रीवसमीपागमनसमये तद्विश्वासार्थं पुनर्भिक्षुरूपं जग्राहेति व्यञ्जितम् । सार्धश्लोक एकान्वयी ॥ १४ ॥

गो० टी०-हृद्यमित्यर्धम् । पीडितं दृढम् ॥ १४ ॥

गो० टी०-मर्यादा बध्यतामिति वदतः सुग्रीवस्याशयं विदित्वाचरति-तत इति । भिक्षुरूपं संत्यज्येत्यनेन सुग्रीवविश्वासार्थम्, तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गमेति तदुक्तप्रकारेण पुनर्भिक्षुरूपेणैव तदन्तिकं गत इत्यवगम्यते । स्वेन रूपेण वानररूपेण काष्ठयोः अरणिभूतशमीकाष्ठयोः । सप्तम्यन्तं पदम् ॥ १५ ॥

१४ ] ति० टी०-स्वेन रूपेण वानररूपेण काष्ठयोररण्योरग्निं जनयामास । ततो दीप्यमानमग्निं तयोर्मध्ये निदधौ । निहितं च तं पुष्पैरभ्यर्च्य सत्कृतं परिस्तरणादिसत्कृतं चाकरोत् ॥ १४ ॥

रा० टी०-दीप्यमानमिति । ततस्तयोररण्योर्दीप्यमानं वह्निं सत्कृतं यथा भवति तथा पुष्पैरभ्यर्च्य तयोः रामसुग्रीवयोर्मध्ये सुप्रीतो हनुमान् निदधौ । अर्धद्वयमेकान्वयि॥१५॥

गो० टी०-दीप्यमानमिति । सत्कृतमित्यभ्यर्च्येत्यस्यानुवादः । तयोः रामसुग्रीवयोः ॥ १६ ॥

१५-१६ ] ति० टी०-प्रदक्षिणं चक्रतुः मैत्रीदार्ढ्यायेति शेषः ॥ १५ ॥ १६ ॥

रा० टी०-तत इति । ततो वह्निस्थापनान्तरं वयस्यत्वं सख्यमुपागतौ प्राप्तौ सुग्रीवो राघवश्च प्रदक्षिणं चक्रतुः ॥ १६ ॥

गो० टी०-तत इति । प्रदक्षिणं चक्रतुः अन्योन्यं पाणिं गृहीत्वेति शेषः । उपागतौ अग्निसाक्षिकमिति शेषः ॥ १७ ॥

रा० टी०-तत इति । ततः अग्निसाक्ष्यपूर्वकसख्यप्राप्त्यनन्तरम् अन्योन्यमभिवीक्षन्तौ उभौ हरिराघवौ वानररामौ तृप्तिं न अभिजग्मतुः ॥ १७ ॥

गो० टी०-तत इति । अभिवीक्षन्तौ अभिवीक्षमाणौ ॥ १८ ॥

१७ ] ति० टी०-हृद्यो हृदयप्रियः । एकं समानमित्यर्थः ॥ १७ ॥

रा० टी०-त्वमिति । यतस्त्वं मे वयस्योऽसि अत एव हृद्यः हृदयप्रियः अत एव नौ आवयोः दुःखं सुखं च एकमेव च एकमेव इति प्रहृष्टवत् प्रहर्षविशिष्टं अत्यानन्दकरमित्यर्थः, वाक्यं सुग्रीवो राघवमुवाच ॥ १८ ॥

गो० टी०-त्वमिति। एकं समानम्, त्वद्दुःखेन मम दुःखं भवतु त्वत्सुखेन मम सुखं भवत्वित्यर्थः । अनेन परसाम्यापत्त्यभ्यर्थनं सूचितम् ॥ १९ ॥

१ वेति गो. पाठः । २ सुग्रीवेणेति गो. पाठः । ३ हृद्यमिति गो. पाठः । ४ निदधे इति गो. पाठः । ५ उपेति गो. पाठः ।

सुग्रीवो राघवं वाक्यमित्युवाच प्रहृष्टवत् । ततः सुपर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम् १८ ॥
सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः । लक्ष्मणायाथ संहृष्टो हनुमान्मारुतात्मजः ॥ १९ ॥
शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् । ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा ॥ २० ॥
प्रत्युवाच तदा रामं हर्षव्याकुललोचनः । अहं विनिकृतो राम चरामीह भयार्दितः ॥ २१ ॥
हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः । सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ॥ २२ ॥
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव । वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥ २३ ॥
कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद्यथा । एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ २४ ॥
प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव । उपकारफलं मित्रं विदितं मे महाकपे ॥ २५ ॥
वालिनं तं वधिष्यामि तव भार्यापहारिणम् । अमोघाः सूर्यसंकाशा ममेमे निचिताः शराः ॥ २६ ॥

१८ ] ति० टी०–प्रहृष्टवत्प्रहृष्टः समेतावत्पर्यन्तं सम्यग्विश्वासाभावात्सुग्रीवः पृथगासनस्थ एवासीदिति ज्ञायते । तदाह–ततः सुपर्णेति ॥ १८ ॥

रा० टी०–तत इति । शोभनानि पर्णबहुलानि बहुपत्राणि यस्यां तां सुपुष्पितां शालस्य वृक्षविशेषस्य शाखां भङ्क्त्वा संछिद्य आस्तीर्य सराघवः सुग्रीवः निषसाद । शाखायामित्यर्थतो लब्धम् ॥ १९ ॥

गो० टी०–तत इति । सराघव इत्यनेन एकासनत्वमुक्तम् ॥ २० ॥ २१ ॥

१९] ति० टी०–आस्तीर्य राघवायेति शेषः । सराघवो निषसाद स्वयं तत्र स्थित इत्यर्थः ॥ १९ ॥

रा० टी०–लक्ष्मणायेति । हनुमान् परमपुष्पितां चन्दनवृक्षस्य शाखां लक्ष्मणाय ददौ ॥ २० ॥

२० ] ति० टी०–लक्ष्मणाय विषादपरिहारार्थं चन्दनशाखास्तरणदानम् । अथ कार्यमर्यादाबन्धनाय प्रवृत्तिः–तत इति ॥ २० ॥

रा० टी०–तत इति । प्रहृष्टः प्राप्तसंतोषः अत एव हर्षव्याकुललोचनः सुग्रीवः मधुरया गिरा श्लक्ष्णं यथा भवति तथा रामं प्रत्युवाच ॥ २१ ॥

गो० टी०–तत इति । 'प्रत्युवाच तदा रामम्' इति पाठः २२

२१–२२] ति० टी०–इह वने इत्यन्वयः ॥ २१ ॥ २२ ॥

रा० टी०–तद्वचनाकारमाह–अहमिति । हे राम ! विनिकृतः भ्रात्रा निःसारितः अत एव हृतभार्यः अत एव भयार्दितः तद्भयपीडितः अत एव त्रस्तः उद्विग्नचित्तोऽहं अवने स्वरक्षार्थम् एतत् दुर्गमुपाश्रितः नित्यं प्राप्तः सन् चरामि ॥ २२ ॥ २३ ॥

गो० टी०–अहमिति । त्रस्तः चकितः । अत्रस्त इति वा ॥ २३ ॥

रा० टी०–स इति । वालिना निकृतः अत एव कृतवैरः अत एव त्रस्तः उद्विग्नः अत एव उद्भ्रान्तचेतनः कर्तव्याकर्तव्यविषकविवेकरहितचित्तवान् सः त्वत्सख्यं प्राप्तोऽहं वने वसामि अतः वालिनः सकाशात् भयार्तस्य मे अभयं भीतिरहितं त्वं कुरु । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०–सोऽहमिति । त्रस्तः भीतः उत्तरोत्तरं भीतः । यद्वा वालित्रस्तोऽहमस्मिन् वने अभीतो वसामीत्यर्थः ॥ २४ ॥

२३ ] ति० टी०–अभयं कुर्वभयप्रतिज्ञां कुरु ॥ २३ ॥

गो० टी०–वालिन इति । अभयं भयाभावं कुरु । आर्त्यतिशयेन दार्ढ्याय पुनरुच्यते कर्तुमित्यर्धेन–मे भयं यथा न भवेत्तथा कर्तुमर्हसीत्यन्वयः ॥ २५ ॥

२४ ] ति० टी०–तदेव दार्ढ्याय पुनराह–कर्तुमिति॥२४॥

रा० टी०–कर्तुमिति । काकुत्स्थ हे राम ! यथा मे भयं न भवेत् तथा कर्तुमर्हसि, वालिनं जहीति तात्पर्यम् । अर्धं पृथक् । एवमिति । एवमुक्तस्तेजस्वी रामः प्रहसन्निव सुग्रीवं प्रत्यभाषत । अर्धद्वयमेकान्वयि ॥ २५ ॥

गो० टी०–एवमुक्त इति । प्रहसन्निव कियन्मात्रमेतदिति हसित्वा । इवशब्दो मन्दस्मितत्वे ॥ २६ ॥ २७ ॥

२५–२६ ] ति० टी०–लीलाविसृष्टैकेषुमात्रसाध्यत्वात्प्रहसन्निवेति । उपकारः फलं यस्य तम् ॥ २५ ॥ २६ ॥

रा० टी०–तद्वचनाकारमाह–उपकारेति । मित्रम् उपकारफलम् उपकारकारकमित्यर्थः, भवतीति मे विदितं विज्ञातम् अतस्तव भार्यापहारिणं वालिनं वधिष्यामि ॥ २६ ॥

रा० टी०–अमोघा इति । अमोघाः नैष्फल्यरहिताः वेगिताः अतिवेगवन्तः कङ्कपत्रप्रतिच्छन्नाः तीक्ष्णाग्राः ऋजुपर्वाणः ऋजुपर्वविशिष्टाः सरोषा निशिताः तीक्ष्णदंष्ट्राः भुजगा इव मे शरा बाणाः दुर्वृत्ते दुष्टाचरणशीले वालिनि निपतिष्यन्ति । अर्धचतुष्टयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०–अमोघा इत्यादि । कङ्कपत्रप्रतिच्छन्नाः कङ्कपत्रैर्बद्धा इत्यर्थः ॥ २८ ॥ २९ ॥

१ सपर्णेति गो. पाठः । २ छित्त्वेति गो. पाठः । ३ शालेति रा. पाठः । ४ प्लवगर्षभ इति गो. पाठः । ५ मित्रेति गो. पाठः ।

तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः। कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः ॥ २७ ॥
तीक्ष्णाग्रा ऋजुपर्वाणः सरोषा भुजगा इव। तमद्य वालिनं पश्य तीक्ष्णैराशीविषोपमैः ॥ २८ ॥
शरैर्विनिहतं भूमौ प्रकीर्णमिव पर्वतम्। स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम्
सुग्रीवः परमप्रीतः परमं वाक्यमब्रवीत् ॥ २९ ॥
तव प्रसादेन नृसिंह वीर प्रियां च राज्यं च समाप्नुयामहम्।
तथा कुरु त्वं नरदेव वैरिणं यथा न हिंस्यात्स पुनर्ममाग्रजम् ॥ ३० ॥
सीताकपीन्द्रक्षणदाचराणां राजीवहेमज्वलनोपमानि।
सुग्रीवरामप्रणयप्रसङ्गे वामानि नेत्राणि समं स्फुरन्ति ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः।

हनुमतो ज्ञातत्वद्दुःखोऽस्म्यतो यत्रकुत्रापि वर्तमानां सीतामन्विष्य त्वत्सकाशं प्रापयिष्यामीत्याश्वास्य सुग्रीवो ह्रियमाणसीतयोत्सृष्टत्वाल्लब्धं कौशेयवद्धमाभरणं गुहात आनीय प्रार्पयत्। दृष्टाभरणो रामस्तज्जानक्या एवेति परिज्ञाय प्रोद्बुद्धवियोगदुःखो बिलस्थः पन्नग इव भृशं निःश्वस्य कोऽसौ कुत्रत्यो रावण इति पप्रच्छ।

पुनरेवाब्रवीत्प्रीतो राघवं रघुनन्दनम्। अयमाख्याति ते राम सेवको मन्त्रिसत्तमः ॥ १ ॥

२७-२९ ] ति० टी०-वेगिताः संजातवेगाः॥२७-२९॥

रा० टी०-तमिति। आशीविषोपमैः अतिविषवत्सर्पतुल्यैः शरैः विनिहतमत एव भूमौ प्रकीर्णं प्रक्षिप्तं पर्वतमिव अद्यवालिनं पश्य ॥ २९ ॥

रा० टी०-स इति। आत्मनो हितं राघवस्य तद्वचनं श्रुत्वा परमप्रीतः सुग्रीवः अब्रवीत् ॥ ३० ॥

गो० टी०-तमिति। अद्य पश्येत्यनेन क्रियाज्झटित्यमुक्तम् ॥ ३० ॥ ३१ ॥

३० ] ति० टी०-मम वैरिणमग्रजं तथा कुरु, यथा पुनः स मम न हिंस्यात् ॥ ३० ॥

रा० टी०-तद्वचनाकारमाह-तवेति। तव प्रसादेन प्रियां भार्यां राज्यं च अहं समाप्नुयाम् इति हेतोः वैरिणं ममाग्रजं वालिनं तथा कुरु यथा सोऽग्रजः मां पुनर्न हिंस्यात् ॥ ३१ ॥

गो० टी०-तवेति। कुरु यतस्वेत्यर्थः। वैरिणं रिपुमिति द्विरुक्त्या वैरकृतं शात्रवं नतु जात्येत्युक्तम् ॥ ३२ ॥

३१ ] ति० टी०-सीतादीनां राजीवादिभिः क्रमेणान्वयः। कपीन्द्रोऽत्र वाली। पुंसां वामनेत्रस्पन्दोऽशुभशंसी, स्त्रीणां स शुभशंसी ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चमः सर्गः ॥ ५ ॥

रा० टी०-कार्यसिद्धिसूचकसशकुनमाह-सीतेति। सुग्रीवरामप्रणयप्रसङ्गे सुग्रीवरामयोः सख्यसमये सीतादीनां क्रमेण राजीवादिसदृशानि वामानि नेत्राणि सममेककालावच्छेदेन स्फुरन्ति तत्र कपीन्द्रो वाली, क्षणदाचरा राक्षसाः। स्त्रीणां वामाङ्गस्फुरणस्य शुभप्रदत्वं पुंसाममङ्गलप्रदत्वमिति तन्त्रान्तरे प्रसिद्धम् ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०-प्रसङ्गात् कविराह-सीतेति। सीतानेत्रं राजीवोपमम्। वालिनेत्रं हेमोपमं पिङ्गाक्षत्वात्। रावणनेत्राणि ज्वलनोपमानि। पुरुषस्य वामनेत्रस्फुरणमनर्थकरं स्त्रियास्तु शोभनमिति निमित्तशास्त्रविदः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

१ ] ति० टी०-आख्यात्याख्यातवान् तन्निमित्तमिति शेषः ॥ १ ॥

रा० टी०-रामं प्रति सुग्रीवोक्तिं वर्णयन्नाह-पुनरित्यादिभिः। प्रीतः सुग्रीवः राघवं पुनरब्रवीत्। अहं पृथक्। तद्वचनाकारमाह-अयमिति। हे राम ! यन्निमित्तं लक्ष्मणेन सह त्वं निर्जनं वनमागतः तत् जनकात्मजा भार्या त्वया लक्ष्मणेन च वियुक्ता अत एव अन्तरम् अवसरं प्रेप्सुना रक्षसा जटायुषं गृध्रं हत्वा अपहृता अतः तेन रक्षसा भार्यावियोगजं दुःखं त्वं प्रापितः इति च मन्त्रिसत्तमः मे सेवकोऽयं

१ क्रूरैरिति गो. पाठः। २ विकीर्णमिति गो. पाठः। ३ सुमहदिति गो. पाठः। ४ राघवेति गो. पाठः। ५ निहंस्यन्त रिपुमिति गो. पाठः। ६ सचिव इति गो. पाठः।

[1]हनूमान्यन्निमित्तं त्वं निर्जनं वनमागतः । लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव ॥ २ ॥
रक्षसाऽपहृता भार्या मैथिली जनकात्मजा । त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता ॥ ३ ॥
[2]अन्तरं प्रेप्सुना तेन हत्वा गृध्रं जटायुषम् । भार्यावियोगजं दुःखं [4]प्रापितस्तेन रक्षसा ॥ ४ ॥
[3]भार्यावियोगजं दुःखं नचिरात्त्वं विमोक्ष्यसे । अहं तामानयिष्यामि नष्टां [5]देवश्रुतीमिव ॥ ५ ॥
रसातले वा वर्तन्तीं वर्तन्तीं वा नभस्तले । अहमानीय दास्यामि तव भार्यामरिन्दम ॥ ६ ॥
इदं तथ्यं मम वचस्त्वमवेहि च राघव । न शक्या सा जरयितुमपि सेन्द्रैः सुरासुरैः ॥ ७ ॥
तव भार्या महाबाहो भक्ष्यं विषकृतं यथा । त्यज शोकं महाबाहो तां कान्तामानयामि ते ॥ ८ ॥
अनुमानात्तु जानामि मैथिली सा न संशयः । ह्रियमाणा मया दृष्टा रक्षसा [6]रौद्रकर्मणा ॥ ९ ॥
क्रोशन्ती रामरामेति लक्ष्मणेति च विस्वरम् । स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा ॥ १० ॥
आत्मना पञ्चमं मां हि दृष्ट्वा शैलतले स्थितम् । उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥ ११ ॥

हनूमान् मे आख्याति अकथयत् । मेशब्द उभयान्वयी सार्धश्लोकत्रयमेकान्वयि ॥ १–४ ॥

गो० टी०–एवं रामेण वालिवधे प्रतिज्ञाते सुग्रीवेणापि रामकार्यसिद्धिः प्रतिज्ञायते षष्ठे–पुनरेवेत्यादि । राघवमिति नाम । सुग्रीव इति शेषः ॥ १ ॥

गो० टी०–अयमिति । त्वं यन्निमित्तं वनमागतः तदाख्याति स्म ॥ २ ॥

२ ] ति० टी०–तत्किं तत्राह—यन्निमित्तमिति ॥ २ ॥

गो० टी०–लक्ष्मणेनेत्यादि । श्लोकद्वयम् । तेन पूर्वमविज्ञातेन ॥ ३ ॥ ४ ॥

३–४ ] ति० टी०–त्वया लक्ष्मणेन च वियुक्ता तव भार्या सीतान्तरं प्रेप्सुना छिद्रं दिदृक्षुणा हृता, तेन लोकरावणेन रक्षसा त्वं भार्यावियोगजं दुःखं प्रापित इति चाख्यातवान् ॥ ३ ॥ ४ ॥

५ ] ति० टी०–रामेण स्वकार्यसाधने प्रतिज्ञाते सति स्वयमपि तत्कार्यसाधनं प्रतिजानीते—भार्येत्यादि । न चिरान्नष्टां मधुकैटभहृतां देवस्य धर्मस्य ब्रह्मणश्च ज्ञानसाधनभूता श्रुतिस्त्रयी तामिव । दीर्घ आर्षः ॥ ५ ॥

रा० टी०–ननु किं तत्कथनेनेत्यत आह–भार्येति । नष्टां राक्षसेनापहृतां वेदश्रुतीं वेदश्रुतिमिव तां सीतामहमानयिष्यामि आनेष्यामि अतो भार्यावियोगजं दुःखम् अचिरात् शीघ्रं विमोक्ष्यसे त्यक्ष्यसि ॥ ५ ॥

गो० टी०–भार्येति । विमोक्ष्यसे त्यक्ष्यसि । नष्टां मधुकैटभापहृतां वेदश्रुतीं श्रूयत इति श्रुतिः शब्दः वेदरूपश्रुतीमिव वेदगिरमिव दीर्घ आर्षः ॥ ५ ॥

६ ] ति० टी०–वर्तन्तीं वर्तमानाम् ॥ ६ ॥

रा० टी०–ननु तस्याः स्थितिरेव न विज्ञायते इति कथमानेष्यसीत्यत आह–रसातले इति । रसातले वर्तन्तीं वा नभःस्थले वर्तन्तीं वा तव भार्यामानीय दास्यामि ॥ ६ ॥

गो० टी०–रसातल इति । वर्तन्तीं वर्तमानाम् ॥ ६ ॥

७ ] ति० टी०–तथ्यं तथ्यमेवावेहीत्यन्वयः ॥ ७ ॥

रा० टी०–इदमिति । सा सीता सेन्द्रैः इन्द्रसहितैः सुरासुरैरपि जरयितुं गोपयितुमित्यर्थः, न शक्या इदं मम वचः तथ्यं सत्यमवेहि ॥ ७ ॥

गो० टी०–इदमित्यादि । जरयितुम् आत्मसात्कर्तुम् । विषकृतं विषेण पक्वम् ॥ ७ ॥ ८ ॥

८ ] ति० टी०–विषकृतं विषमिश्रितम् ॥ ८ ॥

रा० टी०–तवेति । भार्या–भार्यापहरणं विषकृतं विषेण संमिश्रं भक्ष्यमिव एतेनोपमालङ्कारेण यथा विषमिश्रभक्ष्यभक्षणकर्तारो विनश्यन्ति तथा सीतापहर्ता विनङ्क्ष्यतीत्युपमालङ्कारः सूचितः, अतस्ते कान्तामानयामि त्वं शोकं त्यज ॥ ८ ॥

गो० टी०–त्यज शोकमित्यादि । अनुमानात् योग्यतया या दृष्टा सा मैथिली न संशयः अनुमानात्तु जानामीत्यस्यैव विवरणमिदम् ॥ ९ ॥ १० ॥

९–१० ] ति० टी०–या दृष्टा सा मैथिलीत्यनुमानात्स्वद्भार्यात्वानुमापकाद्रामेत्याक्रोशाल्लिङ्गाज्जानामीत्यन्वयः ॥ ९॥१०॥

रा० टी०–अनुमानादिति । रौद्रकर्मणा रक्षसा रावणेन ह्रियमाणा स्वदेशं प्राप्यमाणा अत एव रावणस्याङ्के रावणकर्तृकगमनप्रेरणायां राम रामेति लक्ष्मणेति च विस्वरं यथा भवति तथा क्रोशन्ती पन्नगेन्द्रवधूरिव स्फुरन्ती प्रकाशयन्ती मया दृष्टा सा मैथिली सीतैव इत्यनुमानादहं जानामि । यथाशब्द इवार्थे । अनुमानप्रकारस्तु इयं नैतत्संबन्धिनी एतत्स्पर्शभीतात्वात् चाण्डालस्पर्शभीतब्राह्मणवत् । इयं सीता निरन्तरं राममनस्कात्वात् यन्नैवं तन्नैवम् इयं राममनस्का असकृत् तत्प्रार्थनाबोधकशब्दवतीत्वात् शंभुवत् । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

११ ] ति० टी०–आत्मना पञ्चमं मन्त्रिचतुष्टयसहितं मामित्यर्थः ॥ ११ ॥

रा० टी०–आत्मनेति । आत्मना स्वेन पञ्चमं मन्त्रिच-

१ हनुमानिति गो. पाठः । २ अन्तरप्रेप्सुनेति गो. पाठः । ३ अचिरात्त्वं विमोक्ष्यसे इति गो. पाठः । ४ अर्धमेतत् गो. नास्ति । ५ वेदेति गो. रा. पाठः । ६ क्रूरेति गो. पाठः ।

तान्यस्माभिर्गृहीतानि निहितानि च राघव । आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥ १२ ॥
तमब्रवीत्ततो रामः सुग्रीवं प्रियवादिनम् । आनयस्व सखे शीघ्रं किमर्थं प्रविलम्बसे ॥ १३ ॥
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम् । प्रविवेश ततः शीघ्रं राघवप्रियकाम्यया ॥ १४ ॥
उत्तरीयं गृहीत्वा तु स तान्याभरणानि च । इदं पश्येति रामाय दर्शयामास वानरः ॥ १५ ॥
ततो गृहीत्वा वासस्तु शुभान्याभरणानि च । अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥ १६ ॥
सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः । हा प्रियेति रुदन्धैर्यमुत्सृज्य न्यपतत्क्षितौ ॥ १७ ॥
हृदि कृत्वा स बहुशस्तमलंकारमुत्तमम् । निशश्वास भृशं सर्पो बिलस्थ इव रोषितः ॥ १८ ॥
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं प्रेक्ष्य पार्श्वतः । परिदेवयितुं दीनं रामः समुपचक्रमे ॥ १९ ॥
पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया । उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥ २० ॥
शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया । उत्सृष्टं भूषणमिदं तथा रूपं हि दृश्यते ॥ २१ ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् । नाहं जानामि केयूरे नाहं जानामि कुण्डले ॥ २२ ॥
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् । ततस्तु राघवो वाक्यं सुग्रीवमिदमब्रवीत् ॥ २३ ॥

तुष्टयसहितमित्यर्थः, शैलतले स्थितं मां दृष्ट्वा तया सीतया उत्तरीयं त्यक्तं शुभान्याभरणानि च त्यक्तानि ॥ ११ ॥

गो० टी०–आत्मनेति । आत्मना मया पञ्चमम् ॥ ११ ॥

१२–१३ ] ति० टी०–आनायिष्याम्यानेष्यामि । दृष्टेत्यत्र प्रमाणप्रदर्शनमिदम् ॥ १२ ॥ १३ ॥

रा० टी०–तानीति । तानि उत्तरीयादीनि अस्माभिर्गृहीतानि निहितानि संस्थापितानि च अतस्तानि आनयिष्यामि आनेष्यामि प्रत्यभिज्ञातुं सीतासंबन्धित्वेन निश्चेतुं त्वमर्हसि ॥ १२ ॥

रा० टी०–तमिति । ततः सुग्रीववचनश्रवणानन्तरं शीघ्रमानयस्व किमर्थं प्रविलम्बसे इति प्रियवादिनं सुग्रीवमब्रवीत् ॥ १३ ॥

गो० टी०–तानीति । प्रत्यभिज्ञातुं स्मर्तुम् ॥ १२–१४ ॥

१४–१६ ] ति० टी०–गहनां दुष्प्रवेशाम् ॥ १४–१६ ॥

रा० टी०–एवमिति । एवमुक्तः सुग्रीवः गहनामन्यैर्दुर्गमां शैलस्य गुहां शीघ्रं प्रविवेश ॥ १४ ॥

रा० टी०–उत्तरीयमिति । वानरः स सुग्रीव उत्तरीयम् आभरणानि च गृहीत्वा इदं पश्येति रामाय दर्शयामास ॥ १५ ॥

रा० टी०–तत इति । ततोऽनन्तरं वास आभरणानि च गृहीत्वा नीहारेण चन्द्रमा इव बाष्पसंरुद्धोऽभवत् ॥ १६ ॥

गो० टी०–उत्तरीयमिति । उत्तरीयमाभरणानि च उत्तरीयबद्धानीत्यर्थः ॥ १५–१७ ॥

१७ ] ति० टी०–हा प्रियेतीत्यत्र संधिरार्षः ॥ १७ ॥

रा० टी०–सीतेति । सीतास्नेहप्रवृत्तेन बाष्पेण दूषितः व्याप्तः स रामः धैर्यमुत्सृज्य हा सीते ! इति रुदन् सन् क्षितौ न्यपतत् ॥ १७ ॥

१८–२० ] ति० टी०–हृदीति प्रियासंबन्धेन प्रीत्यतिशयात् ॥ १८–२० ॥

रा० टी०–हृदीति । तं सीतासंबन्धिनमलंकारं बहुशोऽनेकवारं हृदि कृत्वा बिलस्थो रोषितः सर्प इव भृशमत्यन्तं निशश्वास ॥ १८ ॥

गो० टी०–हृदीति । अलंकारमिति जात्येकवचनम् । रोषितः संजातरोषः ॥ १८ ॥

रा० टी०–अविच्छिन्नेति । अविच्छिन्नाश्रुवेगो रामः पार्श्वतः सौमित्रिं प्रेक्ष्य दीनं यथा भवति तथा परिदेवयितुं विलापयितुं समुपचक्रमे ॥ १९ ॥

गो० टी०–अविच्छिन्नेति । परिदेवयितुं प्रलपितुम् । दीनमिति क्रियाविशेषणम् ॥ १९ ॥

रा० टी०–तद्विलापाकारमाह—पश्येति । ह्रियमाणया वैदेह्या संत्यक्तमिदमुत्तरीयं शरीरात् संत्यक्तानि भूषणानि च पश्य, दृष्ट्वा निश्चिन्वित्यर्थः ॥ २० ॥

गो० टी०–पश्येति । शरीरात् अपनीयेति शेषः ॥ २० ॥

२१ ] ति० टी०–शाद्वलभूम्युत्सर्गे लिङ्गमाह—तथा रूपमीति । अभग्नतया यथा पूर्वरूपमित्यर्थः ॥ २१ ॥

रा० टी०–शाद्वलिन्यामिति । ह्रियमाणया सीतया शाद्वलिन्यां वासयुक्तायां भूम्यामिदं भूषणमुत्सृष्टं हि यतः तथारूपं पौर्वकालिकरूपविशिष्टं दृश्यते ॥ २१ ॥

गो० टी०–शाद्वलिन्यामित्यादि । अत्र शाद्वलशब्देन हरिततृणान्युच्यन्ते स्वार्थे वलजार्षः । तद्वत्यां भूमौ मृदुस्थले उत्सृष्टत्वात् तथारूपम् अविकलरूपं दृश्यते ॥ २१–२३ ॥

२२–२३ ] ति० टी०–नाहमिति । ऊर्ध्वदृष्ट्या परस्त्रीत्वेन कदाप्यदर्शनादिति भावः ॥ २२ ॥ २३ ॥

रा० टी०–एवमिति । रामेण एवमुक्तो लक्ष्मणः केयूरे अहं न जानामि कुण्डले च न जानामि पूर्वमदृष्टत्वादिति तात्पर्यम्, नूपुरे तु नित्यं पादाभिवन्दनात् हेतोः अभिजानामि

१ शुभानीति गो. पाठः । २ तदास इति गो. पाठः । ३ स इति गो. पाठः । ४ दीन इति गो. पाठः ।

ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया । रक्षसा रौद्ररूपेण मम प्राणैप्रिया हृता ॥ २४ ॥
क्व वा वसति तद्रक्षो महद्व्यसनदं मम । यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् ॥ २५ ॥
हरता मैथिलीं येन मां च रोषयता ध्रुवम् । आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ॥ २६ ॥
मम दयिततमा हृता वनाद्रजनिचरेण विमथ्य येन सा ।
कथय मम रिपुं तमद्य वै प्लवगपते यमसंनिधिं नयामि ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

दौष्कुलेयनिट्चराधमस्य स्थानादि नाहं वेद्मयथापि तथा प्रयतिष्ये यथा त्वं जानक्या समेष्यसीति सुग्रीवेणाश्वासितो रामः सुग्रीवं प्रशंसयन्वालिवधं प्रतिजानीते ।

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः । अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥ १ ॥
न जाने निलयं तस्य सर्वथा पापरक्षसः । सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलम् ॥ २ ॥

इति वाक्यमब्रवीत् । एतेन सीताचरणमन्तरा तदवयवान्तरं लक्ष्मणेन नावलोकितमिति ध्वनितम् । सार्धश्लोक एकान्वयी ॥ २२ ॥

रा० टी०–तत इति । ततः लक्ष्मणोक्तिश्रवणानन्तरं राघवः सुग्रीवमब्रवीत् ॥ २३ ॥

२४ ] ति० टी०–कं देशम् उद्दिश्येति शेषः । प्राणप्रिया प्राणेभ्योऽपीष्टा प्राणसंबन्धस्य तदधीनत्वादिति भावः ॥ २४ ॥

रा० टी०–तद्वचनाकारमाह—ब्रूहीति । हे सुग्रीव ! मम प्राणप्रिया भार्या रक्षसा कं देशं ह्रियमाणा सती त्वया लक्षिता ॥ २४ ॥

गो० टी०–ब्रूहीति । कं देशं कां दिशम् प्रति ह्रियन्ती ह्रियमाणेत्यर्थः । प्राणैः प्राणेभ्यः ॥ २४ ॥

२५–२६ ] ति० टी०–यन्निमित्तं प्रियापहारि तन्निमित्तम् ॥ २५ ॥ २६ ॥

रा० टी०–क्वेति । यन्निमित्तं सर्वान् राक्षसानहं नाशयिष्यामि मैथिलीं हरता अत एव मां रोषयता येनात्मनो जीवितान्ताय मृत्युद्वारमपावृतम् उद्घाटितम् तत् मम व्यसनदं महत् रक्षः क्व वसति । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०–क्वेत्यादि । अपावृतम् उद्घाटितं येन तत्क्व वसतीत्यन्वयः ॥ २५ ॥ २६ ॥

२७ ] ति० टी०–विमथ्य वञ्चयित्वा ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०–ममेति । येन रजनिचरेण विमथ्य वञ्चनया अस्मान् पराभूय वनान्तात् मम दयिततमा हृता तं मम रिपुं यमसंनिधिं वै कथं नयामि इति त्वं कथय ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०–ममेति । विषमवृत्तम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

१ ] ति० टी०–एवमिति ॥ १ ॥

रा० टी०–रामवचनश्रवणानन्तरकालिकं सुग्रीववृत्तान्तमाह—एवमिति । आर्तेन रामेण एवमुक्तः अत एव बाष्पगद्गदः सुग्रीवः प्राञ्जलिः सन् सबाष्पं राममब्रवीत् ॥ १ ॥

गो० टी०–एवमाभरणदर्शनव्याजेन चेतनस्य यादृच्छिकप्रासङ्गिकसुकृतदर्शनेन तल्लाभत्वरा भगवत उच्यते सप्तमे–एवमुक्त इत्यादि । बाष्पगद्गदः रामबाष्पदर्शनेन स्वयमपि बाष्पगद्गदः । एकं दुःखं सुखं च नान्तरयस्य प्रथमोदाहरणमिदम्॥१॥

२ ] ति० टी०–तस्य पापरक्षसः पापं कृतवतो रक्षसो निलयं निलयस्थानं गुप्तवासस्थानं सर्वथा न जाने । नहीदृशं पापं कर्म कृत्वा राजधान्यां वस्तुमर्हतीति भावः । सामर्थ्यं शौर्यादि । विक्रमं विशेषेण क्रामति पादविक्षेपं करोति यत्र तद्वासनगरम् । दौष्कुलेयस्येत्यनेन रक्षःकुलजत्वं ध्वनितम् । तज्जाने एवेति शेषः । वाशब्दः स्वर्थे । अत एव लङ्काद्वीपं निर्दिश्य 'स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ ' इति हनूमदादिप्रेषणकालिकसुग्रीववचसा न विरोधः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह—नेत्यादिभिः । दौष्कुले-

१ प्राणैः प्रिया प्रियेति गो. प्राणप्रिया प्रियेति रा.पाठः । २ भृशमिति गो. पाठः । ३ तरेति गो. पाठः ।

सत्यं तु प्रतिजानामि त्यज शोकमरिंदम । करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥ ३ ॥
रावणं सगणं हत्वा परितोष्यात्मपौरुषम् । तथाऽस्मि कर्ता नचिराद्यथा प्रीतो भविष्यसि ॥ ४ ॥
अलं वैक्लव्यमालम्ब्य धैर्यमात्मगतं स्मर । त्वद्विधानां न सदृशमीदृशं बुद्धिलाघवम् ॥ ५ ॥
मयापि व्यसनं प्राप्तं भार्याविरहजं महत् । नाहमेवं हि शोचामि धैर्यं न च परित्यजे ॥ ६ ॥

यस्य दुष्कुले प्रसूतस्य । तत्कुलस्य दुष्कुलत्वं तु तन्मातुः राक्षसीत्वेन । पापरक्षसस्तस्य रावणस्य निलयं स्थितिं सामर्थ्यं शौर्यं विक्रमं बलं च आकुलं चञ्चलचित्तत्वं तत्कारणं चेत्यर्थः, सर्वथा सर्वप्रकारेण न जाने सामान्यतो जाने इत्यर्थः । एतेन तस्य नैकत्र स्थितिरिति मायावित्वं च व्यञ्जितम् अत एव 'द्वीपस्तस्य शतयोजनमायतः । अगम्यो मानुषैर्द्वीपस्तं मार्गध्वं समन्ततः । रक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः' इति वक्ष्यमाणेन न विरुध्यते ॥ २ ॥

गो० टी०–न जान इति । दौष्कुलेयस्य दुष्कले भवो दौष्कुलेयः 'दुष्कुलाड्ढक्' इति ढक् । तस्य पापरक्षसः परदारापहरणरूपपापकृतो राक्षसस्य निलयं वासस्थानं सामर्थ्यं शक्तिं विक्रमं वा सर्वथा न जाने किंचिदपि न जानामीत्यर्थः । नन्विदं वक्ष्यमाणेन विरुध्यते वक्ष्यति वानरप्रेषणावसरे–'द्वीपस्तस्यापरे पारे शतयोजनमायतः । अगम्यो मानुषैर्देवैस्तं मार्गध्वं समन्ततः ॥ स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥' इति तत्र हि रावणस्य निलयसामर्थ्यपराक्रमाः सुग्रीवेण स्पष्टमवगता इति गम्यते । सत्यम्, तथापि स्वकार्ये प्रथमं प्रवर्तयितुमेवमुक्तवान् सुग्रीवः । अत एव 'ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया' इत्यस्यापि प्रतिवचनं नोक्तवान् । कथं गमनदेशमपि न जानीयात् य एवमाह ह्रियमाणा मया दृष्टेति । न चैवमादावेव मित्रद्रोहः कृतः स्यादिति वाच्यम्, दूरदर्शिना सुग्रीवेणैवं मनसि कृतम्—यदि मया रावणवृत्तान्तो मया ज्ञात इत्युक्तः स्यात् तदातिव्यसनी रामोऽयं सीतान्वेषणे प्रथमं मां प्रवर्तयेत् तथायुक्तं वानराणां वालिवशंवदत्वेनास्मदधीनत्वाभावात् । कथंचित् केषांचिद्वशीकरणेऽपि रावणेन कृतसख्यो वाली चास्मन्मनोरथानुरूपां प्रवृत्तिं कथं सहेत । तथा चोभयकार्यभङ्गः इत्यज्ञानमभिनीतवान् सुमतिः सुग्रीवः । न चैवं सति वानरप्रेषणकालिकसुग्रीववचनेन कथमिव रामो नाशङ्कतेति वाच्यम्, तारोक्तलक्ष्मणवचनश्रवणेन रामस्य न शङ्कावकाशः । पूर्वमयं न जानाति पश्चात्तारावचनैर्ज्ञातवानिति रामस्यापि प्रतिपत्तिर्भवेत् । एवं ह्याह लक्ष्मणं प्रति तारा 'शतकोटिसहस्राणि लङ्कायां किल राक्षसाः । अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः । न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥' इत्यादि । किंच कथं वा लोकालोकपर्यन्तं पर्यटतस्तदपरिज्ञानम् अत एव हि रामबलपरीक्षासमये दुन्दुभ्यादिधर्षणकथनप्रसङ्गे वक्तव्यमपि रावणजयवृत्तान्तं नोक्तवान् । नन्वेवमिदानीं परमार्थतो न विजानाति सुग्रीवः पश्चात्तारया ज्ञातवानिति किं न विकल्प्यत इति चेन्न, तारादर्शनात्प्रभृति कामपरवशेन सुग्रीवेण तारया सह रामकार्यपर्यालोचनाप्रसक्तेः । यदि च सुग्रीवः सर्वथा न जानीयात् तदा सीताक्रोशादिना स्फुटमवगतां दिशं वदेदेव । यत्तु कैश्चिदुक्तम् निलयं न जनामीत्यस्य इदानीं तदवस्थानदेशं न जानामीत्यर्थ इति तन्न, सर्वात्मना रावणवृत्तान्तमपरिज्ञाय कियदपि तत्स्वरूपज्ञानं भवत्विति तात्पर्येण क्व वा वसति तद्वद इति पृष्टवन्तं प्रतिज्ञातांशमात्रमप्यनुक्त्वा इदानीं तदवस्थानभूमिं न जानामीत्युत्तरस्य छलत्वापत्तेः । तद्वासमात्रज्ञाने तद्गमने स स्वयमेवेहागमिष्यतीति हि रामाभिप्रायः । किं च इदानीं निलयापरिज्ञानेऽपि सामर्थ्यपराक्रमौ वा वक्तव्यौ स्याताम् । इतरदिशः प्रति वानराणां प्रेषणं तान् प्रति–'रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः' इति वचनं च बहुकालविलम्बेन यत्र कुत्रापि सीतां स्थापयेत्तिष्ठेद्वेति संगच्छते । एतेनेदमपि निरस्तम् । सर्वथा सर्वप्रकारेणापि तन्निलयं न जानामीति विशिष्टाभावोऽर्थः । तथा चाग्रे केनचित्प्रकारेण तन्निलयज्ञानाविरोध इति वानरान् प्रति यावन्मात्रमुच्यते तावदादावपि वक्तव्यत्वात् । यदपि केनचिदुक्तम्–संवत्सरपर्यन्तं सीतादुःखकरणाभावे रावणकृतशिवपूजाफलं न भवेदिति दैवप्रतिबन्धवशात्तदानीं सुग्रीवस्याज्ञानमिति । तत्तुच्छम्, दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् सम्यक्च परदारधर्षणं शिवपूजाफलमिति । तस्माद्यथोक्त एवार्थो ग्राह्यः ॥ २ ॥ ३ ॥

३ ] ति० टी०–यद्यप्येतावज्जानामि, तथापि तदुपवर्णनं निष्फलम् तावन्मात्रज्ञानेऽपि तद्वधासंभवात् । क्वचिद्गूढे स्थितिसंभवात् एतावत्त्ववगम्यतामित्याह–सत्यं त्विति ॥ ३ ॥

रा० टी०–सत्यमिति । मैथिलीं त्वं यथा प्राप्स्यसि तथा यत्नं करिष्यामि इति सत्यमहं प्रतिजानामि अतः शोकं त्यज ॥ ३ ॥

४ ] ति० टी०–परितोष्यं भवतः परितोषार्हम् । आत्मनः सपरिवारस्य मम पौरुषमवलम्ब्येति शेषः ॥ ४ ॥

रा० टी०–रावणमिति । आत्मपौरुषं सेनामित्यर्थः, परितोष्य संतोष्य रावणं हत्वा यथा त्वं प्रीतो भविष्यसि तथा नचिरात् शीघ्रम् अहं कर्तास्मि ॥ ४ ॥

गो० टी०–रावणमिति । सगणं सपरिवारं रावणं हत्वा भवन्तं परितोष्य आत्मपौरुषं तथा कर्तास्मि यथा प्रीतो भविष्यसीति संबन्धः ॥ ४ ॥

५–६ ] ति० टी०–न सदृशमयुक्तम् ॥ ५ ॥ ६ ॥

१ विद्धीति गो. पाठः । २ हरणजमिति गो. पाठः

नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन् । महात्मा च विनीतश्च किं पुनर्धृतिमान्भवान् ॥ ७ ॥
बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि । मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८ ॥
व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तगे । विमृशंश्च स्वया बुद्ध्या धृतिमान्नावसीदति ॥ ९ ॥
बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते । स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १० ॥
एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये । पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ११ ॥
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् । तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥ १२ ॥
शोकेनाभिप्रपन्नस्य जीविते चापि संशयः । स शोकं त्यज राजेन्द्र धैर्यमाश्रय केवलम् ॥ १३ ॥
हितं वयस्यभावेन ब्रूमि नोपदिशामि ते । वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥ १४ ॥
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः । मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ॥ १५ ॥
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात्प्रभुः । संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६ ॥

रा० टी०–अलमिति । आत्मगतं धैर्यमालम्ब्य वैक्लव्यमलं त्यक्तव्यम् । तत्र हेतुः–त्वद्विधानां सदृशं योग्यं बुद्धिलाघवं न इति स्मर जानीहि ॥ ५ ॥

गो० टी०–अलमित्यादि । वैक्लव्यं दैन्यम् ॥ ५ ॥

रा० टी०–मयेति । भार्याविरहजं व्यसनं दुःखं मयाऽपि प्राप्तं परंतु एवं न शोचामि । तत्र हेतुः–धैर्यं न परित्यजे ॥६॥

गो० टी०–मयेति । परित्यजे परित्यजामि ॥ ६ ॥

७ ] ति० टी०–तां प्रियाम् ॥ ७ ॥

रा० टी०–नेति । प्राकृतः स्वाभाविको वानरः सन्नप्यहं तां स्वप्रियं न शोचामि महात्मत्वादिविशिष्टस्त्वं न शोचसीति किं वक्तव्यम् ॥ ७ ॥

गो० टी०–नाहमिति । प्राकृतः हीनः । विनीतः वृद्धैः सुशिक्षितः ॥ ७ ॥

८ ] ति० टी०–सत्त्वयुक्तानां सत्त्वगुणवताम् ॥ ८ ॥

रा० टी०–बाष्पेति । सत्त्वयुक्तानां मर्यादां निबद्धां बोधितामित्यर्थः, धृतिं धैर्यमुत्स्रष्टुं त्यक्तुं त्वं नार्हसि अत एव आपतितं बाष्पं धैर्यात् निग्रहीतुमर्हसि ॥ ८ ॥

गो० टी०–बाष्पमिति । सत्त्वयुक्तानां व्यवसायवताम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । मर्यादां व्यवस्थारूपां धृतिम् ॥ ८ ॥

९ ] ति० टी०–व्यसने इष्टवियोगजे, अर्थकृच्छ्रे धननाशे, भये चौरव्याघ्रादिजे, जीवितान्तगे जीवितनाशप्रापके विमृशन् प्रारब्धवेगमिति शेषः ॥ ९ ॥

रा० टी०–धैर्यमाहात्म्यमाह–व्यसन इति । व्यसने प्रियवियोगे वा अर्थकृच्छ्रे धननाशे वा जीवितान्तगे जीवनध्वंसप्रापके भये वा धृतिमान् जनः स्वया बुद्ध्या विमृशन् विचारयन् नावसीदति ॥ ९ ॥

गो० टी०–व्यसन इति । अर्थकृच्छ्रे धननाशे ॥९॥१०॥

१० ] ति० टी०–यो बालिशः, यश्च नित्यं वैक्लव्यमनुवर्तते, स मज्जति । तुश्चार्थे । भाराक्रान्ताऽतिभारवती ॥ १० ॥

रा० टी०–बालिश इति । यो नरः बालिशः विचाररहितः सन् वैक्लव्यं विकलतां स्वस्थचित्तरहितत्वमित्यर्थः, नित्यमनुवर्तते प्राप्नोति स नरः जले भाराक्रान्ता नौरिव शोके मज्जति शोकान्न निवर्तते इत्यर्थः ॥ १० ॥

११-१३ ] ति० टी०–अन्तरमवसरम् ॥ ११-१३ ॥

रा० टी०–एष इति । पौरुषं स्वैकनिष्ठपरमपुरुषत्वं श्रय स्मरेत्यर्थः । अत एव शोकस्य अन्तरमवकाशं दातुं नार्हसि अत एव प्रणयात् प्रणयं प्राप्य एषः अञ्जलिर्मया बद्धः त्वां प्रासादये च ॥ ११ ॥

रा० टी०–ये इति । ये जनाः शोकमनुवर्तन्ते प्राप्नुवन्ति तेषां सुखं न विद्यते तेजश्च क्षीयते अतः शोचितुं नार्हसि ॥ १२ ॥

रा० टी०–शोकेनेति । शोकेन अभिप्रपन्नस्य युक्तस्य तव जीविते लोकस्थितावपि संशयः अतः स त्वं शोकं त्यज धैर्यमाश्रय प्राप्नुहि ॥ १३ ॥

गो० टी०–एष इति । अन्तरम् अवकाशम् ॥११-१३॥

१४ ] ति० टी०–ब्रूमि ब्रवीमि ॥ १४ ॥

रा० टी०–हितमिति । वयस्यभावेन सख्यधर्मेण हितं ब्रूमि ब्रवीमि, उपदिशामि न अतः मे वयस्यतां पूजयन् सत्कुर्वन् त्वं शोचितुं नार्हसि ॥ १४ ॥

गो० टी०–हितमिति । ब्रूमि ब्रवीमि । वयस्यतां मित्रत्वम् ॥ १४ ॥

१५-१६ ] ति० टी०–प्रमार्जयत्प्रामार्जयत् ॥१५॥१६॥

रा० टी०–मधुरमिति । सुग्रीवेण मधुरं सान्त्वितो राघवः अश्रुपरिक्लिन्नं मुखं प्रमार्जयत् प्रामार्जयत् ॥ १५ ॥

रा० टी०–प्रकृतिस्थ इति । सुग्रीववचनात् प्रकृ-

१ भवानिति गो. पाठः । २ वै इति गो. पाठः ।

कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च । अनुरूपं च युक्तं च कृतं सुग्रीव तत्त्वया ॥ १७ ॥
एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे । दुर्लभो हीदृशो बन्धुरस्मिन्काले विशेषतः ॥ १८ ॥
किं तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे । राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥
मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् । वर्षास्विव च सुक्षेत्रे सर्वं संपद्यते तव ॥ २० ॥
मया च यदिदं वाक्यमभिमानात्समीरितम् । तत्त्वया हरिशार्दूल तत्त्वमित्युपधार्यताम् ॥ २१ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । एतत्ते प्रतिजानामि सत्येनैव शपाम्यहम् ॥ २२ ॥
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह । राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥
एवमेकान्तसंपृक्तौ ततस्तौ नरवानरौ । उभावन्योन्यसदृशं सुखं दुःखमभाषताम् ॥ २४ ॥

महानुभावस्य वचो निशम्य हरिर्नृपाणामधिपस्य तस्य ।
कृतं स मेने हरिवीरमुख्यस्तदा च कार्यं हृदयेन विद्वान् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तमः सर्गः ॥ ७ ॥

तिस्थः त्यक्तशोक इत्यर्थः, काकुत्स्थः सुग्रीवं संपरिष्वज्य इदमब्रवीत् ॥ १६ ॥

गो० टी०–मधुरमिति । प्रमार्जयत् स्वार्थे णिच् । अनित्यमागमशासनमिति अडभावः ॥ १६ ॥ १६ ॥

१७ ] ति० टी०–कर्तव्यं यत् शोकनाशार्थमिति शेषः॥१७॥

रा० टी०–तद्वचनाकारमाह–कर्तव्यमिति । स्निग्धेन स्नेहयुक्तेन अत एव हितेन वयस्येन यत् कर्तव्यं तत् अनुरूपं ममोचितं युक्तं युक्तिविशिष्टं त्वया कृतम् ॥ १७ ॥

गो० टी०–कर्तव्यमिति । अनुरूपं मित्रत्वानुरूपं, युक्तं शोकनिवारणयोग्यं कृतम् उक्तमित्यर्थः ॥ १७–१९ ॥

१८ ] ति० टी०–प्रकृतिस्थः स्वभावस्थः दुःखहीन इत्यर्थः । अस्मिन्काले व्यसनकाले ॥ १८ ॥

रा० टी०–एष इति । त्वयाऽहमनुनीतः नीतिमुक्त अत एव प्रकृतिस्थोऽस्मीति शेषः, ईदृशो भवत्सदृशो बन्धुः अस्मिन्काले शोकग्रस्तसमये विशेषतो दुर्लभः ॥ १८ ॥

१९ ] ति० टी०–रावणस्य संहारे चेति शेषः ॥ १९ ॥

रा० टी०–किं त्विति । किं तु इदमुच्यते रावणस्य वशं गताया इति शेषः, मैथिल्याः परिमार्गणे यत्नस्त्वया कार्यः । राक्षसस्येत्यपि परिमार्गणेऽन्वयि वा ॥ १९ ॥

२० ] ति० टी०–मया च यदनुष्ठेयं तवेति शेषः । वर्षास्विव सुक्षेत्र उप्तं बीजमिति शेषः । संपद्यते सफलं भविष्यतीत्यर्थः । शैघ्र्यप्रत्यायनाय वर्तमानप्रयोगः ॥ २० ॥

रा० टी०–मयेति । विस्रब्धेन प्राप्तविश्वासेन मया यदनुष्ठेयं कर्तव्यं तत् उच्यताम् । तत्र हेतुः–वर्षासु सुक्षेत्रे सर्वं तदीप्सितनानाविधसस्यमिव तव सर्वमीप्सितं संपद्यते प्राप्स्यति ॥ २० ॥

गो० टी०–मयेति । विस्रब्धेन स्निग्धेन ॥ २० ॥

२१ ] ति० टी०–इदं वाक्यं वालिनं वधिष्यामीति वाक्यमभिमानात्तत इव ॥ २१ ॥

रा० टी०–मयेति । यत् अभिमानात् स्वपरमपुरुषत्वाभिनिवेशात् मया समीरितं तत् तत्त्वं यथार्थमेव इत्युपधार्यतां निश्चीयताम् ॥ २१ ॥

गो० टी०–मयेति । अभिमानात् शौर्याभिमानात् स्वय्यभिमानाद्वा तत्त्वं यथार्थम् ॥ २१–२३ ॥

२२–२३ ] ति० टी०–एतदनृतवचनाभावं सत्येन तस्माश्रितयेत्यर्थः ॥ २२ ॥ २३ ॥

रा० टी०–तत्र हेतुमाह–अनृतमिति । अनृतम् मृषा मे नोक्तपूर्वं न च कदाचन वक्ष्ये सत्येनैव एतत्प्रतिजानामि अनृतं न वच्मीत्यर्थः, ते शपामि शपथं करोमीत्यर्थः ॥ २२ ॥

रा० टी०–तत इति । ततः तस्य राघवस्य विशेषतः प्रतिज्ञातं वचः श्रुत्वा वानरैः सचिवैः सह सुग्रीवः प्रहृष्टोऽभवदिति शेषः ॥ २३ ॥

२४–२५ ] ति० टी०–संपृक्तौ कृतसख्यसंपन्नौ अभाषतामभाषेताम् ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०–एवमिति । ततोऽनन्तरम् एकान्तसंपृक्तौ एकान्ते स्थितौ नरवानरौ रामसुग्रीवौ अन्योन्यसदृशमेवं सुखदुःखमभाषताम् ॥ २४ ॥

रा० टी०–महानुभावस्येति । हरिवीरमुख्यः हरिर्वानरो विद्वान् सुग्रीवः नृपाणामधिपस्य रामस्य वचो निशम्य हृदयेन मनसा कार्यं कृतं मेने ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तमः सर्गः ॥ ७ ॥

१ मयीति गो. पाठः । २ प्रभाषतामिति गो. पाठः

# अष्टमः सर्गः ।

रामसौहृदलब्धेरात्मानं सुहृद्गणांश्च प्रशंसन्सुग्रीवो रामेण सहैकशाखासनोपविष्टो वालितोऽभय याचते । पुनश्च विस्तरतः भार्याहरणादिवात्यपकृतिं संदर्श्यैतद्वधं याचते । एतादृग्विरोधकारण रामेण पृष्टः सुग्रीवस्तद्वृत्तमुपक्रमते ।

पैरितुष्टस्तु सुग्रीवस्तेन वाक्येन हर्षितः । लक्ष्मणस्याग्रजं शूरमिदं वचनमब्रवीत् ॥ १ ॥
सर्वथाहमनुग्राह्यो देवतानां न संशयः । उँपपन्नो गुणोपेतः सखा यस्य भवान्मम ॥ २ ॥
शक्यं खलु भवेद्राम सहायेन त्वयाऽनघ । सुरराज्यमपि प्राप्तुं स्वराज्यं किमुत प्रभो ॥ ३ ॥
सोऽहं सभाज्यो बन्धूनां सुहृदां चैव राघव । यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४ ॥
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः । न तु वक्तुं समर्थोऽहं त्वैयि आत्मगतान्गुणान् ॥ ५ ॥
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् । निश्चला भवति प्रीतिर्धैर्यमात्मवतां वैर ॥ ६ ॥
रजतं वा सुवर्णं वा शुँभान्याभरणानि च । अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥
आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा । निर्दोषश्चँ सदोषश्चँ वयस्यः परमा गतिः ॥ ८ ॥

गो० टी०—एवमिति । एकान्तसंपृक्तौ संयुक्तौ एकान्ते रहसि संयुक्तौ एकान्तं नियतं यथा तथा संयुक्तौ वा अभाषताम् । व्यत्ययेन परस्मैपदम् अडभावश्च ॥ २४ ॥

गो० टी०—महेति । स्पष्टम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

१ ] ति० टी०—तेन वाक्येन 'अनृतं नोक्तपूर्वं मे' इत्यादिवाक्येन ॥ १ ॥

रा० टी०—रामं प्रति सुग्रीवोक्तिमाह—परितुष्ट इत्यादिभिः । तेन रामोक्तेन वाक्येन परितुष्टः अत एव हर्षितः प्राप्तानन्दः सुग्रीवः लक्ष्मणस्याग्रजं राममिदमब्रवीत् ॥ १ ॥

गो० टी०—अथ सुग्रीवस्य स्वशोकमूलविज्ञापनमष्टमे—परितुष्टमित्यादि ॥ १ ॥

२–३ ] ति० टी०—उपपन्नः संपन्नः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—सर्वेत्यादिभिः । उपपन्नः स्वाभाविकसकलसंपत्तिविशिष्टः गुणोपेतः सकलसद्गुणयुक्तः भवान् यस्य मम सखा सोऽहं देवतानां सर्वथाऽनुग्राह्यः अनुग्रहणीयः । 'उपपन्नगुणोपेतः' इति भूषणपाठः ॥ २ ॥

गो० टी०—सर्वथेति । देवतानामनुग्राह्यः दयनीयोऽभवम् । यस्य मे भवान् सखाऽऽसीत् । कीदृशः सखा, उपपन्नगुणोपेतः राजयोग्यशौर्यवीर्यादिसर्वगुणोपपन्नः ॥ २ ॥

रा० टी०—शक्यमिति । हे राम ! सहायेन त्वया सुरराज्यमपि प्राप्तुं शक्यं स्वराज्यं प्राप्तुं शक्यमिति किमुत ॥ ३ ॥

गो० टी०—शक्यमित्यादि चतुश्चत्वारिंशत् ॥ ३ ॥

४ ] ति० टी०—सभाज्यः पूज्यः । यस्य येन राघववंशजं मित्रं लब्धम् ॥ ४ ॥

रा० टी०—स इति । यस्य मम अग्निसाक्षिकमग्निसाक्षिपूर्वकं राघववंशजं मित्रं लब्धं सोऽहं बन्धूनां सुहृदां च सभाज्यः पूजनीयः । यस्येत्यत्र संबन्धसामान्ये षष्ठी ॥ ४ ॥

गो० टी०—सोऽहमिति । सभाज्यः पूज्यः ॥ ४ ॥ ५ ॥

५ ] ति० टी०—अनुरूपो योग्यः । ज्ञास्यसे आनुरूप्यमिति शेषः । न तु वक्तुं समर्थः 'आत्मप्रशंसा मरणं मम' इति न्यायात् ॥ ५ ॥

रा० टी०—अहमिति । ते अनुरूपः योग्यः वयस्यः सखा अहमपि अस्मीति शेषः, इति शनैः यथाकायं ज्ञास्यसे । ननु केन गुणेनानुरूपोऽसीत्यत आह—आत्मगतान् गुणान् स्वयं वक्तुमहं न समर्थः । एतेन स्वस्यातीव दुःखादिमत्त्वं सूचितम् ॥ ५ ॥

६ ] ति० टी०—भूयिष्ठमधिकं प्रीतिर्निश्चला भवति । वयस्यानामिति शेषः । आत्मवतां स्वाधीनानाम् ॥ ६ ॥

रा० टी०—महात्मनामिति । महात्मनां पूज्यस्वभावानां कृतात्मनां यतचित्तानामात्मवतां निश्चलधैर्याणां त्वद्विधानां भूयिष्ठं धैर्यमिव प्रीतिः अतिशु स्नेहः निश्चला भवति ॥ ६ ॥

गो० टी०—महात्मनामिति । भूयिष्ठम् अतिशयेन आत्मवताम् आत्मज्ञानिनाम् ॥ ६ ॥

७ ] ति० टी०—साधूनां वयस्यानाम् । साधवो वयस्याः । रजतमित्याद्युपलक्षणम् ॥ ७ ॥

८ ] ति० टी०—वयस्यः परमा गतिः । वयस्यस्येति शेषः ८॥

रा० टी०—रजतमिति । साधूनां वयस्यानां रजताद्युपलक्षितवस्तुजातानि अविभक्तानि स्ववस्तुजातादभिन्नानि साधवो वयस्याः अवगच्छन्ति अत एव आढ्यः संपत्तिमान् वा दुःखितो वा निर्दोषो वा सदोषो वा वयस्यः सखैव परमा गतिः, वय-

१ परितुष्टमिति गो. पाठः २ वानर इति गो. पाठः । ३ उपपन्नगुणोपेत इति गो. पाठः । ४ स्वयमिति गो. रा. पाठः । ५ इवेति गो. रा. पाठः । ६ वस्त्राण्याभरणानीति गो. पाठः । ७ नेति गो. पाठः ।

धनत्यागः सुखत्यागो ¹देशत्यागोऽपि वाऽनघ । वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ९ ॥
तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियदर्शनम् । लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः॥ १० ॥
ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् । सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११ ॥
स ददर्श ततः सालमविदूरे हरीश्वरः । सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२ ॥
तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा ³सुशोभिताम् । ⁴रामस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् । शालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४ ॥
सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा । ⁵सालपुष्पावसंकीर्णे तस्मिन्गिरिवरोत्तमे ॥ १५ ॥
ततः प्रहृष्टः सुग्रीवः ⁶श्लक्ष्णया शुभया गिरा । उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥ १६ ॥

स्यानामिति शेषः । अत एव तथाविधमत्युत्कर्षं स्नेहं वयस्यप्रीतिं दृष्ट्वा अनुभूय वयस्यार्थे वयस्यप्रयोजनाय धनत्यागादयः प्रवर्तन्ते । श्लोकत्रयमेकान्वयि ॥ ७–९ ॥

गो० टी०–रजतमिति । साधूनां मित्राणां साधवो मित्राणि ॥ ७ ॥ ८ ॥

९ ] ति० टी०–तथाविधं स्वरसतो धनादित्यागप्रवर्तकमित्यर्थः ॥ ९ ॥

गो० टी०–धनत्याग इति । तथाविधं स्वस्नेहसदृशं स्नेहं दृष्ट्वा स्थितस्य वयस्यस्य वयस्यार्थे धनत्यागादयः प्रवर्तन्त इति योजना । अनया सुग्रीववचनभङ्ग्या आवाभ्यामेवं वर्तितव्यमिति व्यवस्था द्योत्यते ॥ ९ ॥

१० ] ति० टी०–तत्तथेति । यदुक्तं वयस्ययोर्धनविभागादिकं तन्ममापि संमतमित्यब्रवीदित्यर्थः । लक्ष्म्या कान्त्या युतो रामो वासवस्येव वासवसदृशस्य लक्ष्मणस्येत्यन्वयः । लक्ष्मणस्याग्रत इत्यनेन यथा मम लक्ष्मणस्य मैत्री तथैव तवापीत्यपि सूचितम् ॥ १० ॥

रा० टी०–तदिति । तत् वयस्ययोर्धनादिभेदो नास्तीत्येतत्प्रतिपादकसुग्रीववचनं तथेति लक्ष्म्या स्वतःसिद्धसंपत्योपलक्षितो रामः वासवस्य इन्द्रस्येव लक्ष्मणस्याग्रतः सुग्रीवमब्रवीत् ॥ १० ॥

गो० टी०–तत्तथेति । लक्ष्म्या कान्त्या वासवस्येव स्थितस्य लक्ष्मणस्याग्रत इति संबन्धः । अनेनोक्तार्थे लक्ष्मणानुमतिर्द्योतिता ॥ १० ॥

११ ] ति० टी०–ततस्तद्दिनापगमोत्तरं द्वितीयदिन इत्यर्थः। स्थितं दृष्ट्वा भूमाविति शेषः ॥ ११ ॥

रा० टी०–तत इति । रामं स्थितं दृष्ट्वा वने सर्वतः चतुर्दिक्षु लोलं चञ्चलं चक्षुरपातयत् अलोकयत् इत्यर्थः ॥ ११ ॥

गो० टी०–तत इति । स्थितं भूषणग्रहणकालात्प्रभृति तिष्ठन्तमित्यर्थः । लोलं चक्षुरपातयदिति समीचीनशाखालाभार्थं सर्वत्रान्वेषयामासेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०–ईषत्सुपुष्पं पत्राढ्यं पत्रबहुलम् ॥ १२॥

रा० टी०–स इति । हरीश्वरो वानरराजः सुग्रीवो अविदूरे निकटे सुपुष्पं शोभनपुष्पयुतम् ईषत्पत्राढ्यम् ईषत्पत्रैः ह्रस्वपर्णैः संपन्नं भ्रमरैरुपशोभितं शालं तदभिधतरुं ददर्श ॥ १२ ॥

गो० टी०–स ददर्शेति । ईषत्पत्राढ्यमिति पल्लवप्रचुरमित्यर्थः ॥ १२ ॥

१३–१४]ति०टी०–सराघवः सुग्रीवो निषसाद॥१३॥१४॥

रा० टी०–तस्येति । तस्य शालस्य पर्णबहुलामेकां शाखां भङ्क्त्वा रामस्याग्रे इति शेषः, आस्तीर्य सराघवः सुग्रीवो निषसाद ॥ १३ ॥

गो० टी०–तस्येति । पर्णबहुलां पल्लवबहुलाम् ॥ १३ ॥

रा० टी०–ताविति । आसीनौ तौ रामसुग्रीवौ दृष्ट्वा हनुमानपि शालशाखां समुत्पाट्य विनीतं लक्ष्मणमुपवेशयत्। एतेन पूर्वदत्तशाखासनयोः अतिसुखप्रदत्वं नेति ध्वनितम् ॥ १४ ॥

गो० टी०–ताविति । विनीतम् एकासने स्थितिमनङ्गीकुर्वन्तमित्यर्थः, उपवेशयत् उपावेशयत् ॥ १४ ॥

१५–१६ ] ति० टी०–सुखोपविष्टं रामं तु दृष्ट्वेति शेषः ॥ १५ ॥ १६ ॥

रा० टी०–सुखेति । सालपुष्पावसंकीर्णे सालपुष्पैर्व्याप्ते गिरिवरोत्तमे गिरिवरस्योत्तमप्रदेशे प्रसन्नमुदधिं समुद्रमिव सुखोपविष्टं रामं ददर्शेति शेषः ॥ १५ ॥

रा० टी०–तत इति । ततः प्रसन्नतया रामस्य स्थितिदर्शनात् हेतोः प्रणयात् प्रणयं प्राप्य हर्षव्याकुलिताक्षरं यथा भवति तथा सुग्रीवो राममुवाच ॥ १६ ॥

गो० टी०–सुखोपविष्टमित्यादिश्लोकद्वयमेकान्वयम् । द्वितीयरामपदमभिरामार्थकम् । प्रसन्नमुदधिं यथा तद्वत् प्रसन्नं गम्भीरमित्यर्थः ॥ १५–१८ ॥

१ देहत्यागोऽपि वा पुनरिति गो. पाठः । २ वादिनमिति गो. पाठः । ३ पुष्पितामिति गो. पाठः । ४ सालस्येति गो. पाठः। ५ फलपुष्पसमाकीर्णे इति गो. शालेति रा. पाठः । ६ श्लक्ष्णं मधुरयेति गो. पाठः ।

अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः । ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७ ॥
सोऽहं त्रस्तो भये मग्नो वने संभ्रान्तचेतनः । वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ १८ ॥
वालिनो मे भयार्तस्य सर्वलोकाभयंकर । ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥ १९ ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः । प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ २० ॥
उपकारफलं मित्रमपकारोऽरिलक्षणम् । अद्यैव तं वधिष्यामि तव भार्यापहारिणम् ॥ २१ ॥
इमे हि मे महाभाग पत्रिणस्तिग्मतेजसः । कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२ ॥
कङ्कपत्रपरिच्छन्ना महेन्द्राशनिसंनिभाः । सुपर्वाणः सुतीक्ष्णाग्राः सरोषा भुजगा इव ॥ २३ ॥
वालिसंज्ञममित्रं ते भ्रातरं कृतकिल्बिषम् । शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४ ॥
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः । प्रहर्षमतुलं लेभे साधुसाध्विति चाब्रवीत् ॥ २५ ॥
राम शोकाभिभूतोऽहं शोकार्तानां भवान्गतिः । वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६ ॥

१७-२० ] ति० टी०—अहं विनिकृत इति पूर्वदिवसोक्तार्थस्मारणं तदर्थस्यावश्यानुष्ठेयत्वाभिप्रायेण ॥ १७-२० ॥

रा० टी०—तद्वचनाकारमाह—अहमित्यादिभिः । अहमित्यारभ्य श्लोकचतुष्टयमेवमानुपूर्वीकं पञ्चमसर्गे पठितमिति तद्व्याख्यानेनैव गतार्थत्वान्न व्याख्यायते । पौनरुक्त्यं तु न पूर्वप्रार्थितस्य स्मारकत्वात् ॥ १७ ॥

रा० टी०—स इति ॥ १८ ॥

रा० टी०—वालिन इति ॥ १९ ॥

गो० टी०—वालिन इति । हे सर्वलोकाभयंकर ! वालिनः सकाशात् भयार्तस्य मे ममापि अत्यन्तभाग्यहीनस्यापि प्रसादं कर्तुमर्हसि ॥ १९ ॥

रा० टी०—एवमिति ॥ २० ॥

गो० टी०—एवमिति । प्रहसन्निव पूर्वमेव प्रतिज्ञातेऽपि चापलातिशयात् पुनः प्रार्थयत इति मन्दस्मितवानित्यर्थः॥२०॥

२१ ] ति० टी०—नन्व भ्रातृत्वमरित्वेन विरुद्धमिति जनाशङ्कायां स्वयमेवोत्तरयति—उपकारेत्यादि । उपकाररूपफलमेव मित्रत्वे प्रयोजकम्, न त्वेकोदरे जन्मेत्याशयः॥ २१॥

रा० टी०—तद्वचनाकारमाह—उपकारेति । उपकारः फलं बोधकं यस्य तत् मित्रं भवतीति शेषः । अपकारोऽरिलक्षणम् अरिबोधकं सामान्ये नपुंसकम् अतः तव भार्यापहारिणमद्यैव वधिष्यामि ॥ २१ ॥

गो० टी०—उपकारेति । अरिलक्षणमित्यनन्तरम् अत इत्युपस्कार्यम् ॥ २१ ॥

२२ ] ति० टी०—कार्तिकेयस्य स्कन्दस्योत्पत्तिक्षेत्रभूतं वनं शरवणं तत्रोत्पन्नकाण्डाः ॥ २२ ॥

रा० टी०—तद्वधयोग्यतासंभवायाह—इमे इति । पत्रिणः कङ्कपत्रविशिष्टाः तिग्मतेजसः हेमविभूषिताः इमे शराः कार्तिकेयवनोद्भूताः स्कन्दोत्पत्तिभूमिकाननप्रादुर्भूतकाण्डकाः एतेन तेषाममेयत्वं बोधितं तदुद्भूतशराणाममेयत्वेन प्रसिद्धत्वात्॥२२

गो० टी०—इमे हीति । पत्रिणः प्रशस्तपत्रिणः तिग्मतेजसः क्रूरतेजसः कार्तिकेयवनोद्भूताः शरवणोद्भूताः कङ्कपत्रप्रतिच्छन्ना इति पत्रिण इत्युक्तं विशेष्यते । महेन्द्रपदेनाशनेस्तत्संनिहितत्वातिशय उच्यते । इमे मे शराः महावेगत्वादिविशिष्टा हि अतः एतैः शरैर्वालिनं विनिहतं पश्येति संबन्धः ॥ २२-२४ ॥

२३ ] ति० टी०—शोभनानि पर्वाणि येषां ते ॥ २३॥

रा० टी०—कङ्केति । अयं पूर्वं व्याख्यातः ॥ २३ ॥

२४-२५ ] ति० टी०—भ्रातरममित्रमप्येकोदरजन्ममात्रेण तथा व्यवहृतं पश्य द्वित्रैर्दिवसैरिति शेषः ॥ २४ ॥ २५ ॥

रा० टी०—वालीति । वालिसंज्ञममित्रं शत्रुं ते भ्रातरं विकीर्णं हिंसितं पर्वतमिव शरैर्विनिहतं पश्य ॥ २४ ॥

रा० टी०—राघवस्येति । वाहिनीपतिः वानरसेनाधीशः सुग्रीवः राघवस्य वचः श्रुत्वा अतुलं प्रहर्षं लेभे साधु साधु इति उक्त्वा अब्रवीच्च ॥ २५ ॥

गो० टी०—राघवस्येति । वाहिनीपतिः वानरसेनाधिपतिः ॥ २५ ॥

२६ ] ति० टी०—दुःखाशयात्पुनराह—रामेत्यादि । शोकार्तगतित्वाद्वयस्यत्वाच्च त्वयि देवनम् ॥ २६ ॥

रा० टी०—तद्वचनाकारमाह—रामेति । हे राम ! अहं शोकाभिभूतः भवान् तु शोकार्तानां गतिः वयस्यः सखा च इति कृत्वा इति हेतोः त्वयि त्वत्समीपे अहं परिदेवये स्वदुःखं कथयामि ॥ २६ ॥

गो० टी०—रामेति । वयस्य इति । वयस्य इति चेत्यर्थः, त्वयि त्वत्समीपे ॥ २६-२८ ॥

१ वसाम्युद्भ्रान्तेति गो.पाठः । २ हनिष्यामीति गो.पाठः । ३ वेगा इति गो.पाठः । ४ प्रतीति रा.पाठः । ५ भ्रातृसंज्ञममित्रं ते वालिनमिति गो.पाठः ।

त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम् । कृतः प्राणैर्बहुमतः सत्येन च [1]शपाम्यहम् ॥ २७ ॥
वयस्य इति कृत्वा च [2]विस्रब्धः प्रवदाम्यहम् । दुःखमन्तर्गतं [3]तन्मे मनो हरति नित्यशः ॥ २८ ॥
एतावदुक्त्वा वचनं बाष्पदूषितलोचनः । [4]बाष्पदूषितया वाचा नोच्चैः शक्नोति भाषितुम् २९॥
बाष्पवेगं तु सहसा नदीवेगमिवागतम् । धारयामास धैर्येण सुग्रीवो रामसंनिधौ ॥ ३० ॥
[5]स निगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे । विनिःश्वस्य च तेजस्वी राघवं [6]पुनरूचिवान्॥३१॥
पुराहं वालिना राम राज्यात्स्वादवरोपितः । परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा॥३२॥
हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी । सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३ ॥
यत्नवांश्च स दुष्टात्मा मद्विनाशाय राघव । बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥
शङ्कया [7]त्वेतयाहं च दृष्ट्वा त्वामपि राघव । नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति॥ ३५ ॥
केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे । अतोऽहं धारयाम्यद्य प्राणान्कृच्छ्रगतोऽपि सन् ३६
एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः । सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति [8]चास्थिते ३७॥

२७ ] ति० टी०—वयस्यत्वमुपपादयन्करुणामुत्पादयति—त्वं हीति। अग्निसाक्षिकं पाणिप्रदानेन वयस्य इत्यन्वयः॥२७॥

रा० टी०—त्वमिति । पाणिप्रदानेन अग्निसाक्षिकं यथा भवति तथा मे मया वयस्यः कृतः अतः त्वं मे प्राणैः प्राणेभ्यः बहुमतः अधिकं ज्ञातः इति सत्येन सत्यावलम्बेन अहं शपामि शपथं करोमि ॥ २७ ॥

२८ ] ति० टी०—अवक्तव्यमपि वयस्य इति कृत्वा विस्रब्धो विश्वस्तो वदामि । हरति क्षीणं करोति ॥ २८ ॥

रा० टी०—वयस्य इति । वयस्य इति कृत्वा विस्रब्धः जातविश्वासोऽहं यत् दुःखं नित्यशः मे मनो हरति क्षिणोति तत् प्रवदामि ॥ २८ ॥

२९-३१ ] ति० टी०—न शक्नोति नाशक्नोत् ॥२९-३१॥

रा० टी०—एतावदिति । बाष्पदूषितलोचनः अश्रुव्याप्तनयनः सुग्रीवः एतावद्वचनमुक्त्वा बाष्पदूषितया वाचा हेतुभूतया उच्चैर्भाषितुं न शक्नोति ॥ २९ ॥

गो० टी०—एतावदिति । एतावदुक्त्वा पुराऽहं वालिनेत्यादि वक्तुकामस्तदुपोद्घातत्वेन 'दुःखमन्तर्गतं यन्मे मनो हरति नित्यशः' इत्येतावदुक्त्वा शक्नोति अशक्नोत् ॥ २९ ॥

रा० टी०—बाष्पेति । आगतं नदीवेगमिव बाष्पवेगं धैर्येण सुग्रीवो धारयामास रुरोध ॥ ३० ॥

रा० टी०—स इति । स सुग्रीवः बाष्पं निगृह्य संरुध्य शुभे नयने प्रमृज्य च राघवं पुनरूचिवान् ॥ ३१ ॥

गो० टी०—बाष्पवेगमिति । रामसंनिधाविति मां प्रत्युपदिश्य स्वयं न शक्नोतीति रामो मन्येतेति भिया धारयामासेति भावः ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—वालिविनिकारं संक्षेपेणाह—पुराऽहमिति । स्वाद्राज्याद्दीयमानज्येष्ठोचिताद्वानरराज्यात् अवरोपितोऽपहृताधिकारः, निर्धूतो भर्त्सितः ॥ ३२ ॥

रा० टी०—तद्वचनाकारमाह—पुरेति । पुरा पूर्वं परुषाणि वचांसि संश्राव्य वालिना स्वात् ज्येष्ठत्वेन तद्योग्यात् तदीयात् राज्यात् अवरोपितः हृताधिकारोऽहं निर्धूतः निःसारितोऽस्मि ॥ ३२ ॥

गो० टी०—पुराऽहमिति । स्वाद्राज्यात् यौवराज्यात् निर्धूतः निरस्तः ॥ ३२ ॥

३३] ति० टी०—बन्धनेषु बन्धनागारेषु संयता बद्धाः॥३३॥

रा० टी०—हृतेति । प्राणेभ्योऽपि गरीयसी मे भार्या हृता । ये मदीयाः सुहृदस्ते बन्धनेषु कारागारेषु संयता निरुद्धाः ॥ ३३ ॥

गो० टी०—हृतेति । बन्धनेषु कारागृहेषु ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०—तत्प्रयुक्ता मद्वधाय तत्प्रेरिताः ॥ ३४ ॥

रा० टी०—यत्नवानिति । दुष्टात्मा स वाली मद्वधाय यत्नवान् अस्तीति शेषः, अत एव तत्प्रयुक्ता मद्वधाय प्रेषिता बहुशो वानरा मया निहताः ॥ ३४ ॥

३५-३७ ] ति० टी०—एतया शङ्कया मद्वधाय वालिप्रेरितत्वशङ्कया । नोपसर्पामि नोपासर्पम् । भये यत्किंचिद्भयप्राप्तौ बिभ्यति सर्वत एवेति शेषः ॥ ३५—३७ ॥

रा० टी०—शङ्कयेति । त्वां दृष्ट्वाऽपि एतया वालियत्नजनितया शङ्कया भीतोऽहं नोपसर्पामि हि यतः भये भयहेतौ सर्वे बिभ्यति ॥ ३५ ॥

गो० टी०—शङ्कयेति । एतया शङ्कया वालिप्रयुक्तत्वशङ्कया भीतः नोपसर्पामि नोपासर्पम् । भये भयनिमित्ते ॥ ३५ ॥

रा० टी०—केवलमिति । हनुमत्प्रमुखाः हनुमत्प्रभृतयः इमे कपयः केवलं सहायाः अतः कृच्छ्रगतः सन्नप्यहं प्राणान् धारयामि ॥ ३६ ॥

१ अपि शपामि ते इति गो. पाठः । २ विस्रब्धमिति गो. पाठः । ३ यदिति गो. पाठः । ४ बाष्पोपहतयेति गो. पाठः । ५ सामिति गो. पाठः । ६ वाक्यमब्रवीदिति गो. पाठः । ७ चेहेति गो. पाठः । ८ च स्थिते इति गो. पाठः ।

संक्षेपस्त्वेष मे राम किमुक्त्वा विस्तरं हि ते । स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः॥३८॥
तद्विनाशेऽपि मे दुःखं प्रमृष्टं स्यादनन्तरम् । सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९ ॥
एष मे राम शोकान्तः शोकार्तेन निवेदितः । दुःखितः सुखितो वापि सख्युर्नित्यं सखा गतिः४०
श्रुत्वैतच्च वचो रामः सुग्रीवमिदमब्रवीत् । किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१ ॥
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर । आनन्तर्याद्विधास्यामि संप्रधार्य बलाबलम्॥ ४२ ॥
बलवान्हि ममामर्षः श्रुत्वा त्वामवमानितम् । वर्धते हृदयोत्कम्पि प्रावृड्वेग इवाम्भसः ॥ ४३ ॥
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः । सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव॥ ४४ ॥
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना । प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५ ॥

गो० टी०–केवलमिति । केवलम् अद्वितीयं यथा तथा ॥ ३६ ॥

रा० टी०–साहाय्यप्रकारमाह–एत इति । स्निग्धाः मद्विषयकस्नेहयुक्ता एते कपयः समन्ततो मां रक्षन्ति गन्तव्यदेशे मया सह गच्छन्ति च स्थिते मयि सतीति शेषः, तिष्ठन्ति ॥ ३७ ॥

गो० टी०–केवलत्वमुपपादयति–एते हीति । गन्तव्ये मयि गच्छतीत्यर्थः ॥ ३७ ॥

३८ ] ति० टी०–संक्षेपस्त्वेष इत्येतच्छब्दार्थः–स मे ज्येष्ठ इति ॥ ३८ ॥

३९-४० ] ति० टी०–तद्विनाशेऽपीति । यद्यपि भ्रातृनाशो दुःखाय, तथाप्यनन्तरं संप्रति विद्यमानं मे दुःखं तद्विनाशे एव प्रमृष्टं स्यात् । अपिरेवार्थे । तदेवाह—सुखमिति ॥ ३९ ॥ ४० ॥

रा० टी०–संक्षेप इति । हे राम ! एष संक्षेपः संक्षिप्योक्तमित्यर्थः । विस्तरमुक्त्वा मे किं प्रयोजनमिति शेषः, न प्रयोजनमित्यर्थः । ननु तर्हि किं कर्तव्यमित्यत आह–सः मद्वधविषयकयत्नवान् अत एव रिपुः विश्रुतपौरुषः मे मम भ्राता वाली अस्तीति शेषः, तद्विनाशे सत्येव अनन्तरं व्यवधानरहितं मे दुःखं प्रमृष्टं प्रणष्टं स्यात् अत एव सुखं सुखविशिष्टं मे जीवितं तद्विनाशनिबन्धनं वालिविध्वंसाधीनमेव । अपिरेवार्थे । श्लोकद्वयमेकान्वयि ॥ ३८ ॥ ३९ ॥

रा० टी०–एष इति । यतः सख्युर्गतिः रक्षकः दुःखितः सुखितो वा सखैव अतः शोकार्तेन मया शोकान्तः शोकविध्वंसोपायः निवेदितः कथितः ॥ ४० ॥

गो० टी०–संक्षेप इत्यादिद्वयम् । तद्विनाशादनन्तरं मे दुःखं प्रणष्टं स्यात् मे सुखं मे जीवितं चैव तद्विनाशनिबन्धनमित्येष संक्षेप इत्यन्वयः ॥ ३८–४१ ॥

४१ ] ति० टी०–तन्निमित्तं तत्त्वतः श्रोतुमिच्छामीत्यन्वयः ॥ ४१ ॥

रा० टी०–श्रुत्वेति । एतत् सुग्रीवोक्तं वचो रामः श्रुत्वा सुग्रीवमब्रवीत् । तद्वचनाकारमाह–किमिति । भ्रातुर्वालिनो वैरं किंनिमित्तं किंकारणकमभूत्तत्तत्त्वतः इच्छामि श्रोतुमिति शेषः ॥ ४१ ॥

४२ ] ति० टी०–तव तेन वैरस्य कारणं श्रुत्वा युवयोर्बलाबलं च श्रुत्वा, आनन्तर्यात्तदनन्तरोत्पन्नविमर्शात्संप्रधार्य निश्चित्य हि निश्चयेन तव सुखं त्वत्सुखसाधनं वालिवधं विधास्यामि ॥ ४२ ॥

रा० टी०–तत्प्रयोजनमाह–सुखमिति । तव वैरस्य कारणं श्रुत्वा बलाबलं युवयोः प्राबल्यनैर्बल्ये संप्रधार्य ज्ञात्वा आनन्तर्यम् अन्तररहितं तव सुखं विधास्यामि । आनन्तर्यमित्यत्र स्वार्थे ष्यञ् ॥ ४२ ॥

गो० टी०–सुखमिति । तव वैरस्य कारणं श्रुत्वा बलाबलं संप्रधार्य वैरकारणं वा वैरं वा बलवदिति विचार्य आनन्तर्यम् अनन्तरम् स्वार्थे ष्यञ् । तव सुखं विधास्यामि, स्वल्पापराधे प्रबलवैरं तेन कृतं चेत्तमद्यैव हत्वा तव सुखं विधास्यामि अनल्पापराधे स्वल्पवैरं चेत्समाधानमुखेन सुखं विधास्यामीति भावः ॥ ४२ ॥

४३ ] ति० टी०–अम्भःसंबन्धी प्रावृट्कालिको वेग इव मेऽमर्षो वर्धते ॥ ४३ ॥

रा० टी०–श्रवणप्रयोजनमाह–बलवानिति । अवमानितम् अपराधमन्तरा तत्कर्तृकानादरवन्तं त्वां श्रुत्वा अम्भसो जलस्य प्रावृड्वेग इव हृदयोत्कम्पी बलवान् ममामर्षो वर्धते । अवमानितं श्रुत्वेत्यनेन तदपराधाभावे तं न हन्तास्मीति व्यञ्जितं तेन रामस्य मर्यादापालकत्वं व्यक्तम् । अमर्षो वर्धते इत्यनेन कोपोद्गममन्तरा वधस्याशक्यत्वं सूचितम् ॥ ४३ ॥

गो० टी०–अपराधस्वल्पत्वपक्ष आह–बलवानिति । प्रावृषि वेगः प्रावृड्वेगः ॥ ४३ ॥

४४-४५ ] ति० टी०–यावदारोप्यते आरोपयिष्यामि । सृष्टो विसृष्टः रिपुर्निरस्तश्च । समुच्चयालंकारः, व्यङ्ग्यातिशयोक्तिश्च ॥ ४४ ॥ ४५ ॥

रा० टी०–हृष्ट इति । यावत्कालं मया धनुः आरोप्यते

१ नाशादीति गो.पाठः । २ प्रणष्टमिति गो.पाठः । ३ वचनमिति गो.पाठः । ४ वर्तत इति गो.पाठः । ५ ष्यञिति तात्पर्यम् । षस्य स्थाने खस्योच्चारणात् ।

ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे । वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

स्त्रीहेतुकवैरानुबन्धिना मायाविनाम्ना रात्रिंचरेण निशीथे योद्धुमाहूतो वाली मया समं निर्गत्य पलायमाननिट्चरपदवीमनुसृतः प्राप्तगुहाद्वारः मां सशपथ बहिर्निवेश्य गुहां प्राविशत् । वत्सरपर्यन्तं निर्गमाभावादन्तश्चासुरकोलाहलतो गुहानिर्गतरुधिरस्रुतेश्च वालिनो नाशं मन्वानोऽहं शिलया गुहाद्वारं पिधाय निर्गतोऽग्रजायोदकं दत्वा किष्किन्धां प्रविष्टः भन्मुद्रया निश्चितवालिनाशैर्मन्त्रिभी राज्येऽभिषिक्तः प्रत्यागत्य निर्भर्त्सितमन्त्रिणो वालिनः प्रसादनाय तमभ्यवादयमिति सुग्रीवः कथयति ।

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः । पितुर्बहुमतो नित्यं मम चापि तथा पुरा ॥ १ ॥
पितर्युपरते तस्मिञ्ज्येष्ठोऽयमिति मन्त्रिभिः । कपीनामीश्वरो राज्ये कृतः परमसंमतः ॥ २ ॥
राज्यं प्रशासतस्तस्य पितृपैतामहं महत् । अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ॥ ३ ॥
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः । तेन तस्य महद्वैरं वालिनः स्त्रीकृतं पुरा ॥ ४ ॥

तावत्कालं विस्रब्धः मद्विषयकविश्वासवान् अत एव हृष्टस्त्वं कथय वैरहेतुमिति शेषः । हर्षे हेतुमाह—यदा बाणो मया सृष्टः त्यक्तस्तदैव तव रिपुर्निरस्तः विध्वस्त इत्यवेहीति शेषः ॥४४॥

रा० टी०—एवमिति । काकुत्स्थेन रामेण एवमुक्तः सुग्रीवः वानरैः सह प्रहर्षं लेभे ॥ ४९ ॥

गो० टी०—वालिवैरस्वल्पत्व आह—हृष्ट इति । हृष्ट इत्यनेन वालिहननानन्तरं शोकं मा कुर्वित्यर्थः । क्रमेण तत्काले वक्ष्यत इत्यत्राह—सृष्ट इति । यदा बाणो विसृष्टस्तदैव रिपुर्नष्ट इत्यवेहीत्यर्थः ॥ ४४ ॥ ४९ ॥

४६ ] ति० टी०—तत्त्वं तात्त्विकं वैरस्य कारणमित्यन्वयः ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टमः सर्गः ॥ ८ ॥

रा० टी०—तत इति । ततः प्रहर्षप्राप्त्यनन्तरं प्रहृष्टवदनः सुग्रीवः लक्ष्मणाग्रजे रामे वैरस्य तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डेऽष्टमः सर्गः ॥ ८ ॥

गो० टी०—तत इति । लक्ष्मणाग्रज इति निमित्तसप्तमी तन्निमित्तमित्यर्थः ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

१ ] ति० टी०—उपक्रान्तमेवाह—वालीति । पितुः क्षेत्रिणः मात्रैक्याच्च भ्रातृत्वं भीमार्जुनादिवत् ॥ १ ॥

रा० टी०—सुग्रीवोक्तिमाह—वालीत्यादिभिः । शत्रुनिषूदनो ज्येष्ठो वालीनाम मम भ्राता पुरा वैरात्पूर्वं यथा पितुर्बहुमतः प्रियः इत्यर्थः, तथा ममापि बहुमतः आसीदिति शेषः ॥ १ ॥

गो० टी०—अथ वाल्यपराधवृत्तान्तो नवमे—वाली नामेत्यादि । षड्विंशतिः श्लोकाः ॥ १ ॥

२ ] ति० टी०—कपीनां राज्ये इत्यन्वयः ॥ २ ॥

रा० टी०—पितरीति । पितरि उपरते मृते सति ज्येष्ठोऽयमिति हेतोः राज्ये राज्यासने परमसंमतो वाली मन्त्रिभिः कपीनामीश्वरः कृतः ॥ २ ॥

गो० टी०—पितरीति । अयं ज्येष्ठः अतः कपीनामीश्वर इति राज्ये कृतः स्थापितः ॥ २ ॥

३ ] ति० टी०—पितृपैतामहम् आर्षत्वादुत्तरपदवृद्धिः॥३॥

रा० टी०—राज्यमिति । पितृपैतामहं पित्रादिपरम्परया भुक्तं राज्यं प्रशासतस्तस्य वालिनः प्रेष्यवत् भृत्यवत् सर्वेषु कालेषु प्रणतोऽहं स्थितः ॥ ३

गो० टी०—राज्यमिति । पितृपैतामहं स्वपितुः ऋक्षरजसः पित्रा ब्रह्मणा तस्मै दत्तत्वात् ॥ ३ ॥

४ ] ति० टी०—मायावीत्यन्वर्थं नाम । पूर्वजो ज्येष्ठः । स्त्रीकृतं स्त्रीनिमित्तम् । अयमितिहासः क्वचित्पुराणे शोधनीयो बहुदर्शिभिः ॥ ४ ॥

रा० टी०—मायावीति । दुन्दुभेः पूर्वजो ज्येष्ठः मयस्य सुतो मायावीनाम बभूवेति शेषः । तेन मायाविना तस्य वालिनः स्त्रीकृतं स्त्रीमूलकं महत् वैरं पुरा अभवदिति शेषः । मयस्येत्यध्याहृतम् अत एव 'मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरम्' इत्युत्तरकाण्डे वक्ष्यमाणं संगच्छते ॥ ४ ॥

गो० टी०—मायावीति । दुन्दुभेः पूर्वजः अग्रजः सुतः मयस्येति शेषः । वक्ष्यत्युत्तरकाण्डे मयः—'मायावी प्रथम-

१ ऽस्माकमिति गो. पाठः । २ स्त्रीकृतं विश्रुतमिति रा. पाठः ।

स तु सुप्ते जने रात्रौ किष्किन्धाद्वारमागतः । नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ५ ॥
प्रसुप्तस्तु मम भ्राता नर्दतो भैरवस्वनम् । श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ६ ॥
स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् । वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ७ ॥
स तु निर्धूय ताः सर्वा निर्जगाम महाबलः । ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ८ ॥
स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् । असुरो जातसंत्रासः प्रदुद्राव [3]तदा भृशम् ॥ ९ ॥
तस्मिन्द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ । प्रकाशोऽपि[4] कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥ १० ॥
स तृणैरावृतं दुर्गं धरण्या विवरं महत् । प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥ ११ ॥
तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः । मामुवाच ततो वाली वचनं क्षुभितेन्द्रियः ॥ १२ ॥
इह [6]तिष्ठाद्य सुग्रीव बिलद्वारि समाहितः । यावदत्र प्रविश्याहं निहन्मि समरे रिपुम् ॥ १३ ॥
मया त्वेतद्वचः श्रुत्वा याचितः स परंतपः । शापयित्वा च मां पद्भ्यां प्रविवेश बिलं ततः ॥ १४ ॥
तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः । स्थितस्य च बिल[11]द्वारि स कालो व्यत्यवर्तत ॥ १५ ॥

स्तात दुन्दुभिस्तदनन्तरः' इति । तेन मायाविना तस्य वालिनः स्त्रीकृतं स्त्रीनिमित्तं महद्वैरमस्तीति पुरा विश्रुतम् ॥ ४ ॥

५–१० ] ति० टी०–सुप्ते जने रात्रौ सुप्तजने भागेऽर्धरात्रे रणनिमित्तम् ॥ ५–१० ॥

रा० टी०–स इति । रात्रौ जने सुप्ते सति किष्किन्धाद्वारमागतः सुसंरब्धः जातकोपः स मायावी नर्दति स्म रणे रणार्थं वालिनमाह्वयच्च ॥ ५ ॥

गो० टी०–स त्विति । सुप्तजने सुप्तः जनो यस्मिन् रात्र्यंशे स सुप्तजनः, अर्धरात्र इत्यर्थः ॥ ५ ॥

रा० टी०–प्रसुप्त इति । प्रसुप्तो मम भ्राता वाली नर्दतो मायाविनो भैरवस्वनं श्रुत्वा न ममृषे अत एव जवात् वेगात् निष्पपात निरगच्छत् ॥ ६ ॥

रा० टी०–स इति । क्रोधात् असुरोत्तमं हन्तुं निस्सृतः स वाली स्त्रीभिः प्रणतात्मना मया च वार्यमाण आसीदिति शेषः ॥ ७ ॥

रा० टी०–स इति । स वाली ताः मया सहिताः सर्वाः स्त्रियः निर्धूय तिरस्कृत्य निर्जगाम । ततोऽनन्तरं सौहार्दात् हेतोः वालिना सह अहमपि निस्सृतः ॥ ८ ॥

रा० टी०–स इति । अवस्थितं भ्रातरं मां च दूरात् दृष्ट्वा जातसंत्रासः असुरः स मायावी भृशं प्रदुद्राव ॥ ९ ॥

गो० टी०–प्रसुप्त इति । भैरवस्वनं भैरवस्वनरूपं नर्दितं गर्जितम् ॥ ६–९ ॥

रा० टी०–तस्मिन्निति । संत्रस्ते तस्मिन् द्रवति विद्रवति सति आवां द्रुततरमतिशीघ्रं गतौ तदा उद्गच्छता उदयं प्राप्नुवता चन्द्रेण मार्गोऽपि प्रकाशः प्रकाशितः कृतः॥१०॥

गो० टी०–तस्मिन्निति । उद्गच्छता उदयमानेन ॥ १० ॥

११ ] ति० टी०–तृणैरावृतं छन्नं विवरं बिलमासाद्य प्राप्य विष्ठितौ स्थितौ ॥ ११ ॥

रा० टी०–स इति । असुरः स मायावी तृणैः आवृतं महत् बृहत् अत एव दुर्गममन्यैर्दुर्गमं धरण्या विवरं वेगात् प्रविवेश । आवामासाद्य गुहाद्वारं प्राप्य विष्ठितौ स्थितौ॥११॥

गो०टी०–स इति। आसाद्य बिलद्वारमिति शेषः॥११–१३॥

१२–१३ ] ति० टी०–बिलं प्रविष्टं दृष्ट्वा ॥ १२ ॥ १३ ॥

रा० टी०–तमिति । बिलं प्रविष्टं तं रिपुं दृष्ट्वा रोषवशं गतः अत एव क्षुभितेन्द्रियो वाली मामुवाच ॥ १२ ॥

रा० टी०–तद्वचनाकारमाह–इहेति । अत्र अस्यां गुहायामथ प्रविश्य समरे रिपुं यावन्निहन्मि तावत् समाहितस्त्वमिह बिलद्वारि तिष्ठ ॥ १३ ॥

१४ ] ति० टी०–एतद्वचो रिपुवधाय बिलप्रवेशवचनं याचितः सहप्रवेशमिति शेषः । स्वपादाभ्यां शापयित्वा स्वपादशपथपूर्वं सहप्रवेशान्निवार्य यावन्मदागमनं तावद्बिलद्वारि तिष्ठेति चोक्त्वेत्यर्थः ॥ १४ ॥

रा० टी०–मयेति । एतत् वचः श्रुत्वा परंतपः स वाली मया याचितः सह प्रवेशायेति शेषः, स मया याचितो वाली पद्भ्यां स्वचरणाभ्यां मां शापयित्वा बिलात् यावत्स्वागमनं स्वचरणशपथपूर्वकं संस्थाप्येत्यर्थः, ततस्तद्बिलं प्रविवेश॥१४॥

गो० टी०–मया त्विति । याचितः सह प्रवेशनमिति शेषः । पद्भ्यां स्वपदाभ्याम् "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति चतुर्थी ॥ १४ ॥

१५ ] ति० टी०–साग्रः संवत्सरः किंचिदधिकः संवत्सरः, द्वारि स्थितस्य च मम स कालः साग्रः संवत्सरो व्यत्यवर्तताऽतिक्रान्तः । तावत्पर्यन्तं मया तत्रैव स्थितमित्याशयः ॥ १५ ॥

१ नर्दितमिति गो. पाठः । २ सर्वाश्च इति गो. पाठः । ३ तत इति गो. पाठः । ४ चेति गो. पाठः । ५ तदेति गो. पाठः । ६ त्वं तिष्ठेति गो. पाठः । ७ तत्रेति गो. पाठः । ८ सहसेति गो. पाठः । ९ त्विति गो. पाठः । १० महदिति गो. पाठः । ११ मम द्वारीति गो. पाठः ।

अहं तु नष्टं तं ज्ञात्वा स्नेहादागतसंभ्रमः । भ्रातरं न [1]प्रपश्यामि पापशङ्कि च मे मनः ॥ १६ ॥
अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम् । सफेनं रुधिरं [2]दृष्ट्वा ततोऽहं भृशदुःखितः ॥ १७ ॥
नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः । [3]न रतस्य च संग्रामे क्रोशतोऽपि[4] स्वनो गुरोः ॥ १८ ॥
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् । पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥ १९ ॥
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे । गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ॥ २० ॥
ततोऽहं तैः समागम्य समेतैरभिषेचितः । राज्यं प्रशासतस्तस्य न्यायतो मम राघव ॥ २१ ॥
आजगाम रिपुं हत्वा [5]दानवं स तु वानरः । अभिषिक्तं तु मां दृष्ट्वा [6]क्रोधात्संरक्तलोचनः ॥ २२ ॥
मदीयान्मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् । निग्रहे [7]च समर्थस्य तं पापं प्रति राघव ॥ २३ ॥

रा० टी०–तस्येति । बिलं प्रविष्टस्य तस्य वालिनः साग्रः समग्रः संवत्सरः गतो व्यतीतः । बिलद्वारि स्थितस्य ममापि सः साग्रः संवत्सरः कालः व्यत्यवर्तत ॥ १५ ॥

गो० टी०–तस्येति । तस्य प्रविष्टस्य तस्मिन् प्रविष्टे साग्रः संपूर्णः स कालः संवत्सरः, ममापि संवत्सरो गत इत्यर्थः ॥ १५ ॥

१६–१७] ति० टी०–ततो यदा हतं भ्रातरं न पश्यामि तदाऽहं भ्रातरं नष्टं दर्शनाविषयं जातम् स्नेहादागतसंभ्रम आगतक्षोभो जातः, पापशङ्कि मरणशङ्कि मे मनो जातं च ॥ १६ ॥ १७ ॥

रा० टी०–अहमिति । तं बिले प्रविष्टं भ्रातरं न पश्यामि संवत्सरपर्यंतं नापश्यम् इति हेतोः मे मनः पापशङ्कि पापात् पापिनः मायाविनः शङ्कते स्वभ्रातृकर्मकवधं संभावयति तच्छीलं मे मनो जातमिति शेषः, अत एव तं भ्रातरं नष्टं हिंसितं ज्ञात्वा स्नेहात् तद्विषयकातिप्रीतेः हेतोः आगतसंभ्रमः प्राप्तोद्वेगः आसमिति शेषः ॥ १६ ॥

गो० टी०–अहं त्विति । अहं तं नष्टं ज्ञात्वा साग्रसंवत्सरमदृष्टं बुद्ध्वा स्नेहादागतसंभ्रमोऽभवं भ्रातरं च न पश्यामि नापश्यम् ततः मे मनः पापाशङ्कि तन्मरणाशङ्कि जातम् ॥ १६ ॥

रा० टी०–अथेति । अथानन्तरं दीर्घस्य कालस्य अपगमे सतीति शेषः, तस्माद्बिलाद्विनिस्सृतं सफेनं रुधिरं दृष्ट्वा ततस्तस्माद्दर्शनात् अहं भृशदुःखितः अभवमिति शेषः ॥ १७ ॥

गो० टी०–अथेति । रक्तं रक्तवर्णम् ॥ १७ ॥ १८ ॥

१८ ] ति० टी०–संग्रामे रतस्य निरतस्य क्रोशतोऽपि गुरोः स्वनो न श्रोत्रमागत इत्यनुकर्षः ॥ १८ ॥

रा० टी०–नर्दतामिति । नर्दतामसुराणां ध्वनिः मे श्रोत्रमागतः प्राप्तः । संग्रामे रतस्य क्रोशतोऽपि गुरोः वालिनः स्वनः न श्रोत्रमागतः श्रोत्रमागत इत्युभयान्वयि ॥ १८ ॥

१९ ] ति० टी०–चिह्नैर्बिलद्वारि रुधिरनिःसरणासुरीयसङ्ग्रामक्रोशनादिभिर्भ्रातरं हतमवगतो ज्ञातवान् । पिधाय राक्षसनिर्गमशङ्कया ॥ १९ ॥

रा०टी०–अहमिति । तैः बिलनिर्गतरुधिरासुरमात्रगर्जनादिभिः चिह्नैः भ्रातरं हतं बुद्ध्या स्वविचारेण अवगतः निश्चयवान् अहमासमिति शेषः, अत एव गिरिमात्रया पर्वतनिभया शिलया बिलद्वारं पिधाय राक्षसकर्तृकबहिर्निर्गमनाभावाय आच्छाद्य शोकार्तः सन् उदकं कृत्वा किष्किन्धामागतः प्राप्तः । सार्धश्लोक एकान्वयी ॥ १९ ॥

गो० टी०–अहं त्विति । चिह्नैः मरणकालिकस्वरैः ॥ १९ ॥

२० ] ति० टी०–यत्नतो गूहमानस्यापि मे तत्त्वं वालिवृत्तान्तविषयं मन्त्रिभिर्वालिमन्त्रिभिः श्रुतम् ॥ २० ॥

रा० टी०–गूहमानस्येति । तत्त्वं वालिवधं यत्नतोऽनेकविधोपायैर्गूहमानस्य शत्र्वाक्रमणादिशङ्कया गोप्यमानस्य मे मन्त्रिभिरमात्यैः श्रुतं तेषां संनिधौ मया कथितमित्यर्थः । ततस्तस्माद्धेतोः समेतैः तैः मन्त्रिभिः अहमभिषेचितः ॥ २० ॥

गो० टी०–गूहमानस्येति । तत्त्वं यथार्थं वालिमरणं गूहमानस्य प्रच्छादयतः मे मत्तः यत्नतः बहुयत्नेन स्वविषयशापादिना श्रुतमासीत् ॥ २०–२२ ॥

२१–२२ ] ति० टी०–समेतैर्मिलितैः । तस्य राज्यमिति बुद्ध्यैव न्यायतः प्रशासतो मम समीपमाजगाम स वानर इत्यन्वयः ॥ २१ ॥ २२ ॥

रा० टी०–राज्यमिति । न्यायतो राज्यं प्रशासतो मम अभिमुखमिति शेषः । वानरो वाली रिपुं हत्वा आजगाम ॥ २१ ॥

रा० टी०–अभिषिक्तमिति । अभिषिक्तं मां दृष्ट्वा क्रोधात् संरक्तलोचनो वाली मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥ २२ ॥

२३ ] ति० टी०–मदीयान्मदभिषेककर्तॄन् । निग्रहे समर्थस्यापि मे बुद्धिर्भ्रातृगौरवेण यन्त्रिता संकुचिता सती तं पापं प्रति निग्रहाय न प्रावर्तत ॥ २३ ॥

रा० टी०–निग्रह इति । निग्रहे तत्परुषवाक्यादिनिरोधे समर्थस्यापि मे बुद्धिः भ्रातृगौरवयन्त्रिता भ्रातृगौरवहेतुकप्राप्तसंकोचा सती तं वालिनं प्रति न प्रावर्तत ॥ २३ ॥

गो० टी०–निग्रहेऽपीति । पापम् अज्ञानकृतमिति

१ चेति गो. पाठः । २ रक्तमहं दृष्ट्वा सुदुःखित इति गो. पाठः । ३ निरस्तस्येति गो. पाठः । ४ निरिति गो. पाठः । ५ वाली तमसुरोत्तममिति गो. पाठः । ६ वालीति गो. पाठः । ७ ऽपीति गो. पाठः ।

न प्रावर्तत मे बुद्धिर्भ्रातृगौरवयन्त्रिता । हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ॥ २४ ॥
मानयँस्तं महात्मानं यथावच्चाभिवादयम् । उक्ताश्च नाशिषस्तेन प्रहृष्टेनान्तरात्मना ॥ २५ ॥
नत्वा पादावहं तस्य मुकुटेनास्पृशं प्रभो । अपि वाली मम क्रोधान्न प्रसादं चकार सः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

शून्याक्रमणशङ्किभिर्मन्त्रिभिरहं बलात्पदे न्ययोजि सुष्ठुतेऽभिगमः प्रतिपद्यस्वात्मनः पदमित्युक्त्वा क्षमां याचन्त मां निवेदितशत्रुविनाशः क्रुद्धो वाली पौरान्साक्षीकृत्य दोषमारोप्य बह्ववाच्यं श्रावयन्नगरान्निरवासयदिति श्रुतोभयवैरकारणो रामो वालिवधं प्रतिज्ञाय सुग्रीवमाश्वासयति ।

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् । अहं प्रसादयाञ्चक्रे भ्रातरं [3]हितकाम्यया ॥ १ ॥
दिष्ट्यासि कुशली प्राप्तो निहतश्च त्वया रिपुः । अनाथस्य हि मे नाथस्त्वमेको नाथ [4]नन्दन ॥ २ ॥
इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् । छत्रं सवालव्यजनं प्रतीच्छस्व मया धृतम् ॥ ३ ॥
आर्तस्तत्र बिलद्वारि स्थितः संवत्सरं नृप । दृष्ट्वा च शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥
शोकसंविग्नहृदयो भृशं व्याकुलितेन्द्रियः । अपिधाय बिलद्वारं शैलशृङ्गेण तत्तदा ॥ ५ ॥

सान्त्वनेऽपि धिक्कारणात् पापिष्ठं तं प्रति निग्रहे समर्थस्य प्रकृतिबलसंपन्नत्वादिति भावः। यन्त्रिता नियमिता ॥ २३ ॥

२४-२५ ] ति० टी०-उक्तानुवादपूर्वमवशिष्टव्यापारकथनम्—हत्वेत्यादि ॥ २४ ॥ २५ ॥

रा० टी०-हत्वेति । शत्रुं हत्वा मे भ्राता यदा पुरं प्रविवेश तदा महात्मानं तं वालिनं मानयन् सन् यथावत् अभ्यवादयं तेन वालिना च प्रहृष्टेन अन्तरात्मना मनसा आशिषो न उक्ताः। सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०-हत्वेति । प्रविवेश पुरमित्युक्त्वा मन्त्रिबन्धनादिकं पुराद्बहिरिति ज्ञेयम् ॥ २४ ॥ २५ ॥

२६ ] ति० टी०-अपि तथापीत्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०-नत्वेति । तस्य वालिनः पादावहं नत्वा मुकुटेन अस्पृशं वाली तु क्रोधात् प्रसादं न चकार ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामाणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे नवमः सर्गः ॥ ९

गो० टी०-नत्वेति । मम क्रोधान्मयि कोपात् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१-५ ] ति० टी०-संरब्धं क्रोधावेशादेव क्षुभितचित्तम् । हितकाम्ययाऽऽत्महितेच्छया ॥ १-५ ॥

रा० टी०-सुग्रीवः क्रुद्धवालिविषये स्वकृत्यमाह-तत इत्यादिभिः । ततः वालिसमागमानन्तरं क्रोधसमाविष्टं क्रोधेन संयुक्तम् अत एव संरब्धं क्रोधसूचकचेष्टावन्तम् उपागतं प्राप्तं तं वालिनं हितकाम्यया स्वकल्याणवाञ्छयाऽहं प्रसादयाञ्चक्रे ॥ १ ॥

गो० टी०-अथ वालिदोषदर्शनेन रामस्य दृढतरा वालिवधप्रतिज्ञा दशमे-तत इत्यादि ॥ १ ॥

रा० टी०-प्रसादनप्रकारमाह-दिष्ट्येत्यादिभिः । हे अनाथनन्दन ! त्वया रिपुर्निहतः कुशली त्वं प्राप्तश्च स्वपुरमिति शेषः, दिष्ट्या भाग्यमेतत् ॥ २ ॥

गो० टी०-दिष्ट्येति । अनाथान् नन्दयतीत्यनाथनन्दनः ॥ २ ॥

रा० टी०-इदमिति । मया धृतमिदं सवालव्यजनं चामरसहितम् उदितं पूर्णचन्द्रमिव बहुशलाकं ते छत्रं प्रतीछस्व स्वीकुरु ॥ ३ ॥

गो० टी०-इदमिति । उद्यतम् अर्पितं प्रतीच्छस्व प्रतीच्छ ॥ ३ ॥

रा० टी०-ननु मामुपेक्ष्य कथं त्वमिहागत इत्यत आह-आर्त इति । आर्तः भवत्कर्तृकबिलप्रवेशात् दुःखितः अत एव तत्र तस्यां बिलद्वारि संवत्सरं स्थितः बिलात् समुत्थितं शोणितं रुधिरं द्वारि दृष्ट्वा शोकसंविग्नहृदयः निश्चितभ्रातृवियोगजनितशोकव्याप्तचित्तः अत एव भृशमत्यन्तं व्याकुलिते-

१ भ्रातुरिति गो. पाठः । २ संतुष्टेनेति गो. पाठः । ३ प्रियेति गो. पाठः । ४ नन्दनः इति गो. पाठः । ५ उद्यतमिति गो. पाठः । ६ चार्थोते गो. पाठः । ७ अहमिति गो. पाठः । ८ तथेति गो. पाठः ।

तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः। विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ ६ ॥
अभिषिक्तो न कामेन तन्मे क्षन्तुं त्वमर्हसि। त्वमेव राजा मानार्हः सदा चाहं यथा पुरा ॥ ७ ॥
राजभावे नियोगोऽयं मम त्वद्विरहात्कृतः। सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ ८ ॥
न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम्। मा च रोषं कृथाः सौम्य मम शत्रुनिषूदन ॥९॥
याचे त्वां शिरसा राजन्मया बद्धोऽयमञ्जलिः। बलादस्मिन्समागम्य मन्त्रिभिः पुरवासिभिः १०॥
राजभावे नियुक्तोऽहं शून्यदेशजिगीषया। स्निग्धमेवं ब्रुवाणं मां स विनिर्भर्त्स्य वानरः ॥११॥
धिक्त्वामिति च मामुक्त्वा बहु तत्तदुवाच ह। प्रकृतीश्च समानीय मन्त्रिणश्चैव संमतान् ॥ १२ ॥
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम्। विदितं वो मया रात्रौ मायावी स महासुरः ॥१३॥
मां समाह्वयत क्रुद्धो युद्धाकाङ्क्षी [6]तदा पुरा। तस्य तद्गर्जितं श्रुत्वा निःसृतोऽहं नृपालयात् १४॥

न्द्रियोऽहं शैलशृङ्गेण बिलद्वारमपिधाय असुरनिर्गमाभावाय आछाय तस्मात् देशात् अपाक्रम्य निर्गत्य किष्किन्धां पुनः प्राविशम्। सार्धश्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—आर्त इति। संवत्सरं बिलद्वारि स्थितः अहं च बिलद्वारि समुत्थितं शोणितं दृष्ट्वा आर्तश्चास्मि ॥ ४ ॥

गो० टी०—शोकेति। शोकसंविग्नहृदयः शोककम्पितहृदयः तद्बिलद्वारम्। तथा त्वया दृष्टप्रकारेण अपिधाय प्रच्छाद्य प्राविशम् ॥ ५ ॥

६ ] ति० टी०—विषादात्प्राविशमित्यन्वयः ॥ ६ ॥

रा० टी०—विषादादिति। विषादादिहागतमिति शेषः, मां दृष्ट्वा पौरैर्मन्त्रिभिश्चाहमभिषिक्तः कामेन स्वेच्छया नाभिषिक्तः तत् तस्मात् हेतोः मे अज्ञातापराधमिति शेषः, क्षन्तुमर्हसि यतो मानार्हः अस्माभिः पूजनीयः राजा त्वमेव अहं तु यथापुरा पूर्वसदृशस्त्वत्सेवक इत्यर्थः। सार्धश्लोक एकान्वयी ॥ ६ ॥ ७॥

गो० टी०—विषादादिति। इह विषादादागतं मां दृष्ट्वा विषादात् राज्यनाशविषादात् ॥ ६ ॥

७ ] ति० टी०—अभिषिक्तो बलान्न कामेन न मदीयराज्येच्छया तत्तस्मान्मे दैवागतापराधं क्षन्तुमर्हसि। यथा पुरा तव सेवकस्तथैव सदा इदानीमपीत्यर्थः ॥ ७ ॥

गो० टी०—त्वमेवेति अहं यथापुरं पूर्ववद्युवराजो भवामीत्यर्थः। राजभावनियोगः राजत्वेन राज्यशासनम् ॥७–९॥

८–१० ] ति० टी०—राजभावे राज्येऽयं मम नियोगो मन्त्रिभिस्त्वद्विरहात्कृतः। अमात्यपौरसहितं नगरं निहतकण्टकम् अराजत्वप्रयुक्तदोषरहितं कर्तुमिति शेषः। तच्चेदं त्वदीयराज्यं मयि न्यासभूतं स्थितम् अहं तव निर्यातयामि, मा रोषं कृथा इत्यन्वयः ॥ ८–१० ॥

रा० टी०—ननु सेवकत्वे कथं राज्ये स्थितिरित्यत आह—राजेति। राजभावे राजधर्मे अयं मम नियोगस्त्वद्विरहात् तवाभावात् हेतोः कृतः अमात्यैः संपादितः अत एव सामात्यपौरनगरम् अमात्यपौरनगरसहितं निहतकण्टकं राज्यं स्थितम् ८

रा० टी०—न्यासेति। तव न्यासभूतं स्वकीयत्वेन संस्थापितमिव इदं राज्यं निर्यातयामि तुभ्यं समर्पयामीत्यर्थः, अतः मम मयि रोषं मा कृथाः ॥ ९ ॥

रा० टी०—याचे इति। मन्त्रिभिः पुरवासिभिश्च समागम्य शून्यदेशजिगीषया राजरहितदेशकर्तृकोत्कर्षप्राप्तीच्छया शत्र्वाक्रमणनिवारणायेत्यर्थः, बलात् हठात् राजभावे अहं नियुक्तः अतः शिरसा प्रणतमूर्धा त्वां याचे प्रसादाय प्रार्थयामि अत एव अयमञ्जलिर्मया बद्धः। सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—बलादिति। शून्यदेशजिगीषया राजशून्यदेशवशीकरणेच्छया ॥ १० ॥

११ ] ति० टी०—शून्यदेशस्य राजहीनदेशस्य या परेषां जिगीषा तया तन्निवृत्तिहेतुना। 'मशकार्थो धूमः' इतिवदयं प्रयोगः ॥ ११ ॥

रा० टी०—स्निग्धमिति। स वानरः स्निग्धं स्नेहयुक्तमेवं वचो ब्रुवाणं मां विनिर्भर्त्स्य त्वां धिगिति च मामुक्त्वा बहु अत्यन्तं तत्तत् अवाच्यवचनजातमुवाच ॥ ११ ॥

गो० टी०—स्निग्धमिति। तत्तत्परुषभाषणम् अश्लीलतया विशिष्य नोक्तम् ॥ ११ ॥

१२ ] ति० टी०—तत्तदुवाच अवाच्यवचनजातमित्यर्थः। प्रकृतीः स्वीयप्रजाः ॥ १२ ॥

रा० टी०—प्रकृतीरिति। सुहृदां मध्ये प्रकृतीः प्रजाः संमतान् मन्त्रिणश्च समानीय परमगर्हितं निन्दितं वाक्यं मामाह ॥ १२ ॥

गो० टी०—प्रकृतीरिति। मामुद्दिश्य प्रकृत्यादीनाहेत्यर्थः ॥ १२–१९ ॥

१३–१४ ] ति० टी०—मां प्रति परमं गर्हितं वाक्यं सुहृदां मध्य आह, मम विगर्हणाहेतुं च सभासदोऽन्येत्याह—विदितं व इति। युष्माकं विदितं प्रत्यक्षसिद्धम् ॥१३॥१४॥

रा० टी०—तदाकारं बोधयितुं वाल्युक्तिमाह—विदितमि-

१ पुरमिति गो. पाठः। २ राजभीवनियोग इति गो. पाठः। ३ मयेति गो. पाठः। ४ मयि शत्रुनिबर्हणेति गो. पाठः। ५ क्रूर इति गो. रा. पाठः। ६ सुदुर्मतिरिति गो. पाठः। ७ वचनमिति गो. पाठः।

अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः । स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ॥ १५ ॥
प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां [1]समुपागतौ । [2]अभिद्रुतस्तु वेगेन [3]विवेश स महाबिलम् ॥ १६ ॥
तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् । अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥१७॥
अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् । बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥१८॥
स्थितोऽयमिति मत्वाहं प्रविष्टस्तु दुरासदम् । तं मे [4]मार्गयतस्तत्र गतः संवत्सरस्तदा ॥ १९ ॥
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः । निहतश्च मया [5]सद्यः स सर्वैः सह बन्धुभिः ॥ २० ॥
तस्यास्यात्तु प्रवृत्तेन रुधिरौघेण तद्बिलम् । पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २१ ॥
सूदयित्वा तु तं शत्रुं विक्रान्तं [6]तमहं सुखम् । निष्क्रामं [7]नेहं पश्यामि बिलस्य पिहितं मुखम् ॥२२॥
विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः । [8]यतः प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥२३॥
पादप्रहारैस्तु मया बहुभिः [9]परिपातितम् । ततोऽहं तेन निष्क्रम्य [10]पथा पुरमुपागतः ॥ २४ ॥

त्यादिभिः । आपुरा युद्धाकाङ्क्षातिपूरकेण मया युद्धाकाङ्क्षी महासुरो मायावी मां समाह्वयत तत् वो युष्माकं विदितम्॥१३॥

रा० टी०—तस्येति । तस्य मायाविनो भाषितं श्रुत्वा नृपालयात् स्वगृहात् अहं निःसृतः सुदारुणः वक्ष्यमाणदारुणकर्मविशिष्टः अयं भ्राता मामनुयातः ॥ १४ ॥

१५–१७ ] ति० टी०—सद्वितीयं भ्रात्रा ससहायम् ॥ १५–१७ ॥

रा० टी०—स इति । महाबलः स मायावी सद्वितीयं द्वितीयसहितं मां दृष्ट्वैव भयसंत्रस्तः सन् प्राद्रवत् पलायत समुपागतौ पलायनेऽपि समीपं प्राप्तौ आवां वीक्ष्य अभिद्रुतः अतिद्रुतं गतः सन् महाबिलं वेगेन विवेश । सार्धश्लोकः संमिलितान्वयी ॥ १५ ॥ १६ ॥

रा० टी०—तमिति । सुमहत् बिलं प्रविष्टं तं मायाविनं विदित्वा अयं भ्राता मया उक्तः ॥ १७ ॥

१८ ] ति० टी०—शक्तिरिच्छाशक्तिः । प्रतीक्ष प्रतीक्षस्व ॥ १८ ॥

रा० टी०—तदुक्तिप्रकारमाह—अहत्वेति । अहत्वा मायाविवधमकृत्वा इतः पुरीं गन्तुं मे शक्तिर्नास्ति अतः यावदेनं मायाविनं निहन्मि तावत् बिलद्वारि त्वं प्रतीक्ष प्रतीक्षस्व॥१८॥

१९ ] ति० टी०—स्थितोऽयं बिलद्वारीति शेषः ॥ १९ ॥

रा० टी०—स्थित इति । अयं स्थितः गुहाद्वारीति शेषः, इति मत्वा निश्चित्य दुरासदम् असुरातिरिक्तैः प्रवेष्टुमशक्यं विवरमहं प्रविष्टः । तं मायाविनं मार्गयतः अन्वेषयतो मे मम संवत्सरो गतो व्यतीतः ॥ १९ ॥

२० ] ति० टी०—अनिर्वेदात्संवत्सरान्वेषणेऽपि दर्शनाभावाद्भयावहः स तु कथंचिद्दृष्टो निहतश्च । समुच्चयालंकारः ॥ २० ॥

रा० टी०—स इति । अनिर्वेदात् संवत्सरमन्वेषणादनिवृत्तेर्हेतोः बन्धुभिः सह भयावहो मायावी मया दृष्टो निहतश्च २०

गो० टी०—स त्विति अनिर्वेदात् अक्लेशात् ॥ २० ॥

२१ ] ति० टी०—भुवस्तलेऽधस्तले पाताले स्तनतः शब्दं कुर्वतस्तस्यास्यात्प्रवृत्तेन रुधिरौघेण पूर्णं तद्बिलं दुराक्रममासीत् ॥ २१ ॥

रा० टी०—तस्येति । तस्य घोरप्रायस्य भूतले भुवोऽधोभागे स्तनतः स्वनं कुर्वतस्तस्य निहतमायाविनः आस्यात् मुखात् प्रवृत्तेन रुधिरौघेण दुराक्रामं तद्बिलं पूर्णमासीत् ॥ २१ ॥

गो० टी०—तस्येति । भूतले भूविवरे स्तनतः गर्जतः तत्पूर्वोक्तं तस्य बिलं स्तनतः तस्य आस्यात् प्रवृत्तेन रुधिरौघेण पूर्णं सत् दुराक्रममासीदिति योजना ॥ २१ ॥

२२–२३ ] ति० टी०—विक्रान्तं शूरं तं प्रसिद्धं मायाविनं सुखं सूदयित्वा त्विहागन्तुं निष्क्रामं निर्गममार्गं न पश्यामि । यतो बिलस्य मुखं पिहितम् ॥ २२ ॥ २३ ॥

रा० टी०—सूदयित्वेति । विक्रान्तम् अतिविक्रमवन्तं शत्रुं तं मायाविनमहं सुखं सूदयित्वा इह वर्णितबिले निष्क्रामं निर्गममार्गं न पश्यामि नापश्यम् । तत्र हेतुः—बिलस्य मुखं पिहितम् ॥ २२ ॥

गो० टी०—सूदयित्वेति । दुन्दुभेः सुतं भ्रातरमित्यर्थः, यद्वा नायं मायावी मयपुत्रः किं तु दुन्दुभिपुत्रोऽन्य इति बोध्यम् । पूर्वजो दुन्दुभेः सुत इति हि पूर्वमप्युक्तम् पिहितमिति हेतुगर्भं पिहितत्वान्मुखं न पश्यामि ॥ २२ ॥

रा० टी०—विक्रोशमानस्येति । सुग्रीवेति पुनः पुनः विक्रोशमानस्य मे यतः प्रतिवचः प्रत्युत्तरं नास्ति ततः तस्मात् हेतोः अहं भृशं दुःखितः ॥ २३ ॥

गो०टी०—विक्रोशमानस्येति । विक्रोशमानस्य आह्वयत । "कुश, आह्वाने रोदने च" इति धातुः ॥ २३ ॥

२४ ] ति० टी०—तेन पथा बिलद्वारमार्गेण ॥ २४ ॥

रा० टी०—पादप्रहारैरिति । बहुभिः पादप्रहारैः परिपातितं विदारितं निर्गमाय मार्गः कृत इत्यर्थः, ततोऽनन्तरं

१ तमनुद्रुताविति गो. पाठः । २ अनुद्रुतश्चेति गो. पाठः । ३ प्रविवेशेति गो.पाठः । ४ च मे मार्गमाणस्येति गो. पाठः । ५ तत्र सोऽसुरो बन्धुभिः सहेति गो. पाठः । ६ दुन्दुभेः सुतमिति गो.पाठः । ७ एवेति गो. पाठः । ८ यदेति गो.पाठः । ९ तद्विदारितमिति गो. पाठः । १० यथेति गो. रा.पाठः।

[1]तत्रानेनास्मि संरुद्धो राज्यं मृगयतात्मनः । सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥२५॥
एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः । तदा निर्वासयामास वाली विगतसाध्वसः ॥२६॥
तेनाहमपविद्धश्च हृतदारश्च राघव । तद्भयाच्च [2]महीं सर्वां क्रान्तवान्सवनार्णवाम् ॥२७॥
ऋष्यमूकं गिरिवरं भार्याहरणदुःखितः । प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ॥२८॥
एतत्ते सर्वमाख्यातं वैरानुकथनं महत् । अनागसा मया प्राप्तं व्यसनं पश्य राघव ॥ २९ ॥
वालिनश्च [3]भयात्तस्य सर्वलोकभ[4]योपह । कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥ ३० ॥
एवमुक्तः स तेजस्वी धर्मज्ञो धर्मसंहितम् । वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१ ॥
अमोघाः सूर्यसंकाशा [5]निशिता मे शरा इमे । तस्मिन्वालिनि दुर्वृत्ते [6]पतिष्यन्ति रुषान्विताः॥३२॥
यावत्तं [7]नहि पश्येयं तव भार्यापहारिणम् । तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः ॥३३॥
आत्मानुमानात्पश्यामि [8]मग्नस्त्वं शोकसागरे । त्वामहं तारयिष्यामि [9]बाढं प्राप्स्यसि पुष्कलम् ॥३४॥
तस्य तद्वचनं श्रुत्वा [10]हर्षपौरुषवर्धनम् । सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे दशमः सर्गः ॥ १० ॥

तेन स्वपादप्रहारकृतमार्गेण निष्क्रम्य पुरं यथा यथावत् उपागतः, किंच यथापुरं पूर्ववदेवेत्यर्थः॥ २४ ॥

गो० टी०—पादेति । तद्बिलं विदारितं क्वचित्सरन्ध्रीकृतम् तेन पथा रन्ध्रमार्गेण ॥ २४ ॥

२५ ] ति० टी०—आत्मनो राज्यं मृगयता मार्गयतानेन तत्र बिलद्वारे संरुद्धो निरुद्धगतिकः कृतः ॥ २५ ॥

रा० टी०—शिलापिधाने स्वकल्पितहेतुमाह—तत्रेति । आत्मनो राज्यं मृगयता कथं प्राप्नुयामिति विचारयता सुग्रीवेण भ्रातृसौहृदं विस्मृत्य तत्र तस्मिन् बिलेऽहं संरुद्धोऽस्मि ॥ २५॥

गो० टी०—अत्रेति । अत्र बिले ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—एकेन वस्त्रेणेति । अन्यत्सर्वं मम हृत्वेत्यर्थः ॥ २६ ॥

रा० टी०—एवमिति । तत्र तस्मिन्समये मामेवमुक्त्वा विगतसाध्वसस्त्यक्तभयः वाली निर्वासयामास निःसारयामास२६

२७ ] ति० टी०—अपविद्धो निरस्तः ॥ २७ ॥

रा० टी०—तेनेति । तेन वालिना अपविद्धस्ताडितः हृतदारश्चाहं तद्भयात् सवनार्णवां वनार्णवसहितां सर्वां महीं क्रान्तवानस्मीति शेषः। एतेन निर्वासितेऽपि सुग्रीवेऽनेकविधविघातयत्नं कृतवानिति व्यक्तं, तेन तस्य महानपराधो व्यञ्जितः ॥२७॥

गो० टी०—तेनेति । अपविद्धः ताडितः ॥ २७ ॥

२८ ] ति० टी०—ऋष्यमूकं प्रविष्टोऽस्म्यन्यत्र निर्भयस्थितिमलभमानः । अत्र निर्भयस्थितिः कथं तत्राह—दुराधर्षमिति । मतङ्गशापलक्षणे कारणविशेषे सति वालिना दुराधर्षं दुष्प्रवेशम् ॥ २८ ॥

रा० टी०—ऋष्यमूके निरन्तरं स्थितौ हेतुमाह—ऋष्यमूकमिति । भार्याहरणदुःखितोऽहं कारणान्तरे मतङ्गशापकारणविशेषे सति वालिनो दुराधर्षं प्रवेष्टुमशक्यम् ऋष्यमूकं प्रविष्टोऽस्मि ॥ २८ ॥

गो० टी०—ऋष्यमूकमिति । कारणान्तरे मतङ्गशापनिमित्ते सति वालिनो दुराधर्षं दुराक्रमम् ॥ २८ ॥

२९ ] ति० टी०—वैरानुकथनं वैरकारणम् ॥ २९ ॥

रा० टी०—एतदिति । हे राघव ! अनागसा अपराधरहितेन मया व्यसनं दुःखं प्राप्तम् इति पश्य जानीहि एतत् महत् वैरानुकथनं वैरकथा ते तुभ्यमाख्यातं कथितम् ॥२९॥

गो०टी०—एतदिति । वैरानुकथनं वैरकारणाख्यानम्२९

३०-३१ ] ति० टी०—वालिन इति पञ्चमी ॥३०॥३१॥

रा० टी०—वालिन इति । हे सर्वलोकभयापह ! वालिनः सकाशात् भयार्तस्य मे प्रसादं तस्य वालिनः निग्रहात् वधात् कर्तुमर्हसि ॥ ३० ॥

रा० टी०—एवमिति । एवमुक्तः सुग्रीवेण प्रार्थितः स तेजस्वी रामः प्रहसन्नेव सुग्रीवं वक्तुमारेभे । इव एवार्थे ॥३१॥

गो० टी०—वालिन इति । वालिन इति पञ्चमी॥३०-३१

३२ ] ति० टी०—रुषान्विता रुष्टेन मया पातिताः ॥३२॥

रा० टी०—तद्वचनाकारमाह—अमोघा इति । अमोघा- नैष्फल्यरहिताः रुषा तवापराधजनितदुरितनिवृत्तिहेतुककोपेन प्रयुक्ताः इमे मे शराः दुर्वृत्ते वालिनि पतिष्यन्ति ॥ ३२ ॥

३३ ] ति० टी०—चारित्रदूषकः निषिद्धानिषिद्धज्ञानवत्त्वे सति जीवतो भ्रातुर्भार्यापहारात् ॥ ३३ ॥

रा० टी०—वधे विलम्बो नास्तीति बोधयन्नाह—यावदिति। तव भार्यापहारिणं तं वालिनं यावन्न पश्येयं स्वात्मानं न दर्शयामि तावत् चारित्रदूषकः मर्यादाविघातको वाली जीवेत् ॥ ३३ ॥

३४-३५ ] ति० टी०—आत्मानुमानात्। अयं शोकाब्धि-

१ अत्रेति गो.पाठः। २ मही कृत्स्ना क्रान्तयन्निति गो.पाठः। ३ भयार्तस्येति गो.पाठः। ४ भयंकरेति गो.पाठः। ५ममैते निशिताः शरा इति गो.पाठः। ६निपतिष्यन्ति वेगिता इति गो.पाठः। ७नाभिपश्यामिनि गो.पाठः। ८मग्नं त्वामिति गो.पाठः। ९काममिति गो.पाठः। १०राघवस्यात्मनो हितमिति गो.पा.।

## एकादशः सर्गः ।

रामबलं परिज्ञापयितु वालिबलकथने प्रवृत्तः सुग्रीवः । वीर्योत्सिक्तदुन्दुभिनाम्नाऽसुरेण युद्धार्थं वालिनः समाह्वानं कृतम्, वालिना तं निहत्य मतङ्गर्षेराश्रमपरिसर उत्क्षेपणं च कृतम्, तन्मुखोच्छलद्रुधिरबिन्दुभिराश्रमदुष्टेः कुपितर्षे· ' यद्येतत्कैतद्वन प्रविशेत्स न जीवेत् ' इति शापविसृष्टेरहमत्र निर्भयो वसामीत्युपक्रम्यैव बलिष्ठस्यापि वालिनो नाशक ते वीर्यं कथमवधारयामीतिसदिहान सुग्रीवं वद यत्करणेन ते सदेहो नश्येदिति लक्ष्मणेनोक्ते वालिनिर्दिष्टदुन्दुभ्यस्थिकङ्कालं रामः पादाङ्गुष्ठेन चिक्षेप शुष्कोऽय पञ्जरस्तदानींतनाल्पीयस्त्वान्नानेन बलमवधारयितु शक्य किंतु यद्येतेषामेकं सालं भिन्द्यारवश्यं ते बलं वालिविनाशक मन्य इति सुग्रीवः आक्षिपते ।

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् । सुग्रीवः पूजयाञ्चक्रे राघवं प्रशशंस च ॥ १ ॥
असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः । त्वं दहेः कुपितो लोकान्युगान्त इव भास्करः॥ २ ॥
वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या । तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३ ॥
समुद्रात्पश्चिमात्पूर्वं दक्षिणादपि चोत्तरम् । क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४ ॥

---

मग्नो रिपुहतदारत्वान्मग्नदित्यवमानम् । बाढं प्राप्स्यसि भार्यां पुष्कलं राज्यं च ॥ ३४ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे दशमः सर्गः ॥१०॥

रा० टी०–आत्मेति । आत्मानुमानात् स्ववृत्तान्तकानुमानरूपप्रमाणतः त्वं शोकसागरे मग्न इत्यहं पश्यामि जानामि अतः त्वामहं तारयिष्यामि शोकसागरात्पारं प्रापयिष्यामि अतः पुष्कलं संपूर्णं भार्यां राज्यं चेत्यर्थः, बाढं यथा भवति तथा प्राप्स्यसि ॥ ३५ ॥

रा० टी०–तस्येति । हर्षपौरुषवर्धनं तस्य रामस्य तद्वचनं श्रुत्वा परमप्रीतः सुग्रीवः समहद्वाक्यमब्रवीत् ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०–आत्मानुमानादिति । आत्मानुमानात् आत्मवत्सर्वभूतानीति न्यायादित्यर्थः । तारयिष्यामि शोकसागरादिति शेषः ॥ ३४–३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

---

१ ] ति० टी०–इदानीं वालिनो बलमाह–रामस्येति । वचनं वालिवधविषयम् ॥ १ ॥

रा० टी०–रामं प्रति सुग्रीवोक्तिं वर्णयन्नाह–रामस्येत्यादिभिः । सुग्रीवः रामस्य वचनं श्रुत्वा राघवं रामं पूजयाञ्चक्रे बद्धाञ्जल्यादिना तोषयाञ्चक्रे प्रशशंस च ॥ १ ॥

गो० टी०–अथ सुग्रीवो वालिवधक्षमं रामबलं परीक्षितुकामस्तद्बलं दर्शयत्येकादशे–रामस्येत्यादि । पूजयाञ्चक्रे अञ्जलिबन्धादिना । प्रशशंस तुष्टाव ॥ १–२ ॥

२] ति० टी०–राघवं प्रशशंसेत्युक्तं तां प्रशंसामाह–असंशयमिति॥ २ ॥

रा० टी०–प्रशंसाप्रकारं बोधयन्नाह–असंशयमिति । यद्यपि कुपितस्त्वं युगान्ते भास्कर इव मर्मातिगैः मर्मप्रवेशिभिः शरैः लोकान् असंशयं यथा भवति तथा प्रदहेः तथापि वालिनः पौरुषादि त्वमेकमनाः सन् श्रुत्वा तदनन्तरं विधत्स्व तद्वधप्रयत्नं कुरु । एतेन वालिनः पौरुषादेर्लोकोत्तरत्वं व्यञ्जितं यद्यपीत्यध्याहृतम् । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

३ ] ति० टी०–पौरुषं बलवैभवम् । वीर्यं परसंहारशक्तिः। धृती रणे धैर्यम् ॥ ३ ॥

गो० टी०–वालिन इति । पौरुषं बलम् अनन्तरं यत्कर्तव्यं तद्विधत्स्व ॥ ३ ॥

४ ] ति० टी०–अनुदिते सूर्ये क्रामति । ब्राह्मे मुहूर्ते उत्थायेति शेषः ॥ ४ ॥

रा० टी०–तत्पौरुषादिमेवाह–समुद्रादित्यादिभिः । व्यपगतक्लमो वाली ब्राह्मे मुहूर्ते उत्थायेति शेषः, सूर्ये अनुदिते उदयमप्राप्नुवति सति पश्चिमात् समुद्रात् पूर्वं समुद्रं क्रामति गच्छति ततो दक्षिणं प्राप्येति शेषः दक्षिणात्समुद्रात् उत्तरमपि क्रामति ॥ ४ ॥

गो० टी०–समुद्रादिति । ब्राह्मं मुहूर्तं उत्थाय इति ब्राह्ममुहूर्तस्य संध्याकर्मकालत्वेन तस्मिन्नुत्थाय अनुदिते सूर्ये संध्याकर्मकरणार्थं पश्चिमात्समुद्रात्पूर्वसमुद्रं दक्षिणात्समुद्रादुत्तरं समुद्रं च व्यपगतक्लमः सन् क्रामति । इदं व्यक्तमुत्तरकाण्डे । तारः–चतुर्भ्योऽपि समुद्रेभ्यः संध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम्' इति ॥ ननु कथं चतुर्ष्वप्येकसंध्याकरणम् । उच्यते, एकस्मिन् तटाके पार्श्वभेद इव स्नानाचमनार्घ्यप्रदानजपानां कर्तुं शक्यत्वात् अनुदिते सूर्ये इत्युत्तरावधिरभिहितः । पूर्वावधिस्तु–ब्राह्मे मुहूर्ते उत्थायेत्यनुष्ठानाङ्गत्वेन विहितः कालः । चतुःसमुद्रपरिक्रमस्यानुष्ठानार्थत्वम् 'चतुर्भ्योऽपि समुद्रेभ्यः संध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥' इत्युत्तरश्रीरामायणोक्ततारवचनादवगम्यते ॥ ४ ॥

अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि । ऊर्ध्व[1]मुत्पात्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥
बहवः सारवन्तश्च वनेषु विविधा द्रुमाः । वालिना तरसा भग्ना बलं प्रथयतात्मनः ॥ ६ ॥
महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः । बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७ ॥
स[4] वीर्योत्सेक[2]दुष्टात्मा वरदा[3]नेन मोहितः । जगाम स[4] महाकायः समुद्रं सरितां पतिम् ॥ ८ ॥
ऊर्मिमन्तमतिक्रम्य सागरं रत्नसंचयम् । मम[5] युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९ ॥
ततः समुद्रो धर्मात्मा समुत्थाय महाबलः । अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १० ॥
समर्थो नास्मि ते दातुं युद्धं युद्धविशारद । श्रूयतां त्व[6]भिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११ ॥
शैलराजो महारण्ये तपस्विशरणं परम् । शंकरश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२ ॥
म[7]हाप्रस्रवणोपेतो बहुकन्दर[8]निर्झरः । स समर्थस्तव प्रीतिमतुलां कर्तुमर्हति ॥ १३ ॥
तं भीत[9]मिति विज्ञाय समुद्रमसुरोत्तमः । हिमवद्वनमा[10]गम्य शरश्चापादिव च्युतः ॥ १४ ॥
ततस्तस्य गिरेः श्वेता गजेन्द्रप्रतिमा[11]ः शिलाः । चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ १५ ॥
ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः । हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६ ॥
क्लेष्टुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सल । रणकर्मस्वकुशलस्तपस्विश[12]रणो ह्यहम् ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः । उवाच दुन्दुभिर्वाक्यं क्रोधात्संरक्तलोचनः ॥ १८ ॥

५-६ ] ति० टी०—ऊर्ध्वमुत्पात्य कन्दुकवदिति भावः ॥ ५ ॥ ६ ॥

रा० टी०—अग्राणीति । वीर्यवान् वाली ऊर्ध्वमुत्पत्य शैलानां महान्त्यपि अग्राणि मुख्यानि शिखराणि आरुह्य प्रतिगृह्णाति ॥ ५ ॥

गो० टी०—अग्राणीति । कंदुकानिवेति भावः ॥ ५ ॥

रा० टी०—बहव इति । आत्मनो बलं प्रथयता वालिना सारवन्तः स्थिरांशविशिष्टा बहवो द्रुमा भग्नाः ॥ ६ ॥

गो० टी०—बहव इति । मक्षिकोत्सारणरीत्येति भावः । सारवन्तः स्थिरांशवन्तः 'सारो बले स्थिरांशेच' इत्यमरः ॥ ६ ॥

७-८ ] ति० टी०—महिषस्तद्रूपधरः ॥ ७ ॥ ८ ॥

रा० टी०—पराक्रमान्तरमाह—माहिष इत्यादिभिः । महिषो महिषाकृतिः कैलासशिखरप्रभः दुन्दुभिर्नाम नागसहस्रस्य सहस्रसंख्याकगजस्य बलं धारयामास ॥ ७ ॥

गो० टी०—महिषो दुन्दुभिर्नामेति । कैलासशिखरप्रभः तदाकार इत्यर्थः ॥ ७ ॥

रा० टी०—स इति । वीर्योत्सेकेन पराक्रमगर्वेण दुष्टः आत्मा मनो यस्य सः वरदानेन मोहितः स दुन्दुभिः सरितां पतिं समुद्रं जगाम ॥ ८ ॥

गो० टी०—वीर्येति । वीर्योत्सेकेन वीर्यगर्वेण दुष्टात्मा दुर्बुद्धिः अतिक्रम्य जगाम । पूर्वकालो न विवक्षितः आक्रामन् जगामेत्यर्थः ॥ ८–९ ॥

९-१४ ] ति टी०—ऊर्मिमन्तमूर्मिमत्त्वाद्याकारवन्तं समुद्रमतिक्रम्याविगणय्य तं तदधिष्ठातृदेवतामुवाच ॥ ९–१४ ॥

रा० टी०—उर्मिमन्तमिति । रत्नसंचयं बहुरत्नविशिष्टं सागरमतिक्रम्य उल्लङ्घ्य मम युद्धं प्रयच्छेति तं महार्णवमुवाच ॥ ९ ॥

रा० टी०—तत इति । ततः दुन्दुभिवचनश्रवणानन्तरं धर्मात्मा समुद्रः कालचोदितमसुरं दुन्दुभिमब्रवीत् ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—समर्थ इति । हे युद्धविशारद ! अहं ते युद्धं दातुं न समर्थः अतः यस्ते युद्धं प्रदास्यति तमभिधास्यामि त्वया श्रूयताम् ॥ ११ ॥

गो०टी०—तत इति । समुत्थाय पुरुषवेषेणोत्थाय ॥ १० ॥ ११

रा० टी०—शैलराज इति । तपस्विशरणं तपस्विनां रक्षकः शङ्करश्वशुरः हिमवानिति नाम्ना विश्रुतः प्रख्यातो यः शैलराजः सः तवातुलां प्रीतिं युद्धमित्यर्थः, कर्तुमर्हति ॥ १२ ॥ १३ ॥

रा० टी०—तमिति । इति एवमुक्तोऽसुरोत्तमो दुन्दुभिस्तं समुद्रं भीतं विज्ञाय चापात् च्युतः शर इव हिमवद्वनम् आगच्छत् ॥ १४ ॥

गो० टी०—शैलराज इति । परं तपस्विशरणं तपस्विनां परमावासस्थानम् नित्यनपुंसकम् । प्रस्रवणं निर्झरः । निर्दराः विदीर्णपाषाणरन्ध्राणि ॥ १२–१४ ॥

१५-१८ ] ति०टी०—गजेन्द्र ऐरावतः ॥ १५–१८ ॥

रा० टी०—तत इति । ततः हिमवद्वनागमनानन्तरं गजेन्द्रप्रतिमाः ऐरावतसदृशाः तस्य गिरेः बहुधा अनेकप्रकाराः श्वेताः शिलाः दुन्दुभिः चिक्षेप विननाद च ॥ १५ ॥

रा० टी०—तत इति । श्वेताम्बुदाकारः प्रीतिकरा प्रीतेरुत्पादिका आकृतिर्यस्य अत एव सौम्यः स्व एव शिखरे स्थितः हिमवान्वाक्यमब्रवीत् ॥ १६ ॥

१ उत्क्षिप्य गो. उत्पत्य रा. पाठः । २ वीर्योत्सेकेन गो. पाठः । ३ दानाच्च गो. पाठः । ४ सु गो. रा.पाठः । ५ मह्यं गो.पाठः । ६ चाभि गो. पाठः । ७ गुहेति गो. पाठः । ८ निर्दरः गो. पा. । ९ भीतः गो. पाठः । १० आगच्छत् गो. रा. पाठः । ११ विपुला गो. पाठः । १२ शरणं गो.पा. ।

यदि युद्धेऽसमर्थस्त्वं मद्भयाद्वा निरुद्यमः । तमाचक्ष्व प्रदद्यान्मे यो हि युद्धं युयुत्सतः ॥१९॥
हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः । अनुक्तपूर्वं धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ २० ॥
वाली नाम महाप्राज्ञ शक्रपुत्रः प्रतापवान् । अध्यास्ते वानरः श्रीमान्किष्किन्धामतुलप्रभाम् २१॥
स समर्थो महाप्राज्ञस्तव युद्धविशारदः । द्वन्द्वयुद्धं स दातुं ते नमुचेरिव वासवः ॥ २२ ॥
तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि । स हि दुर्मर्षणो नित्यं शूरः समरकर्मणि ॥ २३ ॥
श्रुत्वा हिमवतो वाक्यं कोपाविष्टः स दुन्दुभिः । जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा॥२४॥
धारयन्माहिषं वेषं तीक्ष्णशृङ्गो भयावहः । प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २५ ॥
ततस्तु द्वारमागम्य किष्किन्धाया महाबलः । ननर्द कम्पयन्भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २६ ॥
समीपजान्द्रुमान्भञ्जन्वसुधां दारयन्खुरैः । विषाणेनोल्लिखन्दर्पात्तद्द्वारं द्विरदो यथा ॥ २७ ॥
अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः । निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥२८॥
मितं व्यक्ताक्षरपदं तमुवाच स दुन्दुभिम् । हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९ ॥

रा० टी०—तद्वचनाकारमाह—क्लेष्टुमिति । हे दुन्दुभे ! यतः रणकर्मसु अहमकुशलः अत एव तपस्विशरणस्तपस्विन एव शरणानि रक्षका यस्य सोऽहमस्मि अतः मां क्लेष्टुं क्लेशं दातुं त्वं नार्हसि ॥ १७ ॥

रा० टी०—तस्येति । गिरिराजस्य तस्य हिमवतः तत् युद्धानर्हत्वप्रतिपादकं वचनं श्रुत्वा क्रोधात्स्वाभाविककोपात् संरक्ते लोचने यस्य स दुन्दुभिरुवाच ॥ १८ ॥

१९ ] ति० टी०—युद्धे असमर्थ इतिच्छेदः ॥ १९ ॥

रा० टी०—तद्वचनाकारमाह—यदीति । यदि युद्धे त्वमसमर्थः मद्भयाद्वा निरुद्यमः युद्धोद्योगरहितस्त्वमसीति शेषः, तदा युयुत्सतो मे यो युद्धं दद्यात् तमाचक्ष्व बोधय ॥ १९ ॥

गो० टी०—यदीति । त्वं युद्धासमर्थो यदि यदि वा समर्थोऽपि मद्भयान्निरुद्यमः उभयथापि न त्वां योत्स्यामीत्यर्थः । युयुत्सतः योद्धुमिच्छतः ॥ १९ ॥

२०–२१ ] ति० टी०—अनुक्तपूर्वमितः पूर्वं नोक्तो युद्धदातास्य तमसुरम् ॥ २० ॥ २१ ॥

रा० टी०—हिमवानिति । अनुक्तपूर्वं न उक्तः केनचिद्बोधितः पूर्वः युद्धेन प्रीतिप्रापको यस्मै तमसुरेश्वरं वाक्यविशारदः हिमवान् वाक्यमब्रवीत् ॥ २० ॥

रा० टी०—तद्वचनाकारमाह—वालीति । प्रतापवान् अतिप्रतापविशिष्टः वालीनाम शक्रपुत्रः वानरः अतुलप्रभां किष्किन्धामध्यास्ते ॥ २१ ॥

गो० टी०—हिमवानिति । अनुक्तपूर्वम् इतः पूर्वं केनाप्यनुक्तं वाक्यम् अत एव क्रोधात् ॥ २० ॥ २१ ॥

२२–२८ ] ति० टी०—एकः सशब्दः प्रसिद्धपराक्रमार्थकः ॥ २२–२८ ॥

रा० टी०—स इति । महाप्राज्ञस्तव युद्धविशारदः प्रवृद्धयुद्धे निपुणः स वाली स वासव इन्द्रः नमुचेरिव ते द्वन्द्वयुद्धं दातुं समर्थोऽस्तीति शेषः ॥ २२ ॥

गो० टी०—स इति । दातुं समर्थ इत्यन्वयः ॥२२॥२५॥

रा० टी०—तमिति । यदीह युद्धमिच्छसि तदा तं शीघ्रमभिगच्छ हि यतः स वाली दुर्मर्षणः उत्कटवचनश्रवणासहः समरकर्मणि नित्यं शूरः ॥ २३ ॥

रा० टी०—श्रुत्वेति । हिमवतो वाक्यं श्रुत्वा कोपाविष्टः वालिबलवत्ताश्रवणजनितकोपविशिष्टः तीक्ष्णशृङ्गः प्रावृषि तोयपूर्णः महामेघ इव स दुन्दुभिः वालिनः पुरीं किष्किन्धां जगाम । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

रा० टी०—तत इति । महाबलः दुन्दुभिः किष्किन्धायाः द्वारमागत्य भूमिं कम्पयन् समीपजान्द्रुमान् भञ्जन् खुरैः वसुधां दारयन् विषाणेन शृङ्गेण द्विरदो गज इव तद्द्वारमुल्लिखन् सन् दुन्दुभिर्यथा दुन्दुभिरिव ननर्द । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—तत इति । तद्द्वारं किष्किन्धाद्वारम् । विषाणेन उल्लिखन् उद्भिन्दन् ॥ २६ ॥ २७ ॥

रा० टी०—अन्तरिति । अन्तःपुरगतः अन्तःपुरे स्थितः शब्दं श्रुत्वा अमर्षणः असहनो वाली ताराभिश्चन्द्रमा इव स्त्रीभिः सह निष्पपात दुन्दुभिसमीपं प्राप्नोत् ॥ २८ ॥

गो० टी०—अन्तःपुरगत इति । सह स्त्रीभिरिति मदातिरेकादिति भावः ॥ २८ ॥

२९ ] ति० टी०—हरीणामीश्वरः अहमस्मीति शेषः॥२९॥

रा० टी०—मितेति । मितानि प्रमितानि व्यक्तानि स्फुटानि अक्षरपदानि यस्मिन् तद्वाक्यं हरीणां वानराणां सर्वेषां वनचारिणां च ईश्वरो वाली तं दुन्दुभिमुवाच ॥ २९ ॥

---

१ ऽथेति गो. पाठः । २ प्राज्ञः इति रा. पाठः । ३ तुल्यपराक्रम इति गो पाठः । ४ मह्यदातुमिति गो.पाठः । ५ दुर्धर्षण इति गो.पाठः । ६ क्रोधेति गो. पाठः । ७ रूपमिति गो. पाठ । ८ तदिति गो. पाठः । ९ आगम्येति रा. पाठः । १० स्थानिति गो. पाठः । ११ अथेति गो. पाठः ।

किमर्थं नगरद्वारमिदं रुद्धा [1]विनर्दसे । दुन्दुभे विदितो मेऽसि रक्ष प्राणान्महाबल ॥ ३० ॥
तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः । उवाच दुन्दुभिर्वाक्यं क्रोधात्संरक्तलोचनः ॥ ३१ ॥
न त्वं स्त्रीसंनिधौ वीर वचनं वक्तुमर्हसि । मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२ ॥
अथवा धारयिष्यामि क्रोधमद्य निशामिमाम् । गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ३३ ॥
दीयतां संप्रदानं च परिष्वज्य च वानरान् । सर्वशाखामृगेन्द्रस्त्वं संसाधय सुहृज्जनम् ॥ ३४ ॥
सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे । क्रीडस्व च समं स्त्रीभिरहं ते दर्पशासनः ॥ ३५ ॥
यो हि मत्तं प्रमत्तं वा भग्नं वा रहितं कृशम् । हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६ ॥
स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरेश्वरम् । विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ३७ ॥

---

गो० टी०—मितमिति । व्यक्तान्यक्षराणि येषु तानि व्यक्ताक्षराणि पदानि यस्मिन् कर्मणि तद्व्यक्ताक्षरपदमिति क्रियाविशेषणम् वनचारिणां भल्लूकादीनाम् ॥ २९-३१ ॥

३०-३२ ] ति० टी०—नगरद्वारम् । मामकमिति शेषः मे विदितोऽसि मया ज्ञातबलोऽसि, अतः प्राणान्रक्ष॥३०-३२॥

रा० टी०—तद्वचनाकारमाह—किमर्थमिति । हे दुन्दुभे यतस्त्वं मे विदितः ज्ञातोऽसि अतः नगरद्वारं रुद्धा किमर्थं विनर्दसे विनर्दनं न कुर्वित्यर्थः, एतेन विनर्दने त्वां हनिष्यामीति सूचितम् अतः हे महाबल ! प्राणान् रक्ष विदितोऽसीत्यनेन तत्पराक्रमस्याल्पत्वं ध्वनितम् ॥ ३० ॥

रा० टी०—तस्येति । वानरेन्द्रस्य वालिनस्तद्वचनं श्रुत्वा क्रोधात्संरक्तलोचनो दुन्दुभिर्वाक्यमुवाच ॥ ३१ ॥

रा० टी०—तद्वचनाकारमाह—नेति । स्त्रीसंनिधौ वीरवचनं स्ववीरत्वबोधकं वाक्यं वक्तुं त्वं नार्हसि एतेन स्त्रीवञ्चनार्थमेव एवं वचनं त्वयोक्तमिति सूचितम् अद्य मम मह्यं युद्धं त्वं प्रयच्छ ततः युद्धदानात् ते बलं ज्ञास्यामि वीरेति संबोधनं वा ॥ ३२ ॥

गो० टी०—न त्वमिति । स्त्रीसंनिधौ वचनं स्त्रीजनश्लाघकम् वचनमित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—स्त्रीसमूहगतो युद्धाय नाह्वातव्य इति स्मृत्वा पक्षान्तरमाह—अथवेति । स्वैरं कामभोगेषूदयस्तावत्पर्यन्तं कालो मत्प्रोक्तोऽवधिर्गृह्यताम् उदयपर्यन्तं त्वां प्रतीक्ष इत्यर्थः ॥ ३३ ॥

रा० टी०—अथवेति । अथवा स्त्रीसंयोगस्य दुष्परिहरत्वे इमां निशां क्रोधं त्वदुक्तवाक्यजनितकोपं धारयिष्यामि अन्तर्नियच्छामि अतः कामभोगेषु उदयः आसक्तिः स्वैरं गृह्यतां एतेन निशावसाने कामासक्तिं संत्यज्य मया युद्धस्वेति सूचितम् ॥ ३३ ॥

गो० टी०—अथ वेति । उदयः सूर्योदयः । गृह्यताम् अवधित्वेन गृह्यताम् ॥ ३३ ॥

३४ ] ति० टी०—वानरान्परिष्वज्य तेभ्यः संप्रदानं प्रीतिदानं दीयताम् । संसाधयामन्त्रयस्व । पाठान्तरेऽप्युक्तार्थ एव ॥ ३४ ॥

३५ ] ति० टी०—सुदृष्टां पुनर्दर्शनासंभवात् आत्मसमं पुत्रादिकं राज्यरक्षायै राजानं कुरुष्व क्रीडस्व आ उदयम् ॥ ३५ ॥

रा० टी०—भावियुद्धजनितस्वप्राणघातं संस्मृत्य अन्तकालकृत्यं निशायामेव क्रियताम् इति बोधयन्नाह—दीयतामिति । यतोऽहं ते गर्वनाशनः अतः वानरान्परिष्वज्य अन्तकालोचितालिङ्गनं कृत्वा संप्रदानं प्रीत्यादेयं वस्तु दीयतां त्वयेति शेषः, अत एव सर्वशाखामृगेन्द्रस्त्वं सुहृज्जनं संभावय प्रीतिदाने संतोषयेत्यर्थः । किष्किन्धां सुदृष्टां कुरु पुनरागमनाशानिवृत्त्या अत्यन्तमवलोकयेत्यर्थः । आत्मसमं पालकत्वेन स्वसदृशं पुरे किष्किन्धायां कुरुष्व राज्यासने कंचन संस्थापयेत्यर्थः । स्त्रीभिः सह क्रीडस्व च इमां निशामिति शेषः । श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०—दीयतामिति । संप्रदानं देयद्रव्यम्, वानरान् बन्धून् परिष्वज्य तेभ्यः संप्रदानं दीयतां चरमकालदानं दीयतामित्यर्थः । संसादय कंचिदपि कालं संगच्छस्व आत्मसमं राजानमित्यर्थः क्रीडस्व क्रीड अद्येति शेषः दर्पनाशनः पश्चादिति शेषः ॥ ३४ ॥ ३५ ॥

३६-३७ ] ति० टी०—मत्तं पानादिना । प्रमत्तमनवहितम् । रहितमायुधादिभिः । त्वद्विधं त्वामिव स्त्रीमध्यगम् । मदमोहितं स्त्रीभोगार्थं कृतमधुपानादितिकर्तव्यतामूढम् ॥ ३६ ॥ ३७ ॥

रा० टी०—निशावकाशदाने हेतुमाह—य इति । मत्तं पुत्रलालनादिना अनवहितं प्रमत्तं मद्यपानादिना अनवहितं वा सुप्तं स्वापविशिष्टं रहितमायुधादिहीनं वा त्वद्विधं भृशमत्यन्तं मदमोहितं वा यो हन्यात् स भ्रूणहा भवेत् । एतेन अपराधशङ्कयैव इदानीं मया त्वं न हन्यसे इति सूचितम् ॥ ३६ ॥

गो० टी०—यो हीति । मत्तं मधुपानादिना मत्तम् प्रमत्तम् अनवहितम् रहितम् आयुधादिशून्यं त्वद्विधं त्वामिव स्त्रीमध्यगतं मदमोहितं मदनमोहितं यो हन्यात्सः भ्रूणहा गर्भवधकृत् ॥ ३६ ॥

---

१ नर्दसीति गो. पाठः । २ रोषादिति गो. पाठः । ३ सादय सुहृज्जनानिति गो. संभावयेति रा. पाठः । ४ सहेति गो. पाठः । ५ गर्वनाशन इति रा. पाठः । ६ नाशन इति गो. पाठः । ७ सुप्तमिति गो.रा.पाठः । ८ भृशमिति गो.रा.पाठः । ९ मंप्रहस्येति रा पाठः । १० वाक्यमिति रा.पाठः ।

मत्तोऽयमिति मामंस्था यद्यभीतोऽसि संयुगे । मदोऽयं संप्रहारेऽस्मिन्वीरपानं समर्थ्यताम् ॥ ३८ ॥
तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् । पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९ ॥
विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसंनिभम् । अविध्यत तदा वाली विनदन्कपिकुञ्जरः ॥ ४० ॥
वाली व्यापादयांचक्रे ननर्द च महास्वनम् । श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः ॥ ४१ ॥
तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः । युद्धं समभवद्घोरं दुन्दुभेर्वालिनस्तथा ॥ ४२ ॥
अयुध्यत तदा वाली शक्रतुल्यपराक्रमः । मुष्टिभिर्जानुभिः पद्भिः शिलाभिः पादपैस्तथा ॥ ४३ ॥
परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा । आसीद्धीनोऽसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४४ ॥
[ व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः ]
तं तु दुन्दुभिमुद्यम्य धरण्यामभ्यपातयत् । युद्धे प्राणहरे तस्मिन्निष्पिष्टो दुन्दुभिस्तदा ॥ ४५ ॥
स्रोतोभ्यो बहु रक्तं तु तस्य सुस्राव पात्यतः । पपात च महाबाहुः क्षितौ पञ्चत्वमागतः ॥ ४६ ॥

रा० टी०–स इति । स वाली प्रहस्य क्रोधात् ताराप्रभृतिकाः सर्वाः स्त्रियो विसृज्य त्यक्त्वा च असुरेश्वरं दुन्दुभिं वाक्यमब्रवीत् ॥ ३७ ॥

गो० टी०–स इति । मन्दं प्रहस्य धर्मान्वितवाक्यत्वादिति भावः । ताः विसृज्याब्रवीत् ॥ ३७ ॥

३८ ] ति० टी०–मदोऽयं स्त्रीगोष्ठीजनितोऽपि वीरपानम् वीरैः रणे मनउत्साहार्थं क्रियमाणः पानविशेषः समर्थ्यतां ज्ञायताम् ॥ ३८ ॥

रा० टी०–तद्वचनाकारमाह–मत्त इति । संयुगे संग्रामे यदि अभीतोऽसि तदा अयं मत्तः इति मामंस्थाः । ननु किं मत्तत्वमित्यत आह–अयं स्त्रीसंगजनितो मदः अस्मिन् संप्रहारे संग्रामे वीरपानं युद्धोत्साहहेतुकवीरकर्तृकपानविशेषः समर्थ्यतां बुध्यताम् ॥ ३८ ॥

गो० टी०–मत्त इति । संयुगे यद्यभीतोऽसि तदा अयं मत्त इति मा मंस्थाः । अयं मदः अस्मिन् संप्रहारे युद्धे वीरपानं समर्थ्यतां वीरपानं कृतमिति मन्यताम् । वीरपानं नाम युद्धोपक्रमे उत्साहवर्धनाय वीरैः क्रियमाणं पानम् ॥ ३८ ॥

३९ ] ति० टी०–उत्क्षिप्य कण्ठे प्रतिमुच्य । एषा हि माला संग्रामजयदा ॥ ३९ ॥

रा० टी०–तमिति । संक्रुद्धः वाली तं दुन्दुभिमेवमुक्त्वा काञ्चनीं पित्रा महेन्द्रेण दत्तां मालाम् उत्क्षिप्य कण्ठे संधार्येत्यर्थः, युद्धाय व्यवतिष्ठत ॥ ३९ ॥

गो० टी०–तमेवमिति । उत्क्षिप्य अंसयोरुपरि विन्यस्य एतत्काञ्चनमालाधारणकाले यः पुरो युद्धायागच्छति तस्य बलं सर्वं तवैव भविष्यतीति महेन्द्रेण दत्तामित्यर्थः । व्यवतिष्ठत व्यवातिष्ठत ॥ ३९ ॥

४० ] ति० टी०–अविध्यत क्षिप्तवान् ॥ ४० ॥

रा० टी०–विषाणयोरिति । गिरिसंनिभं दुन्दुभिं विषाणयोः शृङ्गयोर्गृहीत्वा कपिकुञ्जरो वाली विनदन्सन् अविध्यत मुष्ट्यादिना मुखादावताडयत् ॥ ४० ॥

गो०टी०–विषाणयोरिति । आविध्यत अभ्रामयत् ॥ ४० ॥

४१ ] ति० टी०–व्यापादयांचक्रे पातितवान् । पात्यतः पात्यमानस्य ॥ ४१ ॥

रा० टी०–बलादिति । बलाद्व्यापादयांचक्रे पातयामास महास्वनं ननर्द च अथ अनन्तरं पात्यतः पात्यमानस्य तस्य दुन्दुभेः श्रोत्राभ्यां रक्तं सुस्राव ॥ ४१ ॥

गो० टी०–वालीति । व्यापातयांचक्रे भूमौ पातयामास अथ पात्यतः पात्यमानस्य श्रोत्राभ्यां रक्तं सुस्राव श्रोत्रमूलविषाणपीडनादिति भावः ॥ ४१ ॥

४२–४३ ] ति० टी०–अस्यैव प्रपञ्चः–तयोरित्यादि ॥ ४२ ॥ ४३ ॥

रा० टी०–तयोरिति । क्रोधसंरम्भात् क्रोधावेशात् परस्परजयैषिणोस्तयोः दुन्दुभेः वालिनश्च घोरं युद्धं समभवत् ४२

रा० टी०–अयुध्यतेति । तदा शक्रतुल्यपराक्रमो वाली मुष्ट्यादिभिरयुध्यत ॥ ४३ ॥

गो०टी०–तयोरिति । क्रोधसंरम्भात् क्रोधवेगात् ४२–४३

४४ ] ति० टी०–हीनो हीनबलः ॥ ४४ ॥

रा० टी०–परस्परमिति । तत्र युद्धे वानरासुरयोः परस्परं घ्नतोः सतोः असुरो दुन्दुभिः हीनः क्षीणबल आसीत् तदा शक्रसूनुः वाली व्यवर्धत प्रबलत्वं प्राप्नोत् ॥ ४४ ॥

गो० टी०–परस्परमिति । घ्नतोः सतोः ॥ ४४ ॥ ४५ ॥

४५ ] ति० टी०–उद्यम्य हस्ताभ्यामूर्ध्वीकृत्य । 'उत्पाट्य' इति पाठे उत्पाटितविषाणं कृत्वेत्यर्थः ॥ ४५ ॥

रा० टी०–तमिति । तस्मिन्प्राणहरे युद्धे दुन्दुभिम् उद्यम्य उत्थाप्य धरण्यामभ्यपातयत् अत एव तदा पातनकाले दुन्दुभिः निष्पिष्टः आसीदिति शेषः ॥ ४५ ॥

४६ ] ति० टी०–स्रोतोभ्यो नासादिद्वारेभ्यः ॥ ४६ ॥

रा० टी०–स्रोतोभ्य इति । यः महाकायः क्षितौ पपात

१ आविध्यतेति गो. पाठः । २ बलादिति रा. पाठः । ३ वानरस्य चेति गो. पाठः । ४ चैवेति गो. पाठः । ५ आसीद्धतसुर इति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे । ७ उत्पाट्येति गो. पाठः । ८ अर्धमेतत् गो. नास्ति । ९ काय इति रा. पाठः ।

तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् । चिक्षेप वेगवान्वाली वेगेनैकेन योजनम् ॥ ४७ ॥
तस्य वेगप्रविद्धस्य वक्त्रात्क्षतजबिन्दवः । प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ॥ ४८ ॥
तान्दृष्ट्वा पतितांस्तत्र मुनिः शोणितविप्रुषः । क्रुद्धस्तस्य महाभाग चिन्तयामास को न्वयम् ॥४९॥
येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना । कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ॥५०॥
इत्युक्त्वा स विनिष्क्रम्य ददृशे मुनिसत्तमः । महिषं पर्वताकारं गतासुं पतितं भुवि ॥ ५१ ॥
स तु विज्ञाय तपसा वानरेण कृतं हि तत् । उत्ससर्ज महाशापं क्षेप्तारं वानरं प्रति ॥ ५२ ॥
इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् । वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः ॥ ५३ ॥
क्षिपता पादपाश्चेमे संभग्नाश्चासुरीं तनुम् । समन्तादाश्रमं पूर्णं योजनं मामकं यदि ॥ ५४ ॥
आक्रमिष्यति दुर्बुद्धिर्व्यक्तं स नभविष्यति । ये चास्य सचिवाः केचित्संश्रिता मामकं वनम्॥५५॥

तस्य पात्यतः पात्यमानस्य स्रोतोभ्यः स्रोतस्सदृशेभ्यः नासिकादिभ्यः बहु रक्तं सुस्राव च अत एव पञ्चत्वमागतः मृत इत्यर्थः ॥ ४६ ॥

गो० टी०–युद्ध इति । प्राणहरे तस्मिन् युद्धे निष्पिष्टो दुन्दुभिः पञ्चत्वं भूतानां पृथग्भावं मरणमिति यावत् । आगतः प्राप्तः पपात ॥ ४६ ॥

४७–४८ ] ति० टी०–तोलयित्वा हस्तग्रहणेन भारं ज्ञात्वा । योजनं तावद्दूरम् ॥ ४७ ॥ ४८ ॥

रा० टी०–तमिति । तं दुन्दुभिं बाहुभ्यां तोलयित्वा वेगेवान्वाली एकेनाल्पेन वेगेन योजनं चिक्षेप ॥ ४७ ॥

गो० टी०–तमिति । तोलयित्वा चालयित्वा एकेन वेगेन एकप्रयत्नेन ॥ ४७ ॥

रा० टी०–तस्येति । वेगप्रवृद्धस्य वेगः प्रवृद्धो यस्मै तस्य दुन्दुभेः वक्त्रात् मुखात् मारुतोत्क्षिप्ताः क्षतजबिन्दवः रुधिरविप्रुषः मतङ्गस्याश्रमं प्रति प्रपेतुः ॥ ४८ ॥

गो० टी०–तस्येति । वेगप्रविद्धस्य वेगेन क्षिप्तस्य ॥ ४८ ॥

४९ ] ति० टी०–तस्य विप्रुषः कर्तारं को न्वयमिति चिन्तयामास ॥ ४९ ॥

रा० टी०–तानिति । पतितान् शोणितविप्रुषः रक्तबिन्दून् दृष्ट्वा क्रुद्धो मुनिर्मतङ्गस्तस्य शोणितस्य कर्ता कोऽयमिति चिन्तयामास । विप्रुट्विशेषणयोः पुल्लिङ्गत्वमार्षम् ॥ ४९ ॥

गो० टी०–तान् दृष्ट्वेति । शोणितविप्रुष इति पुंल्लिङ्गत्वमार्षम् । तत्र शोणितबिन्दुविषये क्रुद्धः सन् को न्वयमिति चिन्तयामास ॥ ४९ ॥

५०–५२ ] ति० टी०–चिन्ताया एवाभिनयः–येनेत्यादि ॥ ५०–५२ ॥

रा० टी०–तच्चिन्ताकारमाह–येनेति । दुरात्मना येन कर्त्रा शोणितेन करणेनाहं स्पृष्टः सः दुरात्मा दुष्टप्रयत्नकः दुर्बुद्धिः अकृतात्मा अयत्तचित्तः अत एव बालिशः अयं समीपस्थः क. ॥ ५० ॥

रा० टी०–इतीति । इत्युक्त्वा मुनिसत्तमो मतङ्गः विनिष्क्रम्य गतासुम् अत एव भुवि पतितं पर्वताकारं महिषं ददर्श ॥ ५१ ॥

गो० टी०–को न्वयमित्येतद्विवृणोति–येनेति । स्पृष्टः अन्तर्भावितण्यर्थः । दुरात्मा दुःस्वभावः अत एव दुर्बुद्धिः । अकृतात्मा अवशीकृतान्तःकरणः । बालिशः मूर्खः ॥५०–५१॥

रा० टी०–स इति । स मतङ्गस्तपसा ज्ञानचक्षुषा तत्कर्म वानरेण कृतं विज्ञाय क्षेप्तारम् असुरशरीरस्येति शेषः, वानरं प्रति महाशापमुत्ससर्ज ॥ ५२ ॥

गो० टी०–स त्विति । तपसा तपोमाहात्म्येन ॥ ५२ ॥

५३ ] ति० टी०–अप्रवेष्टव्यम् न प्रवेष्टव्यमित्यर्थः॥५३॥

रा० टी०–शापप्रकारमाह–इहेति । मत्संश्रयं वनं येन रुधिरस्रवैर्दूषितं तेन इह वने अप्रवेष्टव्यम् । तत्र हेतुः–प्रविष्टस्य वधो भवेत् ॥ ५३ ॥

गो० टी०–इहेति । अप्रवेष्टव्यम् न प्रवेष्टव्यमित्यर्थः । संभग्ना इति । आसुरीं तनुमिह क्षिपतेत्यन्वयः ॥ ५३ ॥

५४ ] ति० टी०–आसुरीं तनुं क्षिपता येनेमे पादपाः संभग्ना इत्यन्वयः । स यदि मामकमाश्रमं तदागमनमुद्दिश्य समन्तात्परिसरवर्ति पूर्णं योजनं तत्पर्यन्तं ॥ ५४ ॥

रा० टी०–तदगम्यदेशमर्यादां बोधयन्नाह–क्षिपतेति । आसुरीं तनुं क्षिपता येन इमे पादपाः संभग्नाः स दुर्बुद्धिः समन्तात्पूर्णं योजनं मामकमाश्रमं यदि आक्रमिष्यति तर्हि न भविष्यति मरिष्यतीत्यर्थः । सार्धश्लोक एकान्वयी ॥ ५४ ॥

गो० टी०–समन्तादिति । स न भविष्यति नश्यतीत्यर्थः ॥ ५४ ॥

५५ ] ति० टी०–आक्रमिष्यति पद्भ्यां स्प्रक्ष्यति तर्हि न भविष्यति न जीविष्यतीत्यर्थः ॥ ५५ ॥

१ बलवानिति गो. पाठः । २ तस्येति गो. पाठः । ३ भार्गाश्चन्तयामासेति गो. पाठः । ४ अथेति गो. पाठः । ५ ददर्श मुनिपुंगव इति गो. पाठः । ६ वालिनमिति गो. पाठः । ७ संभग्ना पादपाश्चेमे क्षिपतेहेनि गो. पाठः । ८ आगमिष्यतीति गो. पाठः । ९ चापीति गो. पाठः । १० तस्येति गो. पाठः ।

न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् । तेऽपि वा यदि तिष्ठन्ति शपिष्ये तानपि ध्रुवम्॥ ५६ ॥
वनेऽस्मिन्मामके नित्यं पुत्रवत्परिरक्षिते । पत्राङ्कुरविनाशाय फलमूलाभवाय च ॥ ५७ ॥
दिवसश्चाद्य मर्यादा यं द्रष्टा श्वोऽस्मि वानरम् । बहुवर्षसहस्राणि स वै शैलो भविष्यति ॥ ५८ ॥
ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् । निश्चक्रमुर्वनात्तस्मात्तान्दृष्ट्वा वालिरब्रवीत् ॥ ५९ ॥
किं भवन्तः समस्ताश्च मतङ्गवनवासिनः । मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ॥ ६० ॥
ततस्ते कारणं सर्वं तथा शापं च वालिनः । शशंसुर्वानराः सर्वे वालिने हेममालिने ॥ ६१ ॥
एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् । स महर्षिं समासाद्य याचते स्म कृताञ्जलिः ॥ ६२ ॥
महर्षिस्तमनादृत्य प्रविवेशाश्रमं प्रति । शापधारणभीतस्तु वाली विह्वलतां गतः ॥ ६३ ॥
ततः शापभयाद्भीतो ऋष्यमूकं महागिरिम् । प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वाऽपि नरेश्वर ॥ ६४ ॥
तस्याप्रवेशं ज्ञात्वाहमिदं राम महावनम् । विचरामि सहामात्यो विषादेन विवर्जितः ॥ ६५ ॥
एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते । वीर्योत्सेकान्निरस्तस्य गिरिकूटनिभो महान्॥ ६६ ॥

रा० टी०–ये इति । अस्य क्षेप्तुः ये केचित् सचिवा. मामकं वनं संश्रितास्तैरिह वने न वस्तव्यम् इति वचः श्रुत्वा यथासुखं यान्तु ॥ ५५ ॥

गो० टी०–ये चेति । तस्य वालिनः ॥ ५६ ॥

५६ ] ति० टी०–तैर्वालिसचिवैः श्रुत्वा मदुत्सृष्टं शापम् ॥ ५६ ॥

५७ ] ति० टी०–शापमेव हेतूपन्यासपूर्वमाह--वने इति। फलाद्यभावाय तन्नाशाय जायन्ते यतः, अतः शपिष्यामि ॥५७॥

रा० टी०–ते इति । ते तत्सचिवाः पुत्रवत्परिरक्षिते अस्मिन् मामके वने पत्रादिविनाशाय यदि तिष्ठन्ति स्थास्यन्ति तर्हि तानपि ध्रुवं शपिष्ये शपामि। सार्धश्लोक एकान्वयी ॥५६॥५७॥

गो० टी०–यदीति । अस्मिन् वने पत्राङ्कुरविनाशाय फलमूलाभवाय च यदीह तिष्ठन्तीत्यन्वयः ॥ ५६ ॥ ५७ ॥

५८–६१ ] ति० टी०–अद्य दिवसोऽयं दिवसः । मर्यादा दास्यमानशापस्य । तदेवाह—यमिति । अस्म्यहं यं वानरं वालिसंबन्धिनं श्वो द्रष्टा स शैलो भविष्यति ॥ ५८–६१ ॥

रा० टी०–शापप्रकारमाह–दिवस इति । अद्यदिवसः इदं दिनं मर्यादा अस्मादिनादारभ्येत्यर्थः, यं वालिपक्षीयं वानरं श्वोऽनागते अह्नि द्रष्टास्मि स वानरः शैलो भविष्यति ॥ ५८ ॥

गो० टी०–दिवस इति । अस्य शापस्य एकोऽयं दिवसो मर्यादा श्वः परेद्युः यं द्रष्टास्मि सः शैलो भविष्यति॥५८॥

रा० टी०–तत इति । मुनिसमीरितां गिरं वानराः श्रुत्वा तस्मात वनात् निश्चक्रमुः तान् निष्क्रान्तान् वानरान् दृष्ट्वा वालिरब्रवीत् ॥ ५९ ॥

गो० टी०–ततस्त्विति । गिरं शापम् ॥ ५९ ॥

रा० टी०–तद्वचनाकारमाह–किमिति । मतङ्गवनवासिनः समस्ताः निखिला भवन्तः मत्समीपं किं किमर्थमनुप्राप्ताः । वनौकसां वनौकेभ्यः अपि स्वस्ति ॥ ६० ॥

गो० टी०–किं भवन्त इति । वनौकसां वानरेभ्यः ॥६०॥

रा० टी०–तत इति । ततः वालिप्रश्नश्रवणानन्तरं सर्वं कारणं शापहेतुं वालिन वालिसंबन्धिनं शापं च हेममालिने वालिने सर्वे वानराः शशंसु. ॥ ६१ ॥

गो० टी०–ततस्ते कारणमिति । कारणं दुन्दुभि-पतनम् ॥ ६१ ॥

६२ ] ति० टी०–याचते स्मायाचत शापमोक्षमिति शेषः ॥ ६२ ॥

रा० टी०–एतदिति । वानरेरितं वानरैरुक्तमेतद्वचनं श्रुत्वा वाली महर्षिं तं मतङ्गं समासाद्य प्राप्य कृताञ्जलिः सन् याचते स्म शापनिवृत्तये प्रार्थनां चक्रे इत्यर्थः ॥ ६२ ॥

गो० टी०–एतच्छ्रुत्वेति । स्पष्टम् ॥ ६२ ॥

६३–६५ ] ति० टी०–शापधारणेन शापविषयदोष-ज्ञानेन ॥ ६३–६५ ॥

रा० टी०–महर्षिरिति । महर्षिर्मतङ्गः तं वालिनमनादृत्य प्रार्थनामनङ्गीकृत्येत्यर्थः, आश्रमं प्रति विवेश वाली तु शापधा-रणभीतः शापहेतुकप्राप्तभयः सन् विह्वलतां गतः प्राप्तः ॥६३॥

रा० टी०–तत इति । ततस्तस्मादिनादारभ्य शापभयात् भीतो हरिर्वानरो वाली ऋष्यमूकं महागिरिं प्रवेष्टुं द्रष्टुं वा नेच्छति ॥ ६४ ॥

रा० टी०–तस्येति । हे राम ! तस्य वालिनः अप्रवेशं शापवशेन प्रवेशाभावं ज्ञात्वा विषादेन दुःखेन विवर्जितः सहा-मात्योऽहमिदं महावनं विचरामि ॥ ६५ ॥

गो० टी०–महर्षिरिति । विह्वलतां गत इति जगामेति शेषः ॥ ६३–६५ ॥

६६ ] ति० टी०--अस्थिनिचयः शुष्ककायः ॥ ६६ ॥

रा० टी०–एष इति । वीर्योत्सेकात्स्ववीर्यगर्वात् निर-

१ तदेति गो. पाठः । २ कूटोपम इति गो. पाठः ।

इमे च विपुलाः सालाः सप्तशाखावलम्बिनः । यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ ६७ ॥
एतदस्यासमं वीर्यं मया राम प्रकाशितम् । कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ॥ ६८ ॥
तथा ब्रुवाणं सुग्रीवं प्रहसँल्लक्ष्मणोऽब्रवीत् । कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् ॥ ६९ ॥
तमुवाचाथ सुग्रीवः सप्त सालानिमान्पुरा । एवमेकैकशो वाली विव्याधाथ स चासकृत् ॥ ७० ॥
रामो [4]निर्दारयेदेषां बाणेनैकेन चेद्द्रुमम् । वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ॥ ७१ ॥
हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण । उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते ॥ ७२ ॥

स्तस्य वालिना त्याजितस्य तस्य वालिनिहतस्य दुन्दुभेः गिरिकूटनिभः महान् अस्थिनिचयः अस्थिसमूहः एष संप्रकाशते ६६

गो० टी०—एष इति । अस्थिनिचयः शुष्ककाय इति यावत् ॥ ६६ ॥

६७ ] ति० टी०—इमे विपुला विशालमूलस्कन्धाः शाखावलम्बिनः प्रशस्तबहुशाखावन्तः । यत्र येषु । एकमेककालमेव वाली ओजसा ओजोयुक्तकम्पनेन सर्वान्निष्पत्रयितुं पत्रहीनान्कर्तुं घटते चेष्टते । त इमे सप्त साला इत्यर्थः । अनेन वायोरप्यधिकं बलं सूचितम् । नहि वायोर्युगपत्कम्पनेन सकलार्द्रपत्रपातनं क्वचिद्दृष्टचरम् । कश्चित्तु निष्पत्रयितुं निष्पत्रीकर्तुमित्यर्थः । एकं सालं शरेण भित्त्वा शरो निष्पत्रं यथा गच्छति तथा कर्तुम् अतिव्यथयितुमिति यावत् । "सपत्रनिष्पत्रादतिव्यथने" इति शास्त्रादप्राकृतकपित्वाच्च बाणव्यापारस्यापि संभव इति व्याचख्यौ ॥ ६७ ॥

रा० टी०—इमे इति । शाखावलम्बिनः प्रशस्तशाखायुक्ताः विपुलाः अतिस्थूलमूलादिमन्तः इमे सप्तसंख्याकाः शालास्तदभिधतरवः सन्तीति शेषः । यत्र येषु तरुषु एकं तरुं निष्पत्रयितुं पत्रविहीनं कर्तुमोजसा ओजोहेतुकमूलग्रहणपूर्वककम्पनेन वाली घटते शक्नोति ॥ ६७ ॥

गो० टी०—इमे चेति । विपुलाः स्थूलाः शाखावलम्बिनः लम्बितशाखाः शाखावृतत्वेन दुर्ज्ञेयलक्ष्या इत्यर्थः । यत्र सालेषु एकं सालम् ओजसा ननु धनुषा निष्पत्रयितुं निर्गतशरपत्रं कर्तुं घटते शक्नोति एकं सालं भित्त्वा शरो निष्पत्रं यथा तथा वृक्षान्तरासक्तमूलं गच्छति तथा वेद्धुं समर्थ इत्यर्थः । धनुर्विना केवलबाणेन एकं सालं विध्यतीत्यर्थः । यद्वा वेद्धुं शक्तः ननु कदाचित्तथा कृतवानिति घटत इति पदेन व्यज्यते । एवमुत्तरत्रापि योज्यम् । यद्वा स्वजातिविरुद्धत्वेन युद्धे धनुर्ग्रहणाभावेऽपि लीलार्थं धनुरस्तीति ध्येयम् ॥ ६७ ॥ ६८ ॥

६८ ] ति० टी०—उक्तं वालिवीर्यमुपसंहरति—एतदिति ॥ ६८ ॥

रा० टी०—एतदिति । तस्य वालिनः असमम् अन्यसाम्यरहितम् एतद्वीर्यं मया प्रकाशितम्, तं वालिनं समरे हन्तुं त्वं कथं शक्ष्यसे ॥ ६८ ॥

६९ ] ति० टी०—प्रहसन् भगवद्वीर्याज्ञानादेवं वाद इति हासः ॥ ६९ ॥

रा० टी०—तथेति । तथा तेन प्रकारेण ब्रुवाणं सुग्रीवं प्रहसन् लक्ष्मण अब्रवीत् । तद्वचनाकारमाह—कस्मिन्कर्मणि निर्वृत्ते रामेण निष्पादिते सति वालिनो वधं त्वं श्रद्दध्याः वधविश्वासं कुर्याः ॥ ६९ ॥

गो० टी०—तथेति । कस्मिन्निति मुहूर्तेन चतुःसमुद्रगमने उत्क्षिप्तपर्वतशिखरग्रहणे दुन्दुभिकायोत्क्षेपणे सालभेदने वेत्यर्थः ॥ ६९ ॥

७० ] ति० टी०—एवमुक्तप्रकारेणैकैकश एकैकस्मिन्काले सप्तापि स वाल्यसकृद्विव्याध पीडितवान् आर्षं परस्मैपदम् । सकृत्कृतेः काकतालीयत्वव्युदासायासकृदिति । 'विव्याध' इति पाठान्तरम् । तुल्योऽर्थः ॥ ७० ॥

रा० टी०—तमिति । अथ अनन्तरं सुग्रीवः तं लक्ष्मणमुवाच । तद्वचनाकारमाह—पुरा पूर्वमिमान्सप्तशालान् एकैकशः असकृदनेकवारं प्रहारेण स वाली विव्याध अकम्पयत् । एवमनेन प्रकारेण एषां तरूणां मध्ये द्रुममेकतरं रामः चेद्यदि एकेन बाणेन विदारयेत् हतस्य वालिना निहतस्य महिषस्य अस्थि एकेन पादेन उद्यम्य द्वे धनुःशते तरसा वेगेन प्रक्षिपेच्च तदा रामस्य विक्रमं दृष्ट्वा वालिनं निहतं मन्ये मंस्ये । श्लोकत्रयमेकान्वयि ॥ ७०–७२ ॥

गो० टी०—तमिति । पुरा वाली इमान् सप्त सालान् विव्याध । अथ च अनन्तरमपि एवमेकैकशः असकृद्विव्याधेति योजना । यद्वा स वाली एवंविधानिमान्सप्त सालान् एकैकशः पुरा विव्याध अनन्तरमपि असकृद्विव्याध ॥ ७० ॥

७१–७२ ] ति० टी०—एकेन बाणेनैषामेकं द्रुममपि चेन्निर्दारयेत्तदापि वालिनं हतं मन्ये । तद्वधयोग्यतासंभावनयेति भावः । पादेन अस्थ्नो हस्तेन स्पर्शायोग्यत्वात् । तरसा बलेन प्रक्षिपेदपि चेत्तदापि रामस्य विक्रमं दृष्ट्वा वालिनं हतं मन्य इति संबन्धः ॥ ७१ ॥ ७२ ॥

गो० टी०—राम इति । एषां मध्ये एकं द्रुमम् एकेन बाणेन यदि विदारयेत् तदा तादृशं विक्रमं दृष्ट्वा वालिनं निहतं मन्ये । उद्यम्य प्रकोष्ठेनोत्क्षिप्य द्वे धनुःशते धनुःशत-

१ तस्येति रा. पाठः । २ प्रकीर्तितमिति गो. पाठः । ३ विव्याधेति गो. रा. पाठः । ४ ऽपीति गो. पाठः । ५ चेदिति गो. पाठः । ६ अथ प्रक्षिपेच्चेदिति गो. पाठः ।

एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलो[1]चनः । ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ॥ ७३ ॥
शूरश्च शूरमानी च प्रख्यातबलपौरुषः । बलवान्वानरो वाली[2] संयुगेष्वपराजितः ॥ ७४ ॥
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि । यानि संचिन्त्य भीतोऽहमृष्यमूकमुपाश्रितः[3] ॥ ७५ ॥
तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् । विचिन्तयन्नमुं चापि ऋष्यमूकममुं त्वहम्[4] ॥ ७६ ॥
उद्विग्नः शङ्कितश्चाहं[5] विचरामि महावने । अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः ॥ ७७ ॥
उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल । त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ ७८ ॥
किं तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः । अप्रत्यक्षं तु मे वीर्यं समरे तव राघव ॥ ७९ ॥
न खल्वहं त्वां तुलये नावमन्ये न भीषये । कर्मभिस्तस्य भीमैश्च कातर्यं जनितं[7] मम ॥ ८० ॥
कामं राघव ते वाणी प्रमाणं धैर्यमाकृतिः । सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ॥ ८१ ॥
तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः । स्मितपूर्वमथो[6] रामः प्रत्युवाच हरिं प्रति ॥ ८२ ॥

द्वयदूरम् । धनुर्नाम चतुर्हस्तमानम् 'किष्कुः स्यादवटो हस्तश्चतुर्विंशतिरङ्गुलः । चतुर्हस्तो धनुर्दण्डो धनुर्धन्वन्तरं युगम्॥' इति वैजयन्ती। एवं सुग्रीवस्तमुवाचेति पूर्वेणान्वयः॥७१॥७२॥

७३ ] ति० टी०–ध्यात्वा रामवीर्यस्याप्रत्यक्षत्वाद्रामेण वालिवधः शक्यो न वेति संचिन्त्य ॥ ७३ ॥

रा० टी०–एवमिति । सुग्रीवः एवमुक्त्वा रक्तान्तलोचनमरुणनेत्रप्रान्तभागं रामं मुहूर्तं ध्यात्वा अयं वालिवधयोग्यो न वेति संचिन्त्य अब्रवीत् ॥ ७३ ॥

गो० टी०–एवमविश्वासकरणे सुहृदुर्मनायेतेत्यालोच्य यथा रामः संतुष्यति तथा वदति–एवमुक्त्वेत्यादिना ॥७३–७६॥

७४ ] ति० टी०–पुनर्मित्रभावेनाह–शूरश्चेति ॥ ७४ ॥

रा० टी०–तद्वचनाकारमाह–शूर इति । शूरः अतिशौर्यविशिष्टः अत एव शूरमानी शूरकर्तृकसत्कारवान् प्रख्यातबलपौरुष. प्रसिद्धबलैश्वर्यवान् बलवान् अनेकबलवद्भिशिष्टः प्रशस्तसेनाविशिष्टो वा संयुगेषु संग्रामेषु अपराजितः वाली अस्तीति शेषः ॥ ७४ ॥

७५ ] ति० टी०–यानि वालिकर्माणि संचिन्त्य भीतस्तेन सह रणाय भीतः॥ ७५ ॥

रा० टी०–दृश्यन्ते इति । अस्य वालिनः सुरैरपि दुष्कराणि यानि कर्माणि दृश्यन्ते तानि संचिन्त्य भीतोऽहमृष्यमूकमुपाश्रितः प्राप्तः ॥ ७५ ॥

७६–७७ ] ति० टी०–उक्तमेव भीत्या पुनराह–तमजय्यमिति ॥ ७६–७७ ॥

रा० टी०–तमिति । अजय्यम् अस्माभिर्जेतुमशक्यम् अत एव अधृष्यं धर्षयितुमशक्यम् अमर्षणं क्षमारहितं वानरेन्द्रं वालिनं विचिन्तयन् अहम् अमुम् ऋष्यमूकं न मुञ्चामि ॥७६॥

रा० टी०-उद्विग्न इति । शङ्कितस्तत्पौरुषादिस्मरणेन शङ्कावान् अत एव उद्विग्नः उद्विग्नचित्तोऽहमनुरक्तैः मद्विषयकानुरागविशिष्टैर्हनुमत्प्रमुखैरमात्यैः सह महावने विचरामि ॥७७॥

गो० टी०–उद्विग्न इति । उद्विग्नः भीतः ॥ ७७–७९ ॥

७८ ] ति० टी०–त्वां मित्रभूतम् ॥ ७८ ॥

रा० टी०–उपलब्धमिति । हे मित्रवत्सल ! श्लाघ्यं प्रशंसनीयं सन्मित्रं मे मया उपलब्धम् अत एव पुरुषव्याघ्रं हिमवन्तमिव त्वामहमाश्रितः ॥ ७८ ॥

७९ ] ति० टी०–यदि मामाश्रितस्तर्हि त्यज वालिभयम् तत्राह—किं त्विति । तद्बलं ज्ञातं त्वद्बलं चाज्ञातमतो भयमित्यर्थः ॥ ७९ ॥

रा० टी०–ननु तर्हि संशयं त्यजेत्यत आह–किमिति । बलशालिनः अतिबलवतः दुर्भ्रातुस्तस्य वालिनः बलज्ञोऽहं तव वीर्यं तु समरे मे अप्रत्यक्षम् एतेन इदानीमपि संशयो न निवृत्त इति सूचितम् ॥ ७९ ॥

८० ] ति० टी०–तुलये त्वद्बलपरीक्षां न कुर्वे इति भावः । नावमन्ये न भीषये च, किं तु स्वकातर्यादेव पुनर्ब्रवीमीति भावः ॥ ८० ॥

रा० टी०–संशयनिवृत्त्यभावे हेतुं वदन्नाह–नेति । त्वामहं न तुलये केनचित्सदृशं जानामि सर्वविलक्षणत्वादिति तात्पर्यम् । अवमन्ये न वालिकथनेनावमानं न करोमि भीषये च न किंतु तस्य वालिनः भीमैः कर्मभिः मम कातर्यं जनितम् । एतेन कातर्यमूलकमेव वालिपराक्रमवर्णनमिति व्यञ्जितम्॥८०॥

गो० टी०–नेत्यादि ॥ ८० ॥

८१–८२ ] ति० टी०--वाणी वालिवधविषया प्रमाणं विश्वसनीया । यतो धैर्यमकातर्येण तृणीकृत्य वादः । आकृतिरनुभवसिद्धो दिव्यविग्रह एते द्वे । परं तेजः सकलजगत्संहारकं तेजः काममतिशयेन सूचयन्ति सूचयतः । भस्मच्छन्नानलोपमया गुप्तावस्थितिमहाशक्तिमत्त्वं सूचितम् ॥ ८१ ॥ ८२ ॥

रा० टी०–ननु तर्हि मद्विश्वासं कथं करोषीत्यत आह–काममिति । हे राघव ! ते वाण्यादयः भस्मच्छन्नमनलं वह्निमिव ते तेजः सूचयन्ति ॥ ८१ ॥

१ लोचनमिति गो. रा. पाठः । २ घातीति गो. पाठः । ३ ऋष्यमूकं समाश्रित इति गो. पाठः । ४ न मुञ्चामीति गो. पाठः । ५ ऽपीति गो. पाठः । ६ अथो इति गो. रा. पाठः । ७ न जाना मीति युक्तंभाति ।

यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर । प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ॥ ८३ ॥
एवमुक्त्वा तु सुग्रीवं सान्त्वयँल्लक्ष्मणाग्रजः । राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया ॥ ८४ ॥
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् । असुरस्य तनुं शुष्कां पादाङ्गुष्ठेन वीर्यवान् ॥ ८५ ॥
क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् । लक्ष्मणस्याग्रतो रामं तपन्तमिव भास्करम् ॥
हरीणामग्रतो वीरमिदं वचनमर्थवत् ॥ ८६ ॥
आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे । परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा ॥ ८७ ॥
लघुः संप्रति निर्मांसस्तृणभूतश्च राघव । क्षिप्तं एवं प्रहर्षेण भवता रघुनन्दन ॥ ८८ ॥
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाऽधिकम् । आर्द्रं शुष्कमिति ह्येतत्सुमहद्राघवान्तरम् ॥ ८९ ॥
स एव संशयस्तात तव तस्य च यद्बलम् । सालमेकं विनिर्भिद्य भवेद्व्यक्तिर्बलाबले ॥ ९० ॥
कृत्वैतत्कार्मुकं सज्यं हस्तिहस्तमिवापरम् । आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ९१ ॥

रा० टी०—तस्येति । महात्मनस्तस्य सुग्रीवस्य तद्वचनं श्रुत्वा रामः हरिं सुग्रीवं प्रति स्मितपूर्वं प्रत्युवाच ॥ ८२ ॥

गो० टी०—काममिति । वाणी एकरूपं वचनं प्रमाणं बुद्धिः धैर्यम् अचञ्चलता आकृतिर्वेषश्च भस्मच्छन्नमनलमिव स्थितं ते परं तेजः कामम् अतिशयेन सूचयन्ति । अथापि मे कातर्यं जनेतमिति पूर्वेणान्वयः ॥ ८१ ॥ ८२ ॥

८३-८५ ] ति० टी०—अस्मासु विक्रमेऽस्मन्निष्ठविक्रमे । प्रत्ययो विश्वासः ॥ ८३–८५ ॥

रा० टी०—तद्वचनाकारमाह–यदीति । हे वानर ! अस्मासु विद्यमाने विक्रमे पराक्रमे तव प्रत्ययो विश्वासो यदि न तर्हि समरे श्लाघ्यं ते प्रत्ययं प्रतीतिविषयीभूतविक्रममुत्पादयामि ॥ ८३

गो० टी०—यदीति । विक्रमे विषये । प्रत्ययं विश्वासं समरे विषये ॥ ८३ ॥

रा० टी०—एवमिति । लक्ष्मणाग्रजो रामः सुग्रीवं सान्त्वयन् सन् एवमुक्त्वा असुरस्य दुन्दुभेः कायं पादाङ्गुष्ठेन तोलयित्वा शुष्कां तनुं पादाङ्गुष्ठेन लीलया दशयोजनं चिक्षेप। कर्मणः करणस्य च पुनरुपादानमुभयत्र शाब्दान्वयविवक्षया । श्लोकद्वयमेकान्वयि ॥ ८४ ॥ ८५ ॥

गो० टी०—एवमिति । सान्त्वमित्यनेन प्रत्ययप्रश्नेन सुग्रीवस्य दुःखितत्वं द्योत्यते । पादाङ्गुष्ठेन अनुद्धृतेन तोलयित्वा चालयित्वा ॥ ८४ ॥

गो० टी०—असुरस्येति । तनुं पूर्वापेक्षया स्वल्पं कायं शरीरम् ॥ ८५ ॥

८६ ] ति० टी०—अर्थवदुपपत्तियुक्तमिदं वचनमब्रवीत् अनुत्पन्नप्रत्यय इति शेषः ॥ ८६

रा० टी०—क्षिप्तमिति । सुग्रीवः क्षिप्तं कायं दृष्ट्वा भास्करमिव लक्ष्मणस्याग्रतः अग्रे तपन्तं प्रकाशमानं रामं हरीणां वानराणामग्रतः अग्रे अर्थवदिदं वचनं पुनरब्रवीत् । सार्धश्लोक एकान्वयी ॥ ८६ ॥

गो० टी०—कथं कमित्यत्राह—लक्ष्मणस्येति ॥ ८६ ॥

८७-८८ ] ति० टी०—तदेवाह—आर्द्र इति । प्रत्यग्रो नूतनः मत्तेन भोगार्थं पीतमदेन ॥ ८७ ॥ ८८ ॥

रा० टी०—तद्वाकारमाह–आर्द्र इति । हे सखे ! आर्द्रः रुधिरव्याप्तः समांसः मांससहितः प्रत्यग्रः अग्रभागसहितः कायः परिश्रान्तेन परिश्रमविशिष्टेन मत्तेन मे भ्रात्रा वालिना पुरा पूर्वं क्षिप्तः संप्रति इदानीं तु निर्मांसः मांसरहितः शुष्क इत्यर्थः, अत एव लघुः अत एव तृणभूतः लघुत्वेन तृणत्वं प्राप्तः काय इति शेषः, भवता क्षिप्तः अतः अत्र अस्मिन् क्षेपे तवाधिकं बलं वालिनो वा अधिकं बलं विज्ञातुं निर्णेतुं न शक्यम् । सार्धश्लोकद्वयमेकान्वयि ॥ ८७ ॥ ८८ ॥

गो० टी०—आर्द्र इति । आर्द्रः सरक्तः । प्रत्यग्रः यत्किंचित्प्राणचेष्टायुक्तः । लघुत्वं सदृष्टान्तमाह–तृणभूत इति ॥८७॥

गो० टी०—एवं प्रक्षेपेऽप्यवैषम्यमुक्त्वा प्रक्षेप्तृतारतम्यमाह—परिश्रान्तेनेति । एवंप्रहर्षेण एवंविधप्रहर्षवता । नात्रेति । अत्र दुन्दुभिकायक्षेपकर्मणि तव वा तस्य वा अधिकं बलमिति ज्ञातुं न शक्यम् ॥ ८८ ॥

८९ ] ति० टी०—बलाधिक्यनिर्णये हेतुमाह–आर्द्रमिति ॥ ८९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह–आर्द्रमिति । हे राघव ! हि यतः आर्द्रं शुष्कं सुमहदन्तरं परस्परमतिभेदवत् अतस्तत्र तस्य वालिनो यद्बलं तत्र सः पौर्वकालिक एव संशयस्तिष्ठतीति शेषः ॥ ८९ ॥

गो० टी०—पुनः संग्रहेणाह—आर्द्रमिति । आर्द्रं शुष्कमित्येतत्सुमहत् अन्तरं तारतम्यं यद्यस्मादस्ति अतस्तव च तस्य च बले युवयोर्बलतारतम्ये स एव संशयो वर्तते संशयो न निवृत्त इत्यर्थः ॥ ८९ ॥

९०-९१ ] ति० टी०—यद्बलम् तत्रेति शेषः । 'यद्बले'

१ सान्त्वं लक्ष्मणपूर्वज इति गो. पाठः । २ शुष्कमिति गो. पाठः । ३ एतदादि प द्वयं गो. नास्ति । ४ अब्रवीदिति गो. पाठः । ५ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे । ६ क्षिप्तमिति गो. पाठः । ७ चेति रा. पाठः । ८ बले इति गो. पाठः । तु निर्भिन्द्या इति गो. पाठः ।

इमं हि सालं प्रहितस्त्वया शरो न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजन्प्रतिशापितो मया ॥ ९२ ॥
यथा हि तेजःसु वरः सदा रविर्यथा हि शैलो हिमवान्महाद्रिषु ।
यथा चतुष्पात्सु च केसरी वरस्तथा नराणामसि विक्रमे वरः ॥ ९३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ।

सप्ततालपूर्वं रसातलं निर्भिद्य पुनरागत्य तूणौ प्रविशन्त रामेषु विलोक्य विस्मितः सुग्रीवो राम प्रशसन्वालिहननं प्रार्थयते । वालिना योद्धुं सुग्रीवं प्रेषयन्रामः सस्वजनो वृक्षमूले निलीनस्तथौ । सुग्रीवाह्वानमसहमानेन वालिना प्रवृत्तयुद्धे तयोर्विशेषानवबोधाद्रामेण वालिनि शरामोक्षणाद्भग्नबलः सुग्रीवः पलाय्य ऋष्यमूकं प्रापत्तदन्तिकं प्राप्तो रामो वालिवधाकरणे कारण प्रदर्श्य सुग्रीवमाश्वासयन्वालिना पुनर्योद्धुं समनाहयदथो रामप्रचोदितो लक्ष्मणः प्रत्यभिज्ञानाय पुष्पितां गजपुष्पीमुत्पाट्य सुग्रीवग्रीवाया बबन्ध ।

एतच्च वचनं श्रुत्वा सुग्रीवस्य सुभाषितम्[1] । प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १ ॥
स गृहीत्वा धनुर्घोरं शरमेकं च मानदः । सालमुद्दिश्य चिक्षेप पूरयन्स रवैर्दिशः[2] ॥ २ ॥
स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः । भित्त्वा तालान्गिरिप्रस्थं सप्तभूमिं विवेश ह ॥ ३ ॥

इति पाठे यदित्यव्ययम् । यः संशयोऽस्थिप्रक्षेपात्प्राग्बलविषय आसीत्, सोऽप्यत्राप्यस्त्येवेत्यर्थः । तर्हि किं ते प्रत्ययकारकं तत्राह—सालमेकमिति । एकं सालमुक्तेषु विनिर्भिद्य बलाबलविषये व्यक्तिः प्रकटता भवेत् ॥ ९० ॥ ९१ ॥

रा० टी०—ननु कथं संशयनिवृत्तिरित्यत आह—सालमिति । अपरं हस्तिहस्तमिव एतत्कार्मुकं धनुः सज्यं कृत्वा आकर्णपूर्णमायम्य महाशरं विसृजस्व अत एव एकं सालं विनिर्भिद्य बलाबले बलाबलयोः व्यक्तिः प्राकट्यं भवेत् । सार्धश्लोक एकान्वयी ॥ ९० ॥ ९१ ॥

गो० टी०—सालमिति । निर्भिन्द्याः भञ्जय । व्यक्तिः विशेषज्ञानम् ॥ ९० ॥ ९१ ॥

९२ ] ति० टी०—त्वया प्रहितः क्षिप्तः शर इमं सालं विदारयिष्यति । अत्र न संदेहः, तस्मात्त्वया विमर्शो विचारो न कर्तव्यः । मया सख्या संप्रति शापितः शपथपूर्वं नियुक्तः, अतो मम प्रियं ध्रुवं कुरुष्वेत्यर्थः ॥ ९२ ॥

रा० टी०—इममिति । त्वया प्रहितः शरः इमं सालं विदारयिष्यति अत्र संशयो नास्ति अतः मया प्रतिशापितः कृतशपथस्त्वं मम प्रियं ध्रुवं कुरुष्व विमर्शेन एतद्विरोधिविचारेण अलं न कुर्वित्यर्थः ॥ ९२ ॥

गो० टी०—पुनर्निर्बन्धेन कुपितो भवेदिति सान्त्वयति—इममिति । सहितः संहितः "समो वा हिततत्योः" इति मलोपः । शरो विदारयिष्यति । विमर्शेन पुनः किमर्थं प्रत्ययोत्पादनमिति विमर्शेन । मम प्रियं ननु त्वत्परीक्षार्थम् ॥ ९२ ॥

९३ ] ति० टी०—तेजःसु तेजस्विषु । विक्रमे वरः श्रेष्ठत्वेनाभिमतोऽसि भवसीत्यर्थः । सालभेदने सतीति शेषः ॥ ९३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकादशः सर्गः ॥ ११ ॥

रा० टी०—यथेति । तेजस्सु तेजोविशिष्टेषु रविर्वरः महाद्रिषु हिमवान् चतुष्पात्सु केसरी सिंहो यथा तथा विक्रमे त्वमसि इत्थं प्रतीयसे इत्यर्थः ॥ ९३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०—यथेति । तेजःसु तेजस्विषु । विक्रमे स्थितानामिति शेषः ॥ ९३ ॥

अस्मिन् सर्गे त्र्युत्तरनवतिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

१–२ ] ति० टी०—॥ १ ॥ २ ॥

रा० टी०—सुग्रीवप्रार्थितरामकर्तृकसप्ततालभेदनं वर्णयितुमाह—एतदिति । सुग्रीवस्य सुभाषितमेतद्वचनं श्रुत्वा महातेजा रामः प्रत्ययार्थं सुग्रीवविश्वासार्थं कार्मुकं धनुर्जग्राह ॥१॥

रा० टी०—स इति । स रामः धनुरेकं शरं च गृहीत्वा सरवैः रवत्वविशिष्टैः रवैरित्यर्थः ।दिशः पूरयन् सन् सालमुद्दिश्य चिक्षेप२

गो० टी०—अथ प्रत्ययपूर्वकं वालिवधाय गमनं द्वादशे—एतच्चेत्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०—स एकसालोद्देशेनैव क्षिप्तोऽपि बाणः

१ राजात्मजेति गो.पाठः। २ रविरिति गो.पाठः। ३सुग्रीवेणेति गो पाठः। ४ज्यास्वनैः पूरयन्दिश इति गो.पाठः। ५सालान्गिरिप्रस्थे इति गो.रा.पाठः।

सायकस्तु मुहूर्तेन तालान्भित्त्वा महाजवः । निष्पत्य च पुनस्तूर्णं तमेव प्रविवेश ह ॥ ४ ॥
तान्दृष्ट्वा सप्त निर्भिन्नान्सालान्वानरपुंगवः । रामस्य शरवेगेन विस्मयं परमं गतः ॥ ५ ॥
स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः । सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६ ॥
इदं चोवाच धर्मज्ञं कर्मणा तेन हर्षितः । रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७ ॥
सेन्द्रानपि सुरान्सर्वांस्त्वं बाणैः पुरुषर्षभ । समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ॥ ८ ॥
येन सप्त महातीला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ॥ ९ ॥
अद्य मे विगतः शोकः प्रीतिरद्य परा मम । सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १० ॥
तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् । वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥ ११ ॥
ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् । प्रत्युवाच महाप्राज्ञो लक्ष्मणानुगतं वचः ॥ १२ ॥

---

सप्तसालान्भित्त्वा तदाश्रमगिरिप्रस्थमपि भित्त्वा तदाधारभूमिमपि भित्त्वा सप्तभूमिरसातलं विवेशेत्यर्थः ॥ ३ ॥

रा० टी०—स इति । बलवता रामेण विसृष्टः त्यक्तः स्वर्णपरिष्कृतो बाणः सालान् तदभिधसप्ततरून् गिरिप्रस्थं तदाश्रयीभूतगिरिखण्डं च सप्तभूमिम् अधस्सप्तलोकावरकांश्च भित्त्वा विवेश उद्देश्यातिरिक्तभेदनस्य सामर्थ्यसूचकत्वान्न प्रयोक्तृनैपुण्यहानिः उपलक्षणतयाऽन्यस्याप्युद्देश्यता वा ॥ ३ ॥

गो० टी०—स विसृष्ट इति । सः एकसालोद्देशेन विसृष्टः स्वर्णपरिष्कृतः स्वर्णपट्टालंकृतः अनेन सर्वोत्तमत्वमुक्तम् । सालानिति सप्त सालान् भित्त्वा गिरिप्रस्थे गिरिप्रस्थमार्गणभूमिं विवेश । इत्थं ह्युक्तमभियुक्तैः । सालांश्च सप्त सगिरीन् सरसातलानिति संक्षेपे च गिरिं रसातलं चैवेति । अन्यस्त्वपपाठः ॥ ३ ॥

४–५ ] ति० टी०—निष्पत्य रसातलपर्यन्तं गत्वा तत्रत्यासुरान्हत्वा तमेव तूणं पूर्वाधारं तूणम् । अनेन रामबाणानां चेतनपरशक्तिमद्देवताधिष्ठितत्वं सूचयति । तदुक्तम्—'युगपत्सप्ततालांश्च रघुनाथो बिभेद ह । पातालदानवान्हत्वा पुनस्तूणं विवेश च ॥' इति ॥ ४ ॥ ५ ॥

रा० टी०—सायक इति । महाजवः सायकः सालान् उपलक्षणतया तत्प्रभृतीन् मुहूर्तेन भित्त्वा निष्पत्य बहिरागत्य स्वतूणीमिषुधिं प्रविवेश ॥ ४ ॥

गो० टी०—प्रविष्ट इति । धरां भित्त्वा प्रविष्टः स शरः महाजवत्वान्मुहूर्तेन निष्पत्य निर्गत्य पुनस्तां तूणीं प्रविवेश । मन्त्रप्रभावेनाचेतनस्यापि पुनरागमनम् ॥ ४ ॥

रा० टी०—तानिति । वानरपुंगवः सुग्रीवः निर्भिन्नान् सप्तसालान् दृष्ट्वा परमं विस्मयं गतः ॥ ५ ॥

गो० टी०—तानिति । दृष्ट्वेत्यनेनाल्पज्ञत्वात्सुग्रीवः सालानेव भिन्नान् ददर्श सप्तभूमिप्रवेशं त्वहमेव धर्मवीर्येण पश्यामीति भावः ॥ ५ ॥

६–८ ] ति० टी०—प्रलम्बी कृतभूषणः साष्टाङ्गप्रणामवशाल्लम्बमानावस्थापन्नोरःकण्ठादिवर्तिसकलभूषणः । कृताञ्जलिः उत्थानानन्तरमिति शेषः ॥ ६–८ ॥

रा० टी०—स इति । परमप्रीतः स सुग्रीवः प्रलम्बीकृतभूषणः दण्डायमानप्रणामहेतुकप्रलम्बीभूतवनमालादिभूषणविशिष्टः सन् भूमौ मूर्ध्ना राघवाय न्यपतत् ॥ ६ ॥

रा० टी०—इदमिति । तेन तालादिभेदनरूपेण कर्मणा हर्षितः सुग्रीवः धर्मज्ञं राममिदमुवाच ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—सेन्द्रानिति । सेन्द्रान् सर्वान् सुरानपि समरे बाणैर्हन्तुं त्वं समर्थः तर्हि वालिनं हन्तुं समर्थ इति किम् ॥ ८ ॥

गो० टी०—स इति । सः सुग्रीवः परमप्रीतः सन् राघवाय कृताञ्जलिः मूर्ध्ना भूमौ न्यपतत् शिरसा भूमिं स्पृष्ट्वा प्रणनामेत्यर्थः । प्रलम्बीकृतभूषण इत्यनेन उदरास्पर्श उक्तः । अनेन भगवद्विषये प्रणामप्रकारः शिक्षितो भवति ॥ ६–११ ॥

९–११ ] ति० टी०—भूमिश्च चात्सप्तपातालास्तद्वर्तिनोऽसुराश्च ॥ ९–११ ॥

रा० टी०—येनेति । येन भवता सप्तमहासाला गिरिः भूमिः सप्ताधोलोकावरणानि दारिताः तस्य ते रणाग्रतः कः स्थाता ॥ ९ ॥

रा० टी०—अद्येति । सुहृदं त्वां समासाद्य प्राप्य अद्य भवदतिपराक्रमदर्शनसमये मे शोको विगतः अत एव अद्य मम परा प्रीतिर्भवतीति शेषः ॥ १० ॥

रा० टी०—तमिति । हे काकुत्स्थ! मे प्रियार्थं भ्रातृरूपं मे वैरिणं वालिनं जहि अत एवायमञ्जलिर्मया बद्धः ॥ ११ ॥

१२ ] ति० टी०—लक्ष्मणानुगतम् तत्समभित्यर्थः । यद्वा लक्ष्मणवत्प्रियत्वेनानुगतं स्वीकृतं सुग्रीवमित्यर्थः ॥ १२ ॥

रा० टी०—तत इति । ततः सुग्रीवप्रार्थनाश्रवणानन्तरं महाप्राज्ञो रामः लक्ष्मणानुगतं मैत्र्या लक्ष्मणतुल्यत्वं प्राप्तं सुग्रीवं प्रत्युवाच ॥ १२ ॥

गो० टी०—तत इति । लक्ष्मणानुमतमिति क्रियाविशेषणम् । भ्रातृगन्धिनं भ्रातृहिंसकम् "गन्धनावक्षेपणे" इत्यत्र तथा प्रयोगात् । इति रामः सुग्रीवं प्रत्युवाचेति पूर्वेणान्वयः ॥ १२ ॥ १३ ॥

---

१ प्रविष्टश्चेति गो. पाठः । २ धरामिति गो. पाठः । ३ तूर्णं स्वतूणीमिति गो. रा. पाठः । ४ साला इति गो. रा. पाठः ।

अस्माद्गच्छाम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः । गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ॥ १३ ॥
सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य ह्यतिष्ठन्गहने वने ॥ १४ ॥
सुग्रीवोऽप्यनदद्घोरं वालिनो ह्वानकारणात् । गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १५ ॥
तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः । निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव ॥ १६ ॥
ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् । गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १७ ॥
तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः । जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥ १८ ॥
ततो रामो धनुष्पाणिस्तावुभौ समुदैक्षत । अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥ १९ ॥
यन्नावगच्छत्सुग्रीवं वालिनं वापि राघवः । ततो न कृतवान्बुद्धिं मोक्तुमन्तकरं शरम् ॥ २० ॥

१३ ] ति० टी०—अस्मादृष्यमूकात् । भ्रातृगन्धिनमनर्थकभ्रातृव्यपदेशम् ॥ १३ ॥

रा० टी०—तदाकारमाह—अस्मादिति । अस्मात् पर्वतात् किष्किन्धां गच्छाम अतस्त्वं ममाग्रतः क्षिप्रं गच्छ गत्वा च भ्रातृगन्धिनं भ्रातृशब्दबोध्यं वालिनमाह्वय ॥ १३ ॥

१४ ] ति० टी०—आत्मानं स्वदेहान् ॥ १४ ॥

रा० टी०—सर्वे इति । ते रामाद्याः सर्वे सुग्रीवप्रभृतयः वालिनः पुरीं किष्किन्धां गत्वा तन्निष्ठसंयोगानुकूलव्यापारं कृत्वा वृक्षैरात्मानमावृत्य उपगूह्य गहने दुर्गमे वने किष्किन्धासमीपकानने अतिष्ठन् ॥ १४ ॥

गो० टी०—सर्व इति । आत्मानं स्वं स्वमित्यर्थः ॥ १४ ॥

१५ ] ति० टी०—ह्वानकारणादाह्वाननिमित्तं गाढं परिहितं वस्त्रं येनेत्यर्थः । वाससा दृढं कटिं बद्ध्वेत्यर्थः । वेगान्नादकारणप्राणवेगात् उत्पन्नैरिति शेषः ॥ १५ ॥

रा० टी०—सुग्रीव इति । गाढं परिहितः वस्त्रेण दृढं बद्धकटिः सुग्रीवः वालिनोह्वानकारणात् ह्वानार्थं नादैरम्बरं भिन्दन्निव घोरमनदत् ॥ १५ ॥

गो० टी०—सुग्रीव इति । ह्वानम् आह्वानम् । गाढं परिहितः बलवद्युद्धाय दृढबद्धपरिधानः ॥ १५ ॥

१६ ] ति० टी०—भास्करोऽस्ततटादतिदूरमप्युदयपर्वतमत्यल्पेन कालेन याति, एवमदृश्यस्थानतया तत्तुल्यगुहातः क्षणेन बहिरागत इत्यर्थः । यत्त्वस्तपदेनोदयगिरिलक्षणम्, यदपि मेरूत्तरवासिनोऽधिकृत्येयमुक्तिरिति व्याख्यानं तत्क्लिष्टमसंगतं चेति स्पष्टं सुधियाम् ॥ १६ ॥

रा० टी०—तमिति । महाबलो वाली भ्रातुः निनदं श्रुत्वा सुसंरब्धः यातयुद्धोत्साहः सन् अस्ततटात् अस्ताचलसमीपात् भास्करः सूर्य इव निष्पपात ॥ १६ ॥

गो० टी०—तमिति । भास्करोऽस्ततटादिवेति यथा सूर्योऽस्ततटादवतरन्नदृष्टरश्मिर्भवति तथेदानीं किष्किन्धानिर्गमनं वालिनोऽल्पकालेन नाशहेतुरिति द्योतनार्थमस्ततटादित्युक्तम् । अस्मद्देशोदयगिरिः प्रदेशान्तरापेक्षया अस्तगिरिरित्युक्तमित्यप्याहुः ॥ १६ ॥

१७ ] ति० टी०—बुधाङ्गारकयोरिव । 'वज्रगोकर्णयोर्यथा' इति पाठान्तरम् । वज्रगोकर्णौ तन्नाम्यपर्वतौ । यथा तथेति शेषः ॥ १७ ॥

रा० टी०—तत इति । ततः वालिागमनानन्तरं गगने बुधाङ्गारकयोर्ग्रहयोरिव वालिसुग्रीवयोः घोरं सुतुमुलं युद्धमभूत् ॥ १७ ॥

गो० टी०—ततः सुतुमुलमिति । बुधाङ्गारकाख्ययोर्ग्रहयोरिव ॥ १७ ॥

१८-१९ ] ति० टी०—अशनिर्दम्भोलिः । वज्रं वज्रायुधम् ॥ १८ ॥ १९ ॥

रा० टी०—तलैरिति । अशनिकल्पैः वज्रोपमैस्तलैः करपादतलैः वज्रकल्पैः मुष्टिभिश्च भ्रातरौ अन्योन्यं जघ्नतुः॥१८॥

गो० टी०—तलैरिति । अशनिः मेघज्योतिः ॥ १८ ॥

रा० टी०—तत इति । ततः युद्धप्रवृत्त्यनन्तरं धनुष्पाणिः रामः उभौ अश्विनौ देवाविव अन्योन्यसदृशौ उभौ वालिसुग्रीवौ समुदैक्षत ॥ १९ ॥

गो० टी०—तत इत्यादि । श्लोकद्वयमेकान्वयम् । उभावश्विनौ देवाविव स्थितौ तावुभौ समुदीक्ष्य सुग्रीवं वालिनं वा विशेषतो यन्नावगच्छत् । ततः तस्माद्रामः शरं मोक्तुं बुद्धिं न कृतवानित्यन्वयः ॥ १९-२१ ॥

२० ] ति० टी०—नावगच्छत् विविच्येति शेषः ॥ २० ॥

रा० टी०—यदिति । यद् यस्माद्धेतोः राघवो रामः नावगच्छत् मिलितत्वात्समानाकारत्वाच्च विविच्य बोद्धुं नैच्छत् ततस्तस्माद्धेतोः अन्तकरं शरं मोक्तुं बुद्धिं निश्चयं न कृतवान् एतेन वालिनि रामस्य स्नेहः सूचितः तेन सुग्रीवविषयकस्नेहस्य पराकाष्ठा व्यञ्जिता तेनेदानीमपि यदि द्वयोर्मैत्री स्यात्तर्हि न हनिष्यामीति रामाभिप्रायो व्यक्तः ॥ २० ॥

१ गच्छेमेति गो. पाठः । २ व्यतिष्ठन्निति गो. पाठः । ३ निश्चक्रामेति गो. पाठः । ४ उदीक्ष्य स्थिति गो. पाठः ।

एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना। अपश्यन्राघवं नाथमृष्यमूकं प्रदुद्रुवे ॥ २१ ॥
क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः। वालिनाऽभिद्रुतः क्रोधात्प्रविवेश महावनम् ॥ २२ ॥
तं प्रविष्टं वनं दृष्ट्वा वाली शापभयात्ततः। मुक्तो ह्यसि त्वमित्युक्त्वा स निवृत्तो महाबलः २३ ॥
राघवोऽपि सह भ्रात्रा सह चैव हनूमता। तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥ २४ ॥
तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम्। ह्रीमान्दीनमुवाचेदं वसुधामवलोकयन् ॥ २५ ॥
आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम्। वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् २६ ॥
तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः। वालिनं न निहन्मीति ततो नाहमितो व्रजे ॥ २७ ॥
तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः। करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ २८ ॥
सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम्। कारणं येन बाणोऽयं स मया न विसर्जितः ॥ २९ ॥
अलंकारेण वेषेण प्रमाणेन गतेन च। त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥ ३० ॥

---

२१-२२ ] ति० टी०-राघवं नाथं रक्षकमित्यपश्यन्नजानन् ॥ २१ ॥ २२ ॥

रा० टी०- एतस्मिन्निति। एतस्मिन्नन्तरे समये वालिना भग्नः भग्नकरादिमान् सुग्रीवः नाथं स्वस्वामिनं राघवमपश्यन् सन् ऋष्यमूकं प्रदुद्रुवे ॥ २१ ॥

रा० टी०-क्लान्त इति । रुधिरेण सिक्तमङ्गं यस्य वालिना प्रहारैर्जर्जरीकृतः अत एव क्लान्तः ग्लानिं प्राप्तः अत एव अभिद्रुतः सुग्रीवः महावनं प्रविवेश ॥ २२ ॥

गो० टी०-क्लान्त इति । जर्जरीकृतः परुषत्वक्कृतः ॥ २२-२४ ॥

२३-२४ ] ति० टी०-वनं प्रविष्टम् ऋष्यमूकस्येति शेषः। स निवृत्तः परावृत्तः ॥ २३ ॥ २४ ॥

रा० टी०-तमिति। वनं प्रविष्टं तं सुग्रीवं दृष्ट्वा त्वं मुक्तोऽसीत्युक्त्वा शापभयात् ततस्तस्मात् महावनात् संनिवृत्तः ॥ २३ ॥

रा० टी०-राघव इति । भ्रात्रा लक्ष्मणेन हनुमता च सह राघवोऽपि यत्र वानरः सुग्रीवः तदेव वनमागच्छत् ॥२४॥

२५ ] ति० टी०-ह्रीमान्पराभूतत्वात् ॥ २५ ॥

रा० टी०-तमिति। सहलक्ष्मणमागतं तं रामं समीक्ष्य ह्रीमान् पराभवहेतुकलज्जावान् सुग्रीवः वसुधामवलोकयन्सन् दीनमिदमुवाच ॥ २५ ॥

गो० टी०-तमिति । वसुधामवलोकयन्निति लज्जानुभावः ॥ २५ ॥

२६ ] ति० टी०-विक्रमं सालभेदनेन घातयित्वा युद्धप्रेरणद्वारा । किं कृतम् अनुचितमेव कृतमित्यर्थः ॥ २६ ॥

रा० टी०-तद्वचनाकारमाह-आह्वयस्वेति । विक्रमं स्वपराक्रमं दर्शयित्वा तालभेदादिना संप्रदर्श्य मामाह्वयस्व इत्युक्त्वा अरिणा घातयित्वा च त्वया किं कृतम् इष्टमनिष्टं वा कृतमिति न विद्म इति तात्पर्यम् ॥ २६ ॥

गो० टी०-आह्वयस्वेति । दर्शयित्वा च विक्रममिति व्यतिरेकोक्तिः त्वया किं कृतं किं चिन्तितमित्यर्थः । कृतिरनेकार्थः ॥ २६ ॥

२७-२८] ति० टी०-तामेव वेलाम्। सप्तम्यर्थे द्वितीया। वालिना युद्धप्रेरणवेलायाम्। ततस्तदेत्यर्थः। इतः ऋष्यमूकवनादित्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०-तामिति। तां वेलां मद्गमनसमये वालिनमहं न निहन्मीति तत्त्वतः यथार्थतः त्वया वक्तव्यं ततस्तदा इतोऽहं न व्रजे व्रजेयम्। तां वेलामित्यत्र सप्तम्यर्थे द्वितीया ॥ २७ ॥

गो० टी०-तामेव वेलामिति। अत्यन्तसंयोगे द्वितीया वालिनं जहि काकुत्स्थेति प्रार्थनवेलायामित्यर्थः । ततः तथोक्तं चेत् ॥ २७ ॥

रा० टी०-तस्येति। दीनया वाचा एवं करुणं ब्रुवाणस्य सुग्रीवस्य समीपे राघवः पुनः अब्रवीत् ॥ २८ ॥

गो० टी०-तस्येति। करुणं सदयम् अब्रवीत् ॥ २८ ॥

२९ ] ति० टी०-स बाणो वालिसंहारको बाणः ॥२९॥

रा० टी०-तद्वचनाकारमाह-सुग्रीवेति। हे सुग्रीव ! येन कारणेन सोऽयं बाणः मया न विसर्जितस्त्यक्तः तत्कारणं श्रूयताम् अत एव क्रोधः बाणप्रक्षेपाभावजनितकोप व्यपनीयतां त्यज्यताम् ॥ २९ ॥

गो० टी०-सुग्रीवेति। येन कारणेन बाणो न विसर्जितः तत्कारणं श्रूयतां श्रुत्वा क्रोधश्चापनीयतामिति योजना ॥ २९ ॥

३०] ति०टी०-तदेव कारणमाह—अलंकारेणेति॥३०॥

रा० टी०-तत्कारणमेवाह-अलंकारेणेति। हे सुग्रीव ! त्वं वाली च अलंकारादिना स्वरादिना च परस्परं सदृशौ स्थः अतः व्यक्तिं द्वयोर्विभिन्नलोकप्राप्तिं न उपलभ्ये अनुमिनोमि वालिनि मृते त्वमपि तत्स्नेहान्मरिष्यसीति तात्पर्यम् वाक्यैः वचनरचनाविशेषैः अत एव वचसा इत्यनेन न पौनरुक्त्यम्। श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

---

१ भयार्दित इति गो. पाठः। २ संनिवृत्त इति रा. पाठः। ३ द्युतिरिति गो. पाठः

स्वरेण [1]वर्चसा चैव प्रेक्षितेन च वानर । विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥ ३१ ॥
ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम । नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ॥ ३२ ॥
जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः । मूलघातो न नौ स्याद्धि द्वयोरिति कृतो मया ॥ ३३ ॥
त्वयि [2]वीर विपन्ने हि अज्ञानाल्लाघवान्मया । मौढ्यं च मम बाल्यं च ख्यापितं स्यात्[3]कपीश्वर ॥ ३४ ॥
दत्ताभयवधो नाम पातकं महद[4]द्भुतम् । अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ॥ ३५ ॥
त्वदधीना वयं सर्वे वनेऽस्मिञ्शरणं भवान् । तस्माद्युध्यस्व भूयस्त्वं मा माशङ्कीश्च वानर ॥ ३६ ॥
एतन्मुहूर्ते तु[5] मया पश्य वालिनमाहवे । निरस्तमिषुणैकेन [6]चेष्टमानं महीतले ॥ ३७ ॥
अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर । येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३८ ॥

गो० टी०–अलंकारेणेति । वेषेण आकारेण प्रमाणेन औन्नत्येन गतेन गमनेन ॥ ३० ॥

३१ ] ति० टी०–वर्चः शरीरकान्तिः वां युवयोः ॥ ३१ ॥

गो० टी०–स्वरेणेति । वर्चसा तेजसा प्रेक्षितेन वीक्षणेन वाक्यैः भाषणैः व्यक्तिं विशेषम् तत इति । मोहितः संजातमोहः विशेषानभिज्ञ इत्यर्थः ॥ ३१ ॥

३२ ] ति० टी०–मोहित इति । नन्विदमनुचितं यद्भगवतो मोहः अमोहे मोह इत्यनृतकथनं च । किं च पलायनसमये ऋष्यमूकाभिमुखधावनेन व्यक्तिरस्त्येवेति चेन्न । वालिन आयुर्दायासमाप्त्या तथाकरणेऽपि सुग्रीवसंतोषाय स्वस्मिन्माानुष्यबुद्ध्यनुत्पादाय चात्मनि मोहोत्प्रेक्षया समाधानादक्षतेः । मोहित इत्यस्येवेति शेषः । ईदृशे विषय एवंविधानृतवचनं न दोषायेत्यप्यनेन ध्वनितम् । नोत्सृजामि नोदसृजम् ॥ ३२ ॥

३३ ] ति० टी०–विशङ्कितः शङ्कावान् । हि निश्चयेन नावावयोर्द्वयोरपि त्वन्नाशेन मूलघातो न स्यान्मा भूदित्येतदर्थं मया कृतः शरानुत्सर्ग इति शेषः ॥ ३३ ॥

रा० टी०–तत इति । ततस्तस्मात् रूपसादृश्यात् हेतोः मोहितः मा न ऊहितं तर्कितं येन सोऽहं महावेगं जीवितान्तकरं घोरं शरं नोत्सृजामि । ननु ममापि मरणे तव का क्षतिरित्यत आह सादृश्यात् वालिनिष्ठसुग्रीवप्रातियोगिकसदृशत्वात् तन्मूलकात्तवापि मरणादित्यर्थः, हेतोर्नौ आवयोर्द्वयोर्मूलघातः मूलयोः राज्यप्राप्तिस्त्रीप्राप्तिरूपहेत्वोर्विघातो विनाशो न स्यात् इति विशङ्कितोऽहमभवामिति शेषः सदृशभ्रातृमरणे तज्जनितदुःखेन यदि सुग्रीवमृतिः स्यात्तर्हि तद्राज्यप्राप्तिविघातः स्यात् आतः तद्व्यापारसाध्यसीताप्राप्तिविरहो भवेदिति तात्पर्यम् अत एव मया कृतः प्रक्षेपाभाव इति शेषः। श्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

गो० टी०–नोत्सृजामीत्यादिसार्धश्लोक एकान्वयः । अन्ते इतिकरणं द्रष्टव्यम् । द्वयोरपि नौ मया मूलघातो न कृतः स्यादिति हि शरं नोत्सृजामि नोत्सृष्टवानस्मीति योजना । ननु काञ्चनमालारूपो वालिनो विशेषोऽस्ति । सत्यम् तस्मिन् दिने तत्र धृत्वा गतवानिति ज्ञेयम् । यद्यप्यत्र मत्तत्वभोगचिह्नाश्रान्तत्वपुरनिर्गतत्वादिकं वाल्यसाधारणमस्ति समीपस्था हनुमदादयश्च प्रष्टुं शक्याः स्वयं च सूक्ष्मज्ञः 'प्रेक्षितज्ञास्तु कोसलाः' इत्युक्तेः तथापि त्वया मया च कुन्त्या चेति न्यायेनासाधारण्यं परिहर्तुं दृष्टहेतून् कांश्चिदुक्तवान्राम इति ज्ञेयम् ॥ ३२–३६ ॥

३४] ति० टी०–मूलघातमेव दर्शयति—त्वयीति । मया विपन्ने मद्व्यापारतो नाशिते । अज्ञानमनिश्चयप्रवृत्तिः लाघवाच्चापल्यात् ॥ ३४ ॥

रा० टी०–त्वयीति । हे वीर ! अज्ञानात् सदृशभ्रातृवधे सुग्रीवो मरिष्यतीति विचाराभावपूर्वकवालिवधात् लाघवात् अल्पकालतः त्वयि विपन्ने तच्छोकेन मृते सति मम मौढ्यं बाल्यं च ख्यापितं स्यात् ॥ ३४ ॥

३५ ] ति० टी०–बाधकान्तरमाह—दत्तमभयमस्मै स दत्ताभयस्तस्य वधो महत्पातकमिति नाम प्रसिद्धम् । स्वमूलघातमप्याह—अहमिति ॥ ३९ ॥

रा० टी०–दोषान्तरमाह–दत्तेति । दत्तमभयं यस्मै तस्य वधः महत्पातकम् अत एव अद्भुतं सर्वेषामाश्चर्यं भविष्यति । अर्धं पृथक् । न केवलं पातकमेव त्वद्वधेऽस्मत्कार्यध्वंसोऽपि भवेदित्याह–अहमिति । लक्ष्मणः सीता च वयं च सर्वे त्वदधीनाः अत एव अस्मिन्वने अहं न जहाति तत् शरणं रक्षको भवान् । एतेन त्वदभावेऽस्माकं रक्षापि न स्यादिति सूचितम् "अस्मदो द्वयोश्च" इत्यनुशासनादेकस्मिन्नपि रामे बहुवचनप्रयोगः । अर्धद्वयमेकान्वयि ॥ ३९ ॥

३६–३८ ] ति० टी०–मा माशङ्कीरित्याबाधायां द्वित्वम् ॥ ३६–३८ ॥

रा० टी०–तस्मादिति । तस्मात् वालिकर्तृकवैरत्यागाभावात् हेतोः भूयस्त्वं युध्यस्व मा मां मा शङ्कीः अयं नागमिष्यतीत्याशङ्कां न कृथाः ॥ ३६ ॥

रा० टी०–एतदिति । एतन्मुहूर्ते त्वत्कर्तृकपुनर्युद्धसमये मया एकेनेषुणा निरस्तमत एव महीतले चेष्टमानं वालिनं त्वं पश्य ॥ ३७ ॥

१ वचसेति रा. पाठः । २ धीरे इति गो. पाठः । ३ हरीश्वरेति गो. पाठः । ४ उच्यत इति गो. पाठः । ५ सुग्रीवेति गो. पाठः । ६ वेष्टमानमिति गो. पाठः ।

गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् । कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३९ ॥
ततो गिरितटे जातामुत्पाट्य कुसुमायुताम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥ ४० ॥
स तया शुशुभे श्रीमाँल्लतया कण्ठसक्तया । [ [2]विपरीत इवाकाशे सूर्यो नक्षत्रमालया ]
मालयेव बलाकानां ससंध्य इव तोयदः ॥ ४१ ॥
विभ्राजमानो वपुषा रामवाक्यसमाहितः । जगाम सह रामेण किष्किन्धां पुनराप सः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ।

वालिन जिघांसू रामः सुग्रीवादिभिः सह किष्किन्धां प्रस्थितो मध्येमार्गं दृष्टरमणीयवनखण्डः कस्येदमाश्रमस्थानमिति सुग्रीवं पप्रच्छ । सशरीरं दिवं गताना सप्तजननामर्षीणां तपःप्रभावं संवर्ण्य तेषामिदमाश्रमस्थानमित्युपसंहरन्सुग्रीवः कल्याणकामैरवश्यप्रणम्यानेतान्प्रणमेति रामं प्रवर्तयति । तथा रामस्तान्प्रणम्य सर्वैः समं किष्किन्धां जगाम ।

[3]ऋष्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः । जगाम सह सुग्रीवो वालिविक्रमपालिताम् ॥ १ ॥
समुद्यम्य महच्चापं रामः काञ्चनभूषितम् । शरांश्चादित्यसंकाशान्गृहीत्वा रणसाधकान् ॥ २ ॥
अग्रतस्तु ययौ तस्य राघवस्य महात्मनः । सुग्रीवः संहतग्रीवो [5]लक्ष्मणस्य महाबलः ॥ ३ ॥
पृष्ठतो हनुमान्वीरो नलो नीलश्च [6]वीर्यवान् । तारश्चैव महातेजा हरियूथपयूथपः ॥ ४ ॥
ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः । प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥

गो० टी०—तस्मादिति । मा मा शङ्कीरिति मा मां प्रति मा शङ्कीः शङ्कां मा कुरु व्यत्ययेन परस्मैपदम् ॥ ३७ ॥

रा० टी०—अभिज्ञानमिति । येन द्वन्द्वयुद्धमुपागतं त्वामहमभिजानीयां भ्रातृमरणजनितं महत् दुःखमस्मिन्न भविष्यतीति निश्चिनुयां तत् आत्मनोऽभिज्ञानम् अतिशोकाद्रुत्पत्त्यभिज्ञापकचिह्नं कुरुष्व ॥ ३८ ॥

गो० टी०—अभिज्ञानमिति । अभिज्ञानं चिह्नम् ॥ ३८ ॥

३९ ] ति० टी०—गजपुष्पी नागपुष्पी लता । शुभं सम्यग्लक्षयतीति शुभलक्षणा ताम् ॥ ३९ ॥

रा० टी०—तत्प्रकारमाह—गजपुष्पीमिति । हे लक्ष्मण ! फुल्लां शुभलक्षणामतिशोकाद्रुत्पादकत्वेन शुभप्रापिकां गजपुष्पीं महात्मनः सुग्रीवस्य कण्ठे कुरु । एतेन गजपुष्पीनिबद्धानामतिशोको न भवतीति सूचितम् ॥ ३९ ॥

गो० टी०—गजपुष्पीमिति । गजपुष्पी नागपुष्पी नाम लताम् ॥ ३९ ॥

४० ] ति० टी०—व्यसर्जयन्निसृष्टवान् समर्पितवानित्यर्थः ॥ ४० ॥

रा० टी०—तत इति । ततः रामाज्ञापनानन्तरं गिरितटे जातां कुसुमायुतां पुष्पैर्व्याप्तां तां शुभां गजपुष्पीं लक्ष्मण उत्पाट्य तस्य कण्ठे व्यसर्जयत् अबध्नात् ॥ ४० ॥

गो० टी०—तत इति । व्यसर्जयत् अमोचयत् बद्धवान् ॥ ४० ॥

४१ ] ति० टी०—लतया शुक्लपुष्पनागपुष्पीलतया संध्यारागसहिततोयद इव स्वयं बलाकानां मालयेव तया लतया शुशुभे ४१

४२ ] ति० टी०—रामवाक्ये तत्करणे समाहित उद्युक्तः॥ ४२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वादशः सर्गः ॥ १२ ॥

रा० टी०—स इति । स सुग्रीवः कण्ठसक्तया कण्ठे संबद्धया तया गजपुष्पीलतया बलाकानां मालया ससंध्यः संध्यारागसहितः तोयदो मेघ इव शुशुभे ॥ ४१ ॥

रा० टी०—विभ्राजमान इति । रामवाक्यसमाहितः रामवचने आस्थावान् वपुषा विभ्राजमानः सुग्रीवः रामेण सह किष्किन्धां पुनर्जगाम ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्वादशः सर्गः ॥ १२ ॥

गो० टी०—स तयेत्यादि । विपरीत इवेत्याद्युपरि विभीयते । ससंध्य इव तोयद इति सुग्रीवस्य हेमपिङ्गलत्वादिति भावः ॥ ४१ ॥ ४२ ॥

अस्मिन् सर्गे सार्धद्विचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

१–३ ] ति० टी०—ऋष्यमूकादिति ॥ १–३ ॥

४–५ ] ति० टी०—संहतग्रीवो दृढबन्धबद्धग्रीवः हरियूथपानामपि यूथं पाति तादृशः ॥ ४ ॥ ५ ॥

१ आकुलामिति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ वालिपालितामिति गो. पाठः । ४ ऋश्यश्चेति गो. पाठः । ५ लक्ष्मणश्चेति गो. पाठः । ६ वानर इति गो. पाठः ।

कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा । शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६ ॥
वैदूर्यविमलैस्तोयैः पद्मैश्चाकोशकुड्मलैः । शोभितान्सजलान्मार्गे तटाकांश्चावलोकयन् ॥ ७ ॥
कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः । चक्रवाकैस्तथा चान्यैः शकुनैः प्रतिनादितान् ॥ ८ ॥
मृदुशष्पाङ्कुराहारान्निर्भयान्वनचारिणाम् । चरतां सर्वतः पश्यन्स्थलीषु हरिणान्स्थितान् ॥ ९ ॥
तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् । घोरानेकचरान्वन्यान्द्विरदान्कूलघातिनः ॥ १० ॥
मत्तान्गिरितटोत्कुष्टान्पर्वतानिव जङ्गमान् । वानरान्द्विरदप्रख्यान्महीरेणुसमुक्षितान् ॥ ११ ॥
वने वनचरांश्चान्यान्खेचरांश्च विहङ्गमान् । पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२ ॥
तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः । द्रुमषण्डवनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३ ॥
एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते । मेघसंघातविपुलं पर्यन्तकदलीवृतम् ॥ १४ ॥

---

६ ] ति० टी०—कन्दराणि मन्दिराकारपर्वतविवराणि निर्दराणि शिलाविवराणि गुहा देवखातगिरिबिलानि दर्यो गह्वराणि ॥ ६ ॥

७ ] ति० टी०—आकोशमग्रभागपर्यन्तं कुड्मलैर्मुकुलरूपैस्तैर्मेषद्विकसितैः पद्मैः शोभितानवलोकयन् ॥ ७ ॥

८ ] ति० टी०—कारण्डैः कारण्डवैः ॥ ८ ॥

रा० टी०—किष्किन्धाप्रस्थानानन्तरकालिकं रामवृत्तान्तमाह—ऋष्यमूकादित्यादिभिः । सहग्रीवः सुग्रीवसहितः लक्ष्मणाग्रजो रामः वालिविक्रमपालितां किष्किन्धाम् । ऋष्यमूकात् जगाम ॥ १ ॥

रा० टी०—समिति । रामः काञ्चनभूषितं महत् चापं समुद्यम्य रणसाधकान् शरान् गृहीत्वा अग्रतः प्रथमं ययौ । तस्य राघवस्य रामस्य पृष्ठतः सुग्रीवप्रभृतिर्ययौ । संहतग्रीव इत्यस्य संहता संबद्धा ग्रीवा यस्य स इत्यर्थः । श्लोकत्रयमेकान्वयि ॥ २–४ ॥

गो० टी०—अथ पुनः किष्किन्धाप्रवेशस्त्रयोदशे—ऋष्यमूकादित्यादि ॥ १ ॥ २ ॥

गो० टी०—अग्रत इति । संहतग्रीवः निबिडकण्ठ इत्यर्थः । इदं स्वरूपकीर्तनं गजपुष्पीबन्धनेन वा ॥ ३ ॥ ४ ॥

रा० टी०—ते इति । वृक्षादीन् वीक्ष्यमाणाः तत्र कन्दराणि मन्दिरवत्प्रकाशमानानि गिरिविवराणि निर्झराणि पाषाणविवराणि गुहाः देवनिलयीभूतगिरिविवराणि दर्यः भयंकरगुहाः इति न पौनरुक्त्यं वैदूर्यविमलैः वैदूर्यवत्स्वच्छैः पर्णैः उपलक्षितैः आकोशकुड्मलैः अग्रभागपर्यन्तं कुड्मलविशिष्टैः पद्मैः शोभितान् सजलान् जलसहितान् तटाकान् अवलोकयन् अवलोकयन्तः कारण्डाद्यैः शकुनैः प्रतिनादितान् मृदुशष्पाङ्कुराहारान् कोमलतृणाङ्कुरभक्षणकर्तॄन् स्थलीषु अकृत्रिमभूमिषु स्थितान् हरिणांश्च पश्यन्पश्यन्तः शुक्लदन्तविभूषितान् घोरान् भयङ्करान् एकचरान् सहायराहित्येन गमनकर्तॄन् कूलघातिनः अत एव तटाकवैरिणः चरतो गच्छतः द्विरदान् गजान् मत्तान् मदविशिष्टान् गिरितटोत्कृष्टान् गिरितटाः उत्कृष्टाः विदारिताः यैस्ते तान् जङ्गमान् गच्छतः पर्वतानिव महीरेणुसमुत्थितान् महीरेणुव्याप्तशरीरान् अत एव द्विरदप्रख्यान् गजसदृशान् अन्यांश्च वनचरान् खेचरान् विहङ्गमांश्च पश्यन्तस्ते रामादयः सुग्रीववशवर्तिनश्च त्वरिताः सन्तः जग्मुः । श्लोकाष्टकमेकान्वयि ॥ ५–१२ ॥

गो० टी०—अथ कार्यसिद्धिसूचकपदार्थाद्भवविशेषं दर्शयति—ते वीक्षमाणा इत्यादिना । कन्दराणि गृहाकारगुहाविशेषान् । निर्दराणि स्फुटितशैलरन्ध्रविशेषान् । गुहाः देवखातबिलानि । दरीः गुहाविशेषान् । आकोशकुड्मलैः ईषद्विकसितमुकुलैः । कारण्डैः 'कारण्डको महापक्षी' इति वैजयन्ती । सारसैः सरोनिवासैः शकुनैरुपनादितान् तटाकान् व्यलोकयन्निति पूर्वेणान्वयः ॥ ६–८ ॥

९ ] ति० टी०—शष्पं तृणम् ॥ ९ ॥

गो० टी०—मृदुशष्पेति । चरतः स्थितांश्चापश्यन् ॥ ९ ॥

१० ] ति० टी०—कूलघातित्वादेव तटाकवैरित्वम् । एकचरानसहायचरान् ॥ १० ॥

११–१२ ] ति० टी०—द्विरदप्रख्यान्गजतुल्यान् ॥ ११ ॥ १२ ॥

गो० टी०—तटाकवैरिण इत्यादि । तटाकवैरिणः कलुषीकरणात् एकचरान् एकाकिनः द्विरदाः द्विदन्ता इति चतुर्दन्तव्यावृत्तिः । गिरितटोत्कृष्टान् उल्लिखितगिरितटान् ॥ १०–१२ ॥

१३ ] ति० टी०—द्रुमाणां षण्डः समूहो यस्मिंस्तादृशं वनम् १३

रा० टी०—तेषामिति । गच्छतां तेषां मध्ये रघुनन्दनः द्रुमषण्डवनं द्रुमसमूहनिबिडकाननं दृष्ट्वा सुग्रीवमब्रवीत् 'षण्डं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्' इति मेदिनी ॥ १३ ॥

गो० टी०—तेषां त्विति । द्रुमषण्डं वृक्षषण्डमयमिति लतागुल्मव्यावृत्तिः ॥ १३ ॥

१४ ] ति० टी०—वृक्षषण्डो वृक्षसमूहः । मेघेत्याद्युत्तरान्वयि ॥ १४ ॥

---

१ पर्णैरिति गो. पाठः । २ व्यलोकयन्निति गो. पाठः । ३ उपेति गो. पाठः । ४ गोचरानिति गो. चारिण इति रा. पाठः । ५ चरतः सर्वतोऽपश्यन्निति गो. रा. पाठः । ६ कुलेति गो. पाठः । ७ तटोत्कृष्टानिति गो. पाठः । ८ वारणान्वारिदप्रख्यानिति गो. पाठः । ९ समुत्क्षितानिति गो. समुत्थितानिति रा. पाठः । १० द्रुमषण्डमिति गो. पाठः । ११ विपुलः पर्यन्तकदलीवृत इति गो. पाठः ।

किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं मम। कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः। गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६ ॥
एतद्राघव विस्तीर्णमाश्रमं श्रमनाशनम्। उद्यानवनसंपन्नं स्वादुमूलफलोदकम् ॥ १७ ॥
अत्र सप्तजना नाम मुनयः शंसितव्रताः। सप्तैवासन्नधःशीर्षा नियतं जलशायिनः ॥ १८ ॥
सप्तरात्रे कृताहारा वायुनाचलवासिनः। दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १९ ॥
तेषामेतत्प्रभावेण द्रुमप्राकारसंवृतम्। आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥
पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः। विशन्ति मोहाद्येऽप्यत्र न निवर्तन्ति ते पुनः॥ २१ ॥
विभूषणरवाश्चात्र श्रूयन्ते सकलाक्षराः। तूर्यगीतस्वनश्चापि गन्धो दिव्यश्च राघव ॥ २२ ॥
त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्येष प्रदृश्यते। वेष्टयन्निव वृक्षाग्रान्कपोताङ्गारुणो घनः ॥ २३ ॥
एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः। मेघजालप्रतिच्छन्ना वैदूर्यगिरयो यथा ॥ २४ ॥

रा० टी०–तद्वचनाकारमाह–एष इति। मेघसंघातविपुलं मेघसमूहेन व्याप्तं पर्यन्तकदलीवृतं चतुर्दिक्षु कदलीसंयुक्तम् एष वृक्षषण्डः आकाशे मेघ इव प्रकाशते । सामान्ये नपुंसकम् मेघसंघातेत्याद्युत्तरान्वयि वा, तत्र वनं विशेष्यं बोध्यम् ॥ १४ ॥

गो० टी० एष इति। मेघ इवेति नीलवर्णे उपमा १४–१७

१५–१६ ] ति० टी०–त्वया कर्त्रा कौतूहलस्यौत्सुक्यस्यापनयनं निवर्तनं कर्तुं कारयितुमिच्छामि ॥ १५ ॥ १६ ॥

रा० टी०–किमिति। एतत् एतादृशं किं कथम् एतज्ज्ञातुमहमिच्छामि। तत्र हेतुः यतो मे कौतूहलम् एतत्कारणश्रवणविषयकोत्कटेच्छा अतस्त्वया कौतूहलापनयनं कर्तुमिच्छामि १५

रा० टी०–तस्येति । सुग्रीवः गच्छन्नेव राघवस्य वचः श्रुत्वा तद्वनं वनप्रवृद्धिकारणम् आचचक्षे ॥ १६ ॥

१७ ] ति० टी०–उद्यानैरुपवनैश्च संपन्नं युक्तम् ॥ १७ ॥

रा० टी०–तद्वचनाकारमाह–एतदिति । उद्यानवनसंपन्नमुद्यानवनैर्निबिडं स्वादुमूलफलोदकं स्वादुविशिष्टमूलादियुक्तम् अत एव श्रमनाशनं विस्तीर्णमेतदाश्रममवेहीति शेषः ॥ १७ ॥

१८ ] ति० टी०–सप्तजना नाम सप्तजना इति प्रसिद्धा अधःशीर्षा भूप्रतिष्ठापितशिरसः ॥ १८ ॥

रा० टी०–अत्रेति। संशितव्रतास्तीक्ष्णव्रतपरायणाः नियतमधःशीर्षाः जलशायिनः विहितजलशयनादिमन्तः सप्त तत्संख्याकाः सप्तजना नाम मुनयः आसन् ॥ १८ ॥

गो० टी०–अत्रेत्यादि ॥ १८ ॥

१९ ] ति० टी०–केवलवायुनैव सप्तरात्रे गते कृताहाराः सप्तभिर्वर्षशतैः सकलेवरा दिवं याताः ॥ १९ ॥

रा० टी०–सप्तजननाम्नि निमित्तं बोधयन्नाह–सप्तेति। सप्तरात्रे व्यतीते सतीति शेषः, वायुना कृताहाराः अचलवासिनः निश्चलनिवसनशीलाः मुनयः सकलेवराः शरीरसहिताः सप्तभिः वर्षशतैः दिवं याताः ॥ १९ ॥

गो० टी०–सप्तरात्रेति । सप्तरात्रकृताहाराः वायुना सप्तरात्रस्य एकवारं कृताहाराः सप्तभिर्वर्षशतैरित्यन्वयः ॥ १९ ॥

२०] ति०टी०–एतदाश्रमम्। अर्धर्चादिराश्रमशब्दः ॥२०॥

रा० टी०–तेषामिति । तेषां सप्तजनानां प्रभावेण तेजसा द्रुमप्राकारसंवृतं द्रुमरूपप्राकारप्रावृतं सेन्द्रैः सुरासुरैरपि सुदुराधर्षं तेषामेतदाश्रमम् अवेहीति शेषः ॥ २० ॥

गो० टी०–तेषामित्यादि ॥ २० ॥

२१ ] ति० टी०–वर्जयन्ति न प्रविशन्ति पुनर्न निवर्तन्ति अत्रैव म्रियन्त इत्यर्थः ॥ २१ ॥

रा० टी०–पक्षिण इति। एतदाश्रमं पक्षिणः अन्ये च वनचारिणः वर्जयन्ति अतितेजोदर्शनजनितभिया न गच्छन्तीत्यर्थः। मोहात् अविवेकात् अत्र अस्मिन् आश्रमे ये विशन्ति ते पुनर्न निवर्तन्ति निवर्तन्ते ॥ २१ ॥

गो० टी०–विशन्तीति। ये मोहादत्राश्रमे विशन्ति न ते निवर्तन्ते किंतु तत्रैव नश्यन्तीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०–सकलाक्षराः कलाक्षराभिर्मधुराक्षराभिर्वाग्भिः सहिता भूषणरवाः अप्सरसामिति शेषः । दिव्यो गन्धश्च तासामेवानुभूयत इति शेषः ॥ २२ ॥

रा० टी०–विभूषणेति। सकलाक्षराः मधुराक्षरसहिताः विभूषणरवाः विभूषणस्वनाः तूर्यगीतस्वनाश्च श्रूयन्ते दिव्यो गन्धश्च अनुभूयते इति शेषः । एतेन तत्रत्यानामतिसुखं सूचितम् ॥ २२ ॥

गो० टी०–दिवं गताः शरीरान्तरेण पुनरत्रागत्याप्सरोभिः क्रीडन्तीत्याशयेनाह—विभूषणेत्यादिना। भूषणरवेण नृत्तमुपलक्ष्यते। सकलाक्षरा इति गीतस्वनविशेषणम्। तूर्यशब्दोऽत्र गीतभिन्नवाद्यपरः ॥ २२ ॥

२३–२४ ] ति० टी०–न केवलं भोगभूमिः, कर्मभूमिरपीत्याह–त्रेतेत्यादि । कपोताङ्गवदरुणो धूसरो घन इव धूमो वृक्षाग्रान्वेष्टयन्व्याप्नुवन्दृश्यते ॥ २३ ॥ २४ ॥

१ इह मे इति गो. पाठः। २ रात्रकृताहारा इति गो. पाठः। ३ वनेति गो. पाठः। ४ एवंप्रभावानामिति गो. पाठः। ५ निवर्तन्ते नेति गो. पाठः। ६ तत्रेति गो. पाठः। ७ स्वनाश्चात्रेति गो. पाठः। ८ ह्यत्र प्रकाशत इति गो. पाठः।

कुरु प्रणामं धर्मात्मंस्तेषामुद्दिश्य राघव । लक्ष्मणेन सह भ्रात्रा प्रयतः संहताञ्जलिः ॥ २५ ॥
प्रणमन्ति हि ये तेषामृषीणां भावितात्मनाम् । न तेषामशुभं किंचिच्छरीरे राम विद्यते ॥ २६ ॥
ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः । समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७ ॥
अभिवाद्य च धर्मात्मा रामो भ्राता च लक्ष्मणः । सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८ ॥
ते गत्वा दूरमध्वानं तस्मात्सप्तजनाश्रमात् । ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९ ॥
ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदितोग्रतेजसः ।
पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः पुनरागतास्त्विह ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः ।

रामादयः किष्किन्धान्तिकदेशवर्तिवने वृक्षैरात्मानमाच्छाद्यावतस्थुः । सुग्रीवो वालिवधप्रतिज्ञा साधयितुं रामं प्रार्थयते । वालिवधप्रत्ययमुत्पादयन्रामः सुग्रीवं वालिनमाह्वातुं प्रेरयति । प्रगर्जन्सुग्रीवो वालिनं योद्धुमाह्वयते ।

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन्गहने वने ॥ १ ॥
विसार्य सर्वतो दृष्टिं कानने काननप्रियः । सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २ ॥
ततस्तु निनदं घोरं कृत्वा युद्धाय चाह्वयत् । परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥ ३ ॥

रा० टी०—त्रेतेति । त्रेताग्नयः । त्रेतायुगस्थापिता वह्नयः गार्हपत्यादयो वा दीप्यन्ते अत एव कपोताङ्गारुणः कपोताङ्गवद्धूसरवर्णविशिष्ट अत एव घन इव मेघसदृशः एष धूमः वृक्षाग्रान्वेष्टयन्निव प्रदृश्यते ॥ २३ ॥

गो० टी०—त्रेतेति ॥ २३ ॥

रा० टी०—एते इति । धूमसंसक्तमस्तकाः धूमाविष्टाग्रभागविशिष्टाः एते वृक्षा मेघजालप्रतिच्छन्नाः मेघसमूहैः आच्छादिताः वैदूर्यगिरय इव प्रकाशन्ते ॥ २४ ॥

गो० टी०—त्रेताग्निदीपने लिङ्गमाह—धूमो हीति । घनः निबिडः ॥ २४ ॥

२५ ] ति० टी०—तेषामुद्दिश्य तानुद्दिश्येति यावत् ॥ २५ ॥

रा० टी०—कुर्विति । हे धर्मात्मन् ! तेषां सप्तजनानां प्रीतिमिति शेषः, उद्दिश्य लक्ष्मणेन सह संहताञ्जलिः सन् प्रणामं कुरु ॥ २५ ॥

गो० टी०—कुर्विति । समुद्दिश्य किंचित्फलमुद्दिश्य तेषां प्रणामं कुरु ॥ २५ ॥

२६ ] ति० टी०—तेषां प्रणमन्ति तान्प्रणमन्ति ॥ २६ ॥

रा० टी०—तत्फलमाह—प्रणमन्तीति । हे राम ! भावितात्मनां परिशीलितपरमात्मनामृषीणां ये प्रणमन्ति तेषां शरीरे अशुभं शुभविरोधि शोकादिकमित्यर्थः, न विद्यते भवति । ऋषीणामित्यत्र संबन्धसामान्यविवक्षया षष्ठी ॥ २६ ॥

गो० टी०—प्रणमन्तीति । शरीरे अशुभं व्याध्यादिकम् २६ ॥

२७ ] ति० टी०—महात्मानो महात्मनस्तानृषीनुद्दिश्याभ्यवादयन्नमस्कृतवान् ॥ २७ ॥

रा० टी०—तत इति । ततः सुग्रीवोक्तिश्रवणानन्तरं महात्मानः महात्मनः ऋषीन्समुद्दिश्य अभ्यवादयत् ॥ २७ ॥

गो० टी०—ततो राम इति । महात्मानः महात्मनः ॥ २७ ॥

२८-२९ ] ति० टी०—वानरा हनुमदादयः । एतत्कथाप्रभादिकं वाल्यायुःसमाप्तिकाललाभाय ॥ २८ ॥ २९ ॥

रा० टी०—अभिवाद्येति । रामादयः अभिवाद्य प्रणम्य संहृष्टमानसाः सन्तः जग्मुः ॥ २८ ॥

रा० टी०—ते इति । ते रामादयः सप्तजनाश्रमात् दूरमध्वानं गत्वा किष्किन्धां ददृशुः ॥ २९ ॥

गो० टी०—अभिवाद्येति । अनेन सर्वेषामभिवादनमन्वयते । अत्राभिवादनं नमस्कारः तेषां परोक्षत्वात् । अनेन सज्जनप्रणामो विजयावह इत्ययमर्थः सूचितः । तदिदं द्योत्यते उपरितनश्लोके उदिताग्र्यतेजस इति । प्रणामेनेति भावः ॥ २८ ॥ २९ ॥

३० ] ति० टी०—शस्त्राणि वानराणां वृक्षं शिलादि ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तत इति । उदितोग्रतेजसः रामानुजादयः शस्त्राणि प्रगृह्य सुरेशात्मजवीर्यपालितां वालिपराक्रमरक्षितां पुरीं किष्किन्धां पुनरागताः ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०—तत इति । सह युगपत् ॥ ३० ॥

इतिश्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१-३ ] ति० टी०—गहने निबिडे दुष्प्रवेशे ॥ १-३ ॥

१ तान्समुद्दिश्यति गो. पाठः । २ संयताञ्जलिरिति गो. पाठः । ३ मुनीनामिति गो. पाठः । ४ उदिताग्र्येति गो. पाठः । ५ वालिपालितामिति गो. पाठः । ६ विचार्येति गो. पाठः । ७ स इति गो. पाठः ।

गर्जन्निव महामेघो वायुवेगपुरःसरः । अथ बालार्कसदृशो दृप्तसिंहगतिस्ततः ॥ ४ ॥
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् । हरिवागुरया व्याप्तां तदा काञ्चनभूषणाम् ॥ ५ ॥
प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् । प्रतिज्ञा या कृता वीर त्वया वालिवधे पुरा ॥ ६ ॥
सफलां कुरु तां क्षिप्रं लतां काल इवागतः । एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ॥ ७ ॥
तमेवोवाच वचनं सुग्रीवं शत्रुसूदनः । कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ॥ ८ ॥
लक्ष्मणेन समुत्पाट्य एषा कण्ठे कृता तव । शोभसेऽप्यधिकं वीर लतया कण्ठसक्तया ॥ ९ ॥

रा० टी०–किष्किन्धासमीपप्रस्थानानन्तरकालिकं वृत्तान्तमाह–सर्वे इति । सर्वे रामादयः किष्किन्धां गत्वा वृक्षैरात्मानमाच्छाद्य घर्मनिवारणार्थं वृक्षाधः स्थित्वेत्यर्थः, गहने वने व्यतिष्ठन् ॥ १ ॥

रा० टी०–विसार्येति । काननप्रियः सुग्रीवः सर्वतो दृष्टिं विसार्य क्रोधं भृशमत्यन्तमाहारयत् प्राप्नोत् ॥ २ ॥

गो० टी०–अथ वाल्याह्वानभीतं सुग्रीवं निश्वासयति रामश्चतुर्दशे—सर्वे इत्यादि ॥ १ ॥ २ ॥

रा० टी०–तत इति । ततः क्रोधप्राप्त्यनन्तरं परिवारैः स्वपरिकरैः परिवृतः सुग्रीवः युद्धाय युद्धं कर्तुमम्बरमाकाशं भिन्दन्निव घोरं निनदं शब्दं कृत्वा आह्वयत् ॥ ३ ॥

गो० टी०–तत इत्यादि । वायुवेगपुरःसरः वायुवेगान्मेघे अधिको ध्वनिरिति प्रसिद्धिः । यतः वायुवेगपुरःसरः अत एव गर्जन्महामेघ इव स्थितः, परिवारैः परिवृतः सः नादैरम्बरं भिन्दन्निव घोरं निनदं कृत्वा युद्धायाह्वयत् वालिनमिति शेषः ३॥४

४ ] ति० टी०–वायोर्वेगः पुरःसरो यस्य स महामेघ इव । बालार्कसदृशो वर्णेन प्रतापेन च ॥ ४ ॥

रा० टी०–गर्जन्निति । वायुवेगपुरःसरः वायुवेगेन वेगितः मेघ इव गर्जन् बालार्कसदृशः आरुण्येन औदयकालिकसूर्यसदृशः दृप्तसिंहगतिः दृप्तसिंहगमनसदृशगमनवान् सुग्रीवः क्रियादक्षं रामं दृष्ट्वा अब्रवीत् । किं च वायुवेग एव पुरःसरः अधिक इत्यर्थः, यद्वेगात् सः अतिवेगवानित्यर्थः, सुग्रीवविशेषणम् । सार्धश्लोक एकान्वयी ॥ ४ ॥

५ ] ति० टी०–हरिरूपवागुरया व्याप्तां वागुराकारतया स्थितहरिकाम् ॥ ५ ॥

रा० टी०–तद्वचनाकारमाह—हरीति । हरिवागुरया वानररूपमृगबन्धकपाशेन व्याप्तां ध्वजयन्त्राढ्यां ध्वजैः यन्त्रैः शतघ्न्यादिभिराढ्यां किष्किन्धां पुरीं वयं प्राप्ताः स्म अतः हे वीर ! वालिवधे वालिवधार्थं या प्रतिज्ञा त्वया कृता तां प्रतिज्ञां लतां पुष्पितवल्लरीम् आगतः प्राप्तः कालः फलप्रापकसमय इव त्वं सफलां कुरु वालिनं जहीत्यर्थः । अर्धचतुष्टयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–हरीति । हरिवागुरया हरय एव वागुरा मृगग्रहणपाशः तया व्याप्ताम् इतरदुष्प्रवेशामित्यर्थः, यद्वा हरिवागुरया हरिग्रहः जात्येकवचनम् । 'वागुरा मृगशालिके' इति वैजयन्ती ॥ ५ ॥

६ ] ति० टी०–ध्वजैर्यन्त्रैः प्राकारयुद्धापेक्षितैराढ्याम्॥६॥

गो० टी०–प्रतिज्ञेति । आगतः कालः फलकालः॥६॥७॥

७ ] ति० टी०–यथा आगतः कालो ऋतुविशेषरूपो लतां प्राक्सपुष्पां ततः सफलां करोति, तथा स्वकृतप्रतिज्ञां त्वमपि सफलां कुर्वित्यर्थः ॥ ७ ॥

रा० टी०–एवमिति । सुग्रीवेण एवमुक्तः धर्मात्मा राघवः सुग्रीवमुवाच ॥ ७ ॥

८–९ ] ति० टी०–गजसाह्वया गजेन समाना आह्वा नाम यस्यास्तया ॥ ८ ॥ ९ ॥

रा० टी०–तद्वचनाकारमाह–कृतेति । यतः एषा लता लक्ष्मणेन समुत्पाट्य तव कण्ठे कृता अतः अनया गजसाह्वया गजः गजशब्दः साह्वयः आह्वयत्वं प्राप्तः संज्ञेत्यर्थः, यस्यास्तया कण्ठसक्तया अनया लतया कृताभिज्ञानचिह्नस्त्वं नक्षत्रमालया विपरीतः संयुक्तः आकाशे सूर्य इव शोभसे अभूतोपमैषा । अर्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–कृताभिज्ञानचिह्न इत्यादि । अभिज्ञापकं चिह्नम् अभिज्ञानचिह्नं कृतमभिज्ञानचिह्नं तस्य स तथा । गजपुष्प्यामेव गजसाशब्दः, यद्वा गजेन समा आह्वा आख्या यस्याः सा गजसाह्वा तया शोभस इति । अत्राहुः–विपरीते रात्रौ । सूर्यः पूर्णचन्द्रः 'परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी । राकामध्यगतश्चन्द्रः सूर्य इत्यभिधीयते ॥' इति वचनात् । यद्वा नक्षत्रमालया विपरीतः विशेषेण परिवृतः । सूर्य इव चन्द्र इव । अन्यशब्देनान्यस्याभिधानम् कथमिति चेत् "नवो नवो भवति" इति श्रुतौ अह्नां केतुः सूर्यः चन्द्राप्यायकत्वाच्चन्द्रमा इत्युच्यते । तद्वच्चन्द्रोऽपि सूर्यकिरणानुप्रवेशायत्तप्रकाशविशेषवत्त्वात् सूर्यशब्देनाभिधीयत इति । यद्वा विशेषेण परीतो विपरीतः नक्षत्रावृतः सूर्य इवेत्यभूतोपमा । विपरीत इत्यनेन तात्कालिकतेजोवत्त्वमुच्यते । यद्वा विपरीते विपरीतकाले सूर्यो नक्षत्रमालयेवानया लतया शोभसे । उत्पातकाले हि मध्याह्ने नक्षत्राणि दृश्यन्त इत्युच्यते ज्योतिःशास्त्रे—'रात्राविन्द्रधनुर्दर्शो दिवा नक्षत्रदर्शने । तद्राष्ट्रनाथनाशः स्यादिति गर्गस्य भाषितम्' इति । अतः भाविवालिवधरूपफलानुसारेण तेजसा ज्वलन्

१ तदेति गो. पाठः । २ तस्येति गो. पाठः । ३ तोरणामिति गो. पाठः । ४ अथेति गो. पाठः । ५ शेषेति गो. पाठः ।

विपरीत इवाकाशे सूर्यो नक्षत्रमालया । अद्य वालिसमुत्थं ते भयं वैरं च वानर ॥ १० ॥
एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे । मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् ॥ ११ ॥
वाली विनिहतो यावद्वने पांसुषु [1]चेष्टते । यदि दृष्टिपथं प्राप्तो जीवन्स विनिवर्तते ॥ १२ ॥
ततो दोषेण [2]मा गच्छेत्सद्यो गर्हेच्च [3]मां भवान् । प्रत्यक्षं सप्त ते [4]ताला मया बाणेन दारिताः ॥ १३ ॥
[5]ततो वेत्सि बलेनाद्य [6]वालिनं निहतं [6]रणे । अनृतं नोक्तपूर्वं मे [7]चिरं कृच्छ्रेऽपि तिष्ठता ॥ १४ ॥
धर्मलोभपरीतेन न च वक्ष्ये कथंचन । सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ॥ १५ ॥
प्रसूतं कलमक्षेत्रं वर्षेणेव शतक्रतुः । तदाह्वाननिमित्तं [8]च वालिनो हेममालिनः ॥ १६ ॥

सुग्रीवः शुभ्रपुष्पावलीशोभमानगजपुष्पीमालया उत्पातकाले नक्षत्रमालया सूर्य इव बभावित्यस्मदाचार्योक्तम् । अत्राहुरित्यारभ्य सूर्यशब्देनाभिधीयत इत्यन्तं गोविन्दराजोक्तमेव रामानुजीये दृश्यते विशेषस्त्वयम् ॥ ८ ॥ ९ ॥

१० ] ति० टी०–नक्षत्रमालयाऽऽकाशे विपरीतो विशेषेण परीतो वेष्टितः सूर्य इव । कविविकल्पितोपमालीकोपमा । तेन तादृशः सूर्यो यदि भवेत्तदा तरुणार्कवर्णस्य कण्ठसक्तशुक्लपुष्पमालस्योपमा स्यादित्यतिशयोक्तिरत्र व्यङ्ग्या । केचित्तु विपरीते इति सप्तम्यन्तम् 'परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी । पौर्णमासीगतश्चन्द्रः सूर्य इत्यभिधीयते ॥' इति व्याचक्षते ॥ १० ॥

रा० टी०–अद्येति । एकेन बाणमोक्षेण शरप्रक्षेपेण वालिसमुत्थं ते भयं वैरं च प्रमोक्ष्यामि निवर्तयिष्यामि ॥ १० ॥

गो० टी०–अद्येति । प्रमोक्ष्यामि प्रमोचयिष्यामि । अनिट्त्वमार्षम् ॥ १० ॥

११ ] ति० टी०–प्रमोक्ष्यामि प्रमोचयिष्यामि ॥ ११ ॥

रा० टी०–ममेति । भ्रातृरूपिणं वैरिणं त्वं दर्शय । तत्प्रयोजनमाह–यावत्साकल्येन विनिहतः मद्बाणैर्हिंसितः वाली पांसुषु धूलिषु चेष्टते चेष्टेत ॥ ११ ॥

गो० टी०–ममेति । यावच्चेष्टते वेष्टिष्यते "यावत्पुरानिपातयोर्लट्" इति लट् ॥ ११ ॥

१२ ] ति० टी०–चेष्टते लुठिष्यति । मद्दर्शनानन्तरमेवेति शेषः ॥ १२ ॥

रा० टी०–यदीति । दृष्टिपथं प्राप्तः मया दृष्टः स वाली यदि विनिवर्तते तदा दोषेणोपलक्षितं मां भवान् गच्छेत् जानीयात् अत एव गर्हेत् ॥ १२ ॥

गो० टी०–यदीति । स वाली दृष्टिपथं प्राप्तः सन् पुनर्जीवन्यदि विनिवर्तते ततः तदा दोषेणोपलक्षितं मा माम् आगच्छेत् सद्यो मा मां भवान् गर्हेच्च गर्हेत च । यदि दृष्टमात्रेण तं न हन्यां तदा मत्समीपमागच्छ मां गर्हस्व चेत्यर्थः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०–यदि मद्दृष्टिपथं गतो जीवन्स विनिवर्तते ततस्तदा मा मां दोषेणोपलक्षितं गच्छेदवगच्छेन्मां गर्हेच्च । किं च मद्विक्रमस्य दृष्टत्वाद्वालिनं निहतमेवावेहीत्याह–प्रत्यक्षमिति ॥ १३ ॥

रा० टी०–वालिवधे संशयस्त्वया न कार्य इत्याह–प्रत्यक्षमिति । ते प्रत्यक्षं सप्त सालाः मया बाणेन दारितास्ततो हेतोः रणे मया निहतं वालिनं त्वं वेत्सि अवेदीः " वर्तमानसामीप्ये " इति भूते लट् । एतेन तव विस्मर्तव्यमिति सूचितम् ॥ १३ ॥

१४ ] ति० टी०–वेत्सि विद्धि । कृच्छ्रेऽपि प्राणसंकटेऽपि मे मया ॥ १४ ॥

रा० टी०–ननु तव वालिवधयोग्यसामर्थ्यातिशये न संशयः किं तु तत्कर्तृत्वे संशय इत्यत आह–अनृतमिति । हे वीर ! कृच्छ्रे अस्माज्यपितृगुर्वादिपरस्परविरुद्धोक्तिसंशयजनितकष्टेऽपि तिष्ठता धर्मलोभपरीतेन धर्मसंरक्षणवाञ्छायुक्तेन मया अनृतं नोक्तपूर्वम् अत एव न च कदाचन वक्ष्ये अतः प्रसूतं शतक्रतुविश्वासेन आरोपितं कलमक्षेत्रं क्षेत्रशालिनं शतक्रतुरिव प्रतिज्ञां स्वोक्तवालिवधनिश्चायकवचनं सफलां वालिवधरूपफलसहितां करिष्यामि अतः संभ्रमं भयं जहि । अर्धचतुष्टयमेकान्वयि ॥ १४ ॥ १६ ॥

गो० टी०–अनृतमिति । मे मया "ते मयावेकवचनस्य" इत्येतत्तृतीयायामप्यार्षे दृश्यते । अतस्तद्विशेषणेऽपि तृतीयाप्रयोगः । धर्मलोभपरीतेन लोभो लब्धस्य त्यागासहिष्णुता । धर्महान्यसहिष्णुनेत्यर्थः ॥ १४ ॥

१५ ] ति० टी०–धर्मलोभेन धर्मलिप्सया परीतेन व्याप्तचित्तेनेति पूर्वान्वयि ॥ १६ ॥

गो० टी०–सफलामिति । संभ्रमं संशयकृतचाञ्चल्यं पराक्रमेण प्रतिज्ञासफलत्वकरणे दृष्टान्तमाह–प्रसूतामिति । कलमं सस्यम् ॥ १५ ॥

१६ ] ति० टी०–सफलां करिष्यामीत्यत्र दृष्टान्तः–प्रसूतमिति । अङ्कुरितमित्यर्थः । कलमक्षेत्रमिति व्रीहिक्षेत्रभित्यर्थः ॥ १६ ॥

रा० टी०–तदिति । तत् वधस्य निश्चयाद्धेतोः वालिनः

१ वेष्टत इति गो. पाठः । २ मामिति रा. पाठः । ३ मेति गो. पाठः । ४ साला इति गो.पाठः । ५ तेनावेहीति गो.पाठः । ६ तं रणे निहतं मयेति रा. पाठः । ७ मयेति गो. पाठः । ८ वीरेति गो. पाठः । ९ कलमं क्षेत्रे इति गो. पाठः । १० त्वमिति गो. पाठः ।

सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः । जितकाशी जयश्लाघी त्वया चाधर्षितः पुरात् १७॥
निष्पतिष्यत्यसंगेन वाली स प्रियसंयुगः । रिपूणां धर्षितं श्रुत्वा मर्षयन्ति न संयुगे ॥ १८ ॥
जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः । स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ॥ १९ ॥
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् । तेन शब्देन वित्रस्ता गावो यान्ति हतप्रभाः॥ २० ॥
राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः । द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ॥
पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥ २१ ॥

ततः स जीमूतकृतप्रणादो नादं ह्यमुञ्चत्त्वरया प्रतीतः ।
सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वानिलचञ्चलोर्मिः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

आह्वाननिमित्तं शब्दं कुरु येन शब्देन वानरो वाली निष्पतेद् ॥ १६ ॥

गो० टी०—तदाह्वानेति । तत्तस्मात् ॥ १६ ॥

१७ ] तिं० टी०—जितकाशी जितश्वासो जितभयो वा । त्वया आधर्षितः सन्पुरायेन निष्पतेत्तं शब्दं कुर्वित्यर्थः ॥ १७॥

रा० टी०—सोऽवश्यं पतिष्यतीत्यत्र हेतुं वदन्नाह—जितेति। जयश्लाघी स्वविजयाविषयकश्लाघावान् अत एव प्रियसंयुगः अत एव जितकाशी स्वविजयहेतुकगमनशीलः अधर्षितस्त्वया पराभवमप्राप्तः वाली असंगेन कलत्राद्यासक्तिरहितत्वेन पुरान्निष्पतिष्पति एतेन न निष्पतेच्चेत्कि करिष्यसीति शङ्का न कार्येति ध्वनितम् ॥ १७ ॥

गो० टी०—जितेति । जितेन जयेन काशते प्रकाशत इति जितकाशी ताच्छील्ये णिनिः असंगेन अविलम्बेन ॥ १७ ॥

१८ ] ति० टी०—ननु कृतेऽप्याह्वाने स्त्र्यादिसक्तो न निष्पतिष्यति तत्राह—निष्पतिष्यतीति । असंगेन स्त्र्यादिसंगपरित्यागेनेत्यर्थः । यतः प्रियसंयुगः । न मर्षयन्तीत्यस्य शूरा इति शेषः ॥ १८ ॥

रा० टी०—रिपूणामिति । रिपूणां धर्षितं प्रागल्भ्यवचनं श्रुत्वा स्वकं वीर्यं विशेषतोऽधिकं जानन्तो जनाः स्त्रीसमक्षं स्त्रीणां समीपं ज्ञात्वेति शेषः, विशेषतो न मर्षयन्ति सहन्ते ॥ १८ ॥

गो०टी०—रिपूणामिति।स्त्रीसमक्षमित्यनेन तदानीं सायंकाल इत्यवगम्यते 'प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । सायं कामेन पीड्यन्ते जन्तवो निशि निद्रया॥' इति वचनात्॥१८॥१९॥

१९ ] ति० टी०—विशेषतो न मर्षयन्तीत्यनुषङ्गः ॥१९॥

रा० टी०—स इति । सुग्रीवः रामवचः श्रुत्वा अम्बरमाकाशं निर्भिन्दन्निव क्रूरनादेन ननर्द ॥ १९ ॥

२० ] ति० टी०—गावो महान्तो वृषभाः । हतप्रभा हतशक्तयः ॥ २० ॥

२१ ] ति० टी०—राजदोषेण प्रजारक्षणाभावरूपेण राजदोषेण परैरन्यैरामृष्टा, अत एवाकुला व्याकुलाः कुलस्त्रिय इव गावो यान्ति । ग्रहा देवाः ॥ २१ ॥

रा० टी०—तेनेति । तेन सुग्रीवजनितेन शब्देन वित्रस्ता गावः राजदोषपरामृष्टाः राजदोषेण प्रजारक्षणाभावरूपराजापराधेन परामृष्टाः परैः विटैः आमृष्टाः स्प्रष्टुं वाञ्छिताः अत एव आकुला कुलस्त्रिय इव हतप्रभाः सत्यः यान्ति इतस्ततो धावन्ति रणे भग्नास्तोत्रादिना ताडिताः हया इव मृगाः द्रवन्ति च क्षीणपुण्याः ग्रहा इव खगाः भूमौ पतन्ति च । अर्धचतुष्टयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—तस्येति । हतप्रभाः भीतिविकृतमुखकान्तयः। गाव इत्यनेन गवां पुरप्रवेशकालसूचनात्तत्कृतस्य सायंतनत्वं गम्यते । राजदोषपरामृष्टाः राजदोषेण अराजकत्वरूपदोषेण परामृष्टाः परैः परपुरुषैः आमृष्टाः केशेषु गृहीताः कुलस्त्रिय इव आकुलाः गन्तव्यप्रदेशाभावेनाकुलाः ॥ २० ॥ २१ ॥

२२ ] ति० टी०—जीमूतवत्कृतप्रणादः । प्रतीतः रामे इति शेषः । शौर्ये पराक्रमकरणे विवृद्धं तेजो यस्य । सरित्पतिर्वा समुद्र इव ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

रा० टी०—तत इति। जीमूतकृतः जीमूतोऽयमिति भ्रान्तिसंपादकः प्रणादो यस्य सः शौर्येण रामसाहाय्यहेतुकप्रवृद्धशूरत्वेन विवृद्धं तेजो यस्य स त्वरया युद्धोत्साहहेतुकवेगेन प्रतीत उपलक्षितः सूर्यात्मजः सुग्रीवः अनिलचञ्चलोर्मिः सरित्पतिः समुद्र इव नादं व्यमुञ्चत् । वाशब्द इवार्थे ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किधाकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

गो० टी०—तत इति । प्रतीतः नादमोचने प्रसिद्धः । सरित्पतिर्वा समुद्र इव ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

१ बलेति गो. पाठः । २ पुरेति गो. पाठः । ३ धर्षण शूरा इति गो. पाठः । ४ तस्येति गो. नेनेति रा. पाठः । ५ गणेति गो. पाठः ।

## पञ्चदशः सर्गः ।

सुग्रीवनिनादश्रवणेन रोषाद्युद्धायोत्पततो वालिनस्तत्पत्न्या तारया हेतून्यासपुरःसरं प्रतिषेधः ।

अथ तस्य निनादं तं[1] सुग्रीवस्य महात्मनः । शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १ ॥
श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् । मदश्चैकपदे नष्टः क्रोधश्चापादितो[2] महान् ॥ २ ॥
ततो[3] रोषपरीताङ्गो वाली स[3] कनकप्रभः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥
वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निलोचनः[4] । भात्युत्पातितपद्माभः समृणाल इव ह्रदः ॥ ४ ॥
शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः । वेगेन च[6] पदन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥
तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा । उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६ ॥
साधु क्रोधमिमं वीर नदीवेगमिवागतम् । शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥

१ ] ति० टी०—अथेति ॥ १ ॥

रा० टी०—सुग्रीवकृतनिनादश्रवणानन्तरकालिकं वालिवृत्तान्तमाह—अथेत्यादिभिः । अन्तःपुरगतः अन्तःपुरे स्थितः वाली भ्रातुः सुग्रीवस्य निनादं शुश्राव ॥ १ ॥

गो० टी०—अथ ताराबुद्धिः पञ्चदशे—अथ तस्येत्यादि । महात्मनः महाधैर्यस्य ॥ १ ॥

२ ] ति० टी०—एकपदे तत्क्षणे । आपादितः संपादितः ॥ २ ॥

रा० टी०—श्रुत्वेति । सर्वभूतप्रकम्पनं तस्य सुग्रीवस्य निनादं श्रुत्वा विद्यमानस्य वालिनः एकपदे तस्मिन् क्षणे मदः मत्तः सर्वे बिभ्यतीति गर्वः नष्टः क्रोधः आपादितः संप्राप्तः॥२॥

गो० टी०—श्रुत्वेति । स्थितस्येति शेषः । एकपदे एकस्मिन्नेव स्थाने सद्य इत्यर्थः । आपतितः उत्पन्न इत्यर्थः ॥ २॥

३ ] ति० टी०—कनकप्रभस्य क्रोधादतिरक्तत्वे सहजप्रभानाशेनोपरक्तादित्योपमेयता, एतदादीन्यासन्नमृत्युलक्षणानि ॥ ३ ॥

रा० टी०—तत इति । रोषपरीताङ्गः कोपाविष्टः वाली उपरक्तः राहुग्रस्तः आदित्य इव सद्यो निष्प्रभतां गतः ॥ ३ ॥

गो० टी०—स त्विति । रोषेण परीताङ्गः विपरीताङ्गः विकृतवेष इत्यर्थः । अत एव संध्यातपप्रभः कोपपावकयावकितानन इति प्रयोगात्कोपरक्तदेहत्वात्संध्यातपप्रभत्वम् । किंच उपरक्तः समीपरक्तः कृतपरिवेष इत्यर्थः । परिवेषयुक्तो हि सूर्यो निष्प्रभो दृश्यते, उपरक्तो राहुग्रस्तो वा ॥ ३ ॥

४ ] ति० टी०—उत्पातितपद्मेत्येकदेशे तन्त्रम् । उत्पातितैरुद्धतैः पद्मैरुत्पतिता नष्टा पद्मकृतशोभा यस्य तादृशो मृणालसहितो ह्रद इव दंष्ट्रा मृणालस्थानीया ॥ ४ ॥

रा० टी०—वालीति । दंष्ट्राकरालः दंष्ट्राहेतुकभयङ्करत्वविशिष्टः वाली उत्पातितपद्माभः उत्पतिता विनष्टा पद्माभा पद्मविनाशेन पद्महेतुका दीप्तिर्यस्य सः समृडालः पद्मनालमात्रविशिष्टह्रद इव भाति वर्तते एतेन वालिनः पराभवोऽवश्यं भविष्यतीति सूचितम् ॥ ४ ॥

गो० टी०—वालीति । दंष्ट्राकरालः दंष्ट्रादन्तुरः ' करालो दन्तुरे तुङ्गे ' इत्यमरः । क्रोधाद्धेतोः दीप्ताग्निसन्निभः अत एवोत्पतितपद्मः विकसितरक्तोत्पलः । ' उत्पतितपद्माभः ' इति पाठे उत्पतिता स्वोपरि प्रसृता पद्मानामाभा यस्मिन् स इत्यर्थः, समृणालो ह्रद इव भाति बभौ ॥ ४ ॥ ५ ॥

५ ] ति० टी०—दुर्मर्षणं दुःसहम् । वेगेन युक्तैः पदन्यासैः ॥ ५ ॥

रा० टी०—शब्दमिति । दुर्मर्षणं दुःसहं शब्दं श्रुत्वा हरिर्वाली वेगेन पदन्यासैः मेदिनीं पृथिवीं दारयन्निव ततः किष्किन्धायाः निष्पपात ॥ ५ ॥

६ ] ति० टी०—त्रस्तसंभ्रान्ता । कर्मधारये पुंवत्त्वम् । त्रस्ता भीता संभ्रान्ता क्षुभितचित्ता हितोदर्कं हितरूपोत्तरकालफलम् ॥ ६ ॥

रा० टी०—तमिति । तमन्तःपुरान्निष्क्रामन्तं वालिनं दर्शितसौहृदा तारा स्नेहात् परिष्वज्य आलिङ्ग्य त्रस्तसंभ्रान्ता त्रस्ता उद्विग्नचित्ता संभ्रान्ता भीता च सती किंच त्रस्तेन वाल्युद्विग्नचित्तत्वेन संभ्रान्ता जातभया सती हितोदर्कं हितरूपौत्तरकालिकफलकं वचः उवाच ॥ ६ ॥

गो० टी०—तं त्विति । परिष्वज्य स्ववचनश्रवणाभिमुख्यायालिङ्ग्य स्नेहात् परिष्वज्येत्यन्वयः दर्शितसौहृदा यथा भवति तथोवाचेत्यर्थः । संभ्रान्ता त्वरिता ' संभ्रमस्त्वरा ' इत्यमरः । हितोदर्कं हितफलकम् ॥ ६ ॥

७ ] ति० टी०—काल्यं प्रातःकाले शयनादुत्थितो भुक्तां स्रजमिव त्यज क्रोधम् ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—साध्विति । हे वीर !

१ स्त्विति गो. पाठः । २ आपतित इति गो. पाठः । ३ स त्विति गो. पाठः । ४ संध्यातपप्रभ इति गो. पाठः । ५ सन्निभ इति गो. पाठः । ६ मुडालेति रा. पाठः । ७ चरणेति गो. पाठः ।

कॅाल्यमेतेन संग्रामं करिष्यसि च वानर । वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८ ॥
सहसा तव निष्क्रामो मम तावन्न रोचते । श्रूयतामभिधास्यामि यन्निमित्तं निवार्यॅते ॥ ९ ॥
पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि । निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः॥ १० ॥
त्वया तस्य निरस्तस्य पीडितस्य विशेषतः । इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११ ॥
दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः । निॅनादस्य च संरम्भो नैतदल्पं हि कारणम् ॥ १२ ॥
नासहायमहं मन्ये सुग्रीवं तमिहागतम् । अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३ ॥
प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः । नॅापरीक्षितवीर्येण सुग्रीवः सॅख्यमेष्यति ॥ १४ ॥

आगतं सुग्रीवस्वनश्रवणेन संजातमिमं क्रोधं नदीवेगमिव काल्यं प्रातःकाले शयनादुत्थितो जनः भुक्तां स्रजं मालामिव त्यज ॥ ७ ॥

गो० टी०—साध्विति । काल्यं प्रातः शयनादुत्थितः पुरुषः भुक्तां स्रजमिव नदीवेगमिव आगतम् अप्रतिबद्धं क्रोधम् साधु निःशेषं त्यज ॥ ७ ॥

८-९ ] ति० टी०—काल्यं प्रातःकाले संग्रामं कुरु । हे वीर! यद्यपि संग्रामे शत्रोर्बाहुल्यं त्वत्त आधिक्यं न विद्यते, नापि तव फल्गुता लघुता विद्यते, अथापि सहसा हठात्तवाद्य निष्क्रामो निष्क्रमणं मम न रोचते । कुतस्तत्राह—श्रूयतामिति ॥ ८ ॥ ९ ॥

रा० टी०—कल्यमिति । हे वानर ! यतः ते तव शत्रुबाहुल्यं न अत एव ते फल्गुता लघुतापि न विद्यते अतः कल्यं प्रातःकाले एतेन सुग्रीवेण सह संग्रामं त्वं करिष्यसि ॥८॥

गो० टी०—काल्यमिति । काल्यं प्रातःकाले एतेन युद्धं करिष्यसि । तेन फल्गुता लाघवं वा शत्रुबाहुल्यं शत्रुगौरवं वा न विद्यते । अतः किमर्थमद्यैव निर्गच्छसीत्यर्थः ॥ ८ ॥

रा० टी०—सहसेति । सहसा अविचारेण तव निष्क्रामस्त्वत्कर्तृकनिष्क्रमणं मम न रोचते । ननु संग्रामार्थं पूर्वनिष्क्रमणे न निवारितवतीदानीं किमर्थं निवारयसीत्यत आह—श्रूयतामिति । यन्निमित्तं यदर्थं मया निवार्यसे तदभिधास्यामि त्वया श्रूयताम् ॥ ९ ॥

गो० टी०—सहसा निर्गमे को दोष इत्यत्राह—सहसेति॥९॥

१० ] ति० टी०—पूर्वं क्रोधादापतितः सुग्रीवो युद्धाय त्वामाह्वयत, तदा ते त्वया निष्पत्य निरस्तो हन्यमानश्च दिशो गतः ॥ १० ॥

रा० टी०—तदभिधानमेवाह—पूर्वमिति । आपतितः प्राप्तः स सुग्रीवः युधि युद्धार्थं क्रोधात् त्वामाह्वयते आह्वयत निष्पत्य निर्गत्य ते त्वया हन्यमानः अत एव निरस्तः पराभूतः सन् दिशो गतः ॅअपलायतेत्यर्थः ॥ १० ॥

गो० टी०—प्रथमं युक्तिमाह—पूर्वमित्यादि । श्लोकद्वयमेकान्वयम् । पूर्वमापतितः ते त्वया क्रोधान्निष्पत्य यो युधि निरस्तः हन्यमानो दिशो गतश्च स त्वामाह्वयते । पुनरेत्य स्थितस्य तस्यैतदाह्वानं मे शङ्कां सहायसहितत्वशङ्कां जनयतीति योजना इवशब्दो वाक्यालंकारे ॥ १० ॥ ११ ॥

११ ] ति० टी०—तस्य तथा निरस्तस्य पुनरेत्याह्वानं शङ्कां जनयत्येव ॥ ११ ॥

रा० टी०—त्वयेति । त्वया निरस्तस्य अत एव विशेषतः पीडितस्य दुःखितस्य तस्य सुग्रीवस्य पुनरिहैत्याह्वानं मे शङ्कां जनयत्येव । इवशब्द एवार्थे ॥ ११ ॥

१२ ] ति० टी०—कुतस्तत्राह—दर्पश्चेति । दर्पो गर्वः । व्यवसायो युद्धविषयः । यादृशश्च नर्दतो निनादस्य संरम्भो वृद्धिरेतदेतस्य कारणं नाल्पम् । अयं दर्पादिः कारणविशेषपूर्वकः कार्यविशेषत्वादित्यनुमितम् ॥ १२ ॥

रा० टी०—दर्प इति । नर्दतस्तस्य सुग्रीवस्य यादृशो दर्पः गर्वः व्यवसायो निश्चयश्च निनादस्य संरम्भो वृद्धिश्च एतत् एतस्य कारणमल्पं न महाकारणका इमे इत्यर्थः ॥ १२ ॥

गो० टी०—अवधारणे हेत्वन्तरमप्याह—दर्पश्चेति । नर्दतस्तस्य दर्पश्च व्यवसायश्च यत्नश्च निनादश्च सौरभश्च यादृशः अस्य एतत्कारणमल्पं न भवतीति योजना ॥ १२ ॥

१३ ] ति० टी०—कारणविशेषं दर्शयति—नेति । अवष्टब्धसहायः परिगृहीतसहायः सर्वथा सहायसंबन्धमूलोऽयं संरम्भ इति भावः ॥ १३ ॥

रा० टी०—कारणमेवाह—नेति । तं पूर्वं पराभूतमिह इदानीमागतं सुग्रीवमसहायं सहायरहितमहं न मन्ये । ननु ममातीव प्रबलत्वात्ससहायेनापि तेन किमित्यत आह—यमाश्रित्य एषः गर्जति स अवष्टब्धसहायः प्रबलसहाय इत्यर्थः । एतेन स त्वया निवर्तयितुं न शक्य इति सूचितम् ॥ १३ ॥

गो० टी०—फलितमाह—नासहायमिति । अवष्टब्धसहायश्च परिगृहीतसहाय एव । कुतः एष यमाश्रित्य गर्जति तादृशगर्जनहेतुसहायाश्रित एष इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—नन्विति तस्य बुद्धिः कुतस्तत्राह—प्रकृत्येति । निपुणः उचितकृत्यनिष्पादने समर्थस्तत्क्षमबुद्धिमांश्च। ननु सहायवन्तं वधिष्यामीति चेत्तत्राह—अपरीक्षितशत्रुनाशकवीर्येण पुंसा सुग्रीवः सख्यं नेष्यति । अतस्तत्सहायभूतः शङ्कनीय एव ॥ १४ ॥

१ कल्यमिति रा.पा.। २ निवार्यसे इति गो.पा.। ३ निनादश्चापीति गो.पा.। ४ अपरीक्षितेति गो.पा.। ५ सह नैष्यतीति गो.पा.। ६ पलायतेति युक्तं भाति।

पूर्वमेव मया वीर श्रुतं कथयतो वचः । अङ्गदस्य कुमारस्य वक्ष्याम्यद्य हितं वचः ॥ १५ ॥
अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः । प्रवृत्तिस्तेन कथिता चारैरासीन्निवेदिता ॥ १६ ॥
अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ । इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ॥ १७ ॥
सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ । स ते भ्रातुर्हि विख्यातः सहायो रणकर्मणि ॥ १८ ॥
रामः परबलामर्दी युगान्ताग्निरिवोत्थितः । निवासवृक्षः साधूनामापन्नानां परा गतिः ॥ १९ ॥

रा० टी०–सहायस्य प्रबलत्वे हेतुं वदन्ती आह–प्रकृत्येति । प्रकृत्या स्वभावेन निपुणः सकलकर्मकुशलः बुद्धिमान् वानरः सुग्रीवः अपरीक्षितवीर्येण पुरुषेण सह सख्यं न एष्यति करिष्यतीत्यर्थः ॥ १४ ॥

गो० टी०–सहायस्यातिशये किं मानमित्यत आह–प्रकृत्येति ॥ १४ ॥

१५ ] ति० टी०–न केवलं मदनुमित एवायमर्थः, किंतु शब्दप्रमाणादप्यवगत इत्याह–पूर्वमेवेति । यन्मया पूर्वमङ्गदस्य कुमारस्य वचः श्रुतं तत्तव हितमद्य त्वां वक्ष्यामि ॥ १५ ॥

रा० टी०–तत्रैव निश्चयमाह–पूर्वमिति । हे वीर ! हितं सुग्रीवस्य सखायं कथयतः कुमारस्य अङ्गदस्य वचः मया श्रुतम् अद्य वक्ष्यामि तद्वच इति शेषः ॥ १५ ॥

गो० टी०–न केवलं युक्त्यायं निर्णयः वचनाच्चेत्याह–पूर्वमिति । वचो यत् प्रासङ्गिकं कथयतोऽङ्गदस्य वचः मया श्रुतं तत् हितं वचः त्वां प्रति वक्ष्यामि ॥ १५ ॥

१६–१७ ] ति० टी०–तदेवाह–अङ्गदस्त्विति । वनान्तं वनमध्यं या तस्मै चारैर्निवेदिता प्रवृत्तिरासीत् । प्रवृत्तिः सुग्रीववृत्तान्तः । सा तेन मम कथिता ॥ १६॥१७॥

रा० टी०–तद्वचनाकारमाह–अङ्गद इति । अयं कुमारः अङ्गदः वनान्तं वनसमीपं गत्वेति शेषः, उपनिर्गतः पुनः मत्समीपं प्राप्त आसीत् तेन कुमारेण चारैर्निवेदिता प्रवृत्तिः सुग्रीववृत्तं कथिता ॥ १६ ॥

रा० टी०–अङ्गदोक्तिमेवाह–अयोध्येति । इक्ष्वाकूणां कुले जातौ अयोध्याधिपतेः दशरथस्य पुत्रौ नित्यपुत्रत्वविशिष्टौ रामलक्ष्मणौ प्रस्थितौ केनचिन्निमित्तेन वनं प्राप्तौ ॥ १७ ॥

गो० टी०–अङ्गद इति । वनान्तमुपवनान्तमभिनिर्गतः विहारार्थं गतः । प्रवृत्तिर्वार्ता 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । तत्र ऋश्यमूके दुरासदावित्यनन्तरमितिकरणं बोध्यम् । प्राप्ताविति प्रवृत्तिस्तेन कथितेति संबन्धः ॥ १६ ॥ १७ ॥

१८–१९ ] ति० टी०–तत्र तयोर्मध्ये यस्तव भ्रातुः सहायो विख्यातः । हि यतः स परबलामर्दी । साधूनां निवासवृक्ष आश्रयः । आपन्नानां शरणागतानां गतिः शरणम् ॥ १८ ॥ १९ ॥

रा० टी०–सुग्रीवेति । दुरासदौ धर्षयितुमशक्यौ रामलक्ष्मणौ तत्र सुग्रीवसमीपे प्राप्तौ रणकर्मणि विख्यातः सः लक्ष्मणसहितरामस्ते भ्रातुः सुग्रीवस्य सहायः सखा, अभवदिति शेषः ॥ १८ ॥

गो० टी०–तौ कीदृशावित्यपेक्षायाम् एकस्य स्वरूपकथनेनान्यस्य स्वरूपमप्यर्थादुक्तं भवतीति मत्वा प्रधानभूतरामस्वरूपमाह–तवेत्यादिना श्लोकत्रयेण । रामः उक्तविशेषणविशिष्ट इत्यन्वयः ॥ १८ ॥

रा० टी०–रामो जेतुमशक्य इति बोधयितुमाह–राम इति । उत्थितः प्रवृद्धः युगान्ताग्निरिव परबलामर्दी शत्रुसेनानां विघातकः साधूनां परोपकारनिरतानां निवासवृक्ष आश्रय इत्यर्थः, आपन्नानां प्राप्तापत्तीनां परा उत्कृष्टा गतिः रक्षकः आर्तानां दुःखितानां संश्रयः दुःखविध्वंसक इत्यर्थः, यशसः कीर्तेः एकभाजनं महायशस्वीत्यर्थः, ज्ञानविज्ञानसंपन्नः ज्ञानेन सकलशास्त्रविषयकबोधेन विज्ञानेन वेदवर्णितसकलवस्तूनां साक्षादनुभवेन च संपन्नः युक्तः अत एव पितुर्निदेशे आज्ञायां निरतः रामः धातूनामाकरः शैलेन्द्र इव गुणानां वात्सल्यादीनां महानाकरोऽस्तीति शेषः । सार्धश्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०–तत्स्थितिं सूचयन्त्याह–निवासेति । यथा सुग्रीवस्य सहायः एवं ममापि कुतो न स्यादित्यत्राह–साधूनामिति । स्वच्छायापेक्षिणाम् अनुकूलानां निवासवृक्षः । वृक्ष इत्यभेदाध्यवसायेन सर्वथा सादृश्यमुच्यते । यथा वृक्षः प्रथमं तापमपहृत्य पुष्पफलप्रदानादिना सर्वेन्द्रियतर्पणः तथायमित्यर्थः । निवास इति विशेषणेन कादाचित्कच्छायकतरुव्यावृत्तिः 'वासुदेवतरुच्छाया नातिशीता न घर्मदा । नरकाङ्गारशमनी सा किमर्थं न सेव्यते ॥' इत्युक्तत्वात् । सुग्रीवद्रोहकरणेन नास्माकं साधुत्वलेश इत्याशयः । साधूनामेदम् आपन्नानां तु परा गतिः । योगक्षेमं वहामीत्युक्तरीत्या आश्रितविषये उपायदशाप्रभृतिफलपर्यन्तसर्वकार्यकर इत्यर्थः । तत्राप्यार्तानां संश्रयश्चैव । आश्रितेष्वपि आर्तानां तु सर्वदा समीचीनाश्रयः सर्वकार्यनिर्वाहक इत्यर्थः । भवत्वेवं ममापि कश्चिदाश्रयो भविष्यतीत्यत्राह—यशसश्चैकभाजनमिति । एवंविधरक्षको लोकेऽन्यो नास्तीत्यर्थः । अत्र 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥' इत्युक्ताश्चतुर्विधाधिकारिण उच्यन्ते । साधूनां जिज्ञासूनां कैवल्य-

१ त्वेति गो. पाठः । २ आसीदिति गो. पाठः । ३ तवेति गो. पाठः । ४ कर्कश इति गो. पाठः ।

आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् । ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ॥ २० ॥
धातूनामिव शैलेन्द्रो गुणानामाकरो महान् । तत्क्षमो न विरोधस्ते सह तेन महात्मना ॥ २१ ॥
दुर्जयेनाप्रमेयेण रामेण रणकर्मसु । शूर वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् २२॥
श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् । यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय ॥ २३ ॥
विग्रहं मा कृथा वीर भ्रात्रा राजन्यवीयसा । अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ॥ २४ ॥
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः । लालनीयो हि ते भ्राता यवीयानेष वानरः ॥ २५ ॥
तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते । नहि तेन समं बन्धुं भुवि पश्यामि कंचन ॥ २६ ॥
दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् । वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ॥ २७ ॥

कामानामित्यर्थः । आपन्नानाम् अपूर्वैश्वर्यकामानाम् । आर्तानां भ्रष्टैश्वर्यकामानाम् । यशसः ज्ञानी त्वात्मैव मे मतमित्युक्तयशोयुक्तस्य । एकवचनेन तस्य सुदुर्लभत्वमुक्तम् । एकभाजनम् अद्वितीयाश्रयः । यद्वा साधूनामुपासकानाम् आपन्नानां सकृदेव प्रपन्नायेत्युक्तरीत्या ईषत्प्रपन्नानाम् : आर्तानाम् आर्तप्रपन्नानाम् 'आर्तो वा यदि वा दृप्तः परेषां शरणागतः ' इति वक्ष्यमाणत्वात्। यशसश्चैकभाजनमित्यनेन एवंभूतोऽन्यो नास्तीत्युच्यते १९

२० ] ति० टी०—आर्तानां शत्रुपीडितानाम् तन्नाशाय संश्रयः संश्रयार्हः । ज्ञानं ब्रह्मज्ञानम् धर्मविषयं विज्ञानं शिल्पनैपुणं वा निदेशे निरत इत्यनेन स्वराज्यमरक्षितवतः कुतः पररक्षणसामर्थ्यमित्यपास्तम् ॥ २० ॥

गो०टी०—आश्रितफलप्रदानोपयोगिज्ञानसंपत्तिमाह—ज्ञानविज्ञानसंपन्न इति। ज्ञानं लौकिकज्ञानं विज्ञानं शास्त्रजन्यज्ञानं ताभ्यां संपन्नः यद्वा विज्ञानेन धर्मभूतेन संपन्नः । ज्ञानश्चासौ विज्ञानसंपन्नश्चेति कर्मधारयः । ज्ञानस्वरूपो ज्ञानगुणकश्चेत्यर्थः । ज्ञानसंपत्तिमुक्त्वाऽनुष्ठानसंपत्तिमाह—निदेशे निरतः पितुरिति । प्रधानत्वात्पितृवचनपरिपालनत्वमुक्तम् । इदमुपलक्षणं धर्मान्तराणाम्, अनेन सौलभ्यं चोक्तम् । समस्तकल्याणगुणसमृद्धिमाह—गुणानामाकर इति बहुवचनेनासंख्येयत्वमुक्तम् । आकर इत्यनेन गुणातिरिक्तत्वं गुणिन उक्तम् । महानित्यनेन गुणानामप्युत्कर्षावहं गुणिस्वरूपमुच्यते । धातूनामित्यनेन गुणानां ज्ञानशक्तिबलैश्वर्यादिभेदेन नानाविधत्वमुक्तम् । शैलेन्द्रो हिमवान् अनेनाप्रकम्प्यत्वमुक्तम् ॥ २० ॥

२१ ] ति० टी०—तत्तस्मात्तेनोच्यमानगुणकेन रामेण तव विरोधो न क्षमो न युक्तः ॥ २१ ॥

रा० टी०—नतु किमेतद्वर्णनेनेत्यत आह—तदिति । तत् रामस्य सकलगुणनिधित्वाद्धेतोः अप्रमेयेण बलादिषु इयत्तारहितेन अत एव रणकर्मसु दुर्जयेन महात्मना तेन रामेण सह ते तव विरोधः न क्षमः युक्तः एतेन राम एव त्वयाऽप्याश्रयितव्य इति सूचितम् । अर्धद्वयमेकान्वयि ॥ २१ ॥

गो० टी०—तदिति । रणकर्मसु दुर्जयेनेत्यन्वयः ॥ २१ ॥

१ क्षममिति गो. पाठः ।

२२-२३ ] ति० टी०—दुर्जयेनेत्याद्यर्धं पूर्वान्वयि । किंचिद्वक्ष्यमाणं त्वयाऽभ्यसूयितुं नेच्छामि कथमियं मां प्रति वदतीति मदसूया न कर्तव्येत्यर्थः आर्षत्वादसमानकर्तृत्वेऽपि तुमुन् ॥ २२ ॥ २३ ॥

२४-२५ ] ति० टी०—तेन बलीयसा रामेण ॥२४-२६॥

रा० टी०—रामाश्रयणोपायं वक्तुमाह—शूरेति । हे शूर! यतः अभ्यसूयितुं तवासूयां प्रकटयितुं नेच्छामि अतः किंचिद्वक्ष्यामि अतः यत्तव हितं वक्ष्यामि तत् श्रूयताम् ॥ २२ ॥

गो० टी०—शूरेति । ते अभ्यसूयितुं नेच्छामि त्वद्विषये अभ्यसूयां दोषाविष्करणं कर्तुं कदाचिदपि नेच्छामीत्यर्थः । यद्वा मया वक्ष्यमाणे हिते त्वया अभ्यसूया न कार्येत्यर्थः॥२२॥

रा० टी०—तद्वचनाकारमाह—यौवराज्येनेति । हे वीर ! हे राजन् ! तूर्णं शीघ्रं यौवराज्येन सुग्रीवं साध्वभिषेचय भ्रात्रा सह विग्रहं मा कृथाः हि यतः रामेण सौहृदं सुग्रीवेण संप्रीतिं च ते क्षमं योग्यं मन्ये अतः वैरमुत्सृज्य यवीयान् कनिष्ठस्ते भ्राता सुग्रीवस्ते लालनीयः । सार्धश्लोकद्वयमेकान्वयि ॥ २३-२५ ॥

गो० टी०—यौवराज्येनेति । यौवराज्येनाभिषेचय यौवराज्येनोपलक्षितो यथा भवति तथाऽभिषिञ्चेत्यर्थः ॥ २३-२५॥

२६ ] ति० टी०—तत्र तस्मिन्दूरदेशे वा सन्विद्यमानः, इहस्थस्त्वत्समीपस्थो वा भुवि न पश्यामि तवेति शेषः ॥२६॥

रा० टी०—तत्रेति । तत्र ऋष्यमूके सन् स्थितो वा इहस्थः किष्किन्धायां स्थितो वा तव बन्धुरेव, तेन सुग्रीवेण समं सदृशं बन्धुं भुवि कंचन न पश्यामि ॥ २६ ॥

गो० टी०—न हीति। प्रत्यनन्तरं त्वदनन्तरं समीपवर्तिनं वा कुरुष्व ॥ २६ ॥ २७ ॥

२७ ] ति० टी०—प्रत्यनन्तरं स्वाधीनम् ॥ २७ ॥

रा० टी०—दानेति । एतत् किंचित्प्रसङ्गेन जातं वैरं समुत्सृज्य त्यक्त्वा सुग्रीवं दानादिभिः प्रत्यनन्तरं प्राप्तान्तररहितम् अन्तरङ्गमित्यर्थः, कुरुष्व अत एव स सुग्रीवः पार्श्वे तिष्ठतु ॥ २७ ॥

सुग्रीवो विपुलग्रीवो महाबन्धुर्मतस्तव । भ्रातृसौहृदमालम्ब्य नान्या गतिरिहास्ति ते ॥ २८ ॥
यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् । याच्यमानः प्रियत्वेन साधु वाक्यं कुरुष्व मे ॥२९॥
प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोशलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥ ३० ॥
तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे ।
न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

तारां निर्भर्त्स्य वालिनो युद्धार्थं निर्गमनम् ततः सुग्रीवेण सह घोरः संग्रामः । तत्र च सुग्रीवमार्तं पश्यता रामेण वाली शरेणोरसि ताडितः क्षितौ पपात ।

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् । वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥
गर्जतोऽस्य सुसंरब्धं भ्रातुः शत्रोर्विशेषतः । मर्षयिष्यामि केनापि कारणेन वरानने ॥ २ ॥

२८ ] ति० टी०—भ्रातृसौहृदमालम्ब्यैव तव गतिः नान्या गतिरस्तीत्यर्थः ॥ २८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सुग्रीव इति । भ्रातृसौहृदमालम्ब्य विद्यमानस्य तव सुग्रीवो महाबन्धुर्मतः अतः अन्या सुग्रीवभिन्ना व्यक्तिः ते गतिः रक्षिका न ॥ २८ ॥

गो० टी०—भ्रातुरित्यर्धम् । आलम्ब आलम्बस्व॥ २८॥

२९-३० ] ति० टी०—यदि ते यदि त्वयेत्यर्थः॥२९॥३०॥

रा० टी०—यदीति । ते तव यदि मत्प्रियं कार्यं यदि च मां हितामवैषि जानासि तर्हि प्रियत्वेन याच्यमानस्त्वं मे वाक्यं साधु कुरुष्व ॥ २९ ॥

गो० टी०—यदीति । अवैषि जानासि प्रयत्नेन बहुप्रयत्नेन ॥ २९ ॥

रा० टी०—प्रसीदेति । पथ्यं हितं मे जल्पितं कथितं त्वं शृणु अत एव प्रसीद अत एव रोषं कोपमनुविधातुं नार्हसि । तद्वचनाकारमाह—शक्रसमानतेजसा कोशलराजसूनुना समं विग्रहः कलहो न क्षमः ॥ ३० ॥

गो० टी०—स्ववचनाश्रवणे बाधकं सूचयन्त्याह—प्रसीदेति । प्रसीद त्यक्तरोषो भव । पथ्यं हितं जल्पितं वचनं भावे क्तः । शक्रसमानतेजसा शक्रतेजस्तुल्यतेजसा । अनेन वालिनो रामस्याधिक्यमुक्तम् ॥ ३० ॥

३१ ] ति० टी०—तदा हीत्यादि कविवाक्यम् ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०—तदेति । इदं हितं पथ्यं वाक्यं तदा तस्मिन् वालिविनाशकाले तारा वालिनं बभाषे तत् ताराभाषितं वचनं कालाभिपन्नस्य विनाशकालं प्राप्तस्य तस्य वालिनः न रोचते ३१

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

गो० टी०—तदेति । तदा वक्तव्यकाले वालिनं प्रतीति शेषः । भाषतेर्द्विकर्मकत्वात् । तस्य तस्मै चतुर्थ्यर्थे षष्ठी "रुच्यर्थानाम्" इति हि स्मृतिः । विनाशकालत्वे हेतुः—कालाभिपन्नस्येति मृत्युना गृहीतस्येत्यर्थः ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

१ ] ति० टी०—तामिति ॥ १ ॥

रा० टी०—तारावचनश्रवणानन्तरकालिकं वालिवृत्तान्तमाह—तामित्यादिभिः । ताराधिपनिभाननां चन्द्रमुखीम् एवं ब्रुवतीं तारां वाली निर्भर्त्सयामास इदं वचनमब्रवीत् ॥ १ ॥

गो०टी०—अथ वालिवधः षोडशे—तामेवमित्यादि॥१॥२॥

२ ] ति० टी०—सुसंरब्धं भावे निष्ठा सुसंरम्भमित्यर्थः । केनापि न केनापि त्वदुक्तकारणेनेत्यर्थः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—गर्जत इति । गर्जतो विशेषतः शत्रोर्भ्रातुरस्य सुग्रीवस्य सुसंरब्धं गर्वं केन कारणेन मर्षयिष्यामि मर्षणकारणं नास्तीति तात्पर्यम् । विशेषत इत्यस्य गर्जत इत्यत्रान्वयो वा ॥ २ ॥

१ तत्र बन्धुःसदा मत इति गो. पाठः । २ भ्रातुः सौहृदमालम्बेति गो. पाठः । ३ प्रयत्नेनेति गो. पाठः । ४ च संरम्भमिति गो. पाठः । ५ अहं केनेति गो. पाठः ।

अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् । धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३ ॥
सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे । सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जितम् ॥ ४ ॥
न च कार्यो विषादस्ते राघवं प्रति मत्कृते । धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५ ॥
निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि । सौहृदं दर्शितं तावन्मयि भक्तिस्त्वया कृता ॥ ६ ॥
प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि संभ्रमम् । दर्पं चास्य विनेष्यामि न च प्राणैर्वियोक्ष्यते ॥ ७ ॥
अहं ह्याजिस्थितस्यास्य करिष्यामि यदीप्सितम् । वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८ ॥
न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् । कृतं तारे सहायत्वं दर्शितं सौहृदं मयि ॥ ९ ॥
शापिताऽसि मम प्राणैर्निवर्तस्व जनेन च । अलं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥
तं तु तारा परिष्वज्य वालिनं प्रियवादिनी । चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११ ॥

३ ] ति० टी०—धर्षणामर्षणं सहनम् ॥ ३ ॥

रा० टी०—सहने दोषमाह—अधर्षितानामिति । अधर्षितानां पराभूतिरहितानां समरेषु अनिवर्तिनां शूराणां धर्षणामर्षणं धर्षणायाः सहनं मरणात् अतिरिच्यते अधिकं भवति । ननु किमेतेनेत्यत आह—सोढुमिति । हनग्रीवस्य हना श्रेष्ठा विपुलेत्यर्थः, ग्रीवा यस्य तस्य संयुगे युद्धकामस्य सुग्रीवस्य संरम्भं गर्वं गर्जितं च सोढुं नैव समर्थः । हिशब्द एवार्थे । अत एव विपुलग्रीव इत्यनेन न विरुध्यते ॥ ३ ॥ ४ ॥

गो० टी०—अधर्षितानामिति । धर्षणामर्षणं धर्षणस्य आमर्षणं सहनमिति वा, धर्षणायाः तिरस्कारस्य मर्षणमिति वार्थः ॥ ३ ॥

४ ] ति० टी०—संयुगे संरम्भम् । संयुगनिमित्तं संरम्भमित्यर्थः ॥ ४ ॥

गो० टी०—सोढुमिति । सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जत इति हीनग्रीवस्येति परुषोक्तिः ॥ ४ ॥

५ ] ति० टी०—राघवं प्रति राघवनिमित्तभयमालक्ष्य मत्कृते त्वया विषादो न कार्यः यतो धर्मज्ञत्वादिगुणः सः । पापं मद्वधरूपम् ॥ ५ ॥

रा० टी०—न च सुग्रीवस्यातिप्रबलराघवसंसर्गित्वाद्विषाद इत्यत आह—नेति । धर्मज्ञः कृतज्ञो रामः मत्कृते अस्मदर्थं पापमनुचितं कथं करिष्यति उचितमेव करिष्यतीत्यर्थः, अतः राघवं प्रति त्वया विषादो न कार्यः । एतेन वालिनो रघुनाथानुकूलवर्तित्वं सूचितम् ॥ ५ ॥

गो० टी०—न चेति । पापं निरपराधवधम् ॥ ५ ॥

६ ] ति० टी०—कथं भूयोऽनुगच्छसि निवर्तस्वेत्युच्यमानापीति भावः । भक्तिरनुरागः ॥ ६ ॥

रा० टी०—निवर्तस्वेति । स्त्रीभिः सह कथं किमर्थमनुगच्छसि अनुगमनस्य न प्रयोजनमित्यर्थः, अतः निवर्तस्व । मयि सौहृदं मैत्री भूयोऽधिकं त्वया दर्शितम्, भक्तिः सेवा च कृता ॥ ६ ॥

गो० टी०—निवर्तस्वेति । निवर्तने क्रियमाणेऽपि भूयः सौहृदं सुहृत्कर्तव्यं हितोपदेश इति यावत् । भक्तिः कृता प्रकाशितेत्यर्थः ॥ ६ ॥

७ ] ति० टी०—दर्पं च दर्पमेव । वियोक्ष्यते वियोजयिष्यते । सोदरत्वात् ॥ ७ ॥

रा० टी०—न च भ्रातृवधे दोषः स्यादित्यत आह—प्रतीति। अहं सुग्रीवं गत्वा प्राप्य प्रतियोत्स्यामि अत एवास्य सुग्रीवस्य दर्पं गर्वं विनेष्यामि दूरीकरिष्यामि प्राणैस्तु न वियोक्ष्यते अतः संभ्रमं भ्रातृवधजनितदोषहेतुकभीतिं जहि त्यज ॥ ७ ॥

गो० टी०—प्रतियोत्स्यामीति । सुग्रीवं प्रतियोत्स्यामि ॥ ७ ॥

८ ] ति० टी०—उक्तमेव विवृणोति—ईप्सितं त्वदीप्सितं दर्पमोचनेनेत्यर्थः । वृक्षैर्वृक्षप्रहारैः ॥ ८ ॥

रा० टी०—अहमिति । आजिस्थितस्य संग्रामस्थस्य अस्य सुग्रीवस्य यत्त्वया ईप्सितम् अस्य वधो न भवेदिति वाञ्छितं तदहं करिष्यामि अतः वृक्षैः वृक्षप्रहारैः मुष्टिप्रहारैश्च पीडितः सन् प्रतियास्यति स्वगृहं प्राप्स्यति ॥ ८ ॥

गो० टी०—संप्रहारव्याकुलेन त्वया कथं तस्य प्राणरक्षणं कर्तुं शक्यं तत्राह—अहं हीति । यथेप्सितम् ईप्सितं तत्प्राणरक्षणमनतिक्रम्य आजौ युद्धे स्थितस्य ॥ ८ ॥

९ ] ति० टी०—गर्वितं दर्पम् आयस्तं तत्प्रवृत्तं कृदयत्नं भावे निष्ठा । सहायत्वं बुद्धिसाचिव्यम् ॥ ९ ॥

रा० टी०—यदुक्तं दानमानादिसत्कारैरिति तस्य प्रत्युत्तरमाह—नेति । गर्वितं सामानाधिकरण्यसंबन्धेन स्वबलवत्त्वादिजनितगर्वविशिष्टं मे आयस्तं प्रवृत्तिं न सहिष्यति एतेन तस्य मदनुवर्तित्वं न भविष्यतीति सूचितम् 'नाहं गर्वितमायस्तं सहिष्यामि दुरात्मनः' इति तीर्थाङ्कितपुस्तकपाठः । कृतमिति । हे तारे ! सहायत्वमनुचितवाक्यसहायता त्वया कृतं मयि सौहृदं च दर्शितम् ॥ ९ ॥

गो० टी०—नेति । गर्वितं गर्वम् । आयस्तम् आयासं प्रयत्नमिति यावत् । सहिष्यतीति परस्मैपदमार्षम् । सहायत्वं बुद्धिसाहाय्यम् ॥ ९ ॥ १० ॥

१०-११ ] ति० टी०—जनेन स्वपरिवारजनेनालं जित्वा

१ गर्जत इति गो. पाठः । २ तारे इति गो. पाठः । ३ दर्पमात्रमिति गो. पाठः । ४ यथेति गो. पाठः । ५ जयेनेति गो. पाठः । ६ अहमिति गो. पाठः ।

ततः स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी । अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२ ॥
प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम् । नगर्या[1] निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥
स निःश्वस्य महा[2]रोषो वाली परमवेगवान् । सर्वतश्चारयन्दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १४ ॥
स ददर्श ततः श्रीमान्सुग्रीवं हेमपिङ्गलम् । सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५ ॥
[4]तं स दृष्ट्वा महाबाहुः सुग्रीवं पर्यवस्थितम् । गाढं परिदधे वासो वाली परम[5]कोपनः ॥ १६ ॥
स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् । सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७ ॥
श्लिष्टं मुष्टिं समुद्यम्य संरब्धतरमागतः । सुग्रीवोऽपि समुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥
तं वाली क्रोधता[6]म्राक्षं सुग्रीवं रण[7]कोविदम् । आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९ ॥
एष मुष्टि[8]र्महान्बद्धो गाढः सु[9]नियताङ्गुलिः । मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २० ॥
एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् । तव चैष[10] हरन्प्राणान्मुष्टिः पततु मूर्धनि ॥ २१ ॥

जयमात्रं कृत्वा निवर्तिष्ये नतु वधमित्यर्थः । 'अहं जित्वा' इति पाठस्त्वसांप्रदायिकः ॥ १० ॥ ११ ॥

रा० टी०—शापितेति । मम प्राणैस्त्वं शापिता शपथं प्रापिता अतः जनेन स्वपरिकरेण सह निवर्तस्व अहं तु रणे भ्रातरमलं जित्वा निवर्तिष्ये ॥ १० ॥

रा० टी०—तमिति । तं स्वोक्तस्वीकाराभाववन्तं वालिनं परिष्वज्य दक्षिणा अतिकुशला तारा मन्दं रुदती सती प्रदक्षिणं चकार ॥ ११ ॥

गो० टी०—तं त्विति । दक्षिणा स्वास्मिन् परस्मिश्च तुल्यहिता ॥ ११ ॥

१२-१३ ] ति० टी०—मन्त्रविस्स्वस्त्ययनमन्त्रवेत्री । देवांशत्वात्तद्वेदनम् ॥ १२ ॥ १३ ॥

रा० टी०—तत इति । ततः प्रदक्षिणकरणानन्तरं मन्त्रवित् स्वस्त्ययनादिमन्त्रवेदित्री विजयैषिणी तारा स्वस्त्ययनं कृत्वा शोकमोहिता सती स्त्रीभिः सह अन्तःपुरं प्रविष्टा ॥ १२ ॥

रा० टी०—प्रविष्टायामिति । तारायां स्वमालयं प्रविष्टायां सत्यां क्रुद्धो महासर्प इव श्वसन् वाली नगर्याः किष्किन्धायाः निर्ययौ ॥ १३ ॥

गो० टी०—तत इति । मन्त्रवत् स्वस्त्ययनमन्त्रवत् । मन्त्रश्च वैदिकादन्य इति ज्ञेयः ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—सर्वतो दृष्टिं चारयन् । स्थित इति शेषः ॥ १४ ॥

रा० टी०—स इति । महारोषः स वाली शत्रुदर्शनकाङ्क्षया सर्वतो दृष्टिं चारयन्सन् सुसंवीतं बद्धकवचादिम् अवष्टब्धं दृढं स्थितमनलमिव दीप्यमानं सुग्रीवं ददर्श, श्रीमान्स सुग्रीवोऽपि ततस्तं वालिनं ददर्श । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—स निःश्वस्येति । चारयन् प्रस्थित इति शेषः ॥ १४ ॥

१५-१६ ] ति० टी०—सुसंवीतं बद्धकच्छम्, अवष्टब्धं युयुत्सया दृढं भूमिमाक्रम्य स्थितम् ॥ १५ ॥ १६ ॥

गो० टी०—स ददर्शेति । सुसंवीतं वाससा सुष्ठु परिवीतम् । अवष्टब्धं युयुत्सया भूमिमाक्रम्य स्थितम् ॥ १५ ॥

रा० टी०—तमिति । महाबाहुर्वाली सुग्रीवं पर्यवस्थितं दृष्ट्वा वासः वस्त्रं गाढं परिदधे ॥ १६ ॥

गो० टी०—स तमिति । पर्यवस्थितं समीपे अवस्थितम् ॥ १६ ॥

१७ ] ति० टी०—गाढं संवीतो दृढं बद्धकच्छः ॥ १७ ॥

रा० टी०—स इति । गाढसंवीतः दृढं बद्धकटिः कृतक्षणः प्रकटितयुद्धोत्सवः अभिमुखः सुग्रीवसंमुखे स्थितः स वाली योद्धुं सुग्रीवं ययौ ॥ १७ ॥

गो० टी०—स वालीति । कृतक्षणः कृतोत्सवः लब्धावसरो वा 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः ॥ १७–२० ॥

१८-१९ ] ति० टी०—सुग्रीवोऽपि वालिनं समुद्दिश्य श्लिष्टं दृढबद्धं मुष्टिमुद्यम्य किंचित्संमुखमागतः ॥ १८ ॥ १९ ॥

रा० टी०—श्लिष्टमिति । सुग्रीवोऽपि संरब्धतरमतिक्रुद्धं वालिनं समुद्दिश्य श्लिष्टं दृढं बद्धं मुष्टिं समुद्यम्य उत्थाप्य आगतः वालिसमीपं प्राप्तः ॥ १८ ॥

रा० टी०—तमिति । रणकोविदं रणे चतुरं क्रोधताम्राक्षं महावेगमापतन्तं सुग्रीवमिदं वचनमब्रवीत् ॥ १९ ॥

२० ] ति० टी०—वेगविमुक्तः त्वदुपरीति शेषः ॥ २० ॥

रा० टी०—तद्वचनाकारः—एष इति । गाढः दृढः मया बद्धः सुनियताङ्गुलिः सुनियता यथोचितसंनिवेशिता अङ्गुलयो यस्मिन् स एष महान्मुष्टिः मया वेगविमुक्तः सन् ते प्राणान् आदाय यास्यति ॥ २० ॥

२१ ] ति० टी०—एवमुक्तो वालिना तव प्राणान्हरन्नेष मुष्टिर्मामकस्तव मूर्धि पतत्वित्यब्रवीत् ॥ २१ ॥

१ नगरादिति गो. पाठः । २ तेजा इति गो. पाठः । ३ रोषण इति गो.पाठः । ४ स तं दृष्ट्वा महावीर्यमिति गो. पाठः । ५ रोषण इति गो.पाठः ६ ताम्राक्ष इति गो. पाठः । ७ पण्डितमिति गो. पाठः । ८ मयेति गो. पाठः । ९ संनिहिताङ्गुलिरिति गो. पाठः । १० एव चाहरन्निति गो. पाठः ।

ताडितस्तेन तं क्रुद्धः समभिक्रम्य वेगतः । अभवच्छोणितोद्गारी सापीड इव पर्वतः ॥ २२ ॥
सुग्रीवेण तु निः[3]शङ्कं सालमुत्पाट्य तेजसा । गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥
स तु [4]वृक्षेण निर्भग्नः सालताडनविह्वलः । गुरुभारभराक्रान्ता नौः ससार्थेव सागरे ॥ २४ ॥
तौ भीमबलविक्रान्तौ सुपर्ण[6]समवेगितौ । प्रयुद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥ २५ ॥
परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ । ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ॥ २६ ॥
सूर्यपुत्रो महावीर्यः सुग्रीवः परिही[7]यत । वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥ २७ ॥
वालिनं प्रति सामर्षो दर्शयामास [8]राघवम् । वृक्षैः सशाखैः [9]शिखरैर्वज्रकोटिनिभैर्नखैः॥ २८ ॥
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः । तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ २९ ॥
तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ । मेघाविव महाशब्दैस्तर्जमानौ परस्परम् ॥ ३० ॥
हीयमान[10]मथापश्यत्सुग्रीवं वानरेश्वरम् । [11]प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३१ ॥

रा० टी०–एवमिति । एवमुक्तः अत एव क्रुद्धः सुग्रीवस्तव प्राणान् हरन् सन् एषः मया बद्धो मुष्टिस्तव मूर्धनि पततु इति वालिनमब्रवीत् ॥ २१ ॥

गो० टी०–एवमिति । पततु मूर्धनीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ २१ ॥

२२ ] ति० टी०–सुग्रीवमभिक्रम्याक्रम्य स्थितेन वालिना वेगतस्ताडितः सुग्रीवः सापीडः सनिर्झरः पर्वत इवाभवत्॥२२॥

रा० टी०–ताडित इति । समभिक्रम्य द्रुतं सुग्रीवसमीपं संप्राप्य तेन वालिना वेगतस्ताडितः अत एव संक्रुद्धः सुग्रीवः सापीडः निर्झरसहितः पर्वत इव शोणितोद्गारी शोणितप्रवाहवान् अभवत् ॥ २२ ॥

गो० टी०–ताडित इति । तेन वालिना ताडितः अत एव संक्रुद्धः वेगितः संजातवेगः पुनः प्रहारायेति शेषः । अत्र सुग्रीव इत्यध्याहार्यम् । सोत्पीडः सनिर्झरः ॥ २२ ॥ २३ ॥

२३–२४ ] ति० टी०–निःशङ्कं शोणितोद्गारजदुःखसंबन्धरहितं यथा तथाऽभिहतो वाली सागरे नौरिव विह्वलोऽभवत् ॥ २३ ॥ २४ ॥

रा० टी०–सुग्रीवेणेति । तेजसा अतिप्रभावेण उपलक्षितेन सुग्रीवेण सालमुत्पाट्य निःशङ्कं यथा भवति तथा वज्रेण महागिरिरिव वाली गात्रेषु अभिहतः ॥ २३ ॥

रा० टी०–स इति । वृक्षेण निर्भग्नः अत एव सालताडनविह्वलः सालेन प्राप्तेन ताडनेन विह्वलः वाली ससार्था सार्थैः सहिता अत एव गुरुभारभराक्रान्ता सागरे नौरिव अभवदिति शेषः ॥ २४ ॥

गो० टी०–स त्विति । नौः पोतः ॥ २४ ॥

२५–२६ ] ति० टी०–सुपर्णेन समं वेगितं वेगो ययोस्तौ । प्रकृष्टं युद्धं ययोस्तौ । चन्द्रसूर्याविवेति यथार्थातिशयोक्तिरेषा ॥ २५ ॥ २६ ॥

रा० टी०–ताविति । भीमबलविक्रान्तौ बलेन विक्रान्तौ कृतपादन्यासौ अत एव भीमौ भयंकरौ भीमावेव बलविक्रान्ताविति कर्मधारयः भयंकरबलेन कृतपादन्यासावित्यर्थो वा । सुपर्णसमवेगितौ गरुडसमवेगं प्राप्तौ प्रयुद्धौ प्रवृद्धयुद्धविशिष्टौ घोरवपुषौ अमित्रघ्नौ शत्रुसूदनौ तौ वालिसुग्रीवौ अम्बरे चन्द्रसूर्याविव दृश्येते इति शेषः । सार्धश्लोक एकान्वयी ॥ २५ ॥

गो० टी०–तावित्यादि । विक्रान्तौ विक्रमवन्तौ भीमबलौ च तौ विक्रान्तौ चेति कर्मधारयः । सुपर्णसमवेगिनौ गरुडवेगतुल्यवेगवन्तौ कर्मधारयान्मत्वर्थीयः । चन्द्रसूर्याविव पौर्णमासीचन्द्रसूर्याविव प्रवृद्धावभूतामित्यर्थः ॥ २५ ॥

रा० टी०–तत इति । ततः युद्धप्रवृद्ध्यनन्तरं बलवीर्यसमन्वितो वाली अवर्धत, सूर्यपुत्रः सुग्रीवस्तु परिहीयत आगमशास्त्रस्यानित्यत्वात् अडभावः ॥ २६ ॥

गो० टी०–तत इति । अवर्धत तेजसेति शेषः । परिहीयते पर्यहीयतेत्यर्थः ॥ २६ ॥

२७ ] ति० टी०–परिहीयत । अडभाव आर्षः ॥ २७ ॥

रा० टी०–वालिनेति । वालिना भग्नदर्पः अत एव मन्दविक्रमः अत एव वालिनं प्रति सामर्षः अमर्षसहितः सुग्रीवः राघवं दर्शयामास बोधयामास स्वहानिं वालिनो वृद्धिं चेति शेषः २७

गो० टी०–वालिनेति । लाघवं शैघ्र्यम् 'लघु माधुर्यशीघ्रयोः' इति निघण्टुः ॥ २७ ॥

२८–२९ ] ति० टी०–राघवं दर्शयामास स्वहानिमिति शेषः ॥ २८ ॥ २९ ॥

रा० टी०–सिंहावलोकनन्यायेन तयोर्युद्धमेव वर्णयति–वृक्षैरित्यादिभिः । वृक्षादिभिस्तयोर्वालिसुग्रीवयोः वृत्रवासवयोरिव घोरं युद्धमभूत् । सार्धश्लोक एकान्वयी ॥ २८ ॥ २९ ॥

गो० टी०–वृक्षैरित्यादि । तयोर्युद्धमभूद्घोरमिति पाठः२८

३०–३१ ] ति० टी०–युध्येतामयुध्येताम् ॥ ३० ॥ ३१ ॥

रा० टी०–ताविति । शोणिताक्तौ रुधिरलिप्तौ महाश-

१ संक्रुद्ध इति गो. पाठः । २ सोत्पीड इति गो. पाठः । ३ सङ्गमिति गो. पाठः । ४ वाली प्रचलित इति गो. पाठः । ५ क्रान्तो नौसार्थ इति गो. पाठः। ६ समवेगिनाविति गो. पाठः । ७ हीयते इति गो. पाठः । ८ लाघवमिति गो. पाठः । ९ सशिखैरिति गो.पाठः । १० अथोऽपश्यदिति गो. पाठः । ११ वीक्षेति गो. पाठः ।

ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् । स शरं वीक्षते वीरो वालिनो वधकाङ्क्षया ॥ ३२ ॥
ततो धनुषि संधाय शरमाशीविषोपमम् । पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३३ ॥
तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः । प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३४ ॥
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसंनिभः । राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३५ ॥
ततस्तेन महातेजा [3]वीर्ययुक्तः कपीश्वरः । वेगेनाभिहतो वाली निपपात महीतले ॥ ३६ ॥
इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले । आश्वयुक्समये मासि गतसत्त्वो विचेतनः ॥
बाष्पसंरुद्धकण्ठस्तु वाली चार्तस्वरः शनैः ॥ ३७ ॥

नरोत्तमः काल इवान्तकोपमं शरोत्तमं काञ्चनरूप्यभासितम् ।
ससर्ज दीप्तं तममित्रमर्दनं सधूममग्निं मुखतो यथा हरः ॥ ३८ ॥

र्दैर्मेघाविव तर्जमानौ वानरौ तौ वालिसुग्रीवौ परस्परं युध्येताम् ॥ ३० ॥

रा० टी०–हीयमानमिति । अथ सुग्रीवबोधनानन्तरं राघवः हीयमानं क्षीणतां प्राप्नुवन्तमत एव मुहुर्मुहुः दिशः प्रेक्षमाणं सुग्रीवमपश्यत् ॥ ३१ ॥

गो० टी०–ताविति युध्येताम् अयुध्येताम् । तर्जमानाविति उभयत्र आगमशासनस्यानित्यत्वादडभावः मुमभावश्च २९॥३०॥

३२-३३ ] ति० टी०–स रामः शरं वीक्षते स्म॥३२॥३३॥

रा० टी०–तत इति । महातेजाः स रामः हरीश्वरं सुग्रीवमार्तं दृष्ट्वा वालिनो वधकाङ्क्षया शरं बाणं वीक्षते व्यैक्षत॥३२॥

गो० टी०–ततो राम इति । शरं वीक्षते वालिवधोचितं शरं पर्यालोचयदित्यर्थः ॥ ३१ ॥

रा० टी०–तत इति । ततः धनुःकर्मकवीक्षणानन्तरमाशीविषोपमं शरं धनुषि संधाय तत् शरसहितं चापं कालचक्रमन्तक इव पूरयामास आकर्णान्तमाकृष्टवानित्यर्थः ॥ ३३ ॥

गो० टी०–तत इति । कालचक्रं यमस्यायुधविशेषः॥३२॥

३४ ] ति० टी०–पत्ररथाः पक्षिणः ॥ ३४ ॥

रा० टी०–तस्येति । तस्य चापस्य ज्यातलघोषेण त्रस्ताः उद्विग्ना पत्ररथेश्वराः पक्षिराजाः मृगाश्च युगान्ते प्रलयसमये मोहिता जना इव प्रदुद्रुवुः ॥ ३४ ॥

गो० टी०–तस्येति । पत्ररथेश्वराः पक्षिश्रेष्ठाः ॥ ३३ ॥

३५-३६ ] ति० टी०–मुक्तो बाणः पातित इत्यर्थः ३५॥३६

रा० टी०–मुक्त इति । मुक्तः ज्यायाः प्रच्युतः वज्रनिर्घोषः वज्रनिर्घोषसदृशनिर्घोषविशिष्टः प्रदीप्ताशनिसंनिभः प्रदीप्तवज्रसदृशप्रदीप्तिविशिष्टः महाबाणः राघवेण वालिवक्षसि पातितः॥३५॥

गो० टी०–मुक्तस्त्विति । वज्रस्येव निर्घोषो यस्य तथा प्रदीप्ताशनिसंनिभः प्रदीप्तविद्युत्तुल्यः । 'अशनिस्तु द्वयोर्वज्रे सौदामिन्याम्' इति दर्पणः ॥ ३४ ॥

रा० टी०–तत इति । तेन महाबाणेन वेगेन अभिहतः कपीश्वरो वाली ततस्तस्मिन्महीतले निपपात ॥ ३६ ॥

गो० टी०–तत इत्यादिश्लोकद्वयमेकान्वयम् । उद्धूतः पातितः । आश्वयुक्समये अश्वयुक्समयरूपे मासि पौर्णमास्यां महीतले पातित इत्यन्वयः ॥ ३५ ॥ ३६ ॥

३७ ] ति० टी०–आश्वयुक्समये आश्वयुगाश्वयुजी पौर्णमासी यत्र मासे तस्मिन्नाश्विने मासि पौर्णमास्यामिन्द्रध्वजोत्सवान्ते उद्धूत उत्क्षिप्त इन्द्रध्वजो यथा भूमौ पपात तद्वद्वाली ग्रीष्मान्ते पतित इत्यर्थः । अत एव सुग्रीवाभिषेकसमये श्रावणो मासोऽधुना वर्तते इति वचनेन न विरोधः ॥ ३७ ॥

रा० टी०–इन्द्रेति । आश्वयुक्समये आश्वयुजी पौर्णमासी अस्ति अस्मिन् स एव समयस्तस्मिन्मासि । किंच आश्वयुजः अश्विनीयुक्तपौर्णमास्याः सम्यक् अयः प्राप्तिर्यस्मिन् तस्मिन् आश्विने इत्यर्थः, पौर्णमास्यामुद्धूतः प्रक्षिप्तः इन्द्रध्वज इव उद्धूतः अत एव गतसत्त्वोऽत एव विचेतनः अत एव बाष्पसंरुद्धकण्ठः अत एव शनैः आर्तस्वरः वाली आसीदिति शेषः । गौडदेशे कस्मिश्चिदुत्सवे आश्विनपूर्णिमायामिन्द्रमुद्दिश्य ध्वजं संस्थाप्योत्सवोत्तरं प्रक्षिपन्तीति प्रसिद्धम् । सार्धश्लोक एकान्वयी ॥ ३७ ॥

३८ ] ति० टी०–उक्तमुपसंहरति–नरोत्तम इति । मुखतः मुखस्थललाटनेत्रेणेत्यर्थः ॥ ३८ ॥

रा० टी०–उपसंहरन्नाह–नरोत्तम इति द्वाभ्याम् । नरोत्तमः रामः कालयुगान्तकोपमं युगान्तकालसदृशं काञ्चनरूपभूषितं यथोचितं स्वर्णरजताभ्यामलंकृतम् अमित्रमर्दनं शत्रुसूदनं शरोत्तमं ससर्ज । तत्र दृष्टान्तः सधूमं धूमसहितं दीप्तमग्निं मुखतः मुखात् हरो यथा ॥ ३८ ॥

गो० टी०–उक्तमर्थं वृत्तान्तरेण संगृह्णाति–नरोत्तम इत्यादिश्लोकद्वयेन । कालयुगान्तकोपमं युगान्तकालोपममित्यर्थः, स्वार्थे कप्रत्ययः । युगान्तकालो युगान्तमृत्युः । काञ्चनरूप्यभूषितं परभागाय स्वर्णरजताभ्यामलंकृतम् । सधूममित्यनेन ज्वालोन्मुखत्वमुच्यते । हरः प्रलये संहर्ता । नन्वत्र एकवचनादेकेन बाणेन वाली हत इत्युक्तम् । इदम् उत्तरत्र तारावाक्येन

१ शरं चेति गो. पाठः । २ कारणादिति गो. पाठः । ३ वीर्योत्सिक्त इति गो. पाठः । ४ श्रीक इति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ रूप्यभूषितामिति गो. भूषितमिति रा. पाठः ।

अथोक्षितः शोणिततोयविस्रवैः [1]सुपुष्पिताशोक इवा[2]चलोद्धतः ।
विचेतनो वासवसूनुराहवे प्रभ्रंशितेन्द्रध्वजवत्क्षितिं गतः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

उरसि विदीर्णोऽपि शक्रदत्तमालाप्रभावेण प्राणैस्तेजसा चाहीयमानो वाली रुषा रामं बहुविधं निनिन्द ।

ततः शरेणाभिहतो रामेण रणकर्कशः । पपात सहसा वाली निकृत्त इव पादपः ॥ १ ॥
स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः । अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥
[3]अस्मिन्निपतिते भूमौ [4]हर्यृक्षाणां गणेश्वरे । नष्टचन्द्रमिव व्योम न व्यराजत मेदिनी ॥ ३ ॥
भूमौ निपतितस्यापि तस्य देहं महात्मनः । न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥
शक्रदत्ता वरा माला काञ्चनी रत्नभूषिता । दधार हरिमुख्यस्य प्राणांस्तेजः श्रियं च सा ॥ ५ ॥
स तया मालया वीरो हैमया हरियूथपः । संध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६ ॥

'रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः, इत्यनेन बहुबाणहतत्ववचनेन विरुध्यते । मैवं व्याकुलवचनत्वात्तस्य । यतः तारा एकबाणहतं श्रुत्वाऽप्येवमाह । वक्ष्यति हि–'तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनम्' इति । स्वर्गोपक्रमे च 'निजघान च तत्रैनं शरेणैकेन राघवः' इत्यत्र एकशब्दः प्रयुक्तः । प्रतिज्ञातं च रामेण तथा वालिवधं प्रतीति प्रतिज्ञानिर्वाहाय छद्मनाऽपि वालिवधः कृतः ॥ ३७ ॥ ३८ ॥

अस्मिन् सर्गे एकोनचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

३९ ] ति० टी०–शोणिततोयस्य विस्रवैः स्रुतिभिः । प्रभ्रंशित उत्सवान्ते पातितः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०–अथेति । शोणिततोयविस्रवैः शोणितप्रस्वेदयोः च्युतिभिः उक्षितः सिक्तः विचेतनः वासवसूनुर्वाली अनिलोद्धतः वायुना पातितः प्रपुष्पिताशोक इव प्रभ्रंशितेन्द्रध्वज इव च क्षितिं गतः ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षोडशः सर्गः ॥ १६ ॥

१ ] ति० टी०–तत इति ॥ १ ॥

रा० टी०–वालिवृत्तान्तमेव वर्णयन्नाह–तत इत्यादिभिः । ततः शरप्रक्षेपानन्तरं रामेण कर्त्रा शरेण करणेन अभिहतः रणकर्कशो वाली निकृत्तः छिन्नः पादप इव सहसा पपात ॥१॥

गो० टी०–अथ रामं प्रति वालिनिन्दा सप्तदशे—ततः शरेणेत्यादि । आरम्भणार्थोऽयमनुवादः ॥ १ ॥

२ ] ति० टी०–मुक्तरश्मिर्मुक्तरथरज्जुबन्धनः ॥ २ ॥

रा० टी०–स इति । तप्तकाञ्चनभूषणः स वाली मुक्तरश्मिः त्यक्तबन्धनरज्जुः अत एव भूमौ न्यस्तसर्वाङ्गः देवराजस्य ध्वज इव अपतत् ॥ २ ॥

गो० टी०–स भूमाविति । रश्मिः बन्धनरज्जुः ॥२॥३॥

३-४ ] ति० टी०–मेदिनी तद्राज्यभूमिः ॥ ३ ॥ ४ ॥

रा० टी०–तस्मिन्निति । हर्यृक्षाणां हरीणाम् ऋक्षाणां च गणेश्वरे तस्मिन् वालिनि भूमौ निपतिते सति मेदिनी पृथिवी नष्टचन्द्रं व्योमाकाशमिव न व्यराजत ॥ ३ ॥

रा० टी०–भूमाविति । भूमौ निपतितस्यापि महात्मनस्तस्य वालिनो देहं श्रीप्रभृतिर्न जहाति ॥ ४ ॥

गो० टी०–भूमाविति । तेजः प्रतापः ॥ ४ ॥

५ ] ति० टी०–प्राणाद्यहाने कारणमाह–शक्रेति ॥ ५ ॥

रा० टी०–तत्र कारणमाह–शक्रेति । रत्नभूषिता काञ्चनी स्वर्णमयी अत एव वरा शक्रदत्ता सा प्रसिद्धा माला हरिमुख्यस्य वालिनः प्राणादीन् दधार धारयामास । एतेन मालायाः प्रभावातिशयः सूचितः ॥ ५ ॥

गो० टी०–उक्तेऽर्थे हेतुमाह–शक्रेति ॥ ५ ॥

६ ] ति० टी०–हैमया हैम्या संध्यया संध्यारागेणानुगतः पर्यन्तो यस्य । पयोधरसाम्यं तु वालिदेहस्य ॥ ६ ॥

रा० टी०–स इति । हरियूथपः स वाली तया इन्द्रदत्तया हैमया हैम्या मालया संध्यानुगतपर्यन्तः संध्यारागव्याप्तः पयोधरो मेघ इव अभवत् ॥ ६ ॥

१ सुपुष्पितेति गो. पाठः । २ ऽनलोद्धत इति गो. ऽनिलोद्धत इति रा. पाठः । ३ तस्मिन्निति गो. रा. पाठः । ४ वानराणामिति गो. पाठः । ५ भूतलमिति गो. पाठः ।

तस्य माला च देहश्च मर्मघाती च यः शरः । त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७ ॥
तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् । रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८ ॥
तं तथा पतितं संख्ये गतार्चिषमिवानलम् । [ २बहु मान्य च तं वीरं वीक्षमाणं शनैरिव ]
ययातिमिव पुण्यान्ते देवलोका३दिह च्युतम् । ॥ ९ ॥
आदित्यमिव कालेन युगान्ते भुवि पातितम् । महेन्द्रमिव४ दुर्धर्षमुपेन्द्रमिव दुःसहम् ॥ १० ॥
महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् । ५व्यूढोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ॥ ११ ॥
लक्ष्मणानुचरो रामो ददर्शोपससर्प च । ७तं तथा पतितं वीरं गतार्चिषमिवानलम् ॥ १२ ॥
बहुमान्य च तं वीरं वीक्षमाणं शनैरिव । उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् । अब्रवीत्परुषं वाक्यं प्रश्रितं धर्मसंहितम् ॥ १४ ॥

गो० टी०-स इति । हैमयेति क्लीबभाव आर्षः ॥ ६ ॥

७ ] ति० टी०-त्रिधा रचितेव त्रिधा विभक्तेव माला । देहशररूपा लक्ष्मीरिति यावत् ॥ ७ ॥

रा० टी०-तस्येति । पतितस्यापि तस्य वालिनो यो मालाप्रभृतिः शोभते स मालाप्रभृति त्रिधा रचिता त्रिधात्रा निर्मिता लक्ष्मीः शरीरशोभेव ॥ ७ ॥

गो० टी०-तस्येति । लक्ष्मीः तेजः ॥ ७ ॥

८-९ ] ति० टी०-स्वर्गमार्गप्रभावनं तत्प्रकाशकं तत्परमां गतिं ब्रह्मलोकमावहत्प्रापयति स्म । बाणा अस्यन्तेऽनेनेति बाणासनं धनुः ॥ ८ ॥ ९ ॥

१० ] ति० टी०-महेन्द्रमुपेन्द्रस्यैव वृत्रवधोत्तरमिदं नामेत्येके । महेन्द्र आजानदेवः । उपेन्द्रः कर्मदेव इत्यन्ये ॥ १० ॥

११-१२ ] ति० टी०-हरिलोचनं पीतनेत्रम् । हरिच्छब्दः पीतपर्यायः । 'हरिद्राभः पालाशो हरितो हरित्' इति कोशः आर्षस्तलोपः ॥ ११ ॥ १२ ॥

रा० टी०-तदिति । स्वर्गमार्गप्रभावनं स्वर्गमार्गस्य साकेताध्वनः रामतत्त्वज्ञानस्येत्यर्थः, प्रभावनं स्वस्पर्शमात्रेण प्रापकं रामबाणासनक्षिप्तं रामबाणासनेन रामसंबन्धिधनुषा क्षिप्तं प्रक्षिप्तं वीरस्य तस्य रामस्य तत्प्रसिद्धमस्त्रं बाणः परमामत्युत्कृष्टां गतिं साकेतलोकमावहत् प्रापयितुमैच्छत् ॥ ८ ॥

गो० टी०-तदस्त्रमिति । स्वर्गमार्गस्य प्रभावनं प्रापकम् "भू, प्राप्तौ" इत्यस्माल्ल्युट् अत एव परमां गतिम् आवहत् संपादयामासेत्यर्थः ॥ ८ ॥

रा० टी०-तमिति । गतार्चिषं निवृत्तज्वालं पतितमनलमिव देवलोकात् इह पृथिव्यां च्युतं ययातिमिव युगान्ते कालेन भुवि पातितमादित्यमिव महेन्द्रमिव दुर्धर्षम् उपेन्द्रं वामनमिव दुःसहं व्यूढोरस्कं व्यूढं विशालमुरो यस्य स तं महाबाहुमाजानुबाहुविशिष्टं दीप्तास्यं प्रकाशितमुखविशिष्टं हरिलोचनं पीतवर्णविशिष्टलोचनविशिष्टं संख्ये संग्रामे पतितं महेन्द्रपुत्रं वालिनं लक्ष्मणोऽनुचरो यस्य स रामो ददर्श उपससर्प तत्समीपदेशसंयोगानुकूलव्यापारं चकार । हरितशब्दः पीतवचनः 'पालाशो हरितो हरित्' इति कोशः । तकारलोप आर्षः इति भट्टाः। वस्तुतस्तु हरिशब्दस्यापि पीतवाचकत्वम् 'स्वर्णवर्णो हरिः स्मृतः' इत्यनेकार्थः । सार्धश्लोकत्रयमेकान्वयि ॥९-११॥

रा० टी०-तमिति । गतार्चिषमनलमिव संख्ये तथा पतितं वीरपरिपाट्या संग्रामभुवि लुण्ठितम् अत एव बहुमान्यमधिकं सत्करणीयं वीक्ष्यमाणं दृष्टिपथं प्राप्तं वीरं तं प्राप्तमोक्षं तं वालिनं भ्रातरौ रामलक्ष्मणौ शनैरुपयातौ 'तम्रौ-रामृतपुरुछेषु' इति कोशः । सार्धश्लोक एकान्वयी ॥१२॥१३॥

गो० टी०-तं तदेत्यादिचत्वारः । संख्ये युद्धे तं वीरं रामं बहुमान्य साधु बाणं पातितवानसीति श्लाघयित्वा स कुत्र स्थित इति शनैः वेदनातिशयान्मन्दं वीक्षमाणम् । इवशब्दो वाक्यालंकारे । ययातिमिव कालेन दैवेन 'कालः श्यामलदिष्टयोः' इति दर्पणः । महेन्द्रमिव दुःसहम् आभिमुख्येन स्थातुमशक्यम् । सिंहेति । दीप्तास्यं दीप्तमुखं हरिलोचनं कपिलनेत्रम् ॥ ९-१२ ॥

१३-१४ ] ति० टी०-बहुमान्य संमान्य । शनैरेवोपयातौ समीपं गतौ ॥ १३ ॥ १४ ॥

रा० टी०-तमिति । तं स्वसमीपं प्राप्तं रणगर्वितं रणगर्वित्वं तनोति स्वाश्रितेषु विस्तारयति यदाश्रयात्कातरा अपि शूरा भवन्तीत्यर्थः, तं राघवं लक्ष्मणं च दृष्ट्वा परुषं परुषत्वेन प्रतीयमानं प्रश्रितं नम्रतासूचकं धर्मसंहितं धर्मसंयुक्तं गर्वितं स्वगर्वसूचकं वाक्यमर्थसंहितया स्वार्थयुक्तया वाचा नित्यं युक्त इति शेषः, स्वार्थसाधकवचनपरायण इत्यर्थः, निहतः रामबाणेन विद्धः अत एव भूमौ पतित इति शेषः, अत एव अल्पतेजोऽल्पः अल्पतेजोऽल्पप्राणविशिष्टः अत एव नष्टचेतनः विनष्टबुद्धिः स वाली अब्रवीत् । किंच अग-

१ तदेति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ लोकात्परिच्युतमिति गो. पाठः । ४ महेन्द्रमिवेति गो. पाठः । ५ सिंहोरस्कमिति गो. पाठः । ६ गत इति गो. पाठः । ७ एतदादिः सार्धश्लोकः गो. नास्ति । ८ मान्यमिति रा. पाठः ।

स भूमावल्पतेजोसुर्निहतो नष्टचेतनः । अर्थसंहितया वाचा गर्वितं रणगर्वितम् ॥ १५ ॥
[ त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः । कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ॥ ]
पराङ्मुखवधं कृत्वा कोऽत्र प्राप्तस्त्वया गुणः । यदहं युद्धसंरब्धस्त्वत्कृते निधनं गतः ॥ १६ ॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः । रामः करुणवेदी च प्रजानां च हिते रतः ॥ १७ ॥
सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः । इत्येतत्सर्वभूतानि कथयन्ति यशो भुवि ॥ १८ ॥
दमः शमः क्षमा धर्मो धृतिः सत्त्वं पराक्रमः । पार्थिवानां गुणा राजन्दण्डश्चाप्यपकारिषु ॥ १९ ॥
तान्गुणान्संप्रधार्याहमग्र्यं चाभिजनं तव । तारया प्रतिषिद्धः सन्सुग्रीवेण समागतः ॥ २० ॥
न मामन्येन संरब्धं प्रमत्तं [9]वेद्धुमर्हसि । इति [10]ते बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ २१ ॥
[11]स त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् । जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ २२ ॥

र्वितमिति छेदः तद्रामविशेषणं रणगर्वितमिति वाक्यविशेषणम् । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–तं दृष्ट्वेति । प्रश्रितं विनयान्वितम् इत्येवं पाठक्रमः साधुः ॥ १३ ॥

१५ ] ति० टी०–अल्पं तेजोऽसवश्च यस्य सः । नष्टचेतनो नष्टचेष्टः । गर्वितं गर्वोपेतं यथा भवति तथा रणगर्वितं राममर्थयुक्तया वाचा परुषमब्रवीदित्यन्वयः ॥ १५ ॥

गो० टी०–प्रश्रितं वचनमाह–त्वमित्यादिना । प्रियदर्शनः प्रियं दर्शनं शास्त्रं यस्य सः 'दर्शनं दृशि शास्त्रे स्यात्' इति दर्पणः। पराङ्मुखवधं परयुद्धासक्तवधम् । गुणः उत्कर्षः । युद्धसंरब्धः अन्ययुद्धपराङ्मुख इत्यर्थः ॥ १४ ॥ १५ ॥

१६–१७ ] ति० टी०-पराङ्मुखवधं युयुत्सया स्वदनभिमुखवधम् । तदेवाह–युद्धसंरब्धो युद्धार्थमन्यस्मै कृतक्रोधः ॥ १६ ॥ १७ ॥

१८ ] ति० टी०–समयज्ञ उचितानुचितकालज्ञः ॥ १८ ॥

रा० टी०–तद्वचनाकारमाह–पराङ्मुखेति । पराङ्मुखवधं युद्धोन्मुखरहितजनहिंसां कृत्वा कः गुणः प्राप्तः, केन पुरुषेणेति शेषः । यत् यस्मात् गुणात् अत्र समये युद्धसंरब्धः अन्येन योद्धुमाश्रितकोपोऽहं त्वत्कृते त्वद्व्यापारे जाते निधनं मृत्युं गतः 'शरेणोरसि ताडितः' इति तीर्थपुस्तकपाठः । अन्येन योद्धुमाश्रितकोपोऽहमित्युक्त्या रामसुग्रीवयोर्मैत्री जातेति तयोश्चैक्यमेवेत्यंशे वालिनः परमज्ञानं सूचितम् ॥ १६ ॥

रा० टी०–कुलीन इति । कुलीनः शोभनकुले प्रादुर्भूतः सत्त्वसंपन्नः प्राकृतविलक्षणसत्त्वगुणयुक्तस्तेजस्वी अतिशयतेजोविशिष्टः चरितव्रतः चरितानि कृतानि व्रतानि वेदोक्तकर्माणि येन सः करुणवेदी करुणं दयावन्तं वेत्ति स्वकीयत्वेन जानाति तच्छीलः प्रजानां हिते इष्टसाधने रतः सानुक्रोशः दयासहितः महोत्साहः महान् ध्वंसाप्रतियोगित्वेन अतिप्रशंसनीयः उत्साहो यस्य सः, समयज्ञः समयं कार्योचितकालं जानाति सः दृढव्रतः अप्रच्युतसंकल्पः रामोऽस्ति इत्येतत् तव यशः भुवि सर्वभूमौ सर्वभूतानि सर्वे प्राणिनः कथयन्ति अत एव हे राजन् ! पार्थिवानां ये दमादयो गुणास्तान् गुणान् संप्रधार्य त्वयि निश्चित्य अग्र्यं सर्वोत्कृष्टं तवाभिजनं महाकुलोद्भवत्वं च संप्रधार्य तारया प्रतिषिद्धः सन्नप्यहं सुग्रीवेण समागतः योद्धुं प्राप्तः । श्लोकचतुष्टयमेकान्वयि॥१७–२०॥

गो० टी०–राम इति । करुणवेदी कारुण्यज्ञः, सानुक्रोशः सदयः । समयज्ञः आचारज्ञः ते यश इत्यन्वयः ॥ १६ ॥

१९ ] ति० टी०–दमशमावन्तर्बाह्येन्द्रियनिग्रहः । क्षमा शक्यप्रतिक्रियापकारसहिष्णुता ॥ १९ ॥

गो० टी०–दम इति । 'शमश्चित्तप्रशान्तिः स्याद्दम इन्द्रियनिग्रहः' ॥ १७ ॥

२० ] ति० टी०–तान्राजयोग्यान् । अभिजनं महाकुलप्रसूतत्वम् ॥ २० ॥

गो० टी०–अभिजनमाभिजात्यम् । समागतः युद्धं कृतवानस्मीत्यर्थः ॥ १८ ॥

२१ ] ति० टी०–अन्येन संयुक्तम्, अत एव ते त्वयि प्रमत्तमसावधानं मां न वेद्धुमर्हसीति बुद्धिस्तवादर्शने तव दर्शनात्प्रागुत्पन्ना ॥ २१ ॥

रा० टी०–ननु किमेतत् निश्चयेनेत्यत आह–नेति । अन्येन संरब्धं योद्धुं जातकोपम् अत एव प्रमत्तं त्वत्तोऽनवधानं मां वेद्धुं बाणेन ताडयितुं नार्हति राम इति शेषः, इति मे बुद्धिः तवादर्शने त्वत्कर्मकदर्शनाभावे उत्पन्ना बभूव ॥२१॥

गो० टी०–न मामिति । प्रमत्तं युद्धपरवशम् । अर्हति उक्तगुणो राम इति शेषः । अदर्शने तव दर्शने त्वेवमभूदिति भावः ॥ १९ ॥

२२] ति०टी०–विनिहतात्मानमधर्माचरणान्नष्टात्मानम्॥२२

रा० टी०–ननु ममैतेनाभेद एवेत्यत आह–नेति । पापसमाचारं पापाचरणशीलम् अत एव अधार्मिकं धार्मिकप्रतियोगिकभेदविशिष्टम् अत एव विनिहतात्मानं विनिहतस्त्वया घातितः आत्मा मम देहो येन तं तृणैरावृतं कूपमिव दु-

१ 'स भूमा' एतस्य स्थानेऽयं श्लोकः गो.पाठे। २ न्विति गो.पाठः। ३ शरेणोरसि ताडित इति गो.पाठः। ४ अर्धमेतत् गो.नास्ति ५ जितोत्साह इति गो.पाठः। ६ इति ते इति गो. पाठः । ७ सत्यमिति गो. पाठः । ८ ऽपीति गो.पाठः । ९ योद्धुमर्हतीति गो. रा. पाठः । १० मे इति रा.पाठः। ११ नेति गो.रा.पाठः।

सतां वेषधरं पापं प्रच्छन्नमिव पावकम् । नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥ २३ ॥
विषये वा पुरे वा ते यदा पापं करोम्यहम् । न च त्वामवजानेऽहं[1] कस्मात्त्वं हंस्यकिल्बिषम् २४॥
फलमूलाशनं नित्यं वानरं वनगोचरम् । मामिहाप्रतियुध्यन्तमन्येन च समागतम् ॥ २५ ॥
[2]त्वं नराधिपतेः पुत्रः प्रतीतः प्रियदर्शनः । लिङ्गमप्यस्ति ते राजन्दृश्यते धर्मसंहितम् ॥ २६ ॥
कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः । धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २७ ॥
[3]त्वं राघवकुले जातो धर्मवानिति विश्रुतः । अभव्यो भव्यरूपेण किमर्थं परि[4]धावसे ॥ २८ ॥
साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ । पार्थिवानां गुणा राजन्दण्डश्चाप्य[5]पकारिषु ॥ २९ ॥
वयं वनचरा राम मृगा मूलफ[6]लाशिनः । एषा प्रकृतिरस्माकं पुरुषस्त्वं न[7]रेश्वर ॥ ३० ॥

णाच्छन्नकूपसदृशं सुग्रीवं धर्मध्वजं परमधर्मप्रकाशकं त्वामहं न जाने युवयोर्भेदाभावो न संभवतीत्यर्थः ॥ २२ ॥

गो० टी०–न त्वामिति । विनिहतात्मानं विशेषेण निहतबुद्धिम् । धर्मध्वजं धर्मलिङ्गम्, वस्तुतो धर्मरहितमित्यर्थः ॥ २० ॥

२३] ति० टी०–प्रच्छन्नं भस्मनेति शेषः । छद्म व्याजः॥२३॥

रा० टी०–असंभवे हेतुमाह–सतामिति । सतां सज्जनानां वेषधरं व्याप्तिधारकं सर्वज्ञतासंपादकमित्यर्थः, प्रच्छन्नं भस्मादिभिरावृतं पावकमिव तिरोहितस्वप्रकाशप्रज्ञकमित्यर्थः, त्वां धर्मच्छद्माभिसंवृतं धर्मव्याजेन युक्तं पापं पापसंबन्धिनं सुग्रीवं नाभिजानामि केनचित्प्रमाणेनाभेदं न निश्चिनोमीत्यर्थः ॥ २३ ॥

गो० टी०–एतदेव स्पष्टयति–सतामिति । धर्मच्छद्माभिसंवृतं धर्मव्याजयुक्तम् ॥ २१ ॥

२४-२५ ] ति० टी०–विषये देशे । यदा यस्मात्पापं न करोमि । नेत्यस्यानुकर्षः । त्वां नावजाने तवावज्ञां च न करोमि ॥ २४ ॥ २५ ॥

रा० टी०–नन्वभेदो मास्त्विवत्यत आह–विषय इति । ते तव विषये त्वद्भोग्यदेशे पुरे वा यदा पापमपराधमहं न करोमि तदा अकिल्बिषम् अपराधरहितं नित्यं फलमूलाशनं वनगोचरं वनमात्रनिवासिनमप्रतियुध्यन्तं त्वया सह युद्धमकुर्वन्तमन्येन सुग्रीवेण समागतं युध्यन्तं मां त्वं कस्माद्धंसि । एतेन परमधर्मज्ञस्वत्कर्तृकानपराधिमत्कर्मकहननमेवाभेदं बोधयतीति सूचितम् । श्लोकद्वयमेकान्वायि ॥ २४ ॥ २५ ॥

गो० टी०–विषय इति । यदा नापकरोमि यस्मान्नापाकरवं त्वां नावजाने त्वय्यवमानं नाकरवमित्यर्थः, तस्मादकिल्बिषं मां किमर्थं हंसीति संबन्धः । फलेत्यस्य श्लोकस्य मामिति पूर्वेण संबन्धः ॥ २२ ॥ २३ ॥

२६-२७ ] ति० टी०–लिङ्गं जटावल्कलधरत्वमास्ति मद्धिंसासाधनमिति शेषः । तच्च प्रत्यक्षदृश्यमेवेत्याह–दृश्यत इति ॥ २६ ॥ २७ ॥

गो० टी०–लिङ्गमिति । हे राजन् ! अधर्मसंहितम् अधर्मकृतं लिङ्गमपि ते अस्ति दृश्यते च स्पष्टमवगम्यते चेत्यर्थः । कुत इत्यत्राह–क इति ॥ २४ ॥ २५ ॥

२८-२९ ] ति० टी०–अभव्योऽविनीतः ॥ २८ ॥ २९ ॥

रा० टी०–स्ववधायोग्यत्वमेव बोधयन्नाह–त्वमिति । नराधिपतेः दशरथस्य पुत्रः अत एव प्रतीतः विश्वसनीयः प्रियदर्शनस्त्वमसीति शेषः । हे राजन् ! लिङ्गं धर्मबोधकचिह्नं ते अस्ति अत एव ते धर्मसंहितं नित्यं धर्माचरणं दृश्यते प्रतीयते । एतेनापुत्कैतद्धननहेतुं त्वं ब्रूहीति सूचितम्, लिङ्गमप्यस्तीत्यनेन वालिनः सूक्ष्मदर्शित्वं व्यक्तम् ॥ २६ ॥

रा० टी०–प्राकृतोऽपि जनोऽनपराधिनं न हन्तीति बोधयन्नाह–क इति । श्रुतवान् शास्त्रश्रवणसंपन्नः अत एव नष्टसंशयः धर्माधर्मविषयकसंशयरहितः अत एव धर्मलिङ्गप्रतिच्छन्नः धर्मबोधकवाक्याधीनः क्षत्रियकुले जातः कः क्रूरं शास्त्रविरुद्धहिंसादिरूपं कर्म समाचरेत्, न कोऽपीत्यर्थः ॥ २७ ॥

रा० टी०–रामेति । हे राम ! धर्मवानिति विश्रुतः प्रख्यातः भव्यरूपेण सकलसज्जनमङ्गलकारकत्वरूपेण राजकुले जातः प्रादुर्भूतः अभव्यः अचिन्तनीयप्रभावस्त्वं किमर्थं परिधावसि सुग्रीवेण सह परिभ्रमसि ॥ २८ ॥

गो० टी०–रामेति । अभव्यः क्रूरः भव्यरूपेण सौम्यरूपेण परिधावसि चरसि ॥ २६ ॥

रा० टी०–स्ववधस्यायोग्यत्वं बोधयितुं राजधर्मानाह–सामेति । हे राजन् ! सामादयोऽष्टौ पार्थिवानां गुणाः, सन्तीति शेषः । एतेनाऽनपकारिमद्वधे तव धर्मच्युतिः स्यादिति सूचितम् ॥ २९ ॥

गो० टी०–सामेति । साम सान्त्वनम् ॥ २७ ॥

३० ] ति० टी०–एषा वनचरत्वादिरूपा प्रकृतिः स्वभावः पुरुषस्त्वम्, तेन ग्रामवासित्वादन्नाशित्वं व्यङ्ग्यम् ॥ ३० ॥

रा० टी०–ननु तवाज्ञातः कश्चिदपराधो भवेदित्यत आह–वयमिति । हे राम ! वयं मृगाः अत एव वनचराः वनमात्रनिवासिनः अत एव मूलफलाशिनः स्म इति शेषः । ननु स्वत्क-

१ चेति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ राम राजेति गो. रा. पाठः । ४ धावसीति गो. पाठः । ५ अपराधिष्विति गो.पाठः । ६ अशना इति गो. पाठः । ७ नरेश्वरः इति गो. रा. पाठः ।

भूमिर्हिरण्यं रूपं च [1]निग्रहे कारणानि च । तत्र कस्ते वने लोभो मदीयेषु फलेषु वा ॥ ३१ ॥
नयश्च विनयश्चोभौ निग्रहानुग्रहावपि । राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३२ ॥
त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः । राजवृत्तेषु संकीर्णः शरासनपरायणः ॥ ३३ ॥
न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता । इन्द्रियैः कामवृत्तः सन्कृष्यसे मनुजेश्वर ॥ ३४ ॥
हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् । किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ३५ ॥
राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः । नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३६ ॥

तूकपुरवासादौ को बोधक इत्यत आह—एषा वनचरत्वादिरूपाऽस्माकं प्रकृतिः स्वभावसिद्धा त्वं तु नरेश्वरः मनुष्यादिनियन्ता पुरुषोऽसीति शेषः । एतेन त्वन्निरूपितनियम्यत्वमपि मयि नास्तीति सूचितं तेन मयि तवापराधकर्तृत्वयोग्यता नास्तीति ध्वनितम् ॥ ३० ॥

गो० टी०—लोके कस्यचिद्वधे अपराधस्तदर्थलाभेच्छा वा हेतुर्भवेत् तत्र नाद्य इत्याह—वयमिति । पुरुषः मनुष्यः नच केवलमनुष्यः अपि तु नरेश्वरः ॥ २८ ॥

३१ ] ति०टी०—रूपं रूप्यम् । कारणानि चेति आहुरिति शेषः । वने विद्यमानेषु मदीयेषु मूलेषु फलेषु वा कस्ते लोभोऽपेक्षा न कापीत्यर्थः । एवं च वनचरत्वपुरचरत्वमृगत्वमनुष्यत्वमूलाशनत्वान्नाशनत्वनरेश्वरत्ववानरेश्वरत्वरूपवैधर्म्यांत्रावयोर्विरोधप्रसक्तिरिति भावः ॥ ३१ ॥

रा० टी०—ननु ममाखण्डमण्डलेश्वरत्वात् सर्वनियामकत्वे मन्निरूपितनियम्यत्वं त्वयि सिद्धमेवेत्यत आह—भूमिरिति । निग्रहे दण्डे नियमने कारणानि भूम्यादित्रीणि तत्र तेषु तवानुपयुक्तेषु अत एव मदीयेषु वनचरमात्रोपयोगिषु वने विद्यमानेषु फलेषु ते तव को लोभः लोभकारणं नास्तीत्यर्थः । एतेन अकारणकं नियमनं लोके न दृष्टमिति सूचितम् ॥ ३१ ॥

गो० टी०—द्वितीयोऽपि नेत्याह—भूमिरिति । लोके भूम्यादीनि कलहे कारणानि भवन्ति । अत्र अन्येषु वा मदीयेषु फलेषु ते को लोभः किंविषयेच्छा वर्तते ॥ २९ ॥

३२ ] ति टी०—नयो नीतिः । विनयः प्रश्रयः । असंकीर्णा निग्रहानुग्रहादिविषये विपरीता ॥ ३२ ॥

रा० टी०—ननु स्वतन्त्रत्वात् यथेच्छं मम क्रियेत्यत आह—नय इति । नयो यथोचिताज्ञाप्रापणं, विनयः विनम्रता उभौ इमौ द्वौ निग्रहानुग्रहावप्युभौ असंकीर्णा वैपरीत्यरहिता राज्यवृत्तिरस्तीति शेषः, अतः नृपाः कामवृत्तयः अविहितस्वच्छन्दवर्तिनो न भवन्तीति शेषः ॥ ३२ ॥

गो० टी०—नयश्चेति । नयोऽनुग्रहश्च सद्राजधर्मौ विनयो विपरीतनयः निग्रहश्च कुराजधर्मौ इत्येषा राजवृत्तिरसङ्कीर्णा ग्राह्या । तथा च नृपाः कामवृत्तयो न स्युः । स्वेच्छया नयो विनयश्च निग्रहोऽनुग्रहश्च राजभिर्न कार्या इत्यर्थः ॥ ३० ॥

३३ ] ति० टी०—शरासनपरायणो यत्र क्वापि शराणामासनं त्यागस्तत्परायणः ॥ ३३ ॥

रा० टी०—त्वमिति । त्वं तु कामप्रधानः कामः कामी सुग्रीवः प्रधानो यस्य सः तत्प्रार्थितकारीत्यर्थः, अत एव कोपनः कोपाविषयेष्वपि कोपवान् अत एवानवस्थितः चञ्चलचित्तः अत एव राजवृत्तेषु संकीर्णः विपरीतवृत्तिः अत एव शरासनपरायणः वधायोग्येष्वपि बाणप्रक्षेपणनिरतोऽसीति शेषः । एतेन सुग्रीवसंसर्गस्त्वया न कार्य इति सूचितम् ॥ ३३ ॥

गो० टी०—त्वं त्विति । अनवस्थितः अमर्यादः राजवृत्तैः राजचरितैः हेतुभिः संकीर्णः संकीर्णराजवृत्त इत्यर्थः । शरासनपरायणः यदृच्छया यं हन्तुमिच्छसि तं हंसीत्यर्थः॥३१॥

३४-३५ ] ति० टी०—अपचितिः पूजा । कामवृत्तः सन्निन्द्रियैः कृष्यस इति संबन्धः ॥ ३४ ॥ ३५ ॥

रा० टी०—ननु मय्येव दोषाः सन्ति सुग्रीवसंसर्गस्य न दोष इत्यत आह—नेति । यतस्ते तव धर्मे अपचितिः प्रशंसा अस्तीति शेषः, अतः अर्थे अन्यदीयधने तव बुद्धिर्नैवावस्थिता अत एव कामवृत्तः सन् इन्द्रियैस्त्वं न कृष्यसे । यद्वा धर्मे अर्थे च ते बुद्धिरवस्थिता अनवस्थिता नास्ति अत एव ते अपचितिर्हानिर्नास्ति अत एव कामवृत्तः सन् त्वमिन्द्रियैर्न कृष्यसे । एतेन त्वयि दोषस्थितेर्न संभव इति ध्वनितम् । वाश्चार्थे 'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु ' इति मेदिनी । भागुरिमतेनाकारलोपे नञ्समासे अनवस्थितेत्यर्थलाभः ॥ ३४ ॥

गो० टी०—न त इति । अपचितिः पूजा धर्मश्रद्धा नास्तीत्यर्थः । अवस्थिता व्यवस्थिता परद्रव्याभिलाषिणीत्यर्थः । कामे च न व्यवस्थेत्याह—इन्द्रियैरिति ॥ ३२ ॥

रा० टी०—सुग्रीवसंसर्गस्तव हानिकर इति बोधयन्नाह—हत्वेति । जुगुप्सितं निन्दितं पापिसख्यरूपं कर्म कृत्वा अत एव अनपराधिनं मां हत्वा सतां मध्ये किं वक्ष्यसि ॥ ३५

गो० टी०—हत्वेति । मां हत्वा स्थितः त्वं जुगुप्सितं कर्म कृत्वा सतां साधुकर्मकारिणां मध्ये किं वक्ष्यसि ॥ ३३ ॥

३६ ] ति० टी०—परिवेत्ता ज्येष्ठेऽकृतदारेऽकृताग्निहोत्रे च कृतदारः कृताग्निहोत्रोऽनुजः ॥ ३६ ॥

रा० टी०—सुग्रीवपापित्वमेव प्रकाशयन्नाह—राजेति द्वाभ्याम् । राजहादयः निरयगामिनः नरकगमनशीलाः एते सर्वे पापात्मनां लोके गच्छन्ते गच्छन्ति अत्र संशयो न ।

[1] विग्रहे इति गो. पाठः । २ वृत्तैश्चेति गो. पाठः ।

सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः। लोकं पापात्मनामेते गच्छन्ते नात्र संशयः ॥३७॥
अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम्। अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥३८॥
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव। शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥३९॥
चर्म चास्थि च मे रोम न स्पृशन्ति मनीषिणः। अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥४०॥
तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम्। तदतिक्रम्य मोहेन कालस्य वशमागतः ॥४१॥
त्वया नाथेन काकुत्स्थ न सनाथा वसुंधरा। प्रमदा शीलसंपूर्णा पत्येव च विधर्मणा ॥४२॥
शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः। कथं दशरथेन त्वं जातः पापो महात्मना ॥४३॥

---

तत्र परिवेत्ता ज्येष्ठे अकृतोद्वाहे अकृताग्न्याधाने च कृतोद्वाहः कृताग्न्याधानः कनिष्ठः। एतेन मद्वधः सुग्रीववशेनेति सूचितं तेन सुग्रीव एव महापापीति व्यञ्जितम् ॥ ३६ ॥ ३७ ॥

गो० टी०—राजहेति। परिवेत्ता ज्येष्ठेऽनूढे दार परिग्रहकृत् 'परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात्' इत्यमरः। नरयगामिनः नरकगामिनः ॥ ३४ ॥

३७ ] ति० टी०—गच्छन्ते गच्छन्ति। तेषु प्रकृते राजहत्वं दोषो बोध्यः ॥ ३७ ॥

गो० टी०—सूचकश्चेति। सूचकः पिशुनः कदर्यः लुब्धः। गच्छन्ते गच्छन्ति ॥ ३६ ॥

३८ ] ति० टी०—यद्यपि क्षत्रियस्य मृगहननमप्यस्ति, तथापि मद्विषयमिदमप्रयोजनमित्याह—अधार्यमिति। वर्जितम् अस्पृश्यत्वेन स्मृतिषूक्तमित्यर्थः ॥ ३८ ॥

रा० टी०—ननु मृगयायां वन्यवधो राज्ञां धर्म एवेत्यत आह—अधार्यमिति। त्वद्विधैः धर्मचारिभिः धर्मप्रवर्तकैः सद्भिः मे चर्म अधार्यं रोमाणि अस्थि च वर्जितम् अस्पृश्यमित्यर्थः, मांसानि अभक्ष्याणि। एतेन मृगयायामपि अकारणिका हिंसा न कर्तव्येति सूचितम् ॥ ३८ ॥

गो० टी०—किमेवं निन्दसि मृगयायां मृगवधस्यादोषत्वादित्यत्राह—अधार्यमिति। मृगचर्मवत् मे चर्म न धार्यम्। मे रोमाणि ऊर्णादिवदास्तरणार्हाणि। मे अस्थि च गजास्थिवत् न स्पृश्यम्। मांसानि च न भक्ष्याणि। अतः किमर्थं मां हतवानसि ॥ ३६ ॥

३९ ] ति० टी०—अभक्ष्याणीत्यत्र प्रमाणमाह—पञ्च पञ्चेत्यादि। ब्रह्मक्षत्रेणेति समाहारद्वन्द्वः। शल्यकः खड्गी। शुक्तिकाकारशल्यावृतसर्वाङ्गो जन्तुविशेष इत्यन्ये। श्वाविधः कण्टकाकारदीर्घरोमभिः शुनां वेधको जन्तुः ॥ ३९ ॥

रा० टी०—अभक्ष्यत्वे प्रमाणमाह—पञ्चेति। हे राघव! ब्रह्मक्षत्रेण ब्राह्मणेन क्षत्रियेण च पञ्चनखाः शल्यकादयः पञ्चैव भक्ष्याः। परिसङ्ख्याविधिरयं रागादन्यत्रापि भक्षणस्य प्राप्तत्वात्, अत एव एवकारलाभः। तथाच मीमांसा—'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' इति। तत्र शल्यकः शुक्तिकाकारशल्यावृतनिखिलशरीरः जन्तुविशेषः, स एव खड्गीत्युच्यते। श्वाविधः कण्टकाकारस्वदीर्घरोमभिः श्वानं विध्यति सः ॥ ३९ ॥

गो० टी०—अभक्ष्यता कुत इत्यत्राह—पञ्चेति। शल्यकः, श्वाविट्, गोधा, शशः, कूर्मश्चेति पञ्चनखाः पञ्च भक्ष्याः पञ्चनखेषु जन्तुषु एते पञ्चैव भक्ष्याः नान्य इत्यर्थः। परिसंख्याविधिरयम्। ब्रह्मक्षत्रेणेत्युपलक्षणं, त्रैवर्णिकेनेत्यर्थः। शलतीति शल्यः "शल श्वल, आशुगमने" इत्यस्माद्धातोः "सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलधिष्ण्यशल्याः" इति निपातनाद्यत्प्रत्ययः। ततः स्वार्थे कः। यद्वा शल्यं शङ्कुः 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः। तत्सदृशानि रोमाणि शल्यानि तद्वान् शल्यः अर्श-आद्यजन्तः ततः स्वार्थे कः। श्वानं विध्यतीति श्वाविधः पचाद्यच्। "अन्येषामपि" इति दीर्घः। पृषोदरादित्वा-(इकारः? संप्रसारणम्) इमौ वराहविशेषौ ॥ ३७ ॥

४०-४१ ] ति० टी०—सोऽहं पञ्चनखो हतः। अभक्ष्यः पञ्चनखो हत इत्यर्थः ॥ ४० ॥ ४१ ॥

रा० टी०—मद्धननं निरर्थकमेवेत्याह—चर्मेति। हे राम! मनीषिणः यस्य मे चर्मादि न स्पृशन्ति, मांसानि चाभक्ष्याणि स पञ्चनखोऽहं हतस्त्वयेति शेषः ॥ ४० ॥

रा० टी०—इदानीं मदीया युद्धप्रवृत्तिरेव नोचितेति बोधयन्नाह—तारयेति। सर्वज्ञया तारया हितं सत्यं वाक्यमहमुक्तः, मोहेन स्वाज्ञानेन तद्वाक्यमतिक्रम्य कालस्य मृत्योर्वशमागतः प्राप्तः ॥ ४१ ॥

गो० टी०—उपसंहरति—चर्म चेति। सोऽहम् अभक्ष्यपञ्चनखान्तर्भूतोऽहम् ॥ ३८ ॥ ३९ ॥

४२ ] ति० टी०—त्वं तु न राज्यार्ह इत्याह—त्वयेति ॥ ४२ ॥

रा० टी०—त्वयेति। विधर्मणा सुग्रीवप्रार्थितविरुद्धधर्माचरणेन त्वया नाथेन वसुन्धरा पृथ्वी विधर्मणा किंचित्संसर्गवशेन विरुद्धधर्माचरणेन पत्या शीलसंपूर्णा प्रमदेव सनाथा न प्रतीयते इति शेषः ॥ ४२ ॥

गो० टी०—त्वयेति। पतिना पत्या ॥ ४० ॥

४३ ] ति० टी०—शठो गूढविप्रियकृत्। निकृतिं परापकारं चरतीति नैकृतिकः। मिथ्यैव प्रश्रितं मानसं यस्य सः अजितान्तःकरण इति यावत् ॥ ४३ ॥

---

१ लोके इति रा. पाठः। २ राजन्निति गो. पाठः। ३ संपन्ना भूतेन पतिना यथेति गो. पाठः।

छिन्नचारित्र्यकक्ष्येण सतां धर्मातिवर्तिना । त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४४ ॥
अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् । वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४५ ॥
उदासीनेषु योऽस्मासु विक्रमोऽयं प्रकाशितः । अपकारिषु ते राम नैवं पश्यामि विक्रमम् ॥ ४६ ॥
दृश्यमानस्तु युध्येथा मया युधि नृपात्मज । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४७ ॥
त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः । प्रसुप्तः पन्नगेनेव नरः पापवशं गतः ॥ ४८ ॥
सुग्रीवप्रियकामेन यदहं निहतस्त्वया । मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ॥
मैथिलीमहमेकाह्ना तव चानीतवान्भवेः ॥ ४९ ॥
राक्षसं च दुरात्मानं तव भार्यापहारिणम् । कण्ठे बद्ध्वा प्रदद्यां तेऽनिहतं रावणं रणे ॥ ५० ॥

रा० टी०—शठ इति । महात्मना पा पृथिवीपालकेन दशरथेन जातस्त्वं शठः क्रूरचित्तः अत एव नैकृतिकः निकृतिमपकारं रचयति सः अत एव क्षुद्रः नीचकर्मा अत एव मिथ्याप्रश्रितमानसः कापट्येन नम्रचित्त इव प्रतीत इत्यर्थः । सुग्रीवः कथमापः प्रापः, वाक्यस्य कर्मतयाऽन्वयान्न द्वितीया ॥ ४२ ॥

गो० टी०—शठ इति । शठः गूढविप्रियकृत् निकृत्या अपकारेण जीवतीति नैकृतिकः, क्षुद्रः क्षुद्रकर्मकारी । मिथ्याप्रश्रितमानसः मिथ्याशान्तमनस्कः ॥ ४१ ॥

४४ ] ति० टी०—छिन्ना चारित्र्यस्य कक्ष्या मर्यादा येन स तथा । सतां धर्ममतिक्रान्तेन ॥ ४४ ॥

रा० टी०—छिन्नेति । छिन्नचारित्रकक्ष्येण छिन्ना चारित्रकक्ष्या सदाचारमर्यादा येन स तेन अत एव सतां धर्मातिवर्तिना सज्जनधर्मोल्लङ्घनशीलेन अत एव त्यक्तधर्माङ्कुशेन त्यक्तः अतिप्रार्थनया त्याजितः धर्माङ्कुशो येन तेन सुग्रीवेण कर्त्रा रामहस्तिना रामहस्तसंबन्धिना बाणेन करणेन अहं निहतस्ताडितः ॥ ४४ ॥

गो० टी०—छिन्नेति । छिन्ना चारित्रमेव कक्ष्या इभबन्धनं येन स तथा । सतां धर्मातिवर्तिना सतां धर्माः पूर्वोक्ताः सामदानसापराधिजनदण्डनादयः तानतीत्य वर्तत इति तथा । गजविषये अतिक्रान्तमर्यादेनेत्यर्थः ॥ ४२ ॥

४५ ] ति० टी०—वक्ष्यसे किं वक्ष्यसीत्यर्थः । किमित्यध्याहारः ॥ ४९ ॥

रा० टी०—अशुभमिति । अशुभम् अविहितहिंसामयत्वेनामङ्गलम् अत एव अयुक्तम् अयोग्यम् अत एव सतां विगर्हितम् ईदृशम् अन्यप्रार्थनया संपादितं कर्म कृत्वा सद्भिः सह समागतस्त्वं किं वक्ष्यसे । एकश्चकारः किमर्थे ॥ ४९ ॥

गो० टी०—अशुभमिति । ईदृशं कृत्वा स्थितस्त्वं सद्भिः ईदृशम् अशुभत्वादिविशिष्टं वक्ष्यसे अशुभकारीत्येवं वक्ष्यसीत्यर्थः ॥ ४३ ॥

४६–४७] ति० टी०—अपकारिषु दारापहारिषु ॥ ४६ ॥ ४७ ॥

रा० टी०—ननु स्वप्रयोजनसाधनार्थमेवेदं मया कृतमित्यत आह—उदासीनेष्विति । हे राम ! उदासीनेषु उपकारानप[illegible]र-रहितेषु अस्मासु योऽयमुत्कटः विक्रमः प्रकाशितः सु[illegible]ण कारित इत्यर्थः, एवमनेन प्रकारेण ते अपकारिषु विक्रमं सुग्रीवपराक्रमं न पश्यामि सुग्रीवो न करिष्यतीत्यर्थः ॥ ४६ ॥

गो० टी०—उदासीनेष्विति । अपकारिषु रावणादिषु ४४

रा० टी०—दृशीति । हे नृपात्मज ! दृशी सर्वद्रष्टा अत एव अमानः सर्वद्रष्टृत्वादिगर्वरहितः किंच न मानः पूजावान् यस्मात् सः सर्वपूज्य इत्यर्थः, त्वं यदि मया सह युधि युध्येथास्तदा अद्यैव मया निहतस्ताडित एव त्वं स्वतम् अतिविस्तृतं देवं मयुद्धोत्साहजनितकान्ति त्वं पश्येः । एतेन सुग्रीवस्याल्पबलत्वान्ममातीवयुद्धोत्साहो न जात इति ध्वनितम् । तुशब्दो यद्यर्थे इववैशब्दा एवार्थे ॥ ४७ ॥

गो० टी०—' दृश्यमानस्तु युध्येथाः ' इति पाठः ॥ ४९ ॥

४८ ] ति० टी०—अदृश्येनाप्राप्तदर्शनेन त्वया पन्नगवन्निहतः अतस्त्वं पापवशं गत इत्यर्थः ॥ ४८ ॥

रा० टी०—त्वयेति । दृश्येन मद्दृष्टिपथं गतेनापि त्वया दुरासदः अन्यैर्धर्षयितुमशक्योऽहं पानवशं गतः मद्यादिपानवशं प्राप्तः अत एव प्रसुप्तः प्रसुप्तसदृशो नरः पन्नगेनेव निहतः । एतेन सुग्रीवं त्यक्त्वा रामेणैव सह मया युद्धं न कृतमिति वालिपश्चात्तापः सूचितः ॥ ४८ ॥

गो० टी०—त्वयेति । अदृश्येनेति छेदः ॥ ४६ ॥

४९ ] ति० टी०—एतदर्थं सीताया आहरणमुद्दिश्य मामेव पूर्वं प्राप्य यद्यचोदयस्तदा तव मैथिलीमहमेकाह्नाऽऽनीतवान्भवेभवेयमिति यावत् ॥ ४९ ॥

५० ] ति० टी०—अनिहतम् अनिहतमेवेत्यर्थः ॥ ५० ॥

रा० टी०—सुग्रीवेति । यत् यदर्थं सुग्रीवप्रियकामेन त्वया अहं निहतः एतदर्थं यदि मां पूर्वं त्वमचोदयस्तर्हि रणे अनिहतमेव तव भार्यापहारिणमत एव दुरात्मानं रावणं राक्षसं कण्ठे बद्ध्वा ते तुभ्यमहं प्रदद्याम् । श्लोकद्वयमेकान्वयि

१. चारित्रेति गो. रा. पाठः । २ ते इति गो. पाठः । ३ तं राजन्नहीति गो. पाठः । ४ पानेति गो. रा. पाठः । ५ अर्धमेतदग्रिमश्लोकोत्तरं गो. पाठे । ६ यत्कृतेऽस्मीति गो. पाठः । ७ अर्धमेतत् रा. नास्ति । ८ भवेदिति गो. पाठः । ९ अर्धमेतत् गो. नास्ति ।

न्यस्तां सागरतोये वा पाताले वाऽपि मैथिलीम् । आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ॥ ५१ ॥
युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि । अयुक्तं यदधर्मेण त्वयाऽहं निहतो रणे ॥ ५२ ॥
काममेवंविधो लोकः कालेन विनियुज्यते । क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥ ५३ ॥
इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद्व्यथितो महात्मा ।
समीक्ष्य रामं रविसंनिकाशं तूष्णीं बभौ वानरराजसूनुः ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तदशः सर्गः ॥ १७ ॥

एतेन दीनदयालुत्वादयो रामगुणाः वालिना न ज्ञाता इति सूचितम् ॥ ४९ ॥ ५० ॥

गो० टी०—मामेवेति । एतदर्थं मैथिल्यानयनार्थं भवेत् भवेयम्, पुरुषव्यत्यय आर्षः ॥ ४७ ॥

गो० टी०—सुग्रीवेति । यत्कृते यस्य रावणस्य कृते हतोऽस्मि तं कण्ठे बद्ध्वा ते प्रदद्यामिति योजना । सुग्रीवसख्यनिमित्तभूतं मैथिल्यानयनं च तारया पूर्वं निवेदितमिति ज्ञेयम् ॥ ४८ ॥

५१-५२ ] ति० टी०—सागरतोये तन्मध्यवर्तिद्वीपे । श्वेतामश्वतरीमिव श्वेताश्वतरीरूपिणीं श्रुतिं मधुकैटभाभ्यां पाताले निगृहीतां यथा हयग्रीवो ध्रुवमानयति स्म तद्वत् ॥ ५१ ॥५२॥

रा० टी०—न्यस्तामिति । सागरतोये वा पाताले वा न्यस्तां केनचित्संस्थापितामेतां त्वदीप्सितां मैथिलीं तवादेशात् त्वदाज्ञात अश्वतरीम् अश्वेन हयग्रीवेण तरति स्वस्थानं प्राप्नोति तां वेदश्रुतिमिव द्रु आशु आनयेयम् । अश्वतरीशब्दः गौरादिङीषन्तः अणन्तप्रकृतिको वा, द्वयभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् । किंच श्वेतां शुक्लामश्वतरीं तद्रूपां श्रुतिमिव उक्तस्वरूपां श्रुतिं मधुकैटभौ जह्रतुस्तां हयग्रीवोऽनयदिति प्रसिद्धम् ॥ ५१ ॥

गो० टी०—न्यस्तामिति । श्वेतामश्वतरीमिव मधुकैटभाभ्यां पाताले निरुद्धां श्वेताश्वतरीरूपां श्रुतिं हयग्रीव इवेत्यर्थः ॥ ४९ ॥

रा० टी०—युक्तमिति । अधर्मेणोपलक्षितोऽपि सुग्रीवः मयि स्वर्गते सति यद्राज्यं प्राप्नुयात् तद्युक्तं, यत् अहं त्वया रणे निहतस्तत्तु अयुक्तम् । किंच यत् त्वया रणेऽहं निहतस्तद्युक्तम् अत एव मयि स्वर्गते सति अधर्मेण अयुक्तं धर्मेण पालितमित्यर्थः, यत् राज्यं तत् सुग्रीवः प्राप्नुयात् । सुष्ठुं राजानमन्तरा धर्मो नङ्क्ष्यतीति तात्पर्यम् ॥ ५२ ॥

गो० टी०—युक्तमिति । राज्यार्थं सुग्रीवो मां हतवानित्येतद्युक्तं त्वं तु मां हतवानित्येतत्त्वयुक्तमित्यर्थः, ज्ञातीनामेवंविधकृत्यस्य स्वाभाविकत्वादिति भावः ॥ ५० ॥

५३ ] ति० टी०—लोकः सर्वोऽपि कालेन कालधर्मेण मृत्युना विनियुज्यते, एवंविधः स्वभावः काममस्तु तस्मान्मे मरणकृतो न विषादः, अपि तु भवता राज्यं प्राप्तं चेत्तदा मद्वधकारणस्य त्वद्राज्यस्य लोकैः प्रश्ने क्षमं युक्तमुत्तरं साधु सम्यग्विचिन्त्यताम् ॥ ५३ ॥

रा० टी०—काममिति । एवंविधः मत्सदृशः लोकः सर्वजनः कालेन कामं यथेच्छं विनियुज्यते शरीरेभ्य इति शेषः, अतो मयि न विषाद इति तात्पर्यम् । ननु विषादाभावे कथमेवं बहु वदसीत्यत आह—क्षमं युक्तं प्राप्तं लोकम् अनुभूतमुत्तरं किमर्थं वाली त्वया निहतः इति जनप्रश्नप्रत्युत्तरं साधु चिन्त्यताम्॥५३॥

गो० टी०—काममिति । लोकः एवंविधे मरणरूपे कर्मणि विनियुज्यते, जातस्य मरणं स्वभाव इत्यर्थः । भवता प्राप्तम् अदृश्यतया प्रहरणं क्षमं चेत् तत्र साधूत्तरं चिन्त्यतामित्यर्थः ॥ ५१ ॥

५४ ] ति० टी०—उपसंहरति—इत्येवमिति । अस्य सर्गस्य तीर्थेन रामस्तुतिपरतया यद्योजनं तत्र कविनिबद्धस्य वक्तुर्वालिनस्तात्पर्यविषयभूतम् । 'यदयुक्तं मया पूर्वं प्रमादाद्वाक्यमप्रियम् । तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव ॥' इत्यग्रे वाल्युक्तेः । नापि वाल्मीकेस्तस्य दुरुक्त्यनुवादकत्वात् । अतात्पर्यविषयमपि बुद्धिवैभवादक्षरार्थत्वेन वर्ण्यत इति चेत्काव्यान्तरमेव भगवतः स्तावकं क्रियताम्, किमनेन प्रयासेनेति दिक् ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तदशः सर्गः ॥१७॥

रा० टी०—इतीति । शराभिघाताद्व्यथितः अत एव परिशुष्कवक्त्रः महात्मा अमरराजसूनुः वाली इत्येवमुक्त्वा रविसंनिकाशं रवेरपि प्रकाशकं रामं समीक्ष्य तूष्णीं बभूव ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तदशः सर्गः ॥ १७ ॥

गो० टी०—इतीति । परिशुष्कवक्त्रः बहुभाषणक्लेशादिति भावः ॥ ५२ ॥

अस्मिन् सर्गे द्विपञ्चाशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

# अष्टादशः सर्गः ।

भ्रातृभार्यापहारपातकिनस्ते वधरूपो दण्डो धर्म्य एवेति राम समर्थयति । पूर्वं कृतनिन्दातोऽनुतप्तोवाली रामः क्षमयित्वाङ्गद-परिपालन प्रार्थयते । तदङ्गीकृत्य रामो वालिनमाश्वासयति ।

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् । परुषं वालिना रामो निहतेन विचेतसा ॥ १ ॥
तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् । उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २ ॥
धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् । अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३ ॥
धर्ममर्थं च कामं च समयं चापि लौकिकम् । अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ४ ॥
अपृष्ट्वा बुद्धिसंपन्नान्वृद्धानाचार्यसंमतान् । सौम्य[1] वानरचापल्यात्त्वं मां वक्तुमिहेच्छसि ॥ ५ ॥
इक्ष्वाकूणामियं भूमिः सशैलवनकानना । मृगपक्षिमनुष्याणां निग्रहानुग्रहेष्वपि[2] ॥ ६ ॥
तां पालयति धर्मात्मा भरतः सत्यवानृजुः । धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७ ।

१-२ ] ति० टी०—प्रश्रितं प्रश्रयाभासोपेतम्, एवं धर्मार्थसहितत्वं चाभासरूपमेव । तत्र 'मामेव यदि पूर्वम्' इत्यादि हिताभासोऽर्थाभासश्च । धर्माभासो राजहेत्यादि । परुषत्वं तु मुख्यमेव । निहतेन विरुद्धेन ॥ १ ॥ २ ॥

३ ] ति० टी०—धर्मार्थगुणसंपन्नमित्यब्रवीदिति क्रियाविशेषणम् । अधिक्षिप्तः परुषमुक्तः ॥ ३ ॥

रा० टी०—वालिवचनश्रवणानन्तरकालिकरामवचनं वर्णयितुमाह—इतीति । इत्यनेन प्रकारेण प्रश्रितं नम्रताविशिष्टं धर्मार्थसहितं परुषं परुषत्वेन प्रतीयमानं वाक्यं निहतेन रामबाणविद्धेन अत एव विचेतसा व्याकुलचित्तेन वालिना राम उक्त आसीदिति शेषः ॥ १ ॥

गो० टी०—अथ रामस्योत्तरमष्टादशे—इत्युक्त इत्यादि । वालिना इत्युक्त इत्यन्वयः । विचेतसेत्यनेन परुषवचनमज्ञानकृतमित्युच्यते ॥ १ ॥

रा० टी०—तमिति । निष्प्रभं प्रभारहितम् आदित्यमिव मुक्ततोयं त्यक्तजलम् अम्बुदं मेघमिव उपशान्तं जलेन सिक्तम् अनलं वह्निमिव उक्तं वाक्यं येन तं हरिश्रेष्ठं श्रेष्ठवानरैः सहितम् अनुत्तमम् अनुजदारग्रहणरूपाधर्मकर्मणाऽधमं हरीश्वरं तं वालिनं तदा वैचित्यकाले अधिक्षिप्तः वालिकर्तृकाधिक्षेपविशिष्टो रामः पश्चात् वाल्युक्तिश्रवणानन्तरं धर्मार्थगुणसंपन्नं धर्मार्थगुणैः संयुक्तं वचनमब्रवीत् । श्लोकद्वयमेकान्वयि ॥२॥३ ॥

गो० टी०—तमित्यादि द्वौ । तदा पूर्वम् अधिक्षिप्तो रामः धर्मार्थगुणसंपन्नम् अनुत्तमं यथा भवति तथा पश्चाद्वालिनमब्रवीदिति योजना ॥ २ ॥ ३ ॥

४ ] ति० टी०—लौकिकं समयं लोकाचारम् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—धर्ममित्यादिभिः । धर्मादिकं लौकिकं समयं शिष्टाचारमित्यर्थः, कथमविज्ञाय बाल्यात् स्वाज्ञानात् हेतोः मां विगर्हसे ॥ ४ ॥

गो० टी०—धर्ममिति । समयम् आचारम् 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । बाल्यात् अज्ञानात् ॥४॥

५ ] ति० टी०—अविज्ञाने हेतुमाह—अपृष्ट्वेति । आचार्यसंमतान्स्वस्वकुलाचारशिक्षकान् । वानरत्वादेवैतदभावः । वानरत्वप्रयुक्तचापल्यादेवं वादस्तवेत्यर्थः । इच्छस्यैषीः ॥ ५ ॥

रा० टी०—अपृष्ट्वेति । हे सौम्य ! हे वानर ! आचार्यसंमतान् आचार्यानुकूलान् बुद्धिसंपन्नान् वृद्धान् अपृष्ट्वा तेभ्यः प्रश्नपूर्वकं धर्मानश्रुत्वेत्यर्थः, चापल्याद्धेतोः त्वं मां वक्तुमिच्छसि ॥ ५ ॥

गो० टी०—अपृष्ट्वेति । अपृष्ट्वा धर्मादिकमिति शेषः । वानरचापल्यात् वानरत्वकृतचापल्यात् ॥ ५ ॥

६ ] ति० टी०—इयं भूमिरिक्ष्वाकूणां मनुनाऽस्मत्कुलकूटस्थेन दत्तेत्यर्थः । तथा मृगादिपर्यन्तं निग्रहानुग्रहेष्वधिकारोऽपि दत्त इति शेषः ॥ ६ ॥

रा० टी०—तदज्ञानमेव प्रकटयन्नाह—इक्ष्वाकूणामिति । सशैलवनकानना शैलवनकाननविशिष्टा इयं भूमिः इक्ष्वाकूणाम् अतो मृगपक्षिमनुष्याणां निग्रहानुग्रहेषु अधिकार इति शेषः । अपिर्हेतौ ॥ ६ ॥

गो० टी०—इक्ष्वाकूणामिति । इयं जम्बूद्वीपात्मिका । लोके कस्यचित् भूमेः स्वत्वेऽपि शैलवनादिकमाक्रम्यान्ये भूमिं पीडयन्ति तद्व्यावृत्त्यर्थमाह—सशैलेति । काननं महारण्यम् । मृगादिनिग्रहानुग्रहावपि इक्ष्वाकूणामेव कृतमिति शेषः ॥ ६ ॥

७ ] ति० टी०—तां पितृपितामहादिक्रमागतां भुवम् । निग्रहानुग्रहे दुष्टशिष्टयोरिति शेषः ॥ ७ ॥

रा० टी०—तामिति । तामिक्ष्वाकुभूमिमृजुः सरलस्वभावः सत्यवानतिसत्यवक्ता धर्मात्मा धर्मकामार्थतत्त्वज्ञः धर्मादियाथार्थ्यज्ञाता निग्रहानुग्रहे रतस्तत्परो भरतः पालयति ॥ ७ ॥

गो० टी०—तामिति । तां भूमिम् ॥ ७ ॥

१ सौम्येति गो. रा. पाठः । २ निग्रहप्रग्रहावपीति गो. पाठः ।

नयश्च विनयश्चोभौ यस्मिन्सत्यं च सुस्थितम् । विक्रमश्च यथा दृष्टः स राजा देशकालवित् ॥ ८ ॥
तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः । चरामो वसुधां कृत्स्नां धर्मसंतानमिच्छवः ॥ ९ ॥
[१]तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले । पालयत्यखिलां पृथ्वीं कश्चरेद्धर्मविप्रियम् ॥ १० ॥
ते वयं मार्गविभ्रष्टं स्वधर्मे परमे स्थिताः । भरताज्ञां पुरस्कृत्य [४]चिन्तयामो यथाविधि ॥ ११ ॥
त्वं तु संक्लिष्टधर्मश्च कर्मणा च विगर्हितः । कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥
ज्येष्ठो भ्राता पिता वाऽपि यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मे च पथि वर्तिनः ॥ १३ ॥
यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः । पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चैवात्र कारणम् ॥ १४ ॥

८ ] ति० टी०—यथा दृष्टोऽपरोक्षानुभवसिद्धः स राजाऽस्मिन्काले सर्वभूमेरिति शेषः ॥ ८ ॥

रा० टी०—भरतस्य धर्मात्मत्वादिवर्णने फलमाह—नय इति । यस्मिन्नुभौ नयो विनयश्च सुस्थितमचाञ्चल्यं सत्यं च सन्तीति शेषः, यथा यथावद्विक्रमश्च दृष्टः देशकालवित् उचितदेशादिविज्ञातृत्वधर्मश्च दृष्टः स राजा भवतीति शेषः । एतेन भरते सर्वे राजगुणाः सन्तीति सूचितम् ॥ ८ ॥

गो० टी०—नयश्चेति । नयो नीतिः, विनयः शिक्षा, तावुभौ सत्यं च यथादृष्टः शास्त्रविहितः विक्रमश्च एतत्सर्वं यस्मिन् सुस्थितं देशकालवित् स भरतो राजेति योजना ॥ ८ ॥

९ ] ति० टी०—ततः किं तत्राह—तस्येति । धर्माय कृत आदेशो नियोगो येषां ते । धर्मसंतानं धर्मवृद्धिम् । धर्मपदमधर्मनिवृत्तेरप्युपलक्षणम् ॥ ९ ॥

रा० टी०—तस्येति । धर्मसंतानमिच्छवो वयमन्ये च पार्थिवाः तस्य भरतस्य धर्मकृतादेशाः धर्माय कृतः आदेशः आज्ञा यैस्ते सन्तः कृत्स्नां वसुधां चरामः भरतानुकूलतयैव सर्वे वर्तन्त इत्यर्थः ॥ ९ ॥

गो० टी०—तस्येति । धर्मकृतादेशाः धर्मकृतनियोगाः । कथं कनिष्ठेन ज्येष्ठनियोग इत्यपेक्षायां राजधर्मोऽयमित्याशयेनोक्तं धर्मपदम् । धर्मसंतानं धर्मवृद्धिम् । यद्यपि भरतेन नादेशः कृतः तथापि नेदमसत्यं यथाकथंचित् भरतेन राज्यभरणस्य स्वीकृतत्वात्तदन्येषां तत्कुलीनानां तदादिष्टत्वं सिद्धमिति हृदयम् । अत एवायोध्याकाण्डे दर्शितम्—त्वं राजेति ॥ ९ ॥

१० ] ति० टी०—धर्मविप्रियं धर्मनाशं कश्चरेदाचरितुं शक्नुयात् ॥ १० ॥

रा० टी०—तस्मिन्निति । नृपतिशार्दूले नृपतिश्रेष्ठे भरते पृथ्वीं पालयति सति धर्मविप्रियं धर्मविरुद्धं कश्चरेत् ॥ १० ॥

गो० टी०—तस्मिन्निति । धर्मनिग्रहं धर्महानिम् ॥ १० ॥

११ ] ति० टी०—ते वयमिदानींतनमूलप्रभुभरताज्ञया मार्गविभ्रष्टं चिन्तयामो विचारयामः । 'निगृह्णीमः' इति पाठान्तरम् ॥ ११ ॥

रा० टी०—ते इति । परमे उत्कृष्टे स्वधर्मे राजोचितकर्मणि स्थितास्ते धर्मसंतानमिच्छवो वयं भरताज्ञां भरतकर्मकाज्ञापनं पुरस्कृत्य मार्गविभ्रष्टान् यथाविधि चिन्तयामः विचार्य दण्डयाम इत्यर्थः । 'धर्मविभ्रष्टान्' इति भूषणपाठः ॥ ११ ॥

गो०टी०—ते वयमिति । धर्मविभ्रष्टं जनमिति शेषः ॥ ११ ॥

१२ ] ति० टी०—ततः किं तत्राह—त्वं तु कर्मणा चारित्रेण गर्हितो लोके निन्दितः, अत एव संक्लिष्टः पीडितो धर्मो येन तादृशः । कामतन्त्रं कामरूपः पुरुषार्थः स एव प्रधानो मुख्यो यस्य सः ॥ १२ ॥

रा० टी०—ननु विचारेण त्वया किं निश्चितमित्यत आह—त्वमिति । कामतन्त्रप्रधानः कामतन्त्रेषु कामाधीनेषु प्रधानो मुख्यः अत एव राजवर्त्मनि राजोचितमार्गे न स्थितः अत एव कर्मणा स्वेच्छाचरणेन हेतुना विगर्हितो निन्दितः अत एव संक्लिष्टधर्मा संक्लिष्टः विबाधितः धर्मः सदाचारो येन सः त्वमसीति शेषः ॥ १२ ॥

गो० टी०—त्वं त्विति । संक्लिष्टधर्मा धर्मविलोपकृत् कर्मणा च विगर्हित इति अकृत्यकारीत्यर्थः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—तदुपपादयति—ज्येष्ठ इति । विद्यां त्रय्यादिविद्याम् । धर्मे च पथि वर्तिनो धर्ममार्गे वर्तो वर्तनं यस्य तस्य ॥ १३ ॥

रा० टी०—तदनुष्ठितकर्मणां सदाचारविरुद्धत्वं बोधयितुं धर्मानाह—ज्येष्ठ इति द्वाभ्याम् । धर्मे पथि वर्तिनो जनस्य ज्येष्ठो भ्राता पिता च यो विद्यां प्रयच्छति स च ते त्रयः पितर इव ज्ञेयाः पितृवत्पूज्या इत्यर्थः । एकश्चशब्द इवार्थे ॥ १३ ॥

१४ ] ति० टी०—अत्र चिन्तने । तथा धर्मो धर्मज्ञानमेव कारणम् ॥ १४ ॥

रा० टी०—यवीयानिति । यवीयान् कनिष्ठो भ्राता, आत्मनः पुत्रश्च, गुणोदितः शिष्योचितगुणयुक्तः शिष्यश्च, ते त्रयः पुत्रवच्चिन्त्याः मन्तव्या इत्यर्थः । अत्र एवंचिन्तने धर्म एव कारणम् एवेन दृष्टकारणव्यावृत्तिः, एतेन सुग्रीवे ते विद्वेषोऽधर्म इति सूचितम् ॥ १४ ॥

१ तस्मिन्निति गो. रा. पाठः । २ नियहमिति गो. पाठः । ३ धर्मेति गो. रा. पाठः । ४ निगृह्णीम इति गो. पाठः । ५ धर्मा चेति गो. पाठः । ६ चैवेति गो. पाठः । ७ चेदत्रेति गो. पाठः ।

सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम । हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥ १५ ॥
चपलश्चपलैः सार्धं वानरैरकृतात्मभिः । जात्यन्ध इव जात्यन्धैर्मन्त्रयन्प्रेक्षसे नु किम् ॥ १६ ॥
अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते । नहि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७ ॥
तदेतत्कारणं पश्य यदर्थं त्वं मया हतः । भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८ ॥
अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥ १९ ॥

गो० टी०–यवीयानिति । आत्मन इति त्रिष्वप्यन्वेति । गुणोदित इति च । ते त्रयः पुत्रवच्चिन्त्याः । पुत्रशब्दोऽत्र दृष्टान्तार्थः । यथा पुत्रे पुत्रवद्वर्तते तथान्ययोरपि वर्तितव्यमित्यर्थं । पुत्रे पुत्रवद्वृत्तिर्नाम सम्यक् स्नेहः, गगनं गगनाकारमितिवत् । एवं चिन्त्यत्वे किं प्रमाणं तत्राह–धर्मश्चेदिति । अत्र अस्मिन्नर्थे धर्मः कारणं व्यवस्थापकम् । चेत् यदि धर्मो नानुवर्तनीयः तदा नैवं द्रष्टव्यम् अनुवर्तनीयश्चेत् अवश्यमेवं द्रष्टव्यमिति चेच्छब्दस्य भावः ॥ १४ ॥

१५ ] ति० टी०–तच्च न सर्वेषां सुलभमित्याह—सूक्ष्म इति । सतां सूक्ष्मो यो धर्मः स परा सद्गुरूपदेशादिजा मा शोभा येषां तैरेव विज्ञेयः, अन्यैः परमत्यर्थमविज्ञेय एव । किं चेश्वर एव तज्ज्ञ इत्याह–हृदिस्थ इति । सर्वभूतानामात्मा तत्त्वभूतो व्यापकश्च, अत एव सर्वप्राणिहृदिस्थः स सर्वभूतानां सर्वप्राणिनां शुभाशुभं वेद । एवं चान्तर्यामित्वात्तव पापमहं जाने इति व्यङ्ग्यमत्र ॥ १५ ॥

रा० टी०–ननु सर्वैर्धर्मो विज्ञायते त्वया किमर्थं वर्ण्यते इत्यत आह–सूक्ष्म इति । प्लवङ्गम हे कपे ! सतां धर्मः सूक्ष्मः दुर्लक्ष्य इत्यर्थः, अत एव परमदुर्ज्ञेयः ज्ञातुमत्यन्तमशक्यः । ननु त्वया कथं ज्ञात इत्यत आह–सर्वभूतानां हृदिस्थः आत्मा नियन्ता सर्वभूतानां शुभाशुभं वेद जानाति । एतेन स्वस्य नियन्तृत्वं सूचितं तेन सर्वज्ञत्वं व्यञ्जितम् । सर्वभूतानामित्युभयान्वयि ॥ १५ ॥

गो० टी०–सूक्ष्म इति । सूक्ष्मः अतीन्द्रियः । अत एव सतामपि परमदुर्ज्ञेयः किमुत भवादृशस्येति भावः । यद्वा जनस्य धर्माधर्मकरणं न कोऽपि वेत्तुमर्हति । तर्हि को वेत्तीत्यत्राह–हृदिस्थ इति । सर्वभूतानां हृदिस्थः सर्वान्तर्यामी, अलुक् । आत्मा परमात्मा शुभाशुभं शुभाशुभकरणं वेत्तीत्यर्थः । सूक्ष्मं धर्मं परमात्मना मया विना को वेत्तुं दक्ष इति भावः ॥ १५ ॥

१६ ] ति० टी०–त्वं तु धर्मज्ञानप्रसक्तिहीन एवेत्याह–चपल इति। जात्यन्धो जात्यन्धैरिव चपलैरकृतात्मभिराचार्याशिक्षितैर्वानरैः सह मन्त्रयन्निश्चिन्वन्किं नु कथं नु प्रेक्षसे ज्ञास्यसि, धर्ममिति शेषः । 'रक्षसे नु किम्' इति पाठे रक्षणीयप्रजाजातं किं नु रक्षसि, न किमपि। अतो धर्मभ्रष्टो राजदण्ड्यस्त्वमिति भावः ॥ १६ ॥

रा० टी०–चपल इति । जात्यन्धैर्जन्मान्धैः सार्धं मन्त्रयन् जात्यन्ध इव अकृतात्मभिः अस्वस्थचित्तैः अत एव चपलैः वानरैः सार्धं मन्त्रयन् चपलस्त्वं किं नु प्रेक्षसे विचारयसि धर्ममिति शेषः ॥ १६ ॥

गो० टी०–त्वया तु न शक्य इत्याह–चपल इति । किं नु द्रक्ष्यसे न किमपि द्रक्ष्यसीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–अथ धर्मभ्रष्टत्वं व्यक्तमेव वक्तुमाह–अहं त्विति । अस्य वचनस्य चपलश्चपलैरिति वचनस्य व्यक्तताम् । व्यक्तोऽर्थोऽस्येत्यर्शआद्यजन्तं व्यक्तपदम् । तद्भावो व्यक्तता तदर्थस्तं ब्रवीमि ॥ १७ ॥

रा० टी०–नन्वस्माकं चपलत्वादिवैशिष्ट्यं नास्तीति किमर्थमेवमुच्यते इत्यत आह–अहमिति । अस्य स्वोक्तस्य वचनस्य चापल्यादिबोधकवाक्यस्य व्यक्ततामभिप्रायप्राकट्यं ते ब्रवीमि अतः रोषात् मां केवलं विगर्हितुं त्वं नार्हसि ॥ १७ ॥

गो० टी०–अहमिति । अस्य वचनस्य यवीयानात्मन इति पूर्वोक्तवचनस्य ॥ १७ ॥

१८ ] ति० टी०–पश्य युक्तमयुक्तं वेति चिन्तय । वर्तसि वर्तसे ॥ १८ ॥

रा० टी०–तदिति । यदर्थं मया त्वं हतस्तदेतत्कारणं पश्य जानीहि शृण्वित्यर्थः । तत् कारणमाह–सनातनं धर्मं त्यक्त्वा भ्रातुः कनिष्ठबन्धोर्भार्यायां वर्तसि वर्तसे ॥ १८ ॥

गो० टी०–तदिति । वर्तसि वर्तसे ॥ १८ ॥

१९ ] ति० टी०–ननु 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥' इत्यग्रे प्रायोपवेशसमयेऽङ्गदोक्तेः सुग्रीवस्यापि ज्येष्ठभ्रातुः पितृसमस्य भार्याधर्षणं तुल्यमित्यत आह—अस्य त्वमिति । धरमाणस्य प्राणान्धारयत एव जीवतस्त्वया निश्चीयमानजीवमस्यैव पत्न्यां तत्र स्नुषाभूतायां रुमायां यतो वर्तसे, अतस्त्वं स्पष्टं पापकर्मकृत् । सुग्रीवस्तु तव जीवननिश्चयाभावात्त्वत्पत्न्यां तारायां प्रागवर्तिष्ट अतः परं वर्त्स्यति च । किंच त्रैवर्णिकेष्वपि देवरस्य मृतभ्रातृस्त्रियामपुत्रायां वृत्तिदर्शनात्तिर्यग्योनिषु तस्यां वृत्तिर्न दोषः । तथावृत्तौ च मरणज्ञानमेव प्रयोजकं तिर्यक्ष्विति भगवदाशयः । अनेन त्रैवर्णिकेतरस्त्रीणां मृतभर्तृकाणां तरुणीनां स्वजातीयपुरुषाङ्गीकारो नाधर्म इति सूचितम् । दृश्यते च तथा व्यवहारः शूद्रादिजातौ । न च मनुष्याधिकारस्य निषेधादिशास्त्रस्य कथं

१ दुर्ज्ञेय इति गो. पाठः । २ द्रक्ष्यसे इति गो. पाठः । ३ वेदितुमिति युक्तं भाति

तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर । भ्रातृभार्याभिमर्शेऽस्मिन्दण्डोऽयं प्रतिपादितः ॥ २० ॥
नहि लोकविरुद्धस्य लोकवृत्तादपेयुषः । दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ २१ ॥
न च ते मर्षये पापं क्षत्रियोऽहं कुलोद्गतः । औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥ २२ ॥
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः । भरतस्तु महीपालो वयं त्वादेशवर्तिनः ॥ २३ ॥

तिर्यक्षु प्रवृत्तिरिति वाच्यम् । तिर्यग्योनेरपि मनुष्यवद्राजादिव्यवहारदर्शनेन मनुष्यतुल्यज्ञानवत्त्वादस्त्येवायं दोष इत्याशयात् । किंच धर्मेऽनधिकारिणामपीन्द्रादीनां वृत्रवधादौ ब्रह्महत्यादिदोषस्मरणेन निषेधेषु तदतिक्रमप्रायश्चित्तादौ च देवानामधिकारवदेषामप्यधिकारे बाधकाभावः । किंच देवादीनां स्वयजनीयेन्द्रान्तराभावादनधिकार इति पूर्वमीमांसायां निर्णीतम् । एवं च तदनपेक्षदानादिधर्मेषु ब्रह्मविद्यायां चाधिकारोऽस्त्येवेत्युत्तरमीमांसायां स्पष्टम् । तद्वदीदृशानां ज्ञानवतां तिरश्चामप्यधिकारे बाधकाभावः । किंच सर्वदेवतावाचकपदानामन्तर्यामीश्वरवाचकत्वेन सर्वत्र देवानामधिकारोऽस्त्येव । न च ब्राह्मणत्वाद्यभावात्तेषामनधिकारः, तेषामपि क्षत्रियत्वाद्वैवस्वतमन्वादेरिव । अत एव चन्द्रवरुणादीनां यज्ञः स्मर्यते पुराणेषु । तत्र तत्र कर्मण्यर्थवादतः फलकल्पनवत्पुराणस्यार्थवादैस्तदधिकारस्यापि कल्पयितुं युक्तत्वात् । किंच त्रैवर्णिकस्याधिकार इत्यत्र त्रैवर्णिकपदं वेदतदर्थज्ञानवत्परम् । अतो देवादीनां तदधिकारः सिद्ध इति भगवतो व्यासवाल्मीकिप्रभृतीनां चाशयः । जैमिनेस्त्वेतदंशेऽज्ञानमेव । अत एव तद्दूरीकरणार्थं मार्कण्डेयेनात्मानं प्रति धर्मान्पृच्छतो जैमिनेर्विन्ध्यारण्यवासितत्त्वज्ञपक्षिमुखेन धर्मबोधनं कृतम् । तेन हि पक्षिणां ज्ञानानधिकार इति स्वोक्तेस्तस्याविश्वासे जातेऽन्यत्रापि व्यासादिविरुद्धे स्वोक्तेऽर्थे तस्याप्रामाण्यग्रहो भविष्यतीति तदाशय इत्यन्यत्र विस्तरः । अत एव गृध्रराजस्य भगवता दाहादि कृतम्, अग्रे च संपातिना तद्भ्रात्रा करिष्यमाणमुदकदानादि नासंगतमिति दिक् ॥ १९ ॥

रा० टी०—ननु पितृसदृशज्येष्ठभ्रातृभार्याविमर्शात् सुग्रीवस्यापि तथात्वमित्यत आह—अस्येति । धरमाणस्य धारयतः प्राणानिति शेषः, जीवत इत्यर्थः, महात्मनः सुग्रीवस्य स्नुषायां पुत्रवधूसदृश्यां रुमायां तदभिधभार्यायां कामात् पापकर्मकृत् स्ववशीभूतकनिष्ठभ्रातृत्यागरूपपापकर्मकर्ता त्वं वर्तसे । एतेन सुग्रीवस्य त्वज्जीवनाभावनिश्चयात् त्वद्भार्याविमर्शेऽपि न दोष इति, तव तु कनिष्ठजीवननिश्चयेऽपि तद्भार्याविमर्शात् शरणागतभ्रातृत्यागात् दोषसमूह इति च सूचितम् । मृतज्येष्ठभ्रातृभार्यापरिग्रहे न दोष इति धर्मशास्त्रे प्रसिद्धम् । अत एव 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः' इति वक्ष्यमाणप्रायोपवेशसमये अङ्गदोक्तौ जीवत इति विशेषणं संगच्छते । अत एव 'देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इत्यादि संगच्छते । नच हृद्यपेक्षया मनुष्याधिकारत्वादिति सूत्रभाष्यादौ मनुष्यमात्रस्यैव शास्त्रनियम्यत्वमिति सिद्धान्तितत्वात् वालिविषये धर्माधर्मविचारः सर्वज्ञेन परमात्मना रामेण कथं कृत इति वाच्यम् 'तदुपर्यपि बादरायणः' इतितदुत्तरसूत्रभाष्यादौ गन्धर्वादीनामपि शास्त्रनियम्यत्वस्य सिद्धान्तितत्वेन वालिनो देवपुत्रत्वादेवत्वेनादोषात् । अत एव भगवत्पार्श्ववर्तिनां नन्दीश्वरगरुडकाकशुण्डादीनां वेदाधिकारो न विरुध्यते । अत एव सर्वज्ञपरमात्मरामकृता जटायुषः प्रमीतक्रिया तद्भ्रात्रा संपातिना करिष्यमाणोदकदानादि च संगच्छते । न च ब्राह्मणाद्युद्देश्येन कर्मबोधकप्रवृत्तेः देवादीनां तदभावात्कथं तद्विषयत्वमिति वाच्यं, तेषामपि कश्यपादिजन्यत्वादिना ब्राह्मणादित्वादिति दिक् ॥ १९ ॥

गो० टी०—अस्येति । धरमाणस्य जीवितं धारयतः । अनेन जीवतो भ्रातुर्भार्या भ्रात्रा न ग्राह्या मृतस्य तु ग्राह्येति तत्कुलधर्म इति प्रतीयते । अत एव हि वालिनो बिलगमनानन्तरं मन्त्रिभिरभिषिक्तस्य सुग्रीवस्य तारापरिग्रहं रामो न निन्दितवान् । अत एव प्रायोपवेशेऽङ्गदो वक्ष्यति 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥' इति ॥ १९–२१ ॥

२० ] ति० टी०—उपसंहरति—तदिति । तस्माद्धर्माद्व्यतीतस्य धर्मभ्रष्टस्य । एवं चेदृशे व्यवहारे प्राणान्तो दण्ड इति सूचितम् ॥ २० ॥

रा०टी०—उपसंहरन्नाह—तदिति । तत् मम धर्मपालकत्वाद्धेतोः कामवृत्तस्य स्वेच्छावर्तिनः अत एव अस्मिन् भ्रातृभार्याभिमर्शे धर्माद्व्यतीतस्य परिभ्रष्टस्य ते तव अयं वधरूपो दण्डः मया प्रतिपादितः ॥ २० ॥

२१ ] ति० टी०—लोकवृत्ताल्लोकव्यवहारमर्यादातोऽपेयुषोऽपगतवतः । दण्डादन्यत्र ततोऽन्यमित्यर्थः । केचित्तु—अनेन तिर्यग्योनिव्यवहारमर्यादाप्येषैवेति ध्वनितम् । दृश्यते च गृहे पाल्यमानेषु पारावतादिष्वन्यं स्वभार्यासहितं दृष्ट्वा तयोः परस्परं युद्धम् । भार्याया बहुप्रकारताडनादिदण्ड इत्याहुः ॥ २१ ॥

रा० टी०—दण्डस्यावश्यकत्वं बोधयन्नाह—नहीति । लोकवृत्तात् शिष्टजनव्यवहारात् अपेयुषः बहिर्गतस्य अत एव लोकविरुद्धस्य जन्तोर्दण्डात् अन्यत्र अन्यस्मिन्नुपाये निग्रहं प्रायश्चित्तं न पश्यामि ॥ २१ ॥

२२–२३ ] ति० टी०—क्षत्रियोऽहं, दण्डाधिकारीत्यर्थः ।

१ अवमर्शे इति गो. पाठः । २ धर्मैति गो. पाठः । ३ हीति गो. पाठः । ४ कुलोद्भव इति गो. पाठः । ५ चेति रा. पाठः ।

त्वं च धर्मादतिक्रान्तः कथं शक्यमुपेक्षितुम् । गुरुधर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ॥ २४ ॥
भरतः कामयुक्तानां निग्रहे पर्यवस्थितः । वयं तु भरतादेशावधिं कृत्वा हरीश्वर ॥
त्वद्विधान्भिन्नमर्यादान्निग्रहीतुं व्यवस्थिताः ॥ २५ ॥
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा । दारराज्यनिमित्तं च निः[8]श्रेयसकरः स मे ॥ २६ ॥
प्रतिज्ञा च मया दत्ता तदा वानरसंनिधौ । प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ॥ २७ ॥

दण्डादन्यत्र निग्रहं न पश्यामीत्युक्तेऽर्थे स्मृतिं प्रमाणयति—औरसीमिति ॥ २२ ॥ २३ ॥

रा० टी०—नतु जन्मान्तरे भोगेन पापक्षयो भवितेति किं त्वत्कर्तृकवधेनेत्यत आह—न चेति । कुलोद्गतः कुलमुद्गतम् उत्कर्षतां प्राप्तं यस्य सः क्षत्रियोऽहं ते पापं न मर्षये सहे । अर्थं पृथक् । ननु धर्मशास्त्रे बहुविधदण्डानां सत्त्वाद्वध एव किमर्थं कृत इत्यत आह—औरसीमिति । औरसीं मुख्यकन्यां भगिनीं वा अनुजस्य भार्यां वा यो नरः कामात् भोगेच्छातः प्रचरेत तस्य दण्डः वधः प्राणवियोग एव स्मृतः । अर्धद्वयमेकान्वयि ॥ २२ ॥

गो० टी०—तर्हि शिक्षैव कर्तव्या किमर्थमवधीस्तत्राह—न हीति ॥ २२ ॥

रा० टी०—नतु इदानीं भरतस्यैव महीपालत्वात् त्यक्तराज्यस्य भवतः शासनमनुचितमित्यत आह—भरत इति । यद्यपि महीपालो भरतस्तथापि आदेशवर्तिनः पालनाज्ञाप्रवर्तकाः वयं स्म इति शेषः, अतः धर्मादतिक्रान्तं च्युतं त्वामुपेक्षितुम् अविचारेण त्यक्तुं कथं शक्यमस्माभिरिति शेषः । तुशब्दः यद्यपीत्यर्थे ॥ २३ ॥

गो० टी०—औरसीं पुत्रीं प्रचरेत गच्छेत् ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—गुरुर्महान्यो धर्मस्तं व्यतिक्रान्तं तत्प्रच्युतं निघ्नन्निति शेषः । प्राज्ञो विद्वान्धर्मेण पालयन् धर्मयुक्तामिति शेषः ॥ २४ ॥

२५ ] ति० टी०—भरतादेशावधिं कृत्वा भरतादेशं तदाज्ञामवधिं प्रमाणं कृत्वा । ननु भरतेन रामं प्रत्याज्ञाया अकृतत्वान्मृषोक्तिरेवेति चेन्न, अस्मादेव भगवद्वाक्यात्तथा भरतोक्तेरनुमानेनाक्षतेः । यद्वा राज्यमूलप्रभौ पर्यवस्थिते सर्वेषां तदीयानां दण्ड्यदण्डनादावनुक्ताऽपि तदाज्ञा सिद्धैवेति न दोषः । अपि च स्वराज्ये भगवता भरतस्य पालनाज्ञायां दत्तायामर्थात्त्वस्मिन्प्रधानराजपुरुषत्वसिद्धौ तदाज्ञार्थसिद्धैवेति न दोषः२५

रा० टी०—गुर्विति । गुरुधर्मव्यतिक्रान्तं गुरुः सर्वोत्कृष्टो यो धर्मस्तस्माद्व्यतिक्रान्तं च्युतं जनं निघ्नन्निति शेषः, धर्मेण पालयन् । किंच गुरुधर्मव्यतिक्रान्तं पालयन् दण्डपूर्वकबुद्ध्या रक्षन्भरतः कामयुक्तानां निग्रहे अन्वेषणे पर्यवस्थितः वयं तु अवधिं कालनियमं कृत्वा भरतादेशाः भरते आदेशः प्रजापालनाज्ञा येषां ते सन्तो वने चराम इति शेषः । देशावधिमित्यत्र "नवुने" इतिसूत्रे नेतियोगविभागेन क्वचित् त्रिपाद्या असिद्धत्वभावज्ञापनात् संहिता, भागुरिमते अवाकारलोपेन वधिशब्दोऽप्यवधिवाचको वा, भरतकर्तृकाज्ञायाः अवधिं कृत्वेत्यर्थो वा । अत्र पक्षे समासप्रयुक्तषष्ठ्याः लुप्तत्वात् न संहितायां संदेहः । भरताज्ञप्ता इत्यर्थस्तु न युक्तः रामकर्मकभरताज्ञाया अप्रसिद्धत्वात् अयोग्यत्वाच्च, क्लिष्टकल्पनायां प्रमाणाभावाच्च । सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०—भरतस्तु महीपाल इत्युक्तं विवृणोति—गुरुरिति । धर्मव्यतिक्रान्तं धर्मव्यतिक्रमणं पालयन् परामृशन् गुरुः भरतश्च निग्रहे पर्यवस्थितः । वयं च तदादेशं विधिं शास्त्रं कृत्वा नियन्तुं पर्यवस्थिताः । अतः कथं शक्य उपेक्षितुमिति पूर्वेण संबन्धः ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—अथ कारणान्तरमपि वालिवधे दर्शयति—सुग्रीवेणेति । लक्ष्मणेन यथा तथा सुग्रीवेणापि मम सख्यमस्ति । यस्मात्ततः स सुग्रीवो दारराज्यनिमित्तं स्वदारप्राप्त्यर्थं राज्यप्राप्त्यर्थं च मे मम निःश्रेयसकरो मन्निःश्रेयसविषये कृतप्रतिज्ञः ॥ २६ ॥

रा० टी०—सुग्रीवेणेति । मे सख्यं यथा लक्ष्मणेन तथा दारराज्यनिमित्तं स्वदारराज्ययोः प्राप्त्यर्थं सुग्रीवेणापि मे सख्यमकारीति शेषः, अत एव स सुग्रीवः निश्रेयसकरः सेवातत्परोऽस्तीति शेषः । अत एव तदा सख्यसमये वानरसंनिधौ प्रतिज्ञा त्वत्कर्मकवधनिश्चयः दत्ता कृता, मद्विधेन सत्यप्रतिज्ञेनेत्यर्थः । प्रतिज्ञा प्रतिज्ञाविषयीभूतार्थः अनवेक्षितुमकर्तुमित्यर्थः, कथं शक्या । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—एवं निरपराधवधदोषशङ्कायाः परिहारमुक्त्वा मामेव यदि पूर्वं त्वमेतदर्थमचोदयः इत्युक्तस्य परिहारमाह—सुग्रीवेणेति । सुग्रीवेण यत्सख्यं तल्लक्ष्मणसख्यतुल्यं तद्वदपरिहार्यम् । दारराज्यनिमित्तं च दारराज्यफलकं च । स च मे निःश्रेयसि रतश्च अतः कथमुपेक्षितुं शक्य इत्यन्वयः ॥२७॥

२७ ] ति० टी०—तत्प्रतिज्ञोत्तरं मयाऽपि तदभिमतविषया प्रतिज्ञा दत्ता कृता च । सा प्रतिज्ञा मद्विधेन कथमनवेक्षितुमसमापयितुं शक्या ॥ २७ ॥

गो० टी०—हेत्वन्तरमप्याह—प्रतिज्ञा चेति । तदा सख्यकरणकाले अनवेक्षितुम् उपेक्षितुमिति यावत् ॥ २८ ॥

१ त्वामिति रा.पाठः । २ त्विति गो. पाठः । ३ क्रान्तमिति रा.पाठः । ४ वृत्तानामिति गो.पाठः । ५ आदेशं विधिमिति गो.पाठः । ६ अर्धमेतत् रा. नास्ति । ७ नियन्तुं पर्यवस्थिता इति गो. पाठः । ८ श्रेयसि रत इति गो. पाठः ।

तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंश्रितैः । शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ॥ २८ ॥
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः । वयस्यस्योपकर्तव्यं धर्ममेवानुपश्यता ॥ २९ ॥
शक्यं त्वयाऽपि तत्कार्यं धर्ममेवानुवर्तता । श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ॥
गृहीतौ धर्मकुशलैस्तथा तच्चरितं मया ॥ ३० ॥
राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥३१॥
शासनाद्वापि मोक्षाद्वा स्तेनः पापात्प्रमुच्यते । राजा त्वशासन्पापस्य तदवाप्नोति किल्बिषम् ॥३२॥

२८ ] ति० टी०–एभिरुक्तैः कारणैरेकैकमेव तव वधे पर्याप्तम्, किं पुनर्मिलितानि । तस्मात्तव मया शासनमिदं कृतम् तद्युक्तं शास्त्रसंमतमिति भवानप्यनुमन्यतां चिन्तयतु । तव भ्रातृभार्यापहारकत्वेन दण्ड्यत्वात्सखिकार्यस्य स्वकार्यत्वात्क्षत्रियस्य प्रतिज्ञाहानौ च महतोऽधर्मस्य श्रवणात्त्वद्वधो मे आवश्यको धर्मश्चेत्याशयः ॥ २८ ॥

रा० टी०–तदिति । धर्मसंश्रितैः धर्मविशिष्टैः अत एव महद्भिः सर्वैरेभिरुक्तैः कारणैर्युक्तम् उचितं यत् तव शासनं तद्भवाननुमन्यतां युक्तत्वेन निश्चिनुताम् ॥ २८ ॥

गो० टी०–तदिति । तत्तस्मात् उपेक्षितुमशक्यत्वात् । एभिः भ्रातृभार्यापहरणादिकारणैः तव भ्रातृभार्यावमर्शकस्य यच्छासनं कृतं तद्युक्तं शास्त्रविहितमिति भवाननुमन्यताम्॥२९॥

२९ ] ति० टी०–सर्वथा मया यः कृतस्तव निग्रहः स धर्म एवेति त्वया द्रष्टव्यः । दुष्टनिग्रहफलकत्वादवतारग्रहणस्येत्याशयो गूढः । किं च धर्ममेवानुपश्यता जानता मित्रस्योपकर्तव्यम् । मित्रोपकारकरणमपि धर्म एवेति सुग्रीवोपकाररूपत्वाद्वधस्य धर्मत्वमिति भावः ॥ २९ ॥

रा० टी०–सर्वथेति । धर्ममनुपश्यता जानता पुरुषेण वयस्यस्य सख्युः उपकर्तव्यं सख्युपकारो धर्म इत्यर्थः । अत एव तव निग्रहः दण्डः सर्वथा सर्वप्रकारेण धर्म एवेत्ययं त्वया द्रष्टव्यः ज्ञातव्यः ॥ २९ ॥

गो० टी०–पुनर्हेत्वन्तराणि वक्तुं पीठिकामारचयति–सर्वथेति ॥ ३० ॥

गो० टी०–वयस्यस्यापीति शत्रुवद्धर्ममेवानुपश्यतो वयस्यस्यापि स्वमित्रशत्रुनिरसनं कर्तव्यम् । धर्ममेवानुपश्यता त्वयाऽपि तत्कार्यम् आत्मनिग्रहरूपं शक्यं प्रायश्चित्तत्वेनानुमन्तुं योग्यमित्यर्थः ॥ ३१ ॥

३० ] ति० टी०–किं चानुतापादिना धर्ममनुवर्तता एतद्दुष्कर्मप्रायश्चित्तरूपधर्मानुष्ठानं कुर्वता त्वयाऽपि तत्कार्यं मत्कृतनिग्रहरूपं कार्यं शक्यं राजप्रार्थनापूर्वं कारयितुं शक्यम् । सत्यनुतापे त्वया प्रार्थनापूर्वमयं दण्डः स्वस्य कारणीय एवेति स्वस्करणीयस्यैव मया कृतत्वान्नात्र क्षोभः कार्य इति भावः । पापिनामेवं स्वदण्डप्रार्थना स्मृतिसिद्धेत्याह–श्रूयत इति । चारित्रवत्सलौ चरित्रप्रतिपादनतत्परौ धर्मकुशलैर्गृहीतौ च । भवतस्तत्तदर्थतत्त्वमेव तथा शास्त्रोक्तप्रकारेणैव मया चरितं कृतम् ॥ ३० ॥

रा० टी०–शक्यमिति । धर्ममनुवर्तता त्वयाऽपि कार्यं सर्वैः कर्तव्यं तत् मत्कर्तृकानुशासनं शक्यं कर्तुमिति शेषः । अर्धं पृथक् । स्वाचरिते शिष्टोक्तिं प्रमाणयितुमाह–श्रूयते इति । यथा येन प्रकारेण यदर्थं धर्मकुशलैः गृहीतौ स्वीकृतौ चारित्रवत्सलौ शुभाचरणप्रतिपादकौ मनुना गीतौ श्लोकौ श्रूयेते तथा तेन प्रकारेण तत्तद्गृहीतं मया चरितं कृतम् । अर्धद्वयमेकान्वयि ॥ ३० ॥

गो० टी०–स्तेनावश्यं हन्तव्यत्वे वालिनाऽवश्यमनुमन्तव्यत्वे च संवादं दर्शयति–श्रूयत इति । चारित्रवत्सलौ आचारैकपरौ गृहीतौ धृतौ । तच्छ्लोकद्वयोक्तम् ॥ ३२ ॥

३१ ] ति० टी०–तौ श्लोकावाह–राजभिरिति । अनेन स्वकृतदण्डस्य शास्त्रसंमतत्वं दण्ड्यहितत्वं चोक्तम् ॥ ३१ ॥

रा० टी०–श्लोकावेवाह–राजभिरिति । पापानि कृत्वा विद्यमाना मानवाः राजभिर्धृतदण्डाः अत एव निर्मलाः सन्तः सुकृतिनः सन्त इव स्वर्गमायान्ति प्राप्नुवन्ति ॥ ३१ ॥

गो० टी०–श्लोकौ पठति–राजभिरित्यादिना ॥ ३३ ॥

३२ ] ति० टी०–त्वयाऽपि प्रार्थनापूर्वमयमर्थः कारणीयः स्यादित्यर्थप्रतिपादकं श्लोकमाह–शासनाद्वेति । पापोऽहं मे दण्डं कुर्विति प्रार्थनया स्वसमीपमागतस्य पापिनः शासनाद्दण्डकरणाद्वा मोक्षादयया विसर्जनाद्वा । स्तेन इति पापोपलक्षणम् । तत्र द्वितीयः पक्षो राज्ञो दोषायेत्याह–राजा त्विति । राजा तु पापस्याशासन्पापनिग्रहमकुर्वन् । अनेन त्वद्दण्डकरणमस्मादृशामावश्यकमिति ध्वनितम् ॥ ३२ ॥

रा० टी०–शासनादिति । स्तेनस्तदुपलक्षितपापी शासनात् शरीरदण्डात् मोक्षात् ब्राह्मणादीनां पापित्वे मोक्षणात् ग्रामादिभ्यो निःसारणादित्यर्थः, पापात्प्रमुच्यत एव, पापस्य पापिनो अशासन् दण्डमकुर्वन् राजा तु तदा शासनाभावसमये किल्बिषं पापमवाप्नोत्येव ॥ ३२ ॥

गो० टी०–शासने परस्याभ्युदयमुक्त्वा अशासने राज्ञोऽनभ्युदयमाह–शासनादिति । राज्ञा शासने मोचने वा स्तेनश्चोरो मुच्यत एव पापात् । पापस्य पापिष्ठस्याशासनाद्राजा तत्किल्बिषं पापमाप्नोति ॥ ३४ ॥

१ ऽपीति गो. पाठः । २ पश्यतेति गो. पाठः । ३ हरे इति गो. पाठः । ४ विमोक्षादिति गो. पाठः । ५ स्तेयादिति गो. पाठः ।

आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् । श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥३३॥
अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः । प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥३४॥
तदलं परितापेन धर्मतः परिकल्पितः । वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥३५॥
शृणु चाप्यपरं भूयः कारणं हरिपुंगव । तच्छ्रुत्वा हि महद्वीर न मन्युं कर्तुमर्हसि ॥३६॥
न मे तत्र मनस्तापो न मन्युर्हरिपुंगव । वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥३७॥
प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् । प्रधावितान्वा वित्रस्तान्विस्रब्धानतिविष्ठितान् ॥३८॥
प्रमत्तानप्रमत्तान्वा नरा मांसाशिनो भृशम् । विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥३९॥

३३ ] ति० टी०—अथात्रार्थे शिष्टाचारमपि प्रमाणयति—आर्येणेति । मम कूटस्थेन मांधात्रा त्वया यत्प्रकारं पापं कृतं तत्प्रकारे पापे केनचिच्छ्रमणेनार्हतेन कृते सति कर्तुमीप्सितं घोरं व्यसनं दण्डरूपं मांधात्रा कृतम् ॥ ३३ ॥

रा० टी०—स्वकृते शिष्टाचारं प्रमाणयति—आर्येणेति । यथा येन प्रकारेण त्वया पापं कृतं तथा तेन प्रकारेण श्रमणेन केनचिदार्हतेन पापे कृते सति ईप्सितं शास्त्रानुसारि घोरं हिंसारूपं व्यसनं दुःखं दत्तमिति शेषः ॥ ३३ ॥

गो० टी०—न केवलं वचनम् आचारश्चास्मिन्नर्थेऽस्तीत्याह—आर्येणेति । यथा त्वया पापं कृतं तथा श्रमणेन क्षपणकेन केनचित्पापे कृते मम आर्येण वृद्धप्रपितामहेन मांधात्रा घोरं व्यसनं दण्डनम् ईप्सितं प्रयुक्तमिति यावत् ॥ ३९ ॥

३४ ] ति० टी०—अन्यैरपि वसुधाधिपैः प्रमत्तपुरुषैः कृतं पापं प्रति शुद्धये दण्डनं कृतमित्यध्याहारः । न केवलं राजदण्ड एव पापप्रायश्चित्तम्, अन्यदपि मन्वाद्युक्तमित्याह—प्रायश्चित्तं च कुर्वन्ति कृतपापा इति शेषः । तेन कर्त्रनुष्ठितप्रायश्चित्तेन ॥ ३४ ॥

रा० टी०—अन्यैरिति । अन्यैरपि वसुधाधिपैः राजभिः प्रमत्तैर्जनैः कृतं पापं दण्डेन निवर्तितमिति शेषः । ननु गुर्वादीनां दण्डने राज्ञामनधिकारात्कथं तच्छुद्धिरित्यत आह—प्रायश्चित्तं पापनिवर्तकगायत्रीजपादि कुर्वन्ति पापे सति गुर्वादय इति शेषः । तेन प्रायश्चित्तेन तत् गुर्वादिकृतं राजपापं शाम्यते निवर्त्यते इत्यर्थः ॥ ३४ ॥

गो० टी०—अन्यैरपीति । प्रमत्तैर्वसुधाधिपैर्हेतुभिः अन्यैरपि जनैः पापं कृतं ते वसुधाधिपाः विगतानवधानाः सन्तः कर्मपरामर्शवेलायां पापिनां प्रायश्चित्तं वधादिकं कुर्वन्ति तन प्रायश्चित्तेन तद्रजः तत्पापं शाम्यति, अथापीति शेषः ॥ ३६ ॥

३५ ] ति० टी०—धर्मतः शास्त्रतः । न वयं स्ववशे स्थिताः किंतु शास्त्राधीना इति शेषः । एतेनादर्शनपूर्वकं वधोऽधर्म इति यदुक्तं तदपि समाहितम् । दण्डार्थवधे दर्शनानपेक्षणात् । एवं वालिनः संध्योपासनाद्यनुष्ठानेन शास्त्रज्ञत्वमवलम्ब्य समाहितम् ॥ ३९ ॥

रा० टी०—तदिति । हे वानरशार्दूल ! यतो वयं स्ववशे न स्थिताः शास्त्रानुसारवर्तिन इत्यर्थः, अत एव धर्मतः धर्मपालनाय वधः परिकल्पितः तत्तस्माद्धेतोः परितापेन तत्र शोकेनालं, शोको न कर्तव्य इत्यर्थः ॥ ३९ ॥

गो० टी०—तदलमिति । न स्ववशे स्थिताः न स्वतन्त्राः शास्त्रवश्या इत्यर्थः । अनेन पराङ्मुखवधस्य दोषत्वमपि परिहृतं प्रायश्चित्तस्य यथाकथंचित्कर्तव्यत्वात् । पञ्चमहापातकादिप्रायश्चित्तस्य मरणान्तिकत्वाद्बलादेव हि कार्यं भवति नान्यथा ॥ ३७ ॥

३६ ] ति० टी०—अथ केवलशाखामृगत्वमवलम्ब्यापि समाधत्ते—शृणु चापीति । छन्नेनानभिमुखस्यस्य निःशङ्कवधे कारणं शृण्वित्यर्थः । तन्महत्कारणं श्रुत्वा मन्युं न कर्तुमर्हसि ॥ ३६ ॥

रा० टी०—ननु ममेन्द्रपुत्रत्वेऽपि वानरत्वेनैव व्यवहाराच्छास्त्रस्यास्मद्विषयत्वाभावात् मदनुशासनमनुचितमेवेति तदापाततः शङ्कां जिहीर्षुस्तुष्यति दुर्जनन्यायेनाह—शृण्विति । हरिपुङ्गव हे वानरराज ! अपरं लघुकारणं वधे निमित्तं भूयः शृणु । तत् कारणं श्रुत्वा महत् मन्युं कर्तुं नार्हसि सामान्ये नपुंसकम् । किंच महत् त्वया प्रशंसनीयं कारणमित्यन्वयः ॥ ३६ ॥

गो० टी०—एवं संध्योपासनराज्यपालनादिकं नियमेनानुतिष्ठतो वालिनः शास्त्रवश्यत्वमवलम्ब्योक्तम् । अथ शाखामृगत्वमवलम्ब्याह—शृणु चेत्यादिना ॥ ३८ ॥

३७ ] ति० टी०—तत्र प्रच्छन्नवधे मनस्तापः कथमेवं कृतमिति पश्चात्तापो न । नापि वधस्य कारणं मन्युर्मम क्रोधः, यद्वा मन्युः शोकः । मृगाणां तादृशवधस्य राज्ञां स्वभावतया न दोष इत्याह—वागुराभिरिति । विविधैः कूटैस्तृणाच्छन्नश्वभ्रादिसंपादनरूपैः ॥ ३७ ॥

३८–३९ ] ति० टी०—पर्णाद्याच्छादितत्वादिरूपैः प्रतिच्छन्ना इत्यन्वयः । विस्रब्धान्विश्वस्तान् । अतिविष्ठितान्स्वपालितमृगैर्वेष्टितान्विरोधेन स्थितान् । युध्यमानानिति यावत् ॥ ३८ ॥ ३९ ॥

रा० टी०—नेति । तत्र देवस्वाभाववत्स्ववधे मन्युः क्रोधः न अपेक्षित इति शेषः, अत एव मनस्तापो न । तत्र कारणमाह—

१ यदिति गो. पाठः । २ हेतुमदिति गो. पाठः । ३ विस्रब्धाश्चापि नीति गो. पाठः । ४ मांसार्थिन इति गो. पाठः ।

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः । तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥
अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ॥ ४० ॥
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च । राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ ४१ ॥
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् । देवा [1]मानुषरूपेण चरन्त्येते महीतले ॥ ४२ ॥
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः । [2]विदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥ ४३ ॥

वागुराभिः लोहनिर्मितमृगग्राहिकाभिः पाशैश्च विविधैः अनेकप्रकारैः कूटैः कापट्ययुक्तव्यापारैश्च प्रतिच्छन्ना दृश्या वानराः राजप्रभृतयः वित्रस्तान् भीतान् अत एव प्रधावितान् पलायितान् विस्रब्धान् मद्विघातकोऽत्र नास्तीति विश्वासयुक्तान् अत एव अतिविष्ठितान् संस्थितान् वा सुबहून् अतिविपुलान् मृगान् गृह्णन्ति। एतेन ग्रहणे दोषाभावः सूचितः । श्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

रा० टी०—ननु शिष्टाचारेण ग्रहणे दोषाभावः प्रतीयते न तु वधे अत्र तु वध इत्यत आह—प्रमत्तानिति । मांसार्थिनः अनरा नरसदृशा राजानस्तु प्रमत्तानप्रमत्तान्वा विमुखान् पलायितान्वा मृगान् विध्यन्ति घ्नन्ति । अत्र वधे दोषः मनुष्यवधवत्पापं न विद्यते एतेन मृगवधजनितपापस्याल्पत्वात् प्रायश्चित्तस्य सुकरत्वान्न तद्वधे भीतिरिति सूचितम् । यदि च मांसार्थित्वं यागार्थमित्युच्यते तदा न दोष इत्यस्य दोषसंसर्गाभावो बोध्य इति दिक् ॥ ३९ ॥

गो० टी०—'दृश्यमानस्तु युध्येथा मया यदि नृपात्मज । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया' इति। 'त्वया दृश्येन तु रणे निहतोऽहं दुरासदः । प्रसुप्तः पन्नगेनेव नरः पानवशंगतः' इति च वालिना यदुक्तं तदुभयस्योत्तरमाह—न मे तत्र मनस्ताप इति । तत्र यमसदनप्रापणोक्तिप्रच्छन्नवेधननिन्दोक्तिविषये मे मन्युर्नास्ति शाखामृगस्य तवालक्ष्यत्वादिति भावः । मनस्तापाभावश्च मृगविषये प्रच्छन्नवेधनस्य राज्ञां स्वभावतया दोषाभावादिति भावः । तदेवोपपादयति—वागुराभिरित्यादिना । कूटैः कपटव्यापारैः विस्रब्धान् विश्वस्तान् । यद्यपि प्रकृते न मांसार्थिता तथापि पराङ्मुखवधान्न दोष इति तात्पर्यम् ॥ ३९–४२ ॥

४० ] ति० टी०—न दोष इत्यत्र शिष्टाचारं प्रमाणयति—यान्तीति । मृगयां नानाप्रकारमृगवधयुक्तां कर्तुं राजर्षयो धर्मकोविदा यान्ति । प्रतियुध्यन्नन्येन युद्धं कुर्वन् । मांसादिलोभाभावेऽपि क्षत्रियस्वाभाव्यात्तव वधो मया कृतः इतरव्याघ्रादितिर्यग्जन्तुवत् । तत्र मे न कश्चिन्महान्दोषः, अल्पस्तु प्राणायाममात्रापनेय इति भावः ॥ ४० ॥

रा० टी०—ननु भवतामिदानीं न मांसार्थित्वमित्यत आह—यान्तीति । अत्र अस्मिन्वने धर्मकोविदाः अपि राजर्षयः मृगयां यान्ति तस्माद्धेतोः यस्मात्त्वं शाखामृगोऽसि अतः अयुध्यन् साक्षाद्युद्धमकुर्वन् प्रति युध्यन् सुग्रीवद्वारा युद्धं कुर्वंश्च त्वं युद्धे मया निहतः । धर्मकोविदा इत्यनेन तेषां मृगयाप्रवृत्तिः दुष्टनिगृहायैवेति व्यञ्जितं, तेन मत्कर्तृकवधोऽपि त्वद्दुष्टत्वविनिवृत्तये इति ध्वनितं, तेन मृगयायामपि सप्रयोजनमेव हननमर्हं तु निष्प्रयोजनं हतः इति भ्रमो न कार्य इति बोधितम् । सार्धश्लोक एकान्वयी ॥ ४० ॥

४१ ] ति० टी०—शुभस्यैहिकाभ्युदयस्य । राजानः क्षत्रियाः ॥ ४१ ॥

रा० टी०—आपाततः स्वविषयकाधिक्षेपं निवर्तयितुमाह—दुर्लभस्येत्यादिभिः । दुर्लभस्य अन्यैर्दुष्प्रापस्य धर्मस्य शुभस्य मङ्गलहेतुकस्य जीवितस्य च प्रदातारः राजानो भवन्तीति शेषः । अर्धद्वयमेकान्वयि । जीवितस्य प्रदातार इत्यनेन यदि त्वयि जीवितेच्छा तर्हि त्वां जीवयिष्यामीति सूचितम् ॥ ४१ ॥

गो० टी०—परपीडाकरो राज्ञां व्यापारो निष्फल इत्याशङ्क्य व्रणचिकित्सान्यायेन सः श्रेयस्कर एवेत्याह—दुर्लभस्येति । जीवितस्य जीवनस्य ॥ ४१ ॥

४२-४३ ] ति० टी०—न हिंस्यात् रणव्यतिरेकेणेत्यर्थः आक्रोशो निन्दा आक्षेपोऽवमाननम् अप्रियवादः प्रतिकूलवचनम् त्वं तु न तादृशो राजेति भावः । एतेन राज्ञो वधादौ ब्रह्मवधादिदोष इति सूचितम् ॥ ४२ ॥ ४३ ॥

रा० टी०—राजगुणवर्णनस्य फलमाह—तानिति । देवा एव एते राजानः मानुषरूपेण महीतले चरन्ति । तस्मात् तान् राज्ञः न हिंस्यात् न वा आक्रोशेत् निन्देत्, न वा क्षिपेत् कूटं वदेत् न वा अप्रियं वदेत् ॥ ४२ ॥

गो० टी०—तानिति । न हिंस्यान्न पीडयेत् तेष्वनर्थकरत्वबुद्धिं न कुर्यादित्यर्थः नाक्रोशेन्न निन्देत् नाक्षिपेत् नोक्तिखण्डनं कुर्यात् नाप्रियं वदेत् परुषं न वदेदित्यर्थः । तत्र हेतुमाह—देवा इति । एते पूर्वोक्ता राजानः देवाः अष्टौ लोकपालाः 'अष्टाभिर्लोकपालानां मात्राभिः कल्पितो नृपः' इतिवचनात् । मनुष्यरूपेण मनुष्यशरीरेण उपलक्षिताश्चरन्ति ॥ ४४ ॥

रा० टी०—त्वमिति । केवलं रोषमास्थितस्त्वं तु धर्ममविज्ञाय पितृपैतामहे धर्मे स्थितं मां विदूषयसि एतेन दुर्वचनं हेयमिति व्यञ्जितम् ॥ ४३ ॥

गो० टी०—त्वं त्विति । पितृपैतामहे पितृपितामहप्राप्ते । नन्वेवमपि कथंचित्परिहार्यं परतल्पगतिं वालिद्रोहं मनागपसर्प-

१ मनुष्येति गो. पाठः । २ प्रदूषयसीति गो. पाठः ।

एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् । न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ॥ ४४ ॥
प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः । यत्त्वमात्थ नरश्रेष्ठ तत्तथैव न संशयः ॥ ४५ ॥
प्रतिवक्तुं प्रकृष्टे हि नापकृष्टस्तु शक्नुयात् । यदयुक्तं मया पूर्वं प्रमादाद्वाक्यमप्रियम् ॥ ४६ ॥
तत्रापि खलु मां दोषं कर्तुं नार्हसि राघव । त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ॥
कार्यकारणसिद्धौ च प्रसन्ना बुद्धिरव्यया ॥ ४७ ॥
मामप्यवगतं धर्माद्व्यतिक्रान्तपुरस्कृतम् । धर्मसंहितया वाचा धर्मज्ञ परिपालय ॥ ४८ ॥
बाष्पसंरुद्धकण्ठस्तु वाली सार्तरवः शनैः । उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ॥ ४९ ॥

णमित्याद्यपवादकरं छन्नवेधनं समर्थोऽपि किमर्थं कृतवान् तदवहितमनाः शृणु । यदि रामो वालिनः पुरतस्तिष्ठेत्तदा विदिततदीयप्रभावतया वाली प्रह्वो भवेत् तदा तद्वधो न युक्तः प्रतिज्ञा च व्याहन्येत तद्द्वारा तन्मित्रं रावणोऽपि शरणं व्रजेत् देवकार्यं च लुप्येत् अतः प्रच्छन्नो वालिनमवधीत् ॥ ४९ ॥

४४-४५ ] ति० टी०-प्रव्यथितो भगवति मिथ्यादोषोक्त्या प्रव्यथितो न दोषं राघवे दध्यौ तथाध्यानस्यापि पापावहत्वादिति भावः । यद्वा ध्यानेनाऽपि नाविन्दत् शुद्धबुद्धमुक्तस्वभावत्वादिति भावः । धर्मेऽधिगतनिश्चयो भगवद्वचनादेव धर्मविषये जातनिश्चयः ॥ ४४ ॥ ४९ ॥

रा० टी०-एवमिति । रामेण एवमुक्तः अत एव धर्मे धर्मपूर्वकरामकर्तृकस्ववधे अधिगतनिश्चयः अत एव भृशं प्रमथितः दुरुक्त्याभासहेतुकव्यथां प्राप्तो वाली राघवे दोषं न दध्यौ । एतेन क्वचिन्निलीय रामो बाणं चिक्षेपेत्युक्तिरापाततो रमणीया अत एवापाततः स्वबुद्ध्या रूढरामविपरीतकर्मवर्णनावसरे तत्रोक्तम् । वृक्षैरात्मानमाच्छाद्येत्युक्तिस्तु आतपतापस्तत्र नास्तीति बोधनपरा वृक्षैरात्मानमाच्छाद्य विद्यमानां किष्किन्धामित्यर्थो वा अत एव किष्किन्धातो निःसरणसमये रामसमीपस्थमेव सुग्रीवं वाली ददर्शेत्युक्तिः संगच्छते ॥ ४४॥

गो० टी०-एवमिति । प्रव्यथितः अज्ञानाद्राममधिक्षिप्तवानस्मीत्यनुतप्तः ॥ ४६ ॥

रा० टी०-प्रतीति । ततः धर्मेणैव रामेणाहं हत इति निश्चयात् हेतोः प्राञ्जलिर्वानरेश्वरः रामं प्रत्युवाच ॥ ४९ ॥

रा० टी०-तत्प्रतिवचनप्रकारमाह-यदिति । हे नरश्रेष्ठ! यत् त्वमात्थ कथयसि तत् तथैव सत्यमेवेत्यर्थः, इदानीं दुरुक्तिजनितस्वापराधक्षमापणाय स्तोतुमप्यहं न समर्थ इति बोधयन्नाह-प्रतीति । प्रकृष्टे उत्कृष्टजनसंनिधौ अपकृष्टः नीचो जनः प्रतिवक्तुं न शक्नुयात् । एतेन यदि प्रतिवक्तुमेव न शक्नुयात्तर्हि स्तोतुं न शक्नुयादिति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥ ४६ ॥

गो० टी०-यत्त्वमिति । प्रकृष्टे विषये ॥ ४७ ॥

४६ ] ति० टी०-प्रकृष्टे प्रकृष्टज्ञानैश्वर्ये । अपकृष्टः मादृश इति शेषः । यत्प्रमादाद्वाक्यमुक्तं तदयुक्तमेव ॥ ४६ ॥

रा० टी०-यदिति । प्रमादात् अनवधानात् अप्रियम् अत एव अयुक्तं वाक्यं यन्मया पूर्वमुक्तं तत्र मदुक्तौ मे दोषं दोषबुद्धिं कर्तुं नार्हसि ॥ ४७ ॥

गो० टी०-तदिति । कर्तुं चिन्तयितुम् ॥ ४८ ॥

४७ ] ति० टी०-तत्राप्यज्ञानजाप्रियोक्तावपि दोषं कर्तुं दोषं भावयितुम् । तत्र हेतुः-त्वं हीति । दृष्टेनापरोक्षानुभवेनार्थतत्त्वस्य धर्मादितत्त्वस्य ज्ञाता । कार्यं दण्डः, कारणं तद्धेतुभूतं पापम्, तयोः सिद्धौ निश्चये तव बुद्धिरन्तःकरणं प्रसन्ना निर्मला वैषम्यरहितेत्यर्थः ॥ ४७ ॥

रा० टी०-त्वमिति । हि यतः दृष्टार्थतत्त्वज्ञः अस्मदादिज्ञानविषयीभूतार्थयाथार्थ्यविज्ञाता प्रजानां हिते रतश्च त्वमसीति शेषः । अतः कार्यकारणसिद्धौ कार्यं कर्तव्यं दण्डनमित्यर्थः, कारणं तद्धेतुभूतपापं तयोः सिद्धौ निश्चये इत्यर्थः, अव्यया परिणामादिरहिता बुद्धिस्त्वदन्तःकरणधर्मविशेषः प्रसन्ना संशयरहितेत्यर्थः ॥ ४८ ॥

गो० टी०-त्वं हीति । दृष्टार्थश्चासौ तत्त्वज्ञश्च दृष्टार्थतत्त्वज्ञः । यद्वा ज्ञः पण्डितः दृष्टार्थतत्त्वश्चासौ ज्ञश्चेति समासः । कार्यकारणसिद्धौ कार्यं दण्डनम् कारणं तद्धेतुभूतं पापम् तयोः सिद्धौ परिज्ञाने । बुद्धिः अन्तःकरणम् ॥ ४९ ॥

४८ ] ति० टी०-धर्मादेव व्यतिक्रान्तानां पुरस्कृतमग्रेसरम् । अवगतं तदग्रेसरत्वेन प्रसिद्धं मामपि पापिष्ठतरं धर्मसंहितया वाचा परिपालय, उत्तमलोकान्प्राप्नुहीति वाचानुगृहाणेत्यर्थः ॥ ४८ ॥

रा० टी०-मामिति । धर्मात् व्यतिक्रान्तपुरस्कृतं व्यतिक्रान्तेषु च्युतेषु पुरस्कृतम् अग्रे गणनमपि अवगतं त्वां प्राप्तं मां धर्मसंहितया धर्मवशिष्ठया शरणागतं पालयामीत्याकारिकया वाचा परिपालय दोषान्निवर्तयेत्यर्थः । 'अगतधर्माणं व्यतिक्रान्तपुरस्कृतम्' इति तीर्थपाठः ॥ ४९ ॥

गो० टी०-मामपीति । अगतधर्माणं कृत्याकरणवन्तं व्यतिक्रान्तपुरस्कृतं पुरस्कृतव्यतिक्रमम् अकृत्यकारिणमित्यर्थः । वाचा परिपालय सर्वं मया क्षान्तमिति वदेत्यर्थः ॥ ५० ॥

४९] ति०टी०-उवाच पुत्रादिमायाकृष्टः सन्नुवाचेत्यर्थः ४९

रा० टी०-वालिनो वचनानन्तरं वर्णयितुमाह-बाष्पेति ।

१ तदेवं नात्रेति गो. पाठः । २ उक्तमिति गो. पाठः । ३ मे इति गो. पाठः । ४ अगतधर्माणमिति गो. पाठः । ५ श्लोकोऽयं गो. नास्ति

न चात्मानमहं शोचे न तारां नापि बान्धवान्। यथा पुत्रं गुणज्येष्ठमङ्गदं कनकाङ्गदम् ॥ ५० ॥
स ममादर्शनाद्दीनो बाल्यात्प्रभृति लालितः। तटाक इव पीताम्बुरुपशोषं गमिष्यति ॥ ५१ ॥
बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः। तारेयो राम भवता रक्षणीयो महाबलः ॥ ५२ ॥
सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम्। त्वं हि गोप्ता च शास्ता च कार्याकार्यविधौ स्थितः॥५३॥
या ते नरपते वृत्तिर्भरते लक्ष्मणे च या। सुग्रीवे चाङ्गदे राजंस्तां[3] चिन्तयितुमर्हसि ॥ ५४ ॥
मद्दोषकृतदोषां तां यथा तारां तपस्विनीम्। सुग्रीवो नावमन्येत तथाऽवस्थातुमर्हसि ॥ ५५ ॥
त्वया ह्यनुगृहीतेन शक्यं राज्यमुपासितुम्। त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५६ ॥

---

बाष्पसंरुद्धकण्ठः अत एव पङ्कलग्नः कर्दमे निमग्नः द्विपो हस्तीव सार्तः आर्तस्वरसहितः रवः स्वरो यस्य स वाली रामं संप्रेक्ष्य शनैरुवाच ॥ ५० ॥

५० ] ति० टी०—न त्वात्मानं भगवता त्वया हतत्वाद्भुक्तभोगत्वात् न तारां सुग्रीवस्यापि तस्यामनुरागात् न बान्धवान् सुग्रीवत्तोऽपि सेवया जीवनलाभात् पुत्रं शोचामि बालत्वात् ॥ ५० ॥

रा० टी०—तद्वचनाकारमाह—नेति। कनकाङ्गदं सुवर्णाङ्गदविशिष्टं गुणज्येष्ठं पित्रानुकूल्यादिवर्तनरूपश्रेष्ठगुणवन्तम् अङ्गदं यथा शोचे तथा आत्मादीन् न शोचे। एतेन रामहतत्वात्प्राप्तपरमकल्याणत्वनात्मन· शोकानर्हत्वं, तारायां बान्धवेषु च रामानुगृहीतसुग्रीवस्यापि प्रेमाधिक्यात् तयोरपि शोकानर्हत्वं व्यञ्जितम् ॥ ५१ ॥

गो० टी०—कार्यान्तरमभ्यर्थयते—न त्वित्यादिना। नात्मानं प्रति शोचे त्वया दत्तसम्यग्गतिकत्वात्। नापि तारादिकान् प्रति सुग्रीवस्य विद्यमानत्वात्। पुत्रम् "अङ्गादङ्गात्संभवसि" इत्युक्तरीत्या स्वानतिरिक्तं गुणश्रेष्ठं पितृशुश्रूषादिगुणैः श्रेष्ठं कनकाङ्गदम् दर्शनीयमित्यर्थः ॥ ५१-५३ ॥

५१ ] ति० टी०—मया लालितः स ममादर्शनाच्छोषं गमिष्यति। पीताम्बुः सस्याद्युपयोजिताम्बुः ॥ ५१ ॥

रा० टी०—नन्वङ्गदे सुग्रीवद्वेषस्य त्वया अकृतत्वात्तद्विषयकोऽपि शोकः किमथ क्रियते इत्यत आह—स इति। बाल्यात्प्रभृति बाल्यादारभ्य लालितः अत एव ममादर्शनाद्दीनः सोऽङ्गदः पीताम्बुः सूर्यकिरणशोषितजलस्तटाक इवोपशोषं कृशत्वमित्यर्थः, गमिष्यति प्राप्स्यति ॥ ५२ ॥

५२ ] ति० टी०—तारेयस्तारापत्यम्। एकपुत्रत्वेनातिलालितत्वम् ॥ ५२ ॥

रा० टी०—बाल इति। बालः अल्पवयस्कः अत एव अकृतबुद्धिः न कृता संपन्ना बुद्धिर्यस्मिन्सः तारेयः तारापत्यं मे प्रियः मत्प्रीतिविषयीभूतः महाबलः मे एकपुत्रः भवता रक्षणीयः। मे इत्युभयान्वयि ॥ ५३ ॥

५३-५४ ] ति० टी०—मतिमुत्तमाम् 'मरणान्तानि वैराणि' इति न्यायेनेति भावः। सुग्रीवे च तत्रैवेत्यर्थः। भातृस्नेहोद्बोधेन वा तत्राऽप्यनुग्रहप्रार्थनम्। कार्यविधौ गोप्ता अकार्यविधौ शास्ता ॥ ५३ ॥ ५४ ॥

रा० टी०—सुग्रीवे स्वद्वेषाभावं द्योतयन्नाह—सुग्रीव इति। हि यतः कार्याकार्यविधौ विहिताविहिताचरणे यथाक्रमं गोप्ता रक्षकः शास्ता शासनकर्ता च सन् त्वं स्थितः अतः सुग्रीवे अङ्गदे च उत्तमां मद्वैरनिमित्तकपरस्परवैराजननेन उत्कृष्टां मतिं विधत्स्व संपादय ॥ ५४ ॥

गो० टी०—सुग्रीवे चेति। मतिं तुल्यामिति शेषः ॥५४॥

रा० टी०—अङ्गदेऽपि रामप्रीतिमुत्पादयितुमाह—येति। हे नरपते ! हे राजन् ! अस्मद्विषयकानुरागविशिष्टभरते लक्ष्मणे च या ते वृत्तिस्त्वत्कर्मकसेवा तां सेवामेव सुग्रीवे अङ्गदे च चिन्तयितुं बोधयितुं कारयितुमित्यर्थः, अर्हसि। यदि च वृत्तिशब्देन वात्सल्यद्वारा स्थितिरुच्यते तदा ते इति कर्तरि षष्ठी ॥ ५५ ॥

गो० टी०—या त इति। वृत्तिः प्रीतिरिति यावत् ॥५५॥

५५ ] ति० टी०—मद्दोषकृतदोषां मत्कृतसुग्रीवापकारदोषानुसरणमात्रेण कृतदोषां न तु स्वतः कृततदपकाराम्। तपस्विनीं शोच्याम्। अवस्थातुमवस्थापयितुम् ॥ ५५ ॥

रा० टी०—मद्दोषेति। तपस्विनीमतिविचारशीलामत एव मद्दोषकृत एव दोषो यस्यां तां स्वयं सुग्रीवत्रधमकुर्वाणामित्यर्थः, तारां सुग्रीवो यथा नावमन्येत तथा अवस्थातुम् अवस्थापयितुं शिक्षयितुमित्यर्थः, त्वमर्हसि ॥ ५६ ॥

गो० टी०—मद्दोषेति। नावमन्येत पुत्रनिर्वासनेनेति भावः। अवस्थातुं व्यवस्थापयितुम् ॥ ५६ ॥

५६ ] ति० टी०—राज्यं वानरराज्यम् ॥ ५६ ॥

रा० टी०—सेवाप्रार्थनायां फलमाह—त्वयेति। त्वद्वशे वर्तमानेन अत एव चित्तानुवर्तिना प्रीत्या त्वच्चित्तविषयीभूतेन त्वदीप्सितकारिणा वा अत एव त्वया अनुगृहीतेन जनेन राज्यं वसुधाधिपत्यमुपासितुं कर्तुं शक्यं, दिवं वसुधां च अर्जयितुम् एककालावच्छेदेन गृहीतुं शासितुं पालयितुं च शक्यम्। सार्धश्लोक एकान्वयी ॥ ५७ ॥

गो० टी०—त्वयेति। उपासितुं मयेति शेषः। न केवलं मद्राज्यम् अन्यच्चेत्याह—शक्यमिति ॥ ५७ ॥ ५८ ॥

---

१ स्थिति गो. पाठः। २ न चेति गो. पाठः। ३ त्वमाधातुमिति गो. पाठः।

शक्यं दिवं चार्जयितुं वसुधां चापि शासितुम् । त्वत्तोऽहं वधमाकाङ्क्षन्वार्यमाणोऽपि तारया ॥ ५७ ॥
सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः । इत्युक्त्वा वानरो रामं विरराम हरीश्वरः ॥ ५८ ॥
स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनम् । साधुसंमतया वाचा धर्मतत्त्वार्थयुक्तया ॥ ५९ ॥
[ न[1] संतापस्त्वया कार्य एतदर्थं प्लवङ्गम ]
न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम । वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः ॥ ६० ॥
दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते । कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ॥ ६१ ॥
तद्भवान्दण्डसंयोगादस्माद्विगतकल्मषः । गतः स्वां प्रकृतिं धर्म्यां दण्डदिष्टेन वर्त्मना ॥ ६२ ॥
त्यज शोकं च मोहं च भयं च हृदये स्थितम् । त्वया विधानं हर्यग्र्य न शक्यमतिवर्तितुम् ॥ ६३ ॥

५७-५८ ] ति० टी०-शक्यमिति । स्वाराज्यमपि त्वत्प्रसादलभ्यमिति भावः । अहं त्वदुपदेशतस्त्वद्दर्शनतश्चेदानीं क्षीणपापस्त्वत्तो वधमुत्तमलोकराज्यफलकमाकाङ्क्षन्नपेक्षमाण इदानीमस्मि । अतस्तारया वार्यमाणोऽपि यद्भ्रात्रा युद्धमुपागतः प्राप्तस्तत्पूर्वकृतपुण्यपरिपाकेनेति शेषः ॥ ५७ ॥ ५८ ॥

रा० टी०-ननु तवेच्छा चेत् त्वां जीवयामि राज्यं कुर्वित्यत आह-त्वत्त इति । तारया वार्यमाणोऽप्यहं त्वत्तो वधमाकाङ्क्षन् सन् सुग्रीवेण सह द्वन्द्वयुद्धमुपागतः प्राप्तः । एतेन वालिनो जीवनेच्छाभावः सूचितः । अर्धद्वयमेकान्वयि ॥ ५८ ॥

रा० टी०-इतीति । वानरो वाली राममित्युक्त्वा विरराम । अर्धं पृथक् ॥ ५९ ॥

गो० टी०-तर्हि तथा किं न कृतं तत्राह-त्वत्त इति । आकाङ्क्षन् आकाङ्क्षमाण इवेत्यर्थः ॥ ५९ ॥ ६० ॥

५९ ] ति० टी०-व्यक्तदर्शनमुद्बुद्धबोधम् ॥ ५९ ॥

रा० टी०-स इति । स वालिना प्रार्थितो रामः व्यक्तदर्शनमाविर्भूतज्ञानवन्तं वालिनं धर्मतत्त्वार्थयुक्तया धर्मयाथार्थ्यरूपार्थविशिष्टया अत एव साधुसंमतया वाचा आश्वासयत् ॥ ६० ॥

गो० टी०-स तमिति । व्यक्तदर्शनं विशदज्ञानम् । साम सान्त्वनम्[2] ॥ ६१ ॥

६० ] ति० टी०-न वयं गुप्तवधरूपाकृत्यकारित्वेन चिन्त्याः । नाप्यात्मा भ्रातृभार्यापहरणरूपाकृत्यकारित्वेन । तत्र हेतुः—वयमित्यादि । भवद्विशेषेण त्वदपेक्षया विशेषेण विशेषज्ञत्वेन । धर्मतो धर्मशास्त्रमार्गेण । कृते त्वत्कृतपापे स्वकृतवधद्योतकस्वरूपे व्यापारे च निश्चयोऽत्र पापेऽयमेव दण्ड इति निश्चयो येषां तादृशाः ॥ ६० ॥

रा० टी०-तदाश्वासनप्रकारमाह-नेति । हे हरिसत्तम ! वयं सुग्रीवप्रभृतयः आत्मा स्वस्वरूपं च न चिन्त्याः शङ्कनीयाः । तत्र हेतुः-भवद्विशेषेण भवद्विषयकप्रीत्यतिशयेन युक्ताः वयं धर्मतः धर्मशास्त्रानुसारेण कृतनिश्चयास्त्वदुक्तादिसर्वकार्यविषयकनिश्चयवन्तः स्म इति शेषः ॥ ६१ ॥

गो० टी०-न संताप इति । एतदर्थं पुत्रपालनार्थम्[3] ॥ ६२ ॥

गो० टी०-न वयमिति । वयं न चिन्त्याः अकृत्यकारिण इति शेषः । नाप्यात्मा निवृत्तपापत्वात् । कुत इत्यत्राह-वयमिति । भवद्विशेषेण भवतो कृत्यरूपविशेषेण हेतुना । धर्मतः प्रायश्चित्तरूपं धर्मं सप्तम्यर्थे तसिः । कृतनिश्चयाः अतो वयं न चिन्त्या इत्यादि पूर्वेणान्वयः ॥ ६३ ॥

६१ ] ति० टी०-अत्रार्थे स्मृतिमुपन्यस्यति—दण्ड्ये य इति । कार्यकारणेति भावप्रधानो निर्देशः । कार्यत्वं दण्ड्यत्वम्, कारणत्वं दण्डयितृत्वं, ताभ्यां सिद्धार्थौ निष्पन्नपरलोकप्रयोजनौ, अत एव नावसीदतः । एवं न्याय्यदण्डकर्तृत्वान्नाहमकृत्यकारी, जातदण्डत्वाच्च त्वमपि न तथेति भावः ॥ ६१ ॥

रा० टी०-शास्त्ररीतिमेवाह-दण्ड्य इति । यो राजादिः दण्ड्ये दण्डनीये दण्डं पातयेत् प्रापयेत् यश्च दण्ड्यः दण्ड्यते दण्डं प्राप्नोति तौ कार्यकारणसिद्धार्थौ कार्यकारणाभ्यां दण्ड्यत्वदण्डकत्वाभ्यां सिद्धाः अर्थाः ययोस्तौ उभौ नावसीदतः क्लेशं प्राप्नुतः ॥ ६२ ॥

गो० टी०-उक्तं विवृणोति-दण्ड्य इति । कार्यकारणसिद्धार्थौ दण्ड्यत्वदण्डयितृत्वाभ्यां निष्पन्नप्रयोजनावित्यर्थः ॥ ६४ ॥

६२ ] ति० टी०-तदेवाह—स्वां प्रकृतिं स्वकीयं शुद्धस्वभावत्वम् । दण्डदिष्टेन दण्डबोधकशास्त्रोक्तेन मार्गेण ॥ ६२ ॥

रा० टी०-तदिति । तत् मम शास्त्रानुसारित्वाद्धेतोः दण्डदिष्टेन दण्डविषयकशास्त्रोक्तेन वर्त्मना मार्गेण दण्डसंयोगात् मत्कर्तृकदण्डसंबन्धात् विगतकल्मषः निवृत्तपापः अत एव धर्म्यां धर्मादनपेतां स्वां प्रकृतिं गतः प्राप्तो भवानस्तीति शेषः ॥ ६३ ॥

गो० टी०-तदिति । धर्मदृष्टेन[4] धर्मशास्त्रदृष्टेन वर्त्मना दण्डसंयोगात् विगतकल्मषः सन् धर्म्यां धर्मादनपेतां स्वां प्रकृतिं यथावस्थितशुद्धस्वरूपं गतः ॥ ६६ ॥

६३ ] ति० टी०-भयं भ्रातृभार्याहरणकर्मजनितनरकभयं मद्दूषणनिमित्तपरलोकभयं च दण्डेन कर्मणो नाशान्मद्दूषणस्य मया क्षान्तत्वाच्च । शोकमोहौ तारातारेयविषयौ । विधानं प्राग्भवीयं कर्म । अत्रान्ते दण्डस्यैव संहारात्तिरश्चामपि ज्ञानवतां शास्त्रार्थेऽधिकारो दृढः कृत इति बोध्यम् ॥ ६३ ॥

रा० टी०-त्यजेति । हृदये स्वान्तःकरणे स्थितं शोकं

१ संनत इति गो. पाठः । २ सामसंपन्नयेति गो. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ धर्मदृष्टेनेति गो. पाठः ।

यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर । तथा वर्तेत सुग्रीवे मयि चापि न संशयः ॥ ६४ ॥
स तस्य वाक्यं मधुरं महात्मनः समाहितं धर्मपथानुवर्तिनम् ।
निशम्य रामस्य रणावमर्दिनो वचः सुयुक्तं निजगाद वानरः ॥ ६५ ॥
शराभितप्तेन विचेतसा मया प्रभाषितस्त्वं यदजानता विभो ।
इदं महेन्द्रोपमभीमविक्रम प्रसादितस्त्वं क्षम मे हरीश्वर ॥ ६६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

वालिवधश्रवणाच्छोकसंतप्ता तारा किष्किन्धातो वालिसमीपमागन्तु निर्ययौ । रामभयात्प्रपलायमाना अतो मार्गमध्ये मिलित वानरा भयोत्पादनेन तारां संनिविवर्तयिषवः सन्तो नगररक्षणाङ्गदाभिषेचनादीनि प्रास्तावयन् । तान्निराकृत्य रणाङ्गणमापतन्ती तारा रणशय्याशायिनं वालिनं रामादींश्चापश्यत् ।

स वानरमहाराजः शयानः शरपीडितः । प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रतिपद्यत ॥ १ ॥
अश्मभिः परिभिन्नाङ्गः पादपैराहतो भृशम् । रामबाणेन चाक्रान्तो जीवितान्ते मुमोह सः ॥ २ ॥
तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३ ॥

पुत्रादिदृष्टत्तविषयकचिन्तां मोहं तद्विषयकस्नेहजनितवैचित्यं च भयं स्वकृतपापजनितभीतिं च त्यज । तत्र हेतुः—हे हर्यक्ष ! त्वया विधानं त्वत्कर्तृकविचारविषयीभूतमित्यर्थः, अतिवर्तितुमन्यथा कर्तुं न शक्यं, केनचिदिति शेषः ॥ ६४ ॥

गो० टी०—हेत्वन्तरेणाश्वासयति—त्यजेति । विधानं विधिः प्रारब्धं कर्मेति यावत् ॥ ६६ ॥ ६७ ॥

६४ ] ति० टी०—तथा वर्तेत पितृवदेव तं पालयिष्याव इति भावः । अस्मत्तस्तथा वृत्तिं प्राप्नुयादित्यक्षरार्थः ॥ ६४ ॥

रा० टी०—यथेति । अङ्गदः यथा त्वयि नित्यं वर्तते अवर्तत तथा मयि सुग्रीवे च वर्तेत संशयः अस्मिन्विषये संदेहः न कार्य इति शेषः ॥ ६९ ॥

६५ ] ति० टी०—तस्य वाक्यमात्मनः सुगतेः पुत्रपालनस्य च प्रतिपादकम् ॥ ६५ ॥

रा० टी०—स इति । धर्मपथानुवर्तिनः धर्मरूपमार्गमात्रवर्तनशीलस्य रणावमर्दिनः रणप्राप्तरिपुमर्दनकर्तुः महात्मनस्तस्य स्वसंमुखं प्राप्तस्य रामस्य सुयुक्तं शोभनयुक्तिसहितं समाहितं समाधानकारकं मधुरं वाक्यं निशम्य श्रुत्वा वानरो वाली निजगाद पुनरुवाच ॥ ६६ ॥

गो० टी०—उक्तमर्थं सर्गान्ते श्लोकाभ्यां पुनः संगृह्णाति—स तस्येति । समाहितं समाधानरूपम् ॥ ६८ ॥

६६ ] ति० टी०—इदं प्रभाषणम् ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०—तदाकारमाह—शरेति । हे विभो ! हे महेन्द्रोपम ! हे भीमविक्रम ! शराभितप्तेन बाणवेगपीडितेन अत एव विचेतसा अत एव अजानता विशेषज्ञानाभाववता मया यत्त्वं प्रभाषितः दोषाभासवत्त्वेनोक्तस्तत् मे प्रसादितः मया प्रार्थितस्त्वं क्षम क्षमस्व ॥ ६७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किधाकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

गो० टी०—शरेति । प्रदूषित इति यत् इदं मे अपचरितं क्षम क्षमस्व ॥ ६९ ॥

अस्मिन् सर्गे सार्धसप्तषष्टिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टादशः सर्गः ॥ १८ ॥

१ ] ति० टी०—हेतुमद्वाक्यैर्हेतूपन्यासयुतैर्वाक्यैः । प्रत्युक्त उक्तप्रत्युत्तरः ॥ १ ॥

रा० टी०—वालिकर्तृकरामप्रार्थनानन्तरकालिकं वालिवृत्तान्तमाह—स इति । शरपीडितः विद्धः रामबाणेन व्यथितः अत एव शयानः स रामदृष्टिपथं गतो वानरमहाराजो वाली हेतुमद्वाक्यैः युक्तिविशिष्टवचनैः प्रत्युक्तस्त्वदोष इदानीं परिभ्रष्ट इत्यादिप्रत्युत्तरितोऽपि उत्तरं न प्रतिपद्यते प्रत्यपद्यत विशेषतो नागृणोदित्यर्थः ॥ १ ॥

गो० टी०—तारागमनमेकोनविंशे—स वानरमहाराज इत्यादि । विक्षतः विशेषेण क्षतः । जीवितान्ते जीवितान्तकाले ॥ १-३ ॥

२-३ ] ति० टी०—जीवितान्ते तत्समये । मुमोह विसंज्ञोऽभवत् ॥ २ ॥ ३ ॥

रा० टी०—तत्र हेतुमाह—अश्मभिरिति । अश्मभिः शि-

१ वर्तिन इति गो. पाठः । २ प्रदूषित इति गो. पाठः । ३ प्रभो इति गो. पाठः । ४ नरेश्वरेति गो. पाठः । ५ शरविक्षत इति गो. पाठः । ६ प्रत्यपद्यतेति गो. पतिपद्यते इति रा. पाठः ।

सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् । निष्पपात भृशं तस्मादुद्विग्ना गिरिकन्दरात् ॥ ४ ॥
ये त्वङ्गदपरीवारा वानरा हि महाबलाः । ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५ ॥
सा ददर्श ततस्त्रस्तान्हरीनापततो द्रुतम् । यूथादिव परिभ्रष्टान्मृगान्निहतयूथपान् ॥ ६ ॥
तानुवाच समासाद्य दुःखितान्दुःखिता सती । रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः ॥ ७ ॥
वानरा राजसिंहस्य यस्य यूयं पुरःसराः । तं विहाय सुवित्रस्ताः कस्माद्द्रवत दुर्गताः ॥ ८ ॥
राज्यहेतोः स चेद्भ्राता भ्रात्रा क्रूरेण पातितः । रामेण प्रसृतैर्दूरान्मार्गणैर्दूरपातिभिः ॥ ९ ॥
कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः । प्राप्तकालमविश्लिष्टमूचुर्वचनमङ्गनाम् ॥ १० ॥
जीवपुत्रे निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् । अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११ ॥

लाभिः परिभिन्नाङ्गः भृशमत्यन्तं पादपैरप्याहतः रामबाणेन च आक्रान्तः आविद्धः स वाली जीवितान्ते प्राणापगमसमये मुमोह ॥ २ ॥

रा० टी०–तमिति । भार्या तारा रामदत्तेन रामकृतेन बाणमोक्षेण हतं तं प्रसिद्धं प्लवगशार्दूलं वानरश्रेष्ठं वालिनं शुश्राव ॥ ३ ॥

४–५ ] ति० टी०–अप्रियमिति छेदः । सपुत्रा, पुत्रोऽङ्गदः । गिरिकन्दरं गिरिगह्वरं किष्किन्धाख्यम् ॥ ४ ॥ ५ ॥

रा० टी०–सेति । सपुत्रा पुत्रसहिता सा तारा अप्रियम् अत एव सुदारुणं भर्तुर्वधं श्रुत्वा भृशमुद्विग्ना सती तस्मात्पुरभूतात् गिरिकन्दरात् किष्किन्धाभिधगिरिगुहातः निष्पपात निर्जगाम ॥ ४ ॥

गो० टी०–सा सपुत्राप्रियमिति । अप्रियमिति छेदः । विविधात्नानाकक्ष्यात् गिरिगह्वराद्गिरिगुहातः गुहारूपा हि किष्किन्धेत्युक्तम् ॥ ४ ॥

रा० टी०–ये इति । महाबलाः अङ्गदपरीवारा ये वानरास्ते तु सकार्मुकं धनुःसहितं राममालोक्य प्रदुद्रुवुः ॥ ५ ॥

गो० टी०–ये त्वित्यादि श्लोकद्वयमेकान्वयम् ॥ ५ ॥ ६ ॥

६ ] ति० टी०–सा तारा । आपततः पलायमानान् ॥ ६ ॥

रा० टी०–सेति । यूथात् परिभ्रष्टान् निहतयूथपान् वा मृगानिव त्रस्तान् अत एव द्रुतमापततः प्रदुद्रुवतः हरीन् वानरान् सा तारा ददर्श ॥ ६ ॥

७ ] ति० टी०–इषुभिरनुबद्धानिवानुसृतानिव । रामवित्रासितान्रामाद्विभ्रस्तान् ॥ ७ ॥

रा० टी०–तानिति । रामवित्रासितान् अत एव इषुभिर्बाणैः अनुविद्धानिव अत एव दुःखितान् सर्वान् तान् वानरान् समासाद्य प्राप्य उवाच ॥ ७ ॥

गो० टी०–पूर्वं सामान्यतो विदितवृत्तान्तापि विशेषजिज्ञासया पृच्छति–तानिति ॥ ७ ॥

८ ] ति० टी०–वचनमाह—वानरा इति । यस्य वालिनः । दुर्गता वधादिकमपश्यन्तः ॥ ८ ॥

रा० टी०–तद्वचनाकारमाह–वानरा इति । हे वानराः ! यस्य राजसिंहस्य वालिनो यूयं पुरःसरास्तं विहाय सुवित्रस्ताः अत एव दुर्गताः दुर्मार्गगमनशीलाः सन्तः कस्मात् द्रवत द्रवथ ॥ ८ ॥

गो० टी०–वानरा इत्यादि । श्लोकद्वयमेकान्वयम् । दुर्गताः अगतिकाः राज्यलाभाय सुग्रीवेण वाली हतश्चेद्द्रवतां किं भयमित्यर्थः । मार्गणैरिति बहुवचनं संभावनयोक्तम् ॥ ८ ॥ ९ ॥

९ ] ति० टी०–भ्राता प्रयोजककर्ता । रामः प्रयोज्यकर्ता । बाणः करणम् । दूराद्दूरे स्थित्वा तैः स पातितश्चेत्किं युष्माभिः पलायितमिति शेषः । तत्सेवयैव भवज्जीवनसंभवादिति भावः ॥ ९ ॥

रा० टी०–राज्येति । क्रूरेण भ्रात्रा सुग्रीवेण प्रयोजकेन रामेण प्रयोज्यभूतेन प्रसृतैः अतिवेगवद्भिः दूरपातिभिः दूरगतस्यापि लक्ष्यस्य विघातकैरित्यर्थः, मार्गणैः बाणैः करणैः राज्यहेतोः भ्राता स वाली चेत् यदि पातितस्तर्हि भवत्पलायनं न युज्यते इति शेषः, सुग्रीव एव सेव्यतामिति तात्पर्यम् । मार्गणैरित्यत्र बहुवचनं तु स्वप्रतीत्यभिप्रायेण ॥ ९ ॥

१० ] ति० टी०–प्राप्तकालं कालोचितम् । अविश्लिष्टं सर्वसंमतिपूर्वमेकरूपम् । 'अविक्लिष्टम्' इति पाठे व्यक्तमित्यर्थः । अङ्गनां वालिन इति शेषः ॥ १० ॥

रा० टी०–कपीति । कपिपत्न्यास्तारायाः वचः श्रुत्वा प्राप्तकालं कालप्रतिबोधकम् अविश्लिष्टं स्पष्टं वचनम् अङ्गनां तारामूचुः । 'अविक्लिष्टम्' इतिपाठान्तरं सुयुक्तिमदिति तदर्थः ॥ १० ॥

गो० टी०–कपिपत्न्या इति । अविक्लिष्टं सयुक्तिकमिति यावत् ॥ १० ॥

११ ] ति० टी०–पुत्रं रक्षस्व रामादिति शेषः । कुतः पुत्रस्य भयं तत्राह—अन्तक इत्यादि । नयति यमपुरमिति शेषः ॥ ११ ॥

रा० टी०–तद्वचनाकारमाह–जीवेति । जीवः सप्राणः पुत्रो यस्यास्तत्संबोधनम् । अन्तकः कालः रामरूपेण वालिनं

१ त्रस्ता विविधाद्गिरिगह्वरादिति गो. पाठः । २ भीमविक्रमा इति गो. पाठः । ३ भृशमिति गो. पाठः । ४ सुसंत्रस्ता इति गो. पाठः । ५ रौद्रेणेति गो. पाठः । ६ प्रहितै रौद्रैरिति गो. पाठः ।

क्षिप्तान्वृक्षान्समाविध्य विपुलाश्च तथा शिलाः । वाली वज्रसमैर्बाणैर्वज्रेणेव निपातितः ॥ १२ ॥
अभिभूतमिदं सर्वं विद्रुतं वानरं बलम् । अस्मिन्प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३ ॥
रक्ष्यतां नगरी शूरैरङ्गदश्चाभिषिच्यताम् । पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४ ॥
अथवा रुचितं स्थानमिह ते रुचिरानने । आविशन्ति च दुर्गाणि क्षिप्रमद्यैव वानराः ॥ १५ ॥
अभार्याः सहभार्याश्च सन्त्यत्र वनचारिणः । लुब्धेभ्यो विप्रलब्धेभ्यस्तेभ्यो नः सुमहद्भयम् १६ ॥
अल्पान्तरगतानां तु श्रुत्वा वचनमङ्गना । आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७ ॥
पुत्रेण मम किं कार्यं राज्येनापि किमात्मना । कपिसिंहे महाभागे तस्मिन्भर्तरि नश्यति ॥ १८ ॥
पादमूलं गमिष्यामि तस्यैवाहं महात्मनः । योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९ ॥
एवमुक्त्वा प्रदुद्राव रुदती शोकमूर्छिता । शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २० ॥
सा[12] व्रजन्ती ददर्शाथ पतिं निपतितं भुवि । हन्तारं वानरेन्द्राणां[13] समरेष्वनिवर्तिनाम् ॥ २१ ॥

हत्वा नयति स्वलोकमिति शेषः, अतो निवर्तस्व किष्किन्धां प्रविशेत्यर्थः । तत्प्रयोजनमाह—अङ्गदं स्वपुत्रं रक्षस्व । एतेन सपुत्रायाः पत्यनुगमनं नोचितमिति सूचितम् ॥ ११ ॥

गो० टी०—जीवपुत्रे इति । अपुत्रायाः खलु मृतभर्त्रनुगमनमिति भावः । नयति लोकान्तरमिति शेषः ॥ ११ ॥१२॥

१२ ] ति० टी०—वृक्षान्वालिप्रहितान् । अयं सर्वोऽपि संभाव्यवादः । एवं बहुबाणत्यागवादोऽपि ॥ १२ ॥

रा० टी०—वधप्रकारमाह—क्षिप्तानिति । क्षिप्तान् रिपुवधाय वालिना संत्यक्तान् वृक्षान् विपुलाः बहुशिलाश्च वज्रसमैर्वज्रसदृशैर्बाणैर्वज्रेणवज्रिणेव रामेणेति शेषः, समाविध्य वाली निपातितः । वज्रशब्दः अर्शआद्यजन्तः ॥ १२ ॥

१३ ] ति० टी०—अभिभूतमिव द्रुतम् । वानरं वानराणामिदम् ॥ १३ ॥

रा० टी०—अभीति । प्लवगशार्दूले श्रेष्ठे अस्मिन् वालिनि हते सति वानरसंबन्धि वानरम् इदं सर्वं बलमभिभूतं रामेण पराभूतमत एव विद्रुतं पलायितमस्तीति शेषः ॥ १३ ॥

गो० टी०—अभिद्रुतमिति । विद्रुतं पूर्वं किष्किन्धातो निर्गतमिदं बलं प्रसृतं प्रकीर्णं सत् अभिद्रुतं किष्किन्धाभिमुख्येन द्रुतम् ॥ १३ ॥ १४ ॥

१४] ति० टी०—पदस्थं वानरराज्यपदस्थं पुत्रमङ्गदं भजिष्यन्ति । अन्यथाऽराजकेऽत्रास्माभिरवस्थातुमशक्यमिति भावः १४

रा० टी०—वानरपलायननिवृत्तौ यत्नमाह—रक्ष्यतामिति । शूरैः पलायनरहितैरित्यर्थः, वानरैः नगरी रक्ष्यताम् अङ्गदोऽभिषिच्यतां च । पदस्थं राज्यासने स्थितं वालिनः पुत्रमङ्गदं प्लवङ्गमाः भजिष्यन्ति भक्ष्यन्ति ॥ १४ ॥

१५-१६ ] ति० टी०—अथवेति । सरामे सुग्रीवे किष्किन्धामागच्छत्यभिषिक्तेनाप्यङ्गदेनास्मत्पालनमशक्यमेवेति नेह स्थातुं योग्यमिति शेषः । हे रुचिरानने ! यद्यपीदं स्थानं ते तुभ्यं रुचितमभीष्टम्, तथापीह किष्किन्धायां विद्यमानानि दुर्गाण्यद्यैव वानराः सुग्रीवहनुमदादय आविशन्ति, वर्तमानसामीप्ये लट् । तेषु प्रविष्टेषु ये अभार्याः सभार्याश्च वानराः सुग्रीवावलम्बिनः प्रागस्माभिः कृतवैरास्ते च प्रवेक्ष्यन्ति । ततश्च लुब्धेभ्यो राज्यादिविषये विप्रलब्धेभ्यः पूर्वमस्माभिर्वञ्चितेभ्योऽस्माकं तुमुलं महद्भयमस्ति, यत इति शेषः । केचित्तु—इह ते स्थानमस्माकमरुचितमनभिमतम् । इतरत्पूर्ववदित्याहुः ॥ १५ ॥ १६ ॥

रा० टी०—पक्षान्तरमाह—अथवेति । हे रुचिरानने ! अथवा यदि इह अस्यां किष्किन्धायां स्थानं स्थितिस्ते रुचितं प्रीतिविषयीभूतं न तदा अभार्याः सहभार्याश्च ये वनचारिणो वानरा अत्र सन्ति ते अद्य अस्मिन् काले क्षिप्रं शीघ्रं दुर्गाणि किष्किन्धादुर्गमस्थानानि आविशन्ति आविशन्तु । तत्र हेतुः—विप्रलब्धेभ्यः अस्माभिर्वञ्चितेभ्यः अत एव लुब्धेभ्यः अस्मद्धनाद्याकाङ्क्षिभ्यः तेभ्यः प्रविष्टेभ्यो नः सुमहद्भयमस्ति । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—अथ वेति । हे रुचिरानने ! ते इह किष्किन्धायां स्थानम् अवस्थानम् अरुचितम् अनभिमतम् अत्र स्थातुम् अस्माकं न रोचते इत्यर्थः । हि अस्मात्कारणात् वानराः शत्रुभूताः दुर्गाणि किष्किन्धायाः दुष्प्रवेशस्थलानि आविशन्ति आक्रमिष्यन्ति अन्यानि अस्मदावासस्थलभिन्नानीत्यर्थः॥१५॥

गो० टी०—अस्त्वाक्रमणं ततः किमित्यत्राह—अभार्या इति । अभार्याः भार्याविरहिताः सभार्याः समानभार्याः साधारणभार्या इत्यर्थः, ये वालिना विप्रवासिताः वनचारिणः सन्ति तेभ्यः विप्रयुक्तेभ्यः स्वभार्याविरहिभ्यः लुब्धेभ्यः साधारणभार्यान्तराभिलाषिभ्यः स्वेभ्यो ज्ञातिभ्यः सुग्रीवादिभ्यः नः अस्माकम् अत्र किष्किन्धास्थाने तुमुलं निरन्तरम् भयं भवति । अनेन भाविसुग्रीवव्यापारः सूचितः । रुचिरानन इत्यादिसंबोधनात्तस्याः सह मरणसाहसं द्योत्यते ॥ १६ ॥

१७-२१ ] ति० टी०—अल्पान्तरगतानां नातिदूरवर्ति-

१ रामेण विनीति गो. पाठः । २ द्रुतमिति गो. पाठः । ३ प्रसृतमिति गो. पाठः । ४ नगरद्वारमिति गो. पाठः । ५ हीति गो. पाठः । ६ अन्यानीति गो. पाठः । ७ च सभार्याश्चेति गो. पाठः । ८ युक्तेभ्य इति गो. लुब्धेभ्य इति रा. पाठः । ९ तुमुलमिति गो. पाठः । १० रुदन्तीति गो. पाठः । ११ कर्शितेति गो. पाठः । १२ आव्रजन्ती इति गो. पाठः । १३ दानवेति गो. पाठः ।

क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् । महावातसमाविष्टं महामेघौघनिःस्वनम् ॥ २२ ॥
शक्रतुल्यपराक्रान्तं दृष्ट्वैवोपरतं घनम् । नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥
शार्दूलेनामिषस्यार्थे मृगराजमिवाहतम् ॥ २३ ॥
अर्चितं सर्वलोकस्य सपताकं सवेदिकम् । नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा ॥ २४ ॥
अवष्टभ्यावतिष्ठन्तं ददर्श धनुरूर्जितम् । रामं रामानुजं चैव भर्तुश्चैव तथानुजम् ॥ २५ ॥

नाम् । 'अवान्तरगतानाम्' इति पाठे मध्येमार्गमागतानामित्यर्थः । तेषां वानराणां वचनं श्रुत्वाऽऽत्मनः प्रतिरूपं कालोचितं बभाषे ॥ १७–२१ ॥

२२ ] ति० टी०–पर्वतेन्द्राणां क्षेप्तारम् , रणेष्विति शेषः । रणभेदमपेक्ष्य वज्राणामिति बहुवचनप्रयोगः । महता वातेन समं तुल्यमाविष्टमावेशो यस्य रणेषु तम् ॥ २२ ॥

२३ ] ति० टी०–शक्रतुल्यं पराक्रान्तं पराक्रमो यस्य तम् । दृष्ट्वैव जलमुत्सृज्याविरतं नर्दतां मध्ये भीमं नर्दन्तं मृगराजं प्रभूतमांसादिमत्त्वेन मृगश्रेष्ठम् । शार्दूलो व्याघ्रः ॥ २३ ॥

२४–२५] ति० टी०–सर्वलोकस्य सर्वलोकेनार्चितं चैत्यं चतुष्पथवर्ति वल्मीकं नागहेतोरन्तर्विद्यमाननागभक्षणार्थं सुपर्णेन गरुडेन यथोन्मथितं तथा सुग्रीवस्य राज्यभोगहेतो रामेणोन्मथितमित्यर्थः ॥ २४ ॥ २५ ॥

रा० टी०–अल्पेति । अल्पान्तरगतानां किंचिद् दूरे वर्तमानानां वानराणां वचः श्रुत्वा अङ्गना वालिस्त्री सा तारा आत्मनः प्रतिरूपं सदृशं वचनं बभाषे ॥ १७ ॥

रा० टी०–तद्वचनाकारमाह–पुत्रेणेति । कपिसिंहे भर्तरि नश्यति सति पुत्रादिना मम किं कार्यं न किमपीत्यर्थः॥ १८ ॥

रा० टी०–पादेति । योऽसौ पतिः रामप्रयुक्तेन रामत्यक्तेन शरेण विनिपातितस्तस्यैव पादमूलमहं गमिष्यामि ॥१९॥

गो० टी०–अल्पेति । अल्पान्तरगतानां किंचिदवकाशं प्राप्तानां संभाषणाय कियन्मात्रावकाशं प्राप्तानामित्यर्थः । आत्मनः प्रतिरूपं स्वबुद्धयनुगुणम्, यद्वा आन्तरं बुद्धिः अल्पबुद्धीनामित्यर्थः ॥ १७–१९ ॥

रा० टी०–एवमिति । एवमुक्त्वा दुःखेन रुदन्ती अत एव शोकमूर्छिता प्रवृद्धशोका अत एव शिर उरश्च समभिघ्नती तारा प्रदुद्राव वालिसमीपं जगाम ॥ २० ॥

गो०टी०–एवमिति । बाहुभ्याम् हस्ताभ्यामित्यर्थः॥२०॥

रा० टी०–सेति । व्रजन्ती सा तारा समरेषु अनिवर्तिनां दानवेन्द्राणां मायाव्यादीनां हन्तारं वज्राणां वज्रैः पर्वतेन्द्राणां क्षेप्तारं वासवमिव महावातेन समं सदृशमाविष्टमावेशो वेग इत्यर्थः, यस्य स तं, महामेघौघस्य निःस्वन इव निःस्वनो यस्य तं, शक्रतुल्यं पराक्रान्तं पराक्रमो यस्य तं, नर्दतां वानराणां मध्ये भीमं नर्दन्तं, दृष्ट्या दृष्टेः उपरतं निवृत्तं घनमिव आमिषस्य मांसस्यार्थे शार्दूलेन व्याघ्रेण आहतं मृगराजं विपुलमांसवत्तया मृगश्रेष्ठं गजमिव सर्वलोकस्य अर्चितं पूजितं, सपताकं पताकासहितं सवेदिकं वेदिकासहितं नागहेतो नागग्रहणाय सुपर्णेन गरुडेन उन्मथितं चैत्यं देवालयमिव शूरेण रामेण पातितमत एव भुवि निपतितं पतिं ददर्श । सार्धश्लोकचतुष्टयमेकान्वयि ॥ २१–२४ ॥

रा० टी०–अवष्टभ्येति । ऊर्जितं धनुरवष्टभ्य गृहीत्वा अवतिष्ठन्तं रामं रामानुजं च भर्तुरनुजं सुग्रीवं च ददर्श । अर्धद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०–आव्रजन्तीत्यादि । दानवेन्द्राणां मायाविप्रभृतीनाम् । वज्राणामिति प्रयोगबाहुल्यापेक्षया बहुवचननिर्देशः । महावातसमाविष्टं समाविष्टमहावातमिव स्थितम् । समावेशः संघीभावः, यद्वा समाविष्टमिति भावे निष्ठा । महावातसमावेशमिव स्थितं पराक्रान्तं पराक्रमः । नर्दतां मध्ये भीमं नर्दन्तम् । शार्दूलेन सिंहेन 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः श्वेतापिङ्गलः । व्यादीर्णास्यो महानादः शार्दूलोऽतुलविक्रमः ॥' इति वैजयन्ती । यद्वा असंभावितत्वद्योतनाय शार्दूलहिंसितमिवेत्यभूतोपमा । अर्चितमिति । अत्र भागवताद्युक्तकालीयनागप्रहरणवेलायां बलिस्थानं चैत्यमप्युन्मथितमित्यवगन्तव्यमित्याहुः । सर्वलोकस्य सर्वलोकेन अर्चितं सपताकम् अलंकृतमित्यर्थः, सवेदिकं श्रमहरवेदिकासंपन्नं, एवं वर्तमानमपि तत्र निगूढनागग्रहणाय गरुडोन्मथितं चैत्यमिव स्थितमित्यर्थः । शौर्यादिसंपन्नोऽपि भ्रातृभार्यापहरणपापवत्त्वेन हत इत्यत्र दृष्टान्तोऽयम् । अवष्टभ्येति । ऊर्जितं दृढं धनुरवष्टभ्य तिष्ठन्तम् अनेनाकर्षकाकार उच्यते । चकारेण तादृशसंस्थानविशेषेणाकर्षकता कथ्यते । भर्तारं हतवन्तं रामं तत्साहाय्यकृतं तदनुजं तेन संहारयितारं सुग्रीवं च ददर्श । शुभा तत्र शत्रुत्वबुद्धिं विहाय शुभहृदया बभूव । न रामस्य दोषोऽस्ति किं तु वालिन एव पानीयपानाय तटाके खाते तत्र कण्ठे गुर्वीं शिलां बद्ध्वा पतित्वा म्रियमाणस्यैव हि दोषः । अयमप्यनुकूलश्चेत् कथमेनं न रक्षेत् । किं च 'मम प्राणा हि पाण्डवाः' इत्युक्तरीत्या स्वप्राणभूते स्वाश्रिते हिंसां कुर्वन्तं कथं मृष्येत् । अत एव हि प्रथमयुद्धे न हिंसितवान् किंतु स्वाश्रितापराधं दृष्ट्वैव पुनर्युद्धे वालिनं हतवानित्यमन्यतेति भावः ॥ २१–२६ ॥

१ यथेति गो. पाठः । २ चेति गो. पाठः । ३ उत्तममिति गो. पाठः । ४ अनुजं शुभेति गो. पाठः ।

तानतीत्य समासाद्य भर्तारं निहतं रणे । समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ॥ २६ ॥
सुप्तेव पुनरुत्थाय आर्यपुत्रेति वादिनी । रुरोद सा पतिं दृष्ट्वा [2]संवीतं मृत्युदामभिः ॥ २७ ॥
तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं[1] कुररीमिव । विषादमगमत्कष्टं दृष्ट्वा चाङ्गदमागतम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः ।

वालिनमालिङ्ग्याङ्गदमुद्दिश्य सकरुणं विलपन्ती तारा प्रायोपवेशनमध्यवस्यति ।

रामचापविसृष्टेन शरेणान्तकरेण तम् । दृष्ट्वा विनिहतं भूमौ तारा ताराधिपानना ॥ १ ॥
सा समासाद्य भर्तारं पर्यष्वजत भामिनी । इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् ॥ २ ॥
वानरं[3] पर्वतेन्द्राभं शोकसंतप्तमानसा । तारा तरुमिवोन्मूलं पर्यदेवयतातुरा ॥ ३ ॥
रणे दारुणविक्रान्त प्रवीर प्लवतां वर । किमिदानीं[4] पुरोभागामद्य त्वं नाभिभाषसे ॥ ४ ॥
उत्तिष्ठ हरिशार्दूल भजस्व शयनोत्तमम् । नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ५ ॥
अतीव खलु ते कान्ता वसुधा वसुधाधिप । गतासुरपि तां गात्रैर्मां[5] विहाय निषेवसे ॥ ६ ॥

२६] ति० टी०—तानतीत्य मार्गस्थान्रामादीनतीत्य॥२६॥

रा० टी०—तानिति । तान् रामादीन् अतीत्य अतिक्रम्य भर्तारं समासाद्य समीपं प्राप्य समीक्ष्य च व्यथिता दुःखिता अत एव संभ्रान्ता उद्विग्नचित्ता तारा भूमौ निपपात ॥ २७ ॥

गो० टी०—तमिममर्थं व्यञ्जयन्नाह—तानिति । अतीत्येति नातिक्रम उच्यते सर्वेषां समीपस्थत्वात् किंतु तत्र दोषबुद्धिमकृत्वेत्यर्थः । भर्तारं समासाद्येति उपसर्गेण स्वाज्ञानेनायं हत इति बुद्धवतीति ज्ञाप्यते ॥ २६ ॥

२७-२८ ] ति० टी०—संवीतं बद्धम् ॥ २७ ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०—सुप्तेति । सुप्ता पुनरुत्थाय इव विद्यमाना सा तारा मृत्युदामभिः मृत्युरूपपाशेन संवीतं बद्धं पतिं दृष्ट्वा आर्यपुत्रेति वादिनी सती रुरोद ॥ २८ ॥

गो० टी०—सुप्तेति । संदितं बद्धं मृत्युदामभिः मृत्युपाशैः, आसन्नप्राणमित्यर्थः ॥ २७ ॥

रा० टी०—तामिति । कुररीमिव क्रोशन्तीं तां ताराम-वेक्ष्य आगतमङ्गदं च दृष्ट्वा सुग्रीवः कष्टं विषादमगमत् ॥२९॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकोनविंशतितमः सर्गः ॥ १९ ॥

गो० टी०—तामिति । कष्टं विषादम् अत्यन्तविषादमित्यर्थः ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

१-२] ति० टी०—अन्तकरेण मृत्युकारिणा ॥ १ ॥ २ ॥

३ ] ति० टी०—उन्मूलम् उत्पाटितमूलं पतितमिति शेषः ॥३॥

रा० टी०—ताराविलापं वर्णयितुमाह—रामेति । रामचापविसृष्टेन अन्तकरेण विनाशकेन शरेण भूमौ विनिहतं भर्तारं समासाद्य समीपं प्राप्य ताराधिपानना चन्द्रमुखी भामिनी स्वप्रारब्धविषयककोपवती तारा पर्यष्वजत आलिङ्गयत[6] । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—अथ ताराप्रलापो विंशे—रामेत्यादिसार्धश्लोकः । सा तारा तं दृष्ट्वा पर्यष्वजत ॥ १ ॥

रा० टी०—इषुणेति । इषुणा अभिहतमत एव उन्मूलं तरुमिव पर्वतेन्द्राभं वालिनं दृष्ट्वा शोकसंतप्तमानसा आतुरा तारा पर्यदेवयत व्यलपत ॥ २ ॥ ३ ॥

गो० टी०—इषुणेत्यादिसार्धः ॥ २ ॥

४-६ ] ति० टी०—प्लवतां वानराणां श्रेष्ठ ! इदानीं पुरोभागामेतस्मिन्काले कृतापराधां मत्वाऽद्य नाभिभाषसे किमित्यन्वयः ॥ ४-६ ॥

रा० टी०—विलापाकारमाह—रण इति । दारुणं विक्रान्तं विक्रमो यस्य तत्संबोधनम् । प्रवीर नित्यं युद्धोत्साहविशिष्ट ! पुरोभागाम् अग्रे स्थितां मां किं किमर्थं नाभिभाषसे ॥ ४ ॥

रा० टी०—उत्तिष्ठेति । हे हरिशार्दूल ! स्वशयनोत्तमं भजस्व स्वीकुरु तस्मिँस्तिष्ठेत्यर्थः । तत्र हेतुः—एवंविधाः भवत्सदृशाः नृपतयः भूमौ न शेरते ॥ ५ ॥

रा० टी०—अतीवेति । वसुधा भूमिः ते अतीव कान्ता प्रिया खलु निश्चितमेतत् अत एव गतासुरपि त्वं मां विहाय गात्रैस्तां वसुधां निषेवसे ॥ ६ ॥

१ क्रोशती, इति गो. पाठः । २ संदितमिति गो. पाठः । ३ वानरेन्द्रं महेन्द्राभमिति गो. पाठः । ४ किं दीनामपुरोभागामिति गो. पाठः । ५ यामिति गो. पाठः । ६ आलिङ्गदिति युक्तं भाति ।

व्यक्तमद्य त्वया वीर धर्मतः संप्रवर्तता । किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ७ ॥
यान्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु । विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ८ ॥
निरानन्दा निराशाऽहं निमग्ना शोकसागरे । त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ९ ॥
हृदयं [1]सुस्थितं मह्यं दृष्ट्वा [2]निपतितं भुवि । यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ १० ॥
सुग्रीवस्य त्वया भार्या हृता स च विवासितः । [3]यत्तत्तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ॥ ११ ॥
निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता । यैषाऽब्रुवं हितं वाक्यं वानरेन्द्र हितैषिणी ॥ १२ ॥
रूपयौवनदृप्तानां दक्षिणानां च मानद । नूनमप्सरसामार्य चित्तानि प्रमथिष्यसि ॥ १३ ॥
कालो निःसंशयो नूनं जीवितान्तकरस्तव । बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो [4]वशी ॥ १४ ॥

गो० टी०–रण इति । अपुरोभागां दोषदर्शनरहिताम् अनपरावामिति यावत् ॥ ३–६ ॥

७ ] ति० टी०–हे वीर ! धर्मतः संप्रवर्तता धर्मेण युद्धमाचरता त्वयाऽद्य स्वर्गमार्गे स्वर्गसाधनरणभूमौ किष्किन्धेवान्या रम्या पुरी निर्मिता । नो चेत्कथं किष्किन्धां विहायात्र शेष इत्यर्थः । कतकस्तु–धर्मतः प्रवर्तिता रक्षिता किष्किन्धेवान्याऽपि स्वर्गमार्गे स्वर्गरूपदेशे निर्मितेत्यर्थमाह॥७॥

रा० टी०–व्यक्तमिति । धर्मतः धर्मेण संप्रवर्तता त्वया स्वर्गमार्गे धर्मवद्भिरन्वेषणीयस्वर्गे किष्किन्धा इव पुरी निर्मिता व्यक्तं स्फुटमतत् ॥ ७ ॥

गो० टी०–व्यक्तमिति । हे वीर ! अत्र निर्मिता किष्किन्धेवान्या पुरी स्वर्गमार्गे त्वया धर्मतः प्रवर्तिता । अतः खल्विमां त्यक्त्वा गन्तुमुद्यतोऽसीति भावः ॥ ६ ॥

८–९ ] ति० टी०–यानि त्वया सार्धं विहृतानि तेषामत्र काले त्वयोपरमः समाप्तिः कृता ॥ ८ ॥ ९ ॥

रा० टी०–यानीति । मधुगन्धिषु वनेषु काले समये त्वया सार्धं यानि सुखानि विहृतानि प्राप्तानि तेषामुपरमो निवृत्तिस्त्वया कृतः ॥ ८ ॥

गो० टी०–यानीति । अस्माभिरिति इतरस्त्र्यपेक्षया बहुवचनम् । अस्माभिः सह त्वया यानि विहृतानि विहाराः कृतानीत्यध्याहारः, तेषां त्वया उपरमः विरामः कृतः ॥ ७ ॥

रा० टी०–निरानन्देति । त्वयि पञ्चत्वमापन्ने प्राप्ते सति निराशा सुखाशारहिता अत एव निरानन्दा अत एव शोकसागरे निमग्नाऽहमस्मीति शेषः ॥ ९ ॥

गो० टी०–निरानन्देति । अथ निरानन्दा निराशा कालान्तरे आनन्दो भविष्यतीत्याशारहिताऽहं शोकसागरे निमग्ना अस्मीति शेषः । पञ्चत्वं मरणम् ॥ ८ ॥

१० ] ति० टी०–मह्यं मम हृदयं सुस्थितमतिदृढम्, यत्त्वां पतितं दृष्ट्वा न स्फुटते ॥ १० ॥

रा० टी०–हृदयमिति । भुवि निपतितं त्वां दृष्ट्वा शोकाभिसंतप्तं मह्य मम यत् हृदयं सहस्रधा न स्फुटते तत् सुस्थितमतिदृढं निश्चिनोमीति शेषः ॥ १० ॥

गो० टी०–हृदयमिति । मह्यं मम ॥ ९ ॥

११ ] ति० टी०–स विवासित इति यत्तत्प्रसिद्धं कर्म, तस्य कर्मण इयं व्युष्टिः परिपाकः प्राप्त इत्यर्थः ॥ ११ ॥

रा० टी०–सुग्रीवस्येति । यत् सुग्रीवस्य भार्या त्वया हृता यच्च स सुग्रीवो विवासितः तत् तस्य तस्य कर्मण इयं व्युष्टिः फलं प्राप्ता ॥ ११ ॥

गो० टी०–सुग्रीवस्येति । व्युष्टिः फलम् ' व्युष्टिः फले समृद्धौ च ' इत्यमरः । विवासित इति यत्तस्य व्युष्टिरित्यन्वयः ॥ १० ॥

१२ ] ति० टी०–यैषाऽहं हितं वाक्यमब्रुवम्, सा त्वया मोहाद्विगर्हिता अस्वीकृतवचना कृतेति यावत् ॥ १२ ॥

रा० टी०–निःश्रेयसेति । हितैषिणी त्वद्धिताकाङ्क्षिणी अत एव निःश्रेयसपरा त्वच्छुभकर्मसाधिका यैषाऽहं हितं वाक्यमब्रुवं रामेण संग्राममवारयमित्यर्थः, साऽहं मोहात् युद्धोत्साहहेतुकचित्तस्वास्थ्याभावात् विगर्हिता तिरस्कृता, मद्वाक्यं न स्वीकृतवानसीत्यर्थः ॥ १२ ॥

गो० टी०–निःश्रेयसेति । निःश्रेयसपरा श्रेयस्कामा॥११॥

१३ ] ति० टी०–दक्षिणानां विदग्धानां समर्थानां वा चित्तानि प्रमथिष्यसि प्राप्तदिव्यदेहेनाप्सरसां काममोहजननेनेति शेषः ॥ १३ ॥

रा० टी०–त्वद्वियोगे ममैव दुःखं तव तु तत्राऽपि सुखमिति बोधयन्ती आह–रूपेति । रूपयौवनदृप्तानां रूपादिजनितगर्वविशिष्टानां दक्षिणानां निपुणानामप्सरसां चित्तानि प्रमथिष्यसि विहरिष्यसीत्यर्थः ॥ १३ ॥

गो० टी०–रूपेति । दक्षिणानाम् अनङ्गतन्त्रे कुशलानां प्रमथिष्यसि वशीकरिष्यसीति भावः । वीरस्य स्वर्गसिद्धेरिति भावः ॥ १२ ॥

१४ ] ति० टी०–कालः प्राप्त इति शेषः । अवपन्नः प्रापितोऽसि । कालविशेषणं निःसंशय इति । तत्तदायुर्विषयसंदेहरहित इत्यर्थः ॥ १४ ॥

१ सुस्थिरमिति गो. पाठः । २ विनिहत पतिमिति गो. पाठः । ३ यत्तु तस्येति गो. पाठः । ४ वशमिति गो. रा. पाठः ।

अस्थाने वालिनं हत्वा युध्यमानं परेण च । न संतप्यति काकुत्स्थः कृत्वा कर्म सुगर्हितम् १५ ॥
वैधव्यं शोकसंतापं कृपणाकृपणा सती । अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १६ ॥
लालितश्चाङ्गदो वीरः सुकुमारः सुखोचितः । वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्छिते ॥ १७ ॥
कुरुष्व पितरं पुत्र सुदृष्टं धर्मवत्सलम् । दुर्लभं दर्शनं तस्य तव वत्स भविष्यति ॥ १८ ॥
समाश्वासय पुत्रं त्वं संदेशं संदिशस्व मे । मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १९ ॥
रामेण हि महत्कर्म कृतं त्वामभिनिघ्नता । आनृण्यं तु गतं तस्य सुग्रीवस्य प्रतिश्रवे ॥ २० ॥
सकामो भव सुग्रीव रुमां त्वं प्रतिपत्स्यसे । भुङ्क्ष्व राज्यमनुद्विग्नः शस्तो भ्राता रिपुस्तव २१ ॥
किं मामेवं प्रलपतीं प्रियां त्वं नाभिभाषसे । इमाः पश्य वरा बह्वीर्भार्यास्ते वानरेश्वर ॥ २२ ॥
तस्या विलपितं श्रुत्वा वानर्यः सर्वतश्च ताः । परिगृह्याङ्गदं दीना दुःखार्ताः परिचुक्रुशुः ॥ २३ ॥

---

रा० टी०–काल इति । येन कालेन अवशोऽपि त्वं सुग्रीवस्य वशमवपन्नः प्रापितः स तव जीवितान्तकरः निःसंशयः कार्याकार्ययोः स्वतन्त्रत्वात् संशयरहित इत्यर्थः, कालः ननं निश्चितमेतत् ॥ १४ ॥

गो० टी०–काल इति । वशम् अवपन्नः प्राप्तः ॥ १३ ॥

१५ ] ति० टी०–न संतप्यति तदस्थानेऽयुक्तम् ॥ १९ ॥

रा० टी०–अस्थानेति । अस्थाने अप्रसङ्गे स्वभार्यास्त्र विद्यमानास्वित्यर्थः, सुगर्हितम् अतिनिन्दितं कर्म अनुजवधूपरिग्रहं कृत्वा परेण सुग्रीवेण युध्यमानं वालिनं हत्वा काकुत्स्थो रामो न संतपति संतापं प्राप्नोति संतापहेतोरवध्यवधस्याभावादिति भावः ॥ १९ ॥

१६ ] ति० टी०–कृपणाकृपणाऽतिशयेन कृपणा, आबाधायां वा द्वित्वम् । पूर्वमदुःखोपचिता, अदुःखं दुःखरहितं यथा भवति तथोपचिता वर्धिता ॥ १६ ॥

रा० टी०–वैधव्यमिति । पूर्वमदुःखोपचिता अप्राप्तदुःखेत्यर्थः अत एव अकृपणा कार्पण्यरहिता अहमनाथवत् रक्षकाभाववत् शोकसंतापं शोकसंतापविशिष्टं वैधव्यं कृपणा सती वर्तयिष्यामि प्राप्स्यामीत्यर्थः ॥ १६ ॥

गो० टी०–वैधव्यमिति । अहं पूर्वम् अदुःखोपचिता अकृपणा च सती संप्रति कृपणा भूत्वा वैधव्यं शोककृतसंन्तापं च वर्तयिष्यामि धारयिष्यामि ॥ १४ ॥

१७ ] ति० टी०–मे मया लालितः । कामवस्थां प्राप्य वत्स्यत इत्यर्थः ॥ १७ ॥

रा० टी०–लालित इति । पितृव्ये सुग्रीवे क्रोधमूर्छिते सति सुखोचितः सर्वकालं सुखयोग्यः लालितः मे सुकुमारोऽङ्गदो वीरः कामवस्थां दशां वत्स्यते प्राप्स्यतीत्यर्थः ॥ १७ ॥

गो० टी०–लालित इति । मे मया लालितः अङ्गदः पितृव्ये पितृभ्रातरि क्रोधमूर्च्छिते सति कामवस्थां वत्स्यते वर्तयिष्यति नश्यत्येवेति भावः ॥ १६ ॥

१८ ] ति० टी०–पितरं सुदृष्टं कुरुष्व ॥ १८ ॥

रा० टी०–अङ्गदं प्रत्याह–कुरुष्वेति । हे पुत्र ! पितरं सुदृष्टमतिदर्शनकर्मीभूतं कुरुष्व । तत्र हेतुः–तस्य पितुः दर्शनं तव दुर्लभं दुष्प्रापं भविष्यति ॥ १८ ॥

गो० टी०–कुरुष्वेति । अनेन तदानीमङ्गदः समागत इति द्योत्यते ॥ १६ ॥ १७ ॥

१९ ] ति० टी०–मूर्ध्न्येनमुपाघ्राय संदेशं कर्तव्योपदेशं संदिशस्वेत्यन्वयः । प्रस्थितः प्रस्थानुकामः ॥ १९ ॥

रा० टी०–वालिनं प्रत्याह–समिति । हि यतः प्रवासं प्रस्थितोऽसि अतः एनं मे पुत्रं मूर्ध्नि समाघ्राय संदेशम् एतस्य कर्तव्यं संदिशस्व उपदिश ॥ १९ ॥

२० ] ति० टी०–प्रतिश्रवे प्रतिज्ञाविषये । अनेन रामस्य वालिवधविषयदोषाभावो ध्वनितः ॥ २० ॥

रा० टी०–रामेणेति । सुग्रीवस्य संनिधौ प्रतिश्रवे स्वकृतप्रतिज्ञासमाप्त्यर्थं त्वामभिनिघ्नता रामेण आनृण्यं मित्रीभूतसुग्रीवयाचितदेयरूपऋणराहित्यं गतं प्राप्तमत एव महत् अन्यैरसाध्यं कर्म कृतम् ॥ २० ॥

गो० टी०–रामेणेति । महत् अन्यैरशक्यं कर्म कृतम् आनृण्यं च गतं प्राप्तम् । प्रतिश्रवे प्रतिज्ञाविषये ॥ १८ ॥

२१–२२ ] ति० टी०–शस्तो हिंसितः ॥ २१ ॥ २२ ॥

रा० टी०–सुग्रीवं प्रत्याह–सकाम इति । हे सुग्रीव ! रिपुस्तव भ्राता शस्तः हिंसितः अतः अनुद्विग्नस्त्वं राज्यं भुङ्क्ष्व रुमां च प्रतिपत्स्यसे अत एव सकामो भव ॥ २१ ॥

गो०टी०–सुग्रीवं प्रत्याह–सकाम इति। शस्तः हिंसितः१९

रा० टी०–पुनर्वालिनं प्रत्याह–किमिति । हे वानरेश्वर ! एवं प्रलपतीं त्रिविधं वदन्तीं प्रियां मां किं नाभिभाषसे बह्व्यः इमास्ते भार्याः पश्य । वाक्यस्य कर्मतयाऽन्वयान्न द्वितीया॥२२॥

गो० टी०–वालिनं प्रत्याह–किमिति ॥ २० ॥

२३] ति० टी०–तस्या विलपितं ताराया विलापम्॥२३॥

रा० टी०–तस्या इति । ता वालिसंबन्धिन्यः वानर्य-

---

१ श्लोकोऽयं गो. नास्ति । २ कृपणं कृपणेति गो. पाठः । ३ प्रेम्णेति गो. पाठः । ४ बह्वीरिति गो. पाठः । ५ वानर्य इति गो. ग. पाठः । ६ दीनमिति गो. पाठः । ७ परीति गो. पाठः ।

किमङ्गदं साङ्गदवीरबाहो विहाय यातोऽसि चिरं प्रवासम् ।
न युक्तमेवं गुणसंनिकृष्टं विहाय पुत्रं प्रियचारुवेषम् ॥ २४ ॥
[ [3]किमप्रियं ते प्रियचारुवेष मया कृतं नाथ सुतेन वा ते ।
सहाङ्गदां मां स विहाय वीर यत्प्रस्थितो दीर्घमितः प्रवासम् ॥ ]
यद्यप्रियं किंचिदसंप्रधार्य कृतं मया स्यात्तव दीर्घबाहो ।
क्षमस्व मे तद्धरिवंशनाथ व्रजामि मूर्ध्ना तव वीर पादौ ॥ २५ ॥
तथा तु तारा करुणं रुदन्ती भर्तुः समीपे सह वानरीभिः ।
व्यवस्यत प्रायमनिन्द्यवर्णा उपोपवेष्टुं भुवि यत्र वाली ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः ।

बहुविधवचनोपन्यासैः शोचन्तीं तारां समाश्वासयन्हनुमानङ्गदहस्तेन वालिन और्ध्वदैहिकं विधाप्याङ्गदाभ्युदयिकं चिन्तयेति प्रेरयति । सा तु निश्चयादनिवर्तमानाऽङ्गदाभ्युदयाद्भर्तृपादगमनमेव मे निःश्रेयसकरतममक्षय्यसुखं चेत्युपन्यस्यति ।

ततो निपतितां तारां च्युतां तारामिवाम्बरात् । शनैराश्वासयामास हनूमान्हरियूथपः ॥ १ ॥

स्तस्या ताराया: विलपितं श्रुत्वा अङ्गदं परिगृह्य सर्वतः प्रतिचुक्रुशुः ॥ २३ ॥

गो० टी०–तस्या इति विकपितम् विलापम् ॥ २१ ॥

२४ ] ति० टी०–किमङ्गदं साङ्गदवीरबाहो साङ्गदो वीरहन्ता बाहुर्यस्य तादृश ! गुणसंनिकृष्टं गुणैस्तव प्रत्यासन्नम् प्रियश्चारुर्वेषो यस्य तं पुत्रं विहाय चिरं प्रवासं गन्तुं न युक्तमित्यन्वयः ॥ २४ ॥

रा० टी०–तत्प्रतिक्रोशप्रकारमाह–किमिति । साऽङ्गदोऽङ्गदसहितो वीरो मानी वीरविध्वंसकत्वेन वीरत्वविशिष्टो बाहुर्यस्य तत्संबोधनम्, अङ्गदमचिरं शीघ्रं विहाय किं किमर्थं प्रवासं यास्यसि । हे प्रियपुत्र ! एवंगुणसंनिकृष्टं गुणैः संपन्नं पुत्रं विहाय गन्तुं न युक्तम् ॥ २४ ॥

गो० टी०–किमङ्गदमिति । साङ्गदौ वीरौ वीर्यवन्तौ बाहू यस्य स तथोक्तः । गुणसंनिकृष्टं गुणैः प्रत्यासन्नं गुणैस्तव सदृशमित्यर्थः । हे ! प्रियपुत्रेति संबुद्धिः । प्रियः पुत्रो यस्य सः प्रियपुत्र इति । इयं स्त्रीजनप्रलापपरिपाटी ॥ २२ ॥ २३ ॥

२५ ] ति० टी०–असंप्रधार्याविचार्य । हरिवंशानां वानरसमूहानां नाथ ! व्रजामि स्पृशामीत्यर्थः ॥ २५ ॥

रा० टी०–यदीति । हरिवंशानां वानरजातानां नाथः स्वामी तत्संबोधनम् । असंप्रधार्य अज्ञात्वा यदि तव किंचिदप्रियं मया कृतं स्यात् तर्हि तत् मे अपराधं क्षमस्व । मूर्ध्ना तव पादौ चरणौ व्रजामि प्राप्नोमि, स्पृशामीत्यर्थः॥ २५ ॥

गो० टी०–यदीति । असंप्रधार्य अविज्ञाय ॥ २५ ॥

२६ ] ति० टी०–यत्र वाली तत्रोपभुवि तद्भूसमीपभुवि प्रायमुपवेष्टुं प्रायोपवेशं कर्तुं व्यवस्यत निश्चितवती ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे विंशः सर्गः ॥ २० ॥

रा० टी०–तथेति । तथा उक्तप्रकारेण भर्तुः समीपे वानरीभिः सह करुणं रुदन्ती अनिन्द्यवर्णा रिपुभिरपि न निन्द्यो वर्णो यस्याः सा तारा यत्र यस्यां भुवि वाली वर्तत इति शेषः, तत्र प्रायमुपवेष्टुं प्रायोपवेशं कर्तुं व्यवस्यत निरचिनोत् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे विंशतितमः सर्गः ॥ २० ॥

गो० टी०–तथा त्विति । प्रायमुपोपवेष्टुम् प्रायोपवेशं कर्तुमित्यर्थः "प्रसमुपोदः पादपूरणे" इति द्विर्वचनम् । अत्र सर्गे श्लोकव्यत्यासो लेखककृतः ॥ २९ ॥

अस्मिन् सर्गे षड्विंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

१ ] ति० टी०–तत इति ॥ १ ॥

रा० टी०–तारां प्रति हनुमदुपदेशं वर्णयितुमुपक्रमते–तत इति । ततस्ताराविलापकाले अम्बरात् आकाशात् च्युतां पतितां तारां नक्षत्रमिव निपतितां तारां हनुमान् शनैराश्वासयामास ॥ १ ॥

गो० टी०–अथ हनुमत्समाश्वासनमेकविंशे–तत इत्यादि । तारां तारकाम् ॥ १ ॥

१ यास्यथ चिरप्रवासमिति गो. यास्यस्यचिरमिति रा.पाठः। २ पुत्र गन्तुमिति गो.रा. पाठः। ३ श्लोकोऽयमधिकः गो.पाठे। ४ हनुमानिति गो.रा.पाठः।

गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकम् । अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ २ ॥
शोच्या शोचसि कं शोच्यं दीनं दीनानुकम्पसे । कश्च कस्यानुशोच्योऽस्ति देहेऽस्मिन्बुद्बुदोपमे ॥ ३ ॥
अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया । आयत्यां च विधेयानि समर्थान्यस्य चिन्तय ॥ ४ ॥
जानास्यनियतामेवं भूतानामागतिं गतिम् । तस्माच्छुभं हि कर्तव्यं पण्डितेनेह लौकिकम् ॥ ५ ॥
यस्मिन्हरिसहस्राणि शतानि नियुतानि च । वर्तयन्ति कृताशानि सोऽयं दिष्टान्तमागतः ॥ ६ ॥

२ ] ति० टी०–जन्तुः फलहेतुकं स्वर्गनरकादिफलसाधनं स्वार्थे.कः । गुणैः शमादिभिः, दोषेण रागादिना वा कृतं यत्स्वकर्मास्ति तत्तस्य शुभाशुभरूपं फलं प्रेत्याव्यग्रोऽनाकुलोऽवाप्नोति । गुणदोषकृतं ज्ञानाज्ञानकृतमित्यर्थ इति कश्चित् ॥२॥

रा० टी०–तदाश्वासनप्रकारमाह–गुणेति । अव्यग्रो जन्तुः प्राणी गुणदोषकृतं गुणेन धर्मबुद्ध्या दोषेण पापबुद्ध्या कृतं निष्पादितं फलहेतुकं शुभाशुभफलकारणीभूतं यत् स्वकर्म तत् तस्य स्वकर्मणः शुभाशुभं फलं प्रेत्य प्राणांस्त्यक्त्वा अवाप्नोति । एतेन पूर्वोपार्जितकर्मफलमेव त्वया प्राप्तमिति सूचितम् ॥ २ ॥

गो० टी०–गुणेति । जन्तुः गुणदोषकृतं ज्ञानाज्ञानाभ्यां कृतं स्वकर्मफलं स्वकर्मवासना हेतुर्यस्य तत्तथोक्तं यत् कर्मास्ति तत्तस्य शुभाशुभं फलभूतं सुखदुःखं प्रेत्य लोकान्तरं प्राप्य अव्यग्रः एकाग्रः सन् अवाप्नोति । अत्रकृतं शुभाशुभरूपं कर्म लोकान्तरे फलदानाय सहैव गच्छतीत्यर्थः । सुग्रीवेणायं मारित इति न मन्तव्यं किं तु स्वकर्मणैव हतः निमित्तमात्रं सुग्रीव इति भावः ॥ २ ॥

३ ] ति० टी०–शोच्या पापपुण्यकर्मपाशवशगत्वेन शोचनीया त्वं कमन्यं शोच्यं शोचसि । कर्मवशगं भर्त्रादिकम् । कर्मफलवशतो दीना त्वं कमन्यं पुत्रादिकमनुकम्पसे। बुद्बुदोपमे देहेऽतीते कः कस्यानुशोच्योऽस्ति । उपलक्षणं, कस्य को नु शोचकोऽस्तीत्यपि बोध्यम् । विदुषो नोचितः शोक इति भावः ॥ ३ ॥

रा० टी०–शोच्येति । शोच्या भविष्यद्वृत्ताज्ञानेन शोचनीया अत एव दीना त्वं कं शोच्यं दीनं शोचसि अनुकम्पसे च, स्वयमसमर्थस्य शोको नोचित इति तात्पर्यम् तुल्यन्यायात् । सर्वशोकस्य अनुचितत्वमाह–अस्मिन्प्रसिद्धे बुद्बुदोपमे देहे कः जन्तुः कस्य जन्तोः अनुशोच्योऽस्ति न कस्यचिदित्यर्थः, अशक्यनिवारणस्य प्रवृत्तौ शोको व्यर्थ इति तात्पर्यम्। अङ्गद इति । जीवपुत्रया जीवंश्चिरञ्जीवी पुत्रो यस्यास्तया त्वया अयमङ्गदः कुमारः द्रष्टव्यः रक्षणीयत्वेनावलोकनीयः। अत एव आयत्यामुत्तरकाले अस्य समर्थानि समीचीनार्थकारकाणि विधेयानि कार्याणि चिन्तय ॥ ३ ॥ ४ ॥

गो० टी०–नायं शोचनीयः स्वकर्मानुरूपेण गतत्वात् किं तु त्वमेव शोच्यः केन कर्मणा कं लोकं गमिष्यामीति । तद्दर्शयति–शोच्येति । स्वयं शोच्या त्वं कं प्रति शोचसि । स्वयं दीनाकं दीनम् अनुकम्पसे दयसे । बुद्बुदोपमे जलबुद्बुदवदस्थिरे देहे निमित्तसप्तमी । कस्य को वाऽनुशोच्योऽस्ति सर्वेषामप्यस्थिरत्वाविशेषात् । स्वयं स्थिर एव ह्यस्थिरं शोचेदिति भावः ॥ ३ ॥

४ ] ति० टी०–द्रष्टव्यः वालिशोकनिवृत्त्यर्थमिति शेषः । अस्य वालिनो मरिष्यमाणस्यायत्यां मरणोत्तरकाले यानि विधेयानि कार्याणि समर्थानि श्रेष्ठानि तानि त्वं चिन्तय विचारय ॥ ४ ॥

गो० टी०–अङ्गदस्त्विति[1] । द्रष्टव्यः परिपालनीयः । आयत्याम् उत्तरकाले समर्थानि हितानि ॥ ४ ॥

५ ] ति० टी०–अनियतामव्यवस्थिताम् । तस्माच्छुभं परलोकसुखावहं यत्तत्कर्तव्यम् । हे पण्डिते ! इह पतिपित्रादिवियोगकाले न लौकिकं बहुरोदनादि कर्तव्यम् । प्रीतिमात्रबोधकतया मृतेष्टासाधनत्वेन च तस्य लौकिकत्वम् ॥ ५ ॥

रा० टी०–जानासीति । अनियतां ज्ञायमानकालनियमरहितां भूतानामागतिं जन्मगतिं मरणं जानासि तस्मात् हेतोः पण्डितेन ज्ञानविशिष्टेन त्वया लौकिकं रोदनादिकमिव शुभं पारलौकिकमपि कर्तव्यम्। पण्डितेनेति सामान्ये नपुंसकम् एवंशब्दः सादृश्यवचनः ॥ ५ ॥

गो० टी०–जानासीति । अनियतामागतिं गतिम् अस्थिरतामिति यावत् । शुभम् और्ध्वदैहिकम् । ऐहलौकिकं रोदनादिकम् ॥ ५ ॥

६ ] ति० टी०–यस्मिन् जीवतीति शेषः । कृताशानि कृतभोग्याशानि । वर्तयन्ति जीवन्ति । दिष्टान्तमायुर्दायरूपकल्पितकालान्तरम् ॥ ६ ॥

रा० टी०–यस्मिन्निति । यस्मिन् वालिसमीपे कृतांशानि परिकल्पितस्वस्वविभागानि प्रयुक्तानि आज्ञप्तानि हरीणां वानराणां सहस्राणि अर्बुदानि च वर्तयन्ति स्वस्वकार्याणि निर्वाहयन्ति । सोऽयं वाली दिष्टान्तं प्रारब्धभोगावसानमागतः प्राप्तः । 'शतानि नियुतानि च' इतिभट्टटीकाङ्कितपुस्तकपाठः॥६॥

गो० टी०–यस्मिन्निति । यस्मिन् विषये हरीत्यविभक्तिकनिर्देशः, हरीणामित्यर्थः । कृतांशानि कृतविभागानि । सन्ति वर्तयन्ति जीवनं कुर्वन्ति सोऽयं दिष्टान्तं दिष्टस्य दैवकल्पितकालस्य अन्तं समाप्तिम् 'कालो दिष्टोऽप्यनेहापि' इत्यमरः । बहून् स्वजनान् जीवयित्वा गतः स्वसुकृतफलं प्राप्तुं गतः । अतः स न शोच्य इति भावः ॥ ६ ॥

१ कस्य को वेति गो. पाठः । २ प्रयुतान्यर्बुदानीति गो. रा. पाठः । ३ कृतांशानीति गो. रा. पाठः ।

यदयं न्यायदृष्टार्थः सामदानक्षमापरः। गतो धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७ ॥
सर्वे च हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः। हर्यृक्षपतिराज्यं च त्वत्सनाथमनिन्दिते ॥ ८ ॥
ताविमौ शोकसंतप्तौ शनैः प्रेरय भामिनि। त्वया परिगृहीतोऽयमङ्गदः शास्तु मेदिनीम् ॥ ९ ॥
संततिश्च यथा दृष्टा कृत्यं यच्चापि सांप्रतम्। राज्ञस्तत्क्रियतां सर्वमेष कालस्य निश्चयः ॥ १० ॥
संस्कार्यो हरिराजस्तु अङ्गदश्चाभिषिच्यताम्। सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११ ॥
सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता। अब्रवीदुत्तरं तारा हनूमन्तमवस्थितम् ॥ १२ ॥
अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतम्। हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम् ॥ १३ ॥

७ ] ति० टी०—न्यायेन नीतिशास्त्रेण दृष्टोऽर्थो राजकार्यं येन। सामादिपरो वानरेषु। धर्मजितां धर्मेण भूमिं जितवतां राज्ञां भूमिं स्थानं गतः, गन्तेत्यर्थः। अतो नैतच्छोक उचितः॥७॥

रा० टी०—यदिति। यत् यस्माद्धेतोः न्यायेन राजनीत्या दृष्टः ज्ञातः अर्थः येन अत एव सामदानक्षमापरः अयं वाली धर्मजितां धर्मवद्भिः प्राप्यां भूमिं लोकं गतः प्राप्तः अत एवैनं शोचितुं नार्हसि ॥ ७ ॥

गो० टी०—यदिति। न्यायदृष्टार्थः शास्त्रदृष्टतत्त्वार्थः। साम दुःखितानां स्वजनानां सान्त्वनम्। दानम् अभीष्टार्थदानम्। क्षमा तत्कृतापराधसहनम्। एतासु परः सक्तः अयं धर्मजितां स्वाधीनधर्माधर्मकाणां भूमिं लोकं यत् यस्मात् गतः तस्मान्नैनं शोचितुमर्हसि ॥ ७ ॥

८ ] ति० टी०—त्वमपि न शोककरणार्हेत्याह—सर्वे चेति। त्वत्सनाथं त्वयैवैकया सनाथम् ॥ ८ ॥

रा० टी०—सर्व इति। सर्वे हरिशार्दूलास्त्वत्सनाथाः त्वया नाथवन्तः अङ्गदश्च त्वत्सनाथः। हर्यृक्षपतिराज्यं हरिपतीनाम् ऋक्षपतीनां च राज्यं त्वत्सनाथम्। त्वत्सनाथशब्दः लिङ्गवचनपरिणामेन अन्यत्राप्यन्वेति ॥ ८ ॥

गो० टी०—सर्वे इति। हरीणाम् ऋक्षाणां च राज्यं त्वत्सनाथं त्वया सनाथम् ॥ ८ ॥

९ ] ति० टी०—ताविमौ सुग्रीवाङ्गदौ शनैः प्रेरय उत्तरकार्यकरणायेति शेषः ॥ ९ ॥

रा० टी०—ताविति। तौ वालिविघातेन प्राप्तौ इमौ शोकसंतप्तौ शोकं तत्कारणीभूतसंतापं च प्रेरय निवर्तयस्व। तत्प्रयोजनमाह—त्वया परिगृहीतोऽयमङ्गदः मेदिनीं शास्तु ॥९॥

गो० टी०—ताविमाविति। ताविमौ शोकसंतापौ शोकतत्कृततापौ शनैः क्रमेण प्रेरय निवर्तय। भर्तृमरणशोकस्य सद्यो दुस्त्यजत्वादिति भावः ॥ ९ ॥

१० ] ति० टी०—संततिरङ्गदो यथा दृष्टा यत्प्रयोजनकतया शास्त्रे दृष्टा, यच्च राज्ञः सांप्रतं परलोकहितं कृत्यं तत्क्रियताम् एष कालस्येदानींतनकालस्योचितो निश्चयोऽनुष्ठाननिश्चयः ॥ १० ॥

रा० टी०—संततिरिति। संततिः पुत्रः यथा यथावत् दृष्टा त्वया प्राप्तेत्यर्थः, अतः सांप्रतं यत् राज्ञः कृत्यमस्ति तत् क्रियताम् एषः कृत्यकारः कालस्य निश्चयः प्रेरणा। कालप्रेरणेत्यनेन कृत्यकरणस्य दुर्निवारत्वं व्यञ्जितम् ॥ १० ॥

गो० टी०—संततिश्चेति। संततिश्च यथा दृष्टा यत्प्रयोजनकः संतानो लब्धः सांप्रतम् इदानीं यच्च कृत्यं कर्तुं योग्यं तत्सर्वं राज्ञः क्रियताम्। एष निश्चयोऽस्य कालस्य योग्य इति शेषः, नतु शोक इति भावः। पुत्रोत्पादनफलमौर्ध्वदैहिकं क्रियतामित्यर्थः ॥ १० ॥

११-१२ ] ति० टी०—तदेवाह—संस्कार्य इति। रामबाणस्यामोघत्वान्मरणनिश्चयेनैवमुक्तिः ॥ ११ ॥ १२ ॥

रा० टी०—कृत्यस्वरूपमाह—संस्कार्य इति। हरिराजो वाली संस्कार्यः प्रमीतिविधिना संस्करणीयः। अङ्गदश्च अभिषिच्यताम्। सिंहासनगतं पुत्रं पश्यन्ती त्वं शान्तिमेष्यसि प्राप्स्यसि ॥ ११ ॥

रा० टी०—सेति। भर्तृव्यसनपीडिता सा तारा तस्य हनुमतो वचनं श्रुत्वा उत्तरं वाक्यमब्रवीत् ॥ १२ ॥

गो० टी०—उक्तमर्थं वाचा दर्शयति—संस्कार्य इति। शान्तिं दुःखशमम् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—यदुक्तम् 'पुत्रेण सुखिनी भव' इति तत्प्रत्याख्याति तारा—अङ्गदेति। अङ्गदतुल्यानां पुत्राणां शतमेकतः सुखसाधनैककोटौ, हतस्यापि पत्युर्गात्रसंश्लेषोऽपरकोटौ तयोर्मध्ये द्वितीयो वरमतिशयितसुखसाधनम्, परलोके परमानन्दहेतुत्वात्। तस्मात्सहगमनं करिष्य इति भावः ॥ १३ ॥

रा० टी०—तद्वचनाकारमाह—अङ्गदेति। अङ्गदप्रतिरूपाणामङ्गदसदृशानां पुत्राणां शतमेकतः एकत्र अस्तु, एकत्र हतस्यापि अस्य गात्रसंश्लेषणमस्तु तत्र गात्रसंश्लेषणं वरं तोलनयेदमेवाधिकमित्यर्थः। एतेन एतद्वियोगे न मम किंचित्सुखदमिति सूचितम् ॥ १३ ॥

गो० टी०—अङ्गदेति। अङ्गदप्रतिरूपाणाम् अङ्गदतुल्यानां पुत्राणां सत्पुत्राणां शतम् एकतः एकत्र एकतुलायामस्तु।

---

१ हीति गो. पाठः। २ इदं हर्यृक्षराज्यमिति गो. पाठः। ३ तावदिति गो. पाठः। ४ हनुमन्तमिति रा. पाठः।

न चाहं हरिराज्यस्य प्रभवाम्यङ्गदस्य वा । पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः ॥ १४ ॥
नह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति । पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम ॥ १५ ॥
नहि मम हरिराजसंश्रयात्क्षमतरमस्ति परत्र चेह वा ।
अभिमुखहतवीरसेवितं शयनमिदं मम सेवितुं क्षमम् ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।

कनिष्ठनापि सुग्रीवेण स्वापकारं क्षमयन्वाली तारावुद्धिं प्रशसन्सुग्रीव तारावचनमानने प्रेरयन्नङ्गदपालनं रामकार्यकरण च राप्रार्थ्य स्वकण्ठादुत्तार्य काञ्चनमाला सुग्रीवकण्ठे विनिवेश्याङ्गद प्रति हितमुपदिशतो वालिनः प्राणा उदक्रामन् । वालिनोऽद्भुतापदानं प्रशसन्तः कपिगणा बहुशः पर्यदेवयन् । सप्राप्तनववियोगदुःखार्ता तारा वालिन परिरभ्यापतत् ।

वीक्षमाणस्तु मन्दासुः सर्वतो मन्दमुच्छ्वसन् । आदावेव तु सुग्रीवं ददर्शानुजमग्रतः ॥ १ ॥
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरम् । आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥

हतस्याप्यस्य गात्रसंश्लेषणं गाढालिङ्गनम् एकतोऽस्तु । तयोर्मध्ये भर्तृसंश्लेषणमेव वरमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—राज्यं त्वदधीनमिति यदुक्तं तन्निराचष्टे—न चेति । न राज्यस्य प्रभवामि न योग्या स्त्रीत्वात् । अङ्गदस्य वा राज्यदाने न प्रभवामि अनन्तरः समर्थो मत्तः प्रत्यासन्नश्च ॥ १४ ॥

रा० टी०—ननु सुखाभावेऽपि संस्कारादि कार्यमेवेत्यत आह—नेति । हरिराजस्य संस्कारायेति शेषः, अङ्गदस्य अभिषेकाय चेति शेषः, अहं न प्रभवामि ममर्थाऽस्मि तस्याङ्गदस्य पितृव्यः सुग्रीवः सर्वकार्येषु अनन्तरः समर्थ इत्यर्थः ॥ १४ ॥

गो० टी०—संस्कार्य इत्यस्योत्तरमाह—न चेति । हरिराजस्य न प्रभवामि तस्य संस्कारकरणे न समर्थाऽस्मि अङ्गदस्य वा न प्रभवामि तस्य राज्याभिषेककरणे न प्रभवामीत्यर्थः ॥ १४ ॥

१५–१६ ] ति० टी०—एषा बुद्धिर्मत्कर्तृकाभिषेकबुद्धिः । पिता तत्तुल्यः सुग्रीवो बन्धुः सुखदानाधिकारी न मातेत्यर्थः ॥ १५ ॥ १६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकविंशः सर्गः ॥ २१ ॥

रा० टी०—ननु त्वत्कर्तृकाभिषेकाप्रवृत्तौ त्वद्विषयकाङ्गदप्रीतिर्विनङ्क्ष्यतीत्यत आह—नहीति । हे हनुमन् ! पिता तदुपलक्षितपितृव्यादिश्च पुत्रस्य बन्धुः माता तु न, न एषा बुद्धिः अङ्गदं प्रति आस्थेया प्रापणीया । किंच मातैव बन्धुः पित्रादिस्तु न इति बुद्धिर्नास्थेया पितृव्येऽपि बन्धुत्वं बोधनीयमित्यर्थः । एतेनेदृग्बुद्ध्यनुत्पत्तौ सुग्रीवविद्वेषेऽङ्गदविध्वंसो भविष्यतीति व्यञ्जितम् ॥ १५ ॥

गो० टी०—न हीति । नास्थेया नादर्तव्या न कर्तव्येत्यर्थः । पिता पितृव्यः ॥ १५ ॥

रा० टी०—नन्वौदासीन्यं संत्यज्य सुग्रीवाङ्गदादिभिः प्रीतिं संपादयेत्यत आह—न हीति । इहलोके परत्र वा हरिराजसंश्रयात् अन्यत् क्षमतरम् आश्रयणीयमित्यर्थः, नैवास्ति । अतः अभिमुखं संमुखं हतो यो वीरस्तेन सेवितमिदं शयनं मम सेवितुं क्षमम् ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकविंशः सर्गः ॥ २१ ॥

गो० टी०—नहीति । परत्र परलोके इह अस्मिन् लोके शत्र्वभिमुखतया हतः अभिमुखहतः स चासौ वीरश्च तेन सेवितम् ॥ १६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

१ ] ति० टी०—सर्वतो वीक्षमाणः स आत्मजस्याग्रतः स्थितं सुग्रीवमेवादौ ददर्श ॥ १ ॥

रा० टी०—वाल्युक्तिमुपक्रमते—वीक्षमाण इति । मन्दासुः शिथिलप्राणः अत एव मन्दमुच्छ्वसन् सर्वतो वीक्षमाणः अवलोकयन् वाली आदौ प्रथममग्रतः स्थितं सुग्रीवं ददर्श । तत्काले वालिप्राणसत्त्वेऽपि संस्कार्यो हरिराजोऽयमितिः हनुमदुक्तिर्न विरुध्यते प्राणहारकरामबाणविद्धत्वेन मरणनिश्चयात् ॥ १ ॥

गो० टी०—एवममोघरामशराभिघातेन मोहसमाविष्टं वालिनं मृतं निश्चित्य संस्कारादिकरणाय त्वरमाणे हनुमति दैवात्किंचित्समाश्वस्तो वाली कर्तव्यभागं नियच्छति द्वाविंशे—वीक्षमाण इत्यादि । मन्दासुः अल्पप्राणः ॥ १ ॥

२ ] ति० टी०—आभाष्य सुग्रीवेति संबोध्य ॥ २ ॥

रा० टी०—तमिति । प्लवगेश्वरो वाली प्राप्तविजयं

---

१ हनुमन्निति गो. पाठः । २ ददर्श त्वात्मजाग्रत इति गो. पाठः । ३ प्लवगेश्वर इति गो. रा. पाठः ।

सुग्रीव दोषेण न मां गन्तुमर्हसि किल्बिषात् । कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३ ॥
युगपद्विहितं तात न मन्ये सुखमावयोः । सौहार्दं भ्रातृयुक्तं हि तदिदं जातमन्यथा ॥ ४ ॥
प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् । मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥ ५ ॥
जीवितं च हि राज्यं च श्रियं च विपुलां तथा । प्रजहाम्येष वै तूर्णमहं चागर्हितं यशः ॥ ६ ॥
अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद्वचः । यद्यप्यसुकरं राजन्कर्तुमेव त्वमर्हसि ॥ ७ ॥
सुखार्हं सुखसंवृद्धं बालमेनमबालिशम् । बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥ ८ ॥

सुग्रीवं व्यक्तया वाचा आभाष्य संबोध्य सस्नेहमिदमब्रवीत् ॥ २ ॥

गो० टी०–तमिति । आभाष्य संबोध्य ॥ २ ॥

३ ] ति० टी०–हे सुग्रीव ! मां किल्बिषात्प्राग्भवीयदुष्कृतवशाद्भविष्येण भविष्यताऽवश्यंभाविना बुद्धिमोहेन त्वयि शत्रुबुद्धिरूपेण बलात्कृष्यमाणं मां ज्ञात्वा त्वं दोषेण स्वापकारदोषवत्त्वेन मां गन्तुमवगन्तुं नार्हसि ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–सुग्रीवेति । हे सुग्रीव ! किल्बिषात् मत्कर्तृकस्वविषयकदोषाचरणं संस्मृत्य दोषेण विशिष्टं मां गन्तुं बोद्धुं नार्हसि । तत्र हेतुः–भविष्येण भविष्यता बुद्धिमोहेन बुद्धेर्मोहकेन तव प्रारब्धभोगेनेत्यर्थः, बलात् कृष्यमाणं स्ववशे प्राप्यमाणं मां गन्तुमर्हसि । एतेनायं मद्विरोधीति बुद्धिं त्यजेति सूचितम् ॥ ३ ॥

गो० टी०–सुग्रीवेति । किल्बिषात् राज्यविवासनदारहरणरूपकिल्बिषाद्धेतोः मां दोषेण गन्तुं दोषसहितं ज्ञातुं नार्हसि, किंतु भविष्येण भाविफलेन हेतुना जातेन बुद्धिमोहेन बलात्कृष्यमाणं मां गन्तुमर्हसि ॥ ३ ॥

४ ] ति० टी०–कार्यानुमितं कर्मप्राबल्यं दर्शयति—युगपदिति । भ्रातृयुक्तं भ्रात्रोर्युक्तमुचितं सौहार्दं सुखं च राज्यसुखं चावयोः कर्मणा युगपन्न विहितमिति मन्ये, यतस्तदिदमुचितमपि सुखं चान्यथा जातम् विघटितमित्यर्थः ॥ ४ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–युगपदिति । हे तात ! यस्मात् आवयोः सुखं युगपत् एककालावच्छेदेन न विहितं ब्रह्मणा लिखितं तत्तस्माद्धेतोः भ्रातृयुक्तं भ्रात्रोः उचितम् इदं लोके प्रसिद्धं सौहार्दमन्यथा जातमित्यहं मन्ये ॥ ४ ॥

गो० टी०–युगपदिति । आवयोः भ्रात्रोः भ्रातृयुक्तं भ्रातृत्वप्रयुक्तम् सौहार्दं सुखं राज्यसुखं च एतदुभयं दैवेन युगपन्न विहितं मन्ये, ध्रुवम् अव्ययमेतत् । तदिदं दैवकृतं युगपदविधानम् अन्यथा न हि अन्यप्रकारं न भवति हि ॥४॥

५ ] ति० टी०–अथ रामशरक्षीणपापत्वात्प्राप्तदिव्यप्रकृतिः स्वयमेव सुग्रीवाय स्वानन्तरं प्राप्तं राज्यं ददाति–प्रतिपद्येति । प्रतिपद्यस्वेत्यर्थः । वैवस्वतक्षयं यमगृहम् । ननु राजनि मृते तत्पुत्र एव राज्याधिकारी न तु तत्कनीयान्भ्रातेति चेन्न, पुत्रस्य बालत्वेन राज्यरक्षणासामर्थ्याद्बलवदाश्रितत्वाच्च पुत्रनाशो मा भूदिति तथोक्तेः । भगवता रामेणापि राज्यरक्षणासामर्थ्येनाङ्गदस्य सुग्रीवोऽभिषिक्तो राज्ये । यौवराज्ये चाङ्गदः । सुग्रीवानन्तरं त्वङ्गदस्यैव राज्याधिकारः, न तु सुग्रीवपुत्राणामज्येष्ठपुत्रत्वादित्याहुः ॥ ५ ॥

रा० टी०–प्रतिपद्येति । वैवस्वतक्षयं कालरहितस्थानमित्यर्थः, अद्यैव गच्छन्तं मां विद्धि जानीहि अतः वनौकसां राज्यमद्यैव प्रतिपद्यस्व प्रतिपद्य प्राप्नुहि । न च राजपुत्रसत्त्वे भ्रातुः राज्यानौचित्यात् कथमेवमुक्तमिति वाच्यं, बिलप्रविष्टवालिमरणनिश्चये तदानीं वालिपुत्रस्याभावात् सुग्रीवस्य प्राप्तराज्यत्वेन नवीनराज्यत्वाभावेनादोषात् ॥ ५ ॥

गो० टी०–प्रतीति । प्रतिपद्य पालयेति शेषः, यद्वा प्रतिपद्य प्राप्नुहि । ल्यबन्तोऽयम् । यमक्षयं यमगृहम् ॥ ५ ॥

६ ] ति० टी०–अगर्हितं यशः प्रशस्तं यशो वाली केनाप्यवध्य इत्येवम् । तच्च प्रजहामि एकेनैव शरेण रामहतत्वादिति प्राञ्चः । अन्ये तु—चस्त्वर्थे यश इत्युत्तरं बोध्यः । अगर्हितं यशस्तु प्राप्नोमीति शेषः । वाली भगवता रामेण छन्नेन हत इत्येवंरूपं च यश इत्याहुः ॥ ६ ॥

रा० टी०–जीवितमिति । एषोऽहं जीवितादिकमगर्हितमनिन्दितं प्रशस्तमित्यर्थः, यशश्च प्रजहामि त्यजामि ॥ ६ ॥

गो० टी०–जीवितमिति । अगर्हितं यशः केनाप्यवध्यो वालीति प्रसिद्धं यशः ॥ ६ ॥

७ ] ति० टी०–अस्यामवस्थायां चरमदशायां यद्यप्यसुकरं मयात्यन्तमपकृतत्वात्, तथापि कर्तुमर्हस्येवेति योजना । सात्त्विकत्वात्सात्त्विकसमाश्रयणाच्चेत्याशयः । स्वयं राज्यस्य दत्तत्वाद्राजन्निति संबोधनम् ॥ ७ ॥

रा० टी०–अस्यामिति । हे वीर ! हे राजन् ! अस्यामासन्नमरणायामवस्थायाम् असुकरमपि यद्वचः यदि वक्ष्यामि तदा तत् कर्तुं त्वमर्हसि ॥ ७ ॥

गो० टी०–अस्यामिति । अस्यामवस्थायां चरमावस्थायां यद्वचो वक्ष्यामि एतद्यद्यप्यसुकरं तथाप्यवश्यं कर्तुमर्हसि । मदुक्तरीत्या राजा भवेत्यर्थः ॥ ७ ॥

८ ] ति० टी०–तदेवाह—सुखार्हमिति । अबालिशं समर्थम् ॥ ८ ॥

रा० टी०–सुखार्हमिति । सुखार्हं सुखयोग्यमत एव

१ तात नान्यथेति गो. पाठः । २ तदिति गो. पाठः ।

मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम् । मया हीनमहीनार्थं सर्वतः परिपालय ॥ ९ ॥
त्वमप्यस्य पिता दाता परित्राता च सर्वशः । भयेष्वभयदश्चैव यथाऽहं प्लवगेश्वर ॥ १० ॥
एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः । रक्षसां च वधे तेषामग्रतस्ते भविष्यति ॥ ११ ॥
अनुरूपाणि कर्माणि विक्रम्य बलवान्रणे । करिष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गदः ॥ १२ ॥
सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये । औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १३ ॥
यदेषा साध्विति ब्रूयात्कार्यं तन्मुक्तसंशयम् । नहि तारामतं किंचिदन्यथा परिवर्तते ॥ १४ ॥
राघवस्य च ते कार्यं कर्तव्यमविशङ्कया । स्यादधर्मो ह्यकरणे त्वां च हिंस्यादमानितः ॥ १५ ॥
इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् । उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥ १६ ॥

सुखसंवृद्धमबालिशं सुबुद्धिमित्यर्थः, बाष्पपूर्णमुखं भूमौ पतितमङ्गदं बालं पश्य ॥ ८ ॥

गो० टी०–सुखार्हमिति । वयसा बालमप्यबालिशं बालबुद्धिरहितम् । ममेति । प्राणैः प्राणेभ्यः । मम पुत्रं त्वम् औरसं पुत्रमिव पश्येति संबन्धः ॥ ८ ॥

९ ] ति० टी०–प्राणैः प्राणेभ्यो मम पुत्रं स्वमौरसं पुत्रमिवाहीनार्थमक्षीणैहिकसकलप्रयोजनं यथा तथा सर्वतः सर्वत्र देशे काले च पालय । स्वानन्तरमस्यैव राज्यं देहीति व्यङ्ग्यम् ॥ ९ ॥

रा० टी०–दर्शनप्रयोजनमाह–ममेति । प्राणैः प्राणेभ्यः प्रियतरं मया हीनं मम औरसं पुत्रं स्वस्यौरसं पुत्रमिव अहीनार्थं यथा भवति तथा सर्वतः सर्वप्रकारेण परिपालय ॥ ९ ॥

गो० टी०–मयेत्यादि । अस्य अङ्गदस्य दाता वस्त्राभरणादीनामिति शेषः, सर्वतः शत्रुभ्यः परित्राता भयेष्वभयदः शत्रुपुत्रत्वेन स्थानान्निष्कासनादिभयहेतुषु विषये अभयदः ॥ ९–११ ॥

१० ] ति० टी०–पालनप्रकारमेव दर्शयति—त्वमपीति। सर्वत्र भवेति शेषः ॥ १० ॥

रा० टी०–परिपालनप्रकारं वदन्नाह–त्वमिति । अहमिव त्वमपि अस्य अङ्गदस्य पित्रादिर्भवेति शेषः ॥ १० ॥

११ ] ति० टी०–उक्तं स्वपुत्रस्याबालिशत्वं दर्शयति–एष इति । रक्षसां वधे रामप्रत्युपकारप्रसङ्गप्राप्ते ॥ ११ ॥

रा० टी०–तत्परिपालने तवापि प्रयोजनं भवितेति बोधयन्नाह–एष इति । त्वया तुल्यपराक्रमः एष तारात्मजस्तेषां त्वदीप्सितवधानां रक्षसां वधे ते अग्रतोऽग्रे भविष्यति भविता ॥ ११ ॥

१२ ] ति० टी०–अनुरूपाणि मदनुरूपाणि ॥ १२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अनुरूपाणीति । तरुणः बलवान् तारेयः एषः अङ्गदः रणे विक्रम्य प्राप्य अनुरूपाणि मत्सदृशानि कर्माणि करिष्यति ॥ १२ ॥

१३ ] ति० टी०–तारारक्षणं तत उपकारमादर्श्य सूचयति–सुषेणेति । तद्दुहिता तारा अर्थानां मध्ये सूक्ष्मः परमदुर्ज्ञेयो योऽर्थस्तस्य निश्चये, औत्पातिके विविधे नानाप्रकारोत्पातसूचितापत्कालिकानुष्ठेयनिश्चये, सर्वत ऐहिकामुष्मिकनिश्चये च, परिनिष्ठिताऽतिसमर्था ॥ १३ ॥

रा० टी०–सुषेणेति । सुषेणदुहिता इयं तारा विविधे अनेकप्रकारके औत्पातिके उत्पातकालोचिते अर्थसूक्ष्मविनिश्चये दुर्ज्ञेयार्थबोधने सर्वतः सर्वप्रकारेण हि यतः परिनिष्ठिता अतिनिपुणाऽस्तीति शेषः, अतः किंचित्तारामतमन्यथा न परिवर्तते भवति अतः एषा तारा यत्कर्तव्यं साधु ब्रूयात् तत् मुक्तसंशयं यथा भवति तथा कार्यम् । श्लोकद्वयमेकान्वयि । एतेन ताराऽवश्यं रक्षणीयेति सूचितम् ॥ १३ ॥ १४ ॥

गो० टी०–सुषेणेति । अर्थसूक्ष्मविनिश्चये सूक्ष्मार्थविनिश्चये औत्पातिके उत्पातविषयज्ञाने च परिनिष्ठिता संजातनिष्ठा समर्थेति यावत् ॥ १३ ॥

१४ ] ति० टी०–ततः किं तत्राह–यदिति । तत्कार्यं त्यक्तसंशयं कार्यमनुष्ठेयम् । तदेव द्रढयति–नहीति । मदनुभवसिद्धमेतदिति भावः । अनेन त्रैवर्णिकेतरस्त्वेन तरुणत्वेनावश्यं कर्तव्यपुरुषान्तरस्वीकारायास्ताराया देवरत्वात्सुग्रीवस्य स्वीकारोऽप्यनुमत इति गम्यते ॥ १४ ॥

गो० टी०–यदिति । न परिवर्तते न भवतीत्यर्थः ॥ १३ ॥

१५ ] ति टी०–अथ भ्रात्रे वक्तव्यमुपदेशमाह–राघवस्येति । अकरणेऽधर्मः स्यात् मिथ्याप्रतिज्ञत्वापत्तेरिति भावः । एवं पारलौकिकमनिष्टं प्रदर्श्यैहिकमपि तदाह—त्वां चेति । मामिव धर्मभ्रष्टत्वादिति भावः ॥ १५ ॥

रा० टी०–राघवस्येति । राघवस्य कार्यं ते त्वया अविशङ्कया संदेहराहित्येन कर्तव्यं हि यतः अकरणे अधर्मः मिथ्याप्रतिज्ञत्वादिपातकं स्यात्, अमानितः अवमानितो रामस्त्वां हिंस्यात् ॥ १५ ॥

गो० टी०–राघवस्य चेति । विमानितः राघव इति शेषः ॥ १४ ॥

१६ ] ति० टी०–अथ राज्यानुमतिं क्रिययाऽपि दर्शयति–इमां चेति । उदारा प्रशस्ता श्रीर्जयलक्ष्मीरस्यां स्थिता

१ त्वमेवास्य हि दाता चेति गो. पाठः । २ सर्वत इति गो. पाठः ।

इत्येवमुक्तः सुग्रीवो वालिना भ्रातृसौहृदात् । हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १७ ॥
तद्वालिवचनाच्छान्तः कुर्वन्युक्तमतन्द्रितः । जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् १८ ॥
तां मालां काञ्चनीं दत्त्वा दृष्ट्वा चैवात्मजं स्थितम् । संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १९ ॥
देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये । सुखदुःखसहः काले सुग्रीववशगो भव ॥ २० ॥
यथा हि त्वं महाबाहो लालितः सततं मया । न तथा वर्तमानं त्वां सुग्रीवो बहु मंन्यते ॥ २१ ॥
नास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिन्दम । भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २२ ॥

महेन्द्रानुग्रहात्, हि यतो मृते मयि शवस्पर्शादेनां सा श्रीर्जह्यात् अत इदानीमेवेमां गृहाणेति भावः ॥ १६ ॥

रा० टी०-इमामिति । हे सुग्रीव ! काञ्चनीं स्वर्णमयीं दिव्यामिमाम् इन्द्रदत्तां मालां त्वमाधत्स्व हि यतः अस्यां मालायामुदारा अत्युत्कर्षा श्रीः विजयादिलक्ष्मीः स्थिता, एतद्धारयिता विजयादिलक्ष्मीः प्राप्नोतीत्यर्थः । ननु यावज्जीवं त्वय्येव तिष्ठतु इत्यत आह-मयि मृते सति श्रीः मालां संप्रजह्यात् शवस्पर्शदोषात् त्यजेत् । मालां श्रीरिति चोभयान्वयि ॥ १६ ॥

गो० टी०-इमामिति । संप्रजह्यान्मृते मयि मृते सति श्रीरिमां काञ्चनीं मालां संप्रजह्यात् । ततः पूर्वमेव मयि जीवति गृहाणेति भावः ॥ १६ ॥

१७ ] ति० टी०-एवं वालिवचः श्रुत्वा, पूर्वं वाली दुष्ट इति बुद्ध्या तद्वधे जातं हर्षमिदानीमेव सौमनस्यदर्शनेन त्यक्त्वा दीनः विषण्णोऽभूदित्यर्थः । ग्रहग्रस्तो राहुग्रस्तः॥१७॥

रा० टी०-इतीति । वालिना भ्रातृसौहृदात् इत्येवमुक्तः सुग्रीवः हर्षं रिपुवधजनितानन्दं त्यक्त्वा ग्रहग्रस्तः राहुपीडितः उडुराट् चन्द्र इव दीनः द्रोहनिवृत्तिपूर्वकभ्रातृवधहेतुकदैन्यवान् अभवदिति शेषः ॥ १७ ॥

गो० टी०-इतीति । दीनः अभूदिति शेषः । ग्रहग्रस्तः राहुग्रस्तः ॥ १६ ॥

१८ ] ति० टी०-तद्वालिवचनात्तादृशवालिवचनेन शान्तः शान्तवैरो युक्तं भ्रातृस्नेहोचितदर्शनादिव्यवहारमतन्द्रितः कुर्वन्मालाग्रहणे वालिनाऽभ्यनुज्ञातो मालां जग्राह ॥ १८ ॥

रा० टी०-तदिति । वालिवचनात् शान्तः अत एव अतन्द्रितः स्वस्थचित्तः अभ्यनुज्ञातः स सुग्रीवः युक्तं योग्यं तत् लोके प्रसिद्धं विलापादि कुर्वन् मालां जग्राह ॥ १८ ॥

गो० टी०-तदिति । तत्तदनन्तरं शान्तः त्यक्तवैरः ॥१७॥

१९] ति० टी०-प्रेत्यभावाय संसिद्धो निश्चितमरणः॥१९॥

रा० टी०-तामिति । ताम् इन्द्रदत्तां मालां दत्त्वा सुग्रीवायेति शेषः, प्रेत्यभावाय परलोकप्राप्तये संसिद्धः कृतनिश्चयो वाली आत्मजमङ्गदं स्थितं दृष्ट्वा स्नेहादब्रवीत् ॥ १९ ॥

गो० टी०-तामिति । प्रेत्यभावाय मरणाय संसिद्धः कृतनिश्चयः ॥ १८ ॥

२० ] ति० टी०-देशकालौ तत्तत्कर्मोचितौ भजस्व जानीहि । प्रियाप्रिये इष्टानिष्टयोगजे काले सेवाकाले सुग्रीववशगस्तत्सेवापरो भव ॥ २० ॥

रा० टी०-तद्वचनाकारमाह-देशेति । प्रियाप्रिये वचने क्षममाणः तुल्यत्वेन मन्यमान इत्यर्थः, अत एव सुखदुःखसहस्त्वं देशकालौ भजस्व विचारय अत एव काले अस्मिन् समये सुग्रीववशगो भव ॥ २० ॥

गो० टी०-देशेति । अद्य मत्प्रयाणानन्तरं देशकालौ भजस्व । गत्यर्था ज्ञानार्थाः देशकलौ जानीहि, अस्मिन् देशे अस्मिन् काले च एवं वर्तितव्यम् एवं न वर्तितव्यमिति विवेचयेत्यर्थः । प्रियाप्रिये क्षममाणः प्रभोः प्रियवचनवदप्रियवचनमपि सोढव्यमित्यर्थः । काले सुखदुःखसहः दुःखकाले सुखं सुखकाले दुःखं च सहमान इत्यर्थः, सुग्रीववशो भव सुग्रीवपरतन्त्रो भव ॥ १९ ॥ २० ॥

२१ ] ति० टी०-विपक्षे बाधकमाह-यथा हीति । बालतया केवलं लालितो यथा सेवोचितकालेऽपि सेवारहितोऽवर्तिष्ट, तथा सेवाराहित्येन वर्तमानं त्वां सुग्रीवो न बहु मन्येत, अतः सेवां कुर्वित्युपदेशः ॥ २१ ॥

रा० टी०-सुग्रीववशगत्वे हेतुमाह-यथेति । यथा येन प्रकारेण अपराधकर्तृत्वेनापीत्यर्थः, वर्तमानस्त्वं सततं निरन्तरं मया पालितस्तथा वर्तमानं त्वां सुग्रीवो न बहुमन्यते पालयिष्यतीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०-किं चास्य सुग्रीवस्यामित्रैरनुपकारकैस्तथा शत्रुभिरपकारकैश्च गतं संगतं सख्यं मा गच्छेः मा गच्छ । भर्तुः सुग्रीवस्यार्थपरः प्रयोजनसाधनपरः ॥ २२ ॥

रा० टी०-सेवाप्रकारमाह-नेति । अस्य सुग्रीवस्य अमित्रैः उदासीनैः गतं संगतं सख्यमित्यर्थः, न गच्छेः प्राप्नुयाः, शत्रुभिश्च संगतं मा गच्छेः । हेयमुपदिश्योपादेयमाह-दान्तो जितेन्द्रियस्त्वं भर्तुः सुग्रीवस्य अर्थपरः प्रयोजनसाधकः सन् सुग्रीववशगो भव ॥ २२ ॥

गो० टी०-माऽस्येति । अस्य सुग्रीवस्यामित्रैर्गतं प्राप्तं पुरुषं मा गच्छेः अस्य शत्रुमित्रं न भजेरित्यर्थः, शत्रुभिः सह च मा गच्छेः ॥ २१ ॥

१ मंस्यते इति गो. पाठः ।

न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते । उभयं हि महादोषं[1] तस्मादन्तरदृग्भव ॥ २३ ॥
इत्युक्त्वाऽथ विवृत्ताक्षः शरसंपीडितो भृशम् । विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ २४ ॥
ततो विचुक्रुशुस्तत्र वानरा हतयूथपाः[2] । परिदेवयमानास्ते सर्वे प्लवगसत्तमाः[3] ॥ २५ ॥
किष्किन्धा ह्यद्य शून्या च[4] स्वर्गते वानरेश्वरे[5] । उद्यानानि च शून्यानि पर्वताः काननानि च ॥ २६ ॥
हते प्लवगशार्दूले निष्प्रभा वानराः कृताः । [ [6]यस्य वेगेन महता काननानि वनानि च ।
पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य कः । ] येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ २७ ॥
गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च । नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ॥ २८ ॥
ततः [7]षोडशमे वर्षे गोलभो विनिपातितः । तं हत्वा दुर्विनीतं तु वाली दंष्ट्राकरालवान् ॥
सर्वाभयंकरोऽस्माकं कथमेष निपातितः ॥ ॥ २९ ॥

२३-२४ ] ति० टी०-नातिप्रणयः पुत्रत्वात् अप्रणयश्च न कार्यः अस्मद्वधादिनाऽन्तरदृक् 'अत्यासत्तिर्विनाशाय त्वतिदूरं तु निष्फलम् । सेवा मध्यमभावेन राजवह्नि-गुरुस्त्रियाम् ॥' इति न्यायेन मध्यममार्गमवलम्बस्वेत्याशय. ॥ २३ ॥ २४ ॥

रा० टी०-शिक्षान्तरमाह-न चेति । अतिप्रणयः परप्रीतिः न कार्यः क्वचिदपि करणीयः । अप्रणयः स्नेहनिवर्तकविद्वेष इत्यर्थः, न कर्तव्यः । तत्र हेतुमाह-उभयम् अतिप्रीतिविद्वेषं महादोषमतिदोषविशिष्टं तस्मात् अन्तरदृक् मध्यवर्ती भव॥२३॥

गो० टी०-न चेति । अतिप्रणयः अतिस्नेहः अप्रणयः स्नेहाभावश्च । अन्तरदृग्भव मध्यमभावमवलम्बस्वेत्यर्थः॥२२॥

रा० टी०-इतीति । इत्युक्त्वा भृशं शरसंपीडितः अत एव विवृत्ताक्षः विवृत्तनयनः अत एव भीमैः भयंकरैः विवृतैः दशनैर्दन्तैः उपलक्षितो वाली उत्क्रान्तजीवितो बभूव ॥ २४ ॥

गो० टी०-इतीति । विवृत्ताक्षः भ्रामितनेत्रः । विवृतैः प्रकाशितैः, अत एव भीमैः दशनैः दन्तैरुपलक्षितः उत्क्रान्तजीवितः उद्गतप्राणः ॥ २३ ॥

२५ ] ति० टी०-हतो यूथपो येषां तादृशाः परिदेवयमाना विचुकुशुरित्यन्वयः ॥ २५ ॥

रा० टी०-तत इति । ततः उत्क्रान्तजीवनानन्तरं तत्र वालिसमीपे हतयूथपाः अत एव परिदेवयमानाः रुदन्तस्ते प्रसिद्धाः प्लवगसत्तमाः सर्वे वानराः विचुकुशुः विलेपुः ॥२५॥

गो० टी०-तत इति । परिदेवयमानाः रुदन्त इत्यर्थः । प्लवंगपुङ्गवाः बलेन श्रेष्ठाः पुनश्च हरियूथपाः यूथस्य निर्वोढारः वानराः वानरजातयः ॥ २४ ॥

२६-२७ ] ति० टी०-अस्यैव प्रपञ्चः-किष्किन्धेत्यादि ॥ २६ ॥ २७ ॥

२८ ] ति० टी०-गोलभस्य तदाख्यस्य । महद्युद्धं पञ्चदशवर्षावध्यहोरात्रमविश्रमं युद्धम् । तदेवाह-नैवेति ॥ २८ ॥

रा० टी०-विलापप्रकारमाह-किष्किन्धेत्यादीभिः । वानरेश्वरे वालिनि स्वर्गते सति किष्किन्धा शून्या, उद्यानादीनि च शून्यानि ॥ २६ ॥

गो० टी०-परिदेवनमेवाह-किष्किन्धेत्यादिना । शून्या शून्यप्राया ॥ २५ ॥

रा० टी०-हत इति । प्लवगशार्दूले हते सति वानरा निष्प्रभाः कृताः । अर्धं पृथक् । यस्येति । यस्य महता वेगेन प्रतापेन काननानि अरण्यानि वनानि जलानि च सकमलसरांसीत्यर्थः, पुष्पौघेन पुष्पसमूहेन अनुबध्यन्ते सर्वकालं योज्यन्ते तत् योजनमद्य वालिमरणसमये कः कस्य प्रतापः करिष्यति । अर्धद्वयमेकान्वयि ॥ २७ ॥

रा० टी०-येनेति । येन वालिना महात्मनो गन्धर्वस्य महाबाहोः गोलभस्य गोलभाभिधस्य दश पञ्च च वर्षाणि महद्युद्धं दत्तं तत्तस्य युद्धं रात्रौ नैवोपशाम्यति निवर्तते दिवसे च नोपशाम्यति ततः दशपञ्चवर्षानन्तरं षोडशमे षोडशे वर्षे गोलभो विनिपातितः वालिना हतः । अर्धचतुष्टयमेकान्वयि ॥२८॥२९॥

गो० टी०-यस्येति । वेगेन पराक्रमेण काननानि अरण्यानि वनानि जलानि सरांसीत्यर्थः, पुष्पौघेण अनुबध्यन्ते संबध्यन्ते । सदा पुष्पितानि भवन्तीत्यर्थः । तत्पुष्पानुबन्धनम् अद्य तु वालिमरणानन्तरकाले । यद्वा वनानि क्षुद्रारण्यानि यस्मिन् वालिनि गच्छति सति तद्वेगेनाविशेषेण सर्वाणि वनानि पुष्पैः सहानुगच्छन्तीत्यर्थः ॥ २६ ॥

गो० टी०-येनेति । गोलभस्य गोलभाख्यस्य उपशाम्यति उपशाम्यत् भूते लट् । दंष्ट्राकरालवान् करालदंष्ट्रावान्, परनिपातः ॥ २७-२९ ॥

२९ ] ति० टी०-दंष्ट्राकरालवान् आर्षः स्वार्थे मतुप् दंष्ट्राकराल इत्यर्थः । अस्माकं सर्वाभयंकरः सर्वेभ्योऽभयंकरः स एष वीरः कथं निपातितः ॥ २९ ॥

रा० टी०-तमिति । दुर्विनीतं गोलभं हत्वा अस्माकं सर्वाभयंकरः दंष्ट्राकरालवान् दंष्ट्राकरालत्वविशिष्टः भावप्रधानो निर्देशः अत एवान्यवत्प्रार्थकल्पना, एष वाली कथं निपातितः३०

१ महान् दोष इति गो. पाठः । २ हरियूथपा इति गो. पाठः । ३ पुंगवा इति गो. पाठः । ४ ऽऽसीदिति गो. पाठः । ५ वानराधिपे इति गो. पाठः । ६ श्लोकोऽयमधिकः गो. रा. पाठे । ७ तु षोडशे इति गो. पाठः ।

हते तु वीरे प्लवगाधिपे तदा वनेचरास्तत्र न शर्म लेभिरे ।
वनेचराः सिंहयुते महावने यथा हि गावो निहते गवां पतौ ॥ ३० ॥
ततस्तु तारा व्यसनार्णवप्लुता मृतस्य भर्तुर्वदनं समाश्रिता ।
जगाम भूमिं परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ।

वदनमाघ्रायालिङ्गितुं प्रयतमानाऽपि तारा रेणुरुधिरोक्षिताङ्गं वालिनं परिरब्धुं न शशाक । नीलो वालिहृदयाद्रामबाणमुद्दधार । तारयोदितोऽङ्गदो वालिचरणावभ्यवादयत ।

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् । पतिं लोकश्रुता तारा मृतं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम । उपलोपचिते वीर सुदुःखे वसुधातले ॥ २ ॥
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव । शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥
सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो । सुग्रीव एव विक्रान्तो वीर साहसिकप्रिय ॥ ४ ॥

३० ] ति० टी०–वनेचराः प्लवङ्गमा न शर्म लेभिरे इत्यन्वयः । अपरं वनेचरा इति गवां विशेषणम् ॥ ३० ॥

रा० टी०–तद्विलापं संवर्ण्य तद्वृत्तान्तमाह–हत इति । तदा रामबाणप्रविद्धसमये तत्र तस्मिन् प्रसिद्धे वीरप्लवगाधिपे वालिनि हते सति वनेचराः शर्म सुखं न लेभिरे । तत्र दृष्टान्तः–गवां पतौ पत्यौ रक्षके निहते सति सिंहयुते महावने वनेचरा गावो यथा ॥ ३१ ॥

गो० टी०–हत इति । शर्म सुखम् । सिंहयुत इति सिंहस्थानीयो रामः ॥ ३० ॥

३१ ] ति० टी०–'समीक्ष्य सा' इति पाठः ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०–तत इति । ततस्तत्प्राणापगमे सति व्यसनार्णवप्लुता सा तारा भर्तुर्वदनं मुखं समीक्ष्य वालिनं परिरभ्य छिन्नमहाद्रुममाश्रिता लतेव भूमिं जगाम ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०–ततस्त्विति । व्यसनार्णवे आप्लुता मग्नेति यावत् ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

१ ] ति० टी०–अथ तारा मृतं दृष्ट्वा पुनः प्रलपति–तत इति । लोकश्रुता लोकप्रसिद्धा ॥ १ ॥

रा० टी०–ताराया एव विलापान्तरमुपक्रमते–तत इति । ततः भर्तृपरिरम्भणकाले कपिराजस्य वालिनस्तन्मुखमुपजिघ्रन्ती लोकविश्रुता तारा मृतं पतिमब्रवीत् ॥ १ ॥

गो० टी०–अथ मरणानन्तरं ताराविलापस्त्रयोविंशे–ततः समुपजिघ्रन्तीत्यादि । लोकाश्रुतम् अस्माल्लोकाच्च्युतं स्वर्गतमित्यर्थः ॥ १ ॥

२–३ ] ति० टी०–उपलैः पाषाणैरुपचिते व्याप्ते सुदुःखे सुतरां दुःखकरे ॥ २ ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–शेषे इति । उपलोपचिते पाषाणैर्व्याप्ते अत एव विषमे अत एव सुदुःखे वसुधातले मम वचनमकृत्वा दुःखं यथा भवति तथा शेषे ॥ २ ॥

रा० टी०–मत्त इति । मही मत्तस्तव प्रियतरा हि यतस्तां मही परिष्वज्य शेषे मां च न प्रतिभाषसे प्रतिवदसि ॥ ३ ॥

गो० टी०–शेष इति । दुःखमित्येतत् क्रियाविशेषणम् । सुदुःखे सुतरां दुःखकरे ॥ २ ॥ ३ ॥

४ ] ति० टी०–एष विधी रामरूपः सुग्रीवस्य वशं प्राप्तोऽधीनो भवति । अहो इत्याश्चर्ये । ननु त्वद्वशं प्राप्तो येनाप्येवं भार्यया योजितः स्यादिति भावः । अतः सुग्रीव एव विक्रान्तोऽत्रराज्ये भवितेति शेषः । साहसिकं साहसकर्म ॥ ४ ॥

रा० टी०–सुग्रीवस्येति । हे साहसिकप्रिय ! यः सुग्रीवः विक्रान्तस्त्वया बहुवारं पराभूतस्तस्य सुग्रीवस्य वशं त्वं प्राप्तः अतः एषःवशप्रापकरामरूपः विधिः अहो आश्चर्यं भवति ॥४॥

गो० टी०–सुग्रीवस्येति । त्वं सुग्रीवस्य तव बहुशः कान्दिशीकस्य वशं प्राप्तः । सुग्रीव एव विक्रान्त इत्येषः विधिः दैवव्यापारः अहो आश्चर्यकरो भवति ॥ ४ ॥

१ प्लवङ्गमा इति गो. पाठः । २ समीक्ष्य सेति गो. रा. पाठः । ३ लोकाच्युतमिति गो. पाठः ।

ऋक्षवानरमुख्यास्त्वां [1]बलिनं पर्युपासते । [2]तेषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः ॥ ५ ॥
मम [3]चेमा गिरः श्रुत्वा किं त्वं न प्रतिबुध्यसे । इदं तद्वीरशयनं [4]तत्र शेषे हतो युधि ॥ ६ ॥
शायिता निहता यत्र त्वयैव रिपवः पुरा । विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय ॥ ७ ॥
मामनाथां विहायैकां [5]गतस्त्वमसि मानद । शूराय न प्रदातव्या कन्या खलु विपश्चिता ॥ ८ ॥
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् । अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ॥ ९ ॥
अगाधे च निमग्नाऽस्मि विपुले शोकसागरे । अश्मसारमयं नूनमिदं मे हृदयं दृढम् ॥ १० ॥
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा [6]कृतम् । सुहृच्चैव च भर्ता च प्रकृत्या च मम प्रियः ॥ ११ ॥
[7]प्रहारे च पराक्रान्तः शूरः पञ्चत्वमागतः । पतिहीना तु या नारी कामं भवतु पुत्रिणी ॥ १२ ॥
[8]धनधान्यसमृद्धाऽपि विधवेत्युच्यते [9]बुधैः । स्वगात्रप्रभवे वीर शेषे रुधिरमण्डले ॥ १३ ॥

५ ] ति० टी०—पर्युपासते पर्युपासन्त ॥ ५ ॥

रा० टी०—ऋक्षेति । ये ऋक्षवानरमुख्याः बलिनं त्वां पर्युपासते तेषां कृच्छ्रं विलपितं शोचतोऽङ्गदस्य मम च गिरः श्रुत्वा किं किमर्थं न प्रतिबुध्यसे जागर्षि । सार्धः श्लोक एकान्वयी ॥ ५ ॥

गो० टी०—ऋक्षवानरेति । कृच्छ्रं दुःखम् ॥ ५ ॥

६ ] ति० टी०—यत्र त्वया निहता रिपवः शायितास्तदिदं वीरशयनम् । तत्र त्वमपि शेषे ॥ ६ ॥

रा० टी०—इदमिति । यत्र युधि रिपवः शायितास्तत्र युधि इदं तद्वीरशयनं रिपुशायनकर्तृवीरसंबन्धिशय्या तत्र शेषे, त्वमिति शेषः । अर्धद्वयमेकान्वयि ॥ ६ ॥

गो० टी०—इदमिति । युधि हतो यत्र शेषे पुरा त्वया निहता रिपवो यत्र शायिताः तदिदं वीरशयनमित्यन्वयः । युद्धपरायणस्य तव युद्धेनैव मरणं प्राप्तं खल्विति भावः ॥ ६ ॥

७-८] ति० टी०—विशुद्धसत्त्वाभिजन विशुद्धसत्त्ववंशभव ! प्रिययुद्ध प्रिययुद्धत्वाद्युद्धेनैव मरणं जातमिति भावः ॥ ७ ॥८॥

रा० टी०—विशुद्धेति । विशुद्धानि कापट्यसंसर्गराहितानि बलानि येषां ते अभिजनाः पार्श्ववर्तिनो यस्य, किं च विशुद्धं सत्त्वं स्थितिर्यस्मिन् तस्मिन् कुले अभिजनः अभिजातः तत्संबोधनं, एकां साहाय्यरहिताम् अनाथाम् अन्यस्मात्स्वकल्याणमनिच्छन्तीं मां विहाय त्वं गतोऽसि ॥ ७ ॥

गो० टी०—विशुद्धसत्त्वाभिजनेति । कूटयुद्धाभावाद्विशुद्धबलसत्कुलप्रसूतत्वादभिजनशुद्धकुल ॥ ७ ॥

रा० टी०—शूरायेति । विपश्चिता जानता जनेन शूराय कन्या न प्रदातव्या । ननु किमर्थमिदमुच्यते इत्यत आह—शूरभार्यां मां विधवां कृतां वैधव्यं प्राप्तामत एव हतां पश्य ॥८॥

गो० टी०—शूरायेति । अप्रदातव्यत्वे हेतुमाह—शूरभार्यामिति ॥ ८ ॥

९-१० ] ति० टी०—शूराय कन्याया अदाने हेतुः—शूरस्य तव भार्यां मां विधवां कृतां पश्य । मानो राजपत्नीत्वाभिमानः । शाश्वती स्थिरा गतिः सुखप्राप्तिः ॥ ९ ॥ १० ॥

रा० टी०—अवेति । मे मानः स्वपतिकर्तृकसत्कारः अवभग्नः अत एव शाश्वती सार्वकालिकी मे मम गतिः सुखप्राप्तिः भग्ना अत एव शोकसागरे निमग्नाऽस्मि ॥ ९ ॥

गो० टी०—अवभग्नश्चेति । गतिः पतिशुश्रूषेत्यर्थः, यद्वा गम्यत इति गतिः सुखमित्यर्थः ॥ ९ ॥

रा० टी०—अश्मेति । यन्मे हृदयं भर्तारं निहतं दृष्ट्वा शतधा कृतं छिन्नं तत् हृदयमश्मसारमयं दृढपाषाणविकारः अत एव दृढं नूनं निश्चितमेतत् ॥ १० ॥

गो० टी०—अश्मसारेति । अश्मसारमयत्वे हेतुर्दृढमिति ॥ १० ॥

११ ] ति० टी०—कृतम् शोकेनेति शेषः । प्रकृत्याऽनुपाधितः ॥ ११ ॥

रा० टी०—सुहृदिति । यो मम भर्ता प्रकृत्या स्वभावेनैव सुहृत् कापट्यरहितः प्रहारे पराक्रान्तः परः शत्रुः क्रान्तः पराभूतो येन स शूरः पञ्चत्वं मरणमागतः प्राप्तः ॥ ११ ॥

गो० टी०—हृदयभेदने हेतुमाह—सुहृदिति । पञ्चत्वं मरणम् ॥ ११ ॥ १२ ॥

१२-१३ ] ति० टी०—प्रहारे रणे पराक्रान्तः परेणाक्रान्तोऽभिभूतः पञ्चत्वमागतः । एतदृष्ट्वाऽपि यद्धृदयं न भिन्नमतो दृढमिति पूर्वेणान्वयः । ननु सपुत्रायाः कस्ते शोकः, अत आह—पतिहीनेत्यादि ॥ १२ ॥ १३ ॥

रा० टी०—ननु तव पुत्रस्य सत्त्वात् किमर्थं शोचसीत्यत आह—पतीति । कामं पुत्रिणी पुत्रसहिता धनधान्यसमृद्धापि या नारी भवेत् पतिहीना साऽपि बुधैर्विधवेत्युच्यते ॥ १२ ॥

रा० टी०—स्वगात्रेति । हे वीर ! कृमिरागपरिस्तोमे कृमिरागस्य लाक्षारसरक्तवस्त्रस्य स्तोमः आस्तरणं यस्मिन् तस्मिन् स्वकीये शयने इव स्वगात्रप्रभवे रुधिरमण्डले शेषे । किं

१ बलिन इति गो. पाठः । २ एषामिति गो. पाठः । ३ चेमां गिरमिति गो. पाठः । ४ यत्रेति गो. पाठः । ५ गतमिति गो. पाठः । ६ द्रौति गो. पाठः । ७ आहवे इति गो. पाठः । ८ धान्यैः सुपूर्णाऽपीति गो. पाठः । ९ जनैरिति गो. पाठः ।

कृमिरागपरिस्तोमे स्वकीये शयने यथा । रेणुशोणितसंवीतं गात्रं तव समन्ततः ॥ १४ ॥
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ । कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ॥ १५ ॥
यस्य रामविमुक्तेन हृतमेकेषुणा भयम् । शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ॥ १६ ॥
वार्यामि त्वां निरीक्षन्ती त्वयि पञ्चत्वमागते । उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ १७ ॥
गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा । तस्य निष्कृष्यमाणस्य बाणस्यापि बभौ द्युतिः १८ ॥
अस्तमस्तकसंरुद्धरश्मेर्दिनकरादिव । पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः ॥ १९ ॥
ताम्रगैरिकसंपृक्ता धारा इव धराधरात् । अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना ॥ २० ॥
अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् । रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहितं पतिम् ॥ २१ ॥
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना । अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् २२ ॥

च कृमेः इन्द्रगोपस्य राग इव रागो यस्मिन् स परिस्तोमो यस्य तस्मिन्नित्यर्थः ॥ १३ ॥

गो० टी०–स्वगात्रेति । कृमेः इन्द्रगोपस्य राग इव रागो यस्मिन् स कृमिरागः । परिस्तोमः आस्तरणं यस्मिन् स तथा ॥ १३–१६ ॥

१४ ] ति० टी०–कृमेरिन्द्रगोपादे राग इव रागो यस्य तादृशः परिस्तोम आस्तरणं यस्मिन् । कृमिरागो लाक्षारागः 'कृमिरागं वदन्त्यार्या लाक्षिकं प्रियदर्शनम्' इत्युत्पलमालाकोशादित्यन्ये ॥ १४ ॥

रा० टी०–रेण्विति । समन्ततः रेणुशोणितसंवीतं रेणुशोणिताभ्यां व्याप्तं तव गात्रं परिरब्धुमालिङ्गितुं न शक्नोमि ॥१४॥

१५ ] ति० टी०–परिरब्धुमालिङ्गितुं न शक्नोमि । रेणुशोणितसंवीतत्वाच्छोकेन भुजयोर्बलाभावाच्च गात्रसंलग्नशरत्वाच्च । अस्मिन्वैरे वालिविषये वैरे कृतकृत्यः कृतानुष्ठेयानुष्ठानः ॥१५॥

रा० टी०–कृतेति । रामविमुक्तेन एकेषुणा यस्य भयं हृतं स सुग्रीवः अस्मिन्नतिदारुणे वैरे कृतकृत्यः सिद्धकार्यः अस्तीति शेषः ॥ १५ ॥

१६ ] ति० टी०–शरेण तव गात्रसंस्पर्शने वार्यामि निवारिता भवामीत्यन्वयः ॥ १६ ॥

रा० टी०–शरेणेति । त्वयि पञ्चत्वमागते प्राप्ते सति तव हृदि लग्नेन शरेण तव गात्रसंस्पर्शने विद्यमाना त्वां निरीक्षन्ती अहं वार्यामि वार्ये ॥ १६ ॥

गो० टी०–शरेणेति । वार्यामि वारिताऽस्मीत्यर्थः ॥१६॥

१७–१८ ] ति० टी०–एवं तद्वचः श्रुत्वा नीलः शरमुद्बबर्होद्धृतवान् । अस्य बाणस्यातितेजस्विशत्रुवधेन तेजःक्षयान्न पुनस्तूणगमनमिति बोध्यम् ॥ १७ ॥ १८ ॥

रा० टी०–ताराविलापमुक्त्वा वृत्तान्तमाह–उदिति । गिरिगह्वरसंलीनं दुर्गमगिरिसंस्थम् आशीविषमिव तस्य वालिनो गात्रगतं शरं नीलः उद्बबर्ह बहिश्चकार ॥ १७ ॥

गो० टी०–उद्बबर्हेति । उद्बबर्ह उद्धृतवान् । नीलः सुग्रीवसेनापतिः ॥ १७ ॥

गो० टी०–तस्येति । निष्कृष्यमाणस्य तस्य द्युतिः अस्तमस्तकसंरुद्धः अस्ताद्रिशिखरनिरुद्धः दिनकरादुद्गच्छन् रश्मिरिव बभौ । पूर्वश्लोकोक्तसर्पसाम्यापेक्षया चशब्दः ॥१८॥

१९ ] ति० टी०–दिनकरादिति पञ्चमी षष्ठ्यर्थे । रुधिररक्तत्वादिति भावः । व्रणेभ्यः शरशिलापादपजनितेभ्यः॥१९॥

रा० टी०–अस्तेति । अस्तमस्तकसंरुद्धः अस्ताचलशिखरनिरुद्धो दिनकरादुच्छलन् रश्मिः किरण इव निष्कृष्यमाणस्य तस्य वारणस्य द्युतिर्बभौ अधिकं शुशुभे ॥ १८ ॥

रा० टी०–पेतुरिति । धराधरात् पर्वतात् ताम्रगैरिकसंपृक्ताः अरुणगैरिकसंलग्ना धारा इव तस्य वालिनः सर्वशो व्रणेभ्यः क्षतजधाराः पेतुः ॥ १९ ॥

गो० टी०–पेतुरिति । व्रणेभ्यः इति बहुवचनं पाशाधिकरणन्यायेनावयवबहुत्वात् । यद्वा शिलापादपप्रहारकृतव्रणानि एतावत्पर्यन्तं शोणितनिर्गमशून्यतया स्थितानि इदानीं शरव्रणाच्छोणितनिर्गमकाले सर्वेभ्योऽपि शोणितानि सुस्रुवुरित्यर्थः । इदानीं रुधिरनिर्गमादेतावत्पर्यन्तं सर्वात्मना प्राणो न गत इति गम्यते ॥ १९–२१ ॥

२०–२१ ] ति० टी०–रणरेणुनाऽवकीर्णं व्याप्तम्॥२०॥२१॥

रा० टी०–अवकीर्णमिति । रणरेणुना अवकीर्णम् अस्त्रसमाहतमस्त्रव्याप्तं शूरं भर्तारं विमार्जन्ती तारा अस्रैः अश्रुभिः सिषेच ॥ २० ॥

रा० टी०–रुधिरेति । रुधिरोक्षितसर्वाङ्गं क्षतजसिक्तशरीरं विनिहतं प्राणैर्वियुक्तं पतिं दृष्ट्वा अङ्गना वालिनी तारा पिङ्गाक्षमङ्गदं पुत्रमुवाच ॥ २१ ॥

२२ ] ति० टी०–पश्चिमावस्था मरणम् ॥ २२ ॥

रा० टी०–तद्वचनाकारमाह–अवस्थामिति । हे पुत्र ! पापकर्मणा पूर्वोपार्जितपापक्रियासंप्रसक्तस्य वैरस्य अन्तोऽवसानं गतः प्राप्तः । तत्र हेतुं वदन्नाह–पितुः सुदारुणाम् अतिभयावहां पश्चिमाम् अन्त्यावस्थां पश्य ॥ २२ ॥

१ स्वमात्मेति गो. पाठः । २ संरुद्धो रश्मिरिति गो. रा. पाठः । ३ आस्त्रैरिति गो. पाठः ।

संप्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा । बालसूर्योज्ज्वलतनुं प्रयातं यमसादनम् ॥ २३ ॥
अभिवादय राजानं पितरं पुत्र मानदम् । एवमुक्तः समुत्थाय जग्राह चरणौ पितुः॥ २४ ॥
भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् । अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ॥ २५ ॥
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे । अहं पुत्रसहाया त्वामुपासे गतचेतनम्
सिंहेन पातितं सद्यो गौः सवत्सेव गोवृषम् ॥ २६ ॥
इष्ट्वा सङ्ग्रामयज्ञेन रामप्रहरणाम्भसा । तस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना २७ ॥
या दत्ता देवराजेन तव तुष्टेन संयुगे । शातकौम्भीं प्रियां मालां तां ते पश्यामि नेह किम् २८
राज्यश्रीर्न जहाति त्वां गतासुमपि मानद । सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥ २९ ॥
न मे वचः पथ्यमिदं त्वया कृतं न चास्मि शक्ता हि निवारणे तव ।
हता सपुत्रास्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामपि ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

गो० टी०–अवस्थामिति । पापकर्मणा पापरूपकर्मणा संप्रसक्तस्येति संबन्धः ॥ २२–२४ ॥

२३–२४ ] ति० टी०–पापकर्मणा प्राचीनपापवशात्संप्रसक्तस्य प्राप्तस्य वैरस्यान्तोऽवसानं गतः प्राप्तवान्॥२३॥२४॥

रा० टी०–बालेति । बालसूर्योज्ज्वलतनुं बालसूर्यवत्स्वच्छशरीरं यमसादनं कालागम्यलोकमित्यर्थः, प्रयातं मानदं पितरमभिवादय ॥ २३ ॥

रा० टी०–एवमिति । एवमुक्तोऽङ्गदः पीनवृत्ताभ्यां भुजाभ्यां पितुश्चरणौ जग्राह ॥ २४ ॥

२५ ] ति० टी०–त्वामभिवादयमानम् । इदं तारावाक्यम् ॥ २६ ॥

रा० टी०–अभिवादयमानमङ्गदमवलोक्य पतिं प्रत्याह— अभीति । त्वामभिवादयमानमङ्गदं 'दीर्घायुर्भव पुत्र' इति यथा पुरा पूर्वमिव किमर्थं नाभिभाषसे ॥ २९ ॥

गो० टी०–अभिवादयमानमिति । त्वामभिवादयमानमित्यन्वयः ॥ २५ ॥ २६ ॥

२६ ] ति० टी०–उपासे समीपे तिष्ठामि ॥ २६ ॥

रा० टी०–अहमिति । सिंहेन सद्यः पातितं गोवृषं सवत्सा गौरिव पुत्रसहाया पुत्रसहिताऽहं त्वामुपासे ॥ २६ ॥

२७ ] ति० टी०–रामस्य प्रहरणं बाणस्तद्रूपेणाम्भसा मया विना कथमवभृथे स्नातः ॥ २७ ॥

रा० टी०–इष्ट्वेति । संग्रामयज्ञेन संग्रामरूपयागेन इष्ट्वा देवान् सत्कृत्य रामप्रहरणाम्भसा रामप्रहरणरूपजलेन तस्मिन् प्रसिद्धे अवभृथे संग्रामरूपयज्ञान्तस्नाने पत्न्या मया विना त्वं कथं स्नातः ॥ २७ ॥

गो० टी०–इष्ट्वेति । रामप्रहरणाम्भस्येवावभृथ इति व्यस्तरूपकम् ॥ २७ ॥ २८ ॥

२८ ] ति० टी०–मालामिह न पश्यामि । किं तु सुग्रीवाय मालादानस्यादर्शनं शोकवशाद्दृष्टस्यापि विस्मरणं चेत्येवमुक्तिः ॥ २८ ॥

रा० टी०–येति । तव संयुगे संग्रामे संतुष्टेन देवराजेन इन्द्रेण या माला दत्ता तां शातकौम्भीं स्वर्णमयीं मालामिह अस्मिन् समये किं कथं न पश्यामि, सुग्रीवाय किमर्थं दत्तेत्यर्थः ॥ २८ ॥

२९ ] ति० टी०–आवर्तमानस्यास्तं गच्छतः । शैलराजं तमवास्ताचलम् ॥ २९ ॥

रा० टी०–राज्येति । आवर्तमानस्य परिभ्रमतः सूर्यस्य प्रभा शैलराजं सुमेरुमिव गतासुमपि त्वां राज्यश्रीर्न जहाति ॥ २९ ॥

गो० टी०–राजश्रीरिति । शैलराजं मेरुम् आवर्तमानस्य अस्तं गच्छत इत्यर्थः ॥ २९ ॥

३० ] ति० टी०–पथ्यमिदं वच इति स्मृतिसंनिहितस्य प्रागुपदिष्टस्य परामर्शः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा० टी०–नेति । पथ्यं हितम् इदं राममित्रीभूतसुग्रीवेण सह युद्धप्रवृत्तिनिवारणरूपं मे वचस्त्वया न कृतम् अत एव निवारणे अशक्ता अभवमिति शेषः, अत एव संयुगे हतेन त्वया सपुत्राऽहं हताऽस्मि अत एव श्रीः त्वया सह विद्यमानां मामपि ना पुत्रं च जहाति त्यजति ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

१ उदयेति गो. पाठः । २ चेतसमिति गो. पाठः । ३ निहतमिति गो. पाठः । ४ ऽम्भसीति गो. पाठः । ५ अस्मिन्निति गो. पाठः । ६ कुम्भमयीमिति गो. पाठः । ७ राजेति गो. पाठः । ८ हृतेति गो. पाठः ।

## चतुर्विंशः सर्गः ।

ताराविलापश्रवणाद्द्रुतहृदयः सुग्रीवोऽङ्गदादिभिः सीतान्वेषणं संप्रार्थ्य स्वस्याग्निप्रवेशमर्थयते । तेन रामोऽपि दुर्मना बभूव । तारा रामान्तिकमेत्य भक्त्या तं प्रस्तौति । जीवितत्यागोन्मुखीं तारां रामोऽङ्गदाभ्युदयाद्युपपादनेन समाश्वासयति ।

तामाशु वेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन ।
पश्यंस्तदा वाल्यनुजस्तरस्वी भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १ ॥
स बाष्पपूर्णेन मुखेन पश्यन्क्षणेन निर्विण्णमना मनस्वी ।
जगाम रामस्य शनैः समीपं भृत्यैर्वृतः संपरिदूयमानः ॥ २ ॥
स तं समासाद्य गृहीतचापमुदात्तमाशीविषतुल्यबाणम् ।
यशस्विनं लक्षणलक्षिताङ्गमवस्थितं राघवमित्युवाच ॥ ३ ॥
यथा प्रतिज्ञातमिदं नरेन्द्र कृतं त्वया दृष्टफलं च कर्म ।
ममाद्य भोगेषु नरेन्द्रसूनो मनो निवृत्तं हतजीवितेन ॥ ॥ ४ ॥
अस्यां महिष्यां तु भृशं रुदत्यां पुरेऽतिविक्रोशति दुःखतप्ते ।
हते नृपे संशयितेऽङ्गदे च न राम राज्ये रमते मनो मे ॥ ५ ॥

गो० टी०–न म इति । पथ्यं हितं वचः न कृतं नानुष्ठितम् ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

१ ] ति० टी०–तां ताराम् । आशुवेगेन शोकमहार्णवेनाभिप्लुतां खिन्नाम् । अप्रतिमेनासदृशेन । आत्मन इति शेषः॥१॥

रा० टी०–सुग्रीवविलापं वर्णयितुमुपक्रमते–तामिति । अश्रुवेगेन अश्रूणां वेगो यस्मात् तेन अत एव दुरासदेन दुःसहेन शोकमहार्णवेन अभिप्लुतां निमग्नां तां तारां पश्यन् तरस्वी अतिवेगवान् वाल्यनुजः सुग्रीवः अप्रतिमेन असदृशेन भ्रातुर्वधेन तेपे ॥ १ ॥

गो० टी०–अथ ताराप्रलापश्रवणदुःखितसुग्रीवसमाश्वासनपूर्वकं ताराया रामे प्रतिपत्तिं दर्शयति चतुर्विंशे–तामित्यादि । अश्रुवेगेन च दुरासदेन दुष्प्रापेण शोकमहार्णवेन च अभिप्लुतां व्याप्तां तां तारां पश्यन् तेन भ्रातुर्वधेन च तेपे दुःखितोऽभूत् ॥ १ ॥

२ ] ति० टी०–बाष्पपूर्णेन मुखेनोपलक्षितां तारां पश्यन्निर्विण्णमनाः खिन्नः संपरिदूयमानः सम्यगनुतप्यमानः ॥ २ ॥

रा० टी०–स इति । संपरिदूयमानः अतिपरितापविशिष्टः अत एव निर्विण्णमनाः उदासीनचित्तः मनस्वी बाष्पपूर्णेन मुखेन उपलक्षितः स सुग्रीवः क्षणेन पश्यन् विचारयन् सन् भृत्यैर्वृतश्च सन् शनैः रामस्य समीपं जगाम ॥ २ ॥

गो० टी०–स इति । मुखेन उपलक्षितः स वीक्ष्य तारामिति शेषः ॥ २ ॥

३ ] ति० टी०–उदात्तं धीरोदात्तस्वभावम् । लक्षणैः सामुद्रिकशास्त्रोक्तराजलक्षणैर्लक्षितमङ्गं यस्य तम् ॥ ३ ॥

रा० टी०–स इति । गृहीतचापमाशीविषतुल्यबाणमाशीविषसदृशबाणविशिष्टमुदात्तं शीलधैर्यादिना अतिमहान्तं लक्ष्मणेन लक्षितमङ्गं यस्य तमवस्थितं राघवं समासाद्य प्राप्य इत्युवाच । ‘लक्षणलक्षिताङ्गम्’ इत्यपि पाठः, तत्र लक्षणैः सामुद्रिकोक्तमहाराजचिह्नैर्लक्षितमङ्गं यस्येत्यर्थो बोध्यः ॥ ३ ॥

गो० टी०–स तमिति । उदात्तं श्रेष्ठं लक्षणेन सुलक्षणेन लक्षिताङ्गम् ॥ ३ ॥

४ ] ति० टी०–दृष्टफलं राज्यभोगफलं कर्म वालिवधरूपम् । हतजीवितेन कुत्सितजीवितेन साध्येषु भोगेष्वित्यन्वयः ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह–यथेति । दृष्टफलं प्रत्यक्षराज्यप्राप्तिफलकं कर्म वालिवधः यथाप्रतिज्ञातं प्रतिज्ञातमनतिक्रम्य कृतम् । ननु तर्हि राज्यं प्राप्नुहीत्यत आह–हे नरेन्द्रसूनो ! हतजीवितेन भ्रातृवधहेतुकनिहतप्रायजीवनेन हेतुना भोगेषु राज्यसुखानुभवेषु प्रसक्तं मनोऽभिलाषो निवृत्तम् ॥ ४ ॥

गो० टी०–यथेति । यथाप्रतिज्ञातं प्रतिज्ञातमनतिक्रम्य । दृष्टफलं दृष्टराज्यफलकं कर्म त्वया कृतं जीवितेन सह स्थितेषु भोगेषु जीविते भोगेषु च मनो निवृत्तमित्यर्थः ॥ ४ ॥

५ ] ति० टी०–अस्यां तारायाम् । पुरे तत्स्थे जनेऽतिविक्रोशत्यत्यन्तं रुदति । अङ्गदे संशयिते पितृवियोगात्संशयितजीविते ॥ ५ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अस्यामिति । नृपे वा-

---

१ चाश्विवति गो. अश्विवति रा. पाठः । २ वीक्ष्येति गो. पाठः । ३ लक्ष्मणेति रा. पाठः । ४ पुत्रेति गो. पाठः । ५ रुदन्त्यामिति गो. रा. पाठः । ६ पुरे चेति गो. पाठः । ७ ऽग्रजे इति गो. पाठः ।

क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधो मेऽनुमतः पुरस्तात् ।
हते त्विदानीं हरियूथपेऽस्मिन्सुतीक्ष्णमिक्ष्वाकुवर प्रतप्स्ये ॥ ६ ॥
श्रेयोऽद्य मन्ये मम शैलमुख्ये तस्मिन्हि वासश्चिरमृष्यमूके ।
यथा तथा वर्तयतः स्ववृत्त्या नेमं निहत्य त्रिदिवस्य लाभः ॥ ७ ॥
न त्वां जिघांसामि चरेति यन्मामयं महात्मा मतिमानुवाच ।
तस्यैव तद्राम वचोऽनुरूपमिदं वचः कर्म च मेऽनुरूपम् ॥ ८ ॥
भ्राता कथं नाम महागुणस्य भ्रातुर्वधं राम विरोचयेत ।
राज्यस्य दुःखस्य च वीर सारं विचिन्तयन्कामपुरस्कृतोऽपि ॥ ९ ॥
वधो हि मे मतो नासीत्स्वमाहात्म्यव्यतिक्रमात् । ममासीद्बुद्धिदौरात्म्यात्प्राणहारी व्यतिक्रमः ॥ १० ॥

लिनि हते सति अत एव महिष्यामस्यां तारायां भृशं रुदन्त्यां सत्याम् अत एव पुरं तन्निवासिजने अतिविक्रोशति रुदति सति अत एव दुःखतप्ते अङ्गदे संशयिते जीवनादिविषयकसंशयं प्राप्ते सति राज्ये मे मनो न रमते ॥ ५ ॥

गो० टी०—अस्यामिति । पुरे पुरस्थजने संशयिते पितृमरणदुःखेन जीवति वा न वेति संशयविषयीभूते सति राज्ये मनः न रमते रतिं न प्राप्नोति ॥ ५ ॥

६ ] ति० टी०—अतिविप्रधर्षाद्भ्रातृकृताधिकपराभवाद्धेतोर्ममोत्पन्नात्क्रोधादमर्षादसहिष्णुतया च सुतीक्ष्णमतिशयेन प्रतप्स्ये तपामि ॥ ६ ॥

रा० टी०—क्रोधादिति । अमर्षात् दुःसहात् अतिविप्रधर्षात् भ्रातृकर्तृकातिपराभवात् जातात् क्रोधात् पुरस्तात् पूर्वं भ्रातुर्वधः मे अनुमतः संमतः इदानीं तु हरियूथपे हते सति सुतीक्ष्णमत्यन्तं प्रतप्स्ये प्रतपामि ॥ ६ ॥

गो० टी०—क्रोधादिति । क्रोधान्निर्निमित्तनिर्वासनकृतात् अमर्षात्परुषभाषणाक्षमया अतिविप्रधर्षात् अत्यन्तमाक्रमणाच्च ॥ ६ ॥

७ ] ति० टी०—यथातथा येनकेनापि प्रकारेण । स्ववृत्त्या स्वजात्युचितवृत्त्या वर्तयतो जीवत ऋष्यमूकवास एव श्रेयो मन्ये, न तु त्रिदिवस्य लाभ इत्यन्वयः ॥ ७ ॥

रा० टी०—श्रेय इति । शैलमुख्ये ऋष्यमूके यथा तथा येन केनाप्युपायेन स्ववृत्त्या फलादिभक्षणेन वर्तयतो मम चिरं वास एव श्रेयो मन्ये इमं वालिनं निहत्य तु त्रिदिवस्य यो लाभस्तमपि श्रेयो न मन्ये पूर्वत्र वाक्यार्थस्य कर्मतयाऽन्वयान्न द्वितीया ॥ ७ ॥

गो० टी०—श्रेय इति । यथा तथा कथंचित् स्ववृत्त्या वानरजात्युचितवृत्त्या तस्मिन् शैलमुख्ये ऋश्यमूके निवासः श्रेयस्करः, इमं वालिनं निहत्य त्रिदिवस्य स्वर्गस्य लाभोऽपि न श्रेय इत्यर्थः ॥ ७ ॥

८ ] ति० टी०—तद्वचस्तस्यैवानुरूपम् । ईषत्करघातेऽपि मयि तदकृत्वान्तरभ्रातस्नेहबद्धतया त्वां न जिघांसामि । कदापि चर गच्छेति यत्तद्वच इत्यर्थः । इदं कर्म भ्रातृवधरूपं वचस्तदर्थमाकारणरूपम् ॥ ८ ॥

रा० टी०—नेति । मतिमान् प्रशस्तमतिविशिष्टः महात्मा अयं वाली त्वामहं न जिघांसामि हन्तुमिच्छामि अतः चर इतोऽपसर इति मां यदुवाच तद्वचस्तस्य वालिन एवानुरूपं योग्यमिदं बन्धुप्राणवियोगजनकप्रार्थनारूपं वचः कर्म युद्धाद्याचरणं च मे एवानुरूपम् । एव उभयान्वयि । एतेन स्वस्यातितुच्छत्वं ध्वनितम् ॥ ८ ॥

गो० टी०—न त्वामिति । महात्मा महास्वभावः मतिमान् कर्तव्याकर्तव्यविवेकशीलः अयं वाली त्वां न जिघांसामि न मारयितुमिच्छामि, चर यथेष्टं गच्छेति मामुवाचेति यत् तद्वचः तस्यैव अनुरूपं सदृशम् तद्बुद्धिशीलतुल्यम् । इदं भ्रातृवधरूपं कर्म तु मे दुरात्मनो दुर्मतेरनुरूपम् ॥ ८ ॥

९ ] ति० टी०—कामः पुरस्कृतो येन तादृशोऽपि भ्राता राज्यस्य तत्सुखस्य दुःखस्य भ्रातृवधे भाविदुःखस्य सारं तारतम्यं विचिन्तयन्विचारयन्कथं भ्रातुर्वधं रोचयेत । एवं चाहं तत्तारतम्यानभिज्ञ इति भावः ॥ ९ ॥

रा० टी०—भ्रातेति । कामपुरस्कृतः उत्कटेच्छावानपि भ्राता राज्यस्य भ्रातृवधजनितराज्यसुखस्य दुःखस्य भ्रातृवधानन्तरजायमानक्लेशस्य च सारं प्राबल्यं विचिन्तयन्सन् महागुणस्य भ्रातुर्वधं कथं विरोचयेत । एतेनैवं लब्धराज्यस्य दुःखप्रदत्वं ध्वनितम् ॥ ९ ॥

गो० टी०—भ्रातेति । राज्यस्य भ्रातृवधसाध्यस्य दुःखस्य वधानन्तरभाविदुःखस्य च सारम् उत्कर्षम् न चिन्तयन् उभयोस्तारतम्यमचिन्तयन्नित्यर्थः ॥ ९ ॥

१० ] ति० टी०—उक्तमेव विवृणोति—वधो हीति । मां हन्तुं तस्य मतिर्नासीदित्यर्थः । तत्र हेतुः—स्वमाहात्म्यव्यतिक्रमादनुचितकर्मकारी वालीत्ययशःप्रसङ्गभयात् । प्राणहारी भ्रातुरिति शेषः । व्यतिक्रमोऽन्यायः ॥ १० ॥

१ तीव्रमिति गो. पाठः । २ कुमार तप्स्ये इति गो. पाठः । ३ ऋश्येति गो. पाठः । ४ त्वामिति गो. रा. पाठः । ५ महेति गो. रा. पाठः । ६ राघवेति गो. पाठः । ७ कृतः सन्निति गो. पाठः ।

द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन् । सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥ ११ ॥
भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः । मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥ १२ ॥
अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम् ।
प्राप्तोऽस्मि पाप्मानमिदं वयस्य भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३ ॥
पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च ।
को नाम पाप्मानमिमं सहेत शाखामृगस्य प्रतिपत्तुमिच्छेत् ॥ १४ ॥
नार्हामि संमानमिमं प्रजानां न यौवराज्यं कुत एव राज्यम् ।
अधर्मयुक्तं कुलनाशयुक्तमेवंविधं राघव कर्म कृत्वा ॥ १५ ॥

रा० टी०–भ्रातुर्महत्त्वं प्रकटयन्नाह–वध इति । स्वमाहात्म्यव्यतिक्रमात् आत्ममहत्त्ववैपरीत्यभयात् मे वधः मन्निष्ठप्राणवियोगः मतः वालिसंमतिविषयीभूतो नासीत् । मम बुद्धिदौरात्म्यात् बुद्धेर्दुष्टत्वात् प्राणहारी बन्धुप्राणविघातकः मम व्यतिक्रमः मत्कर्तृकमर्यादातिक्रमणमासीत् ॥ १० ॥

गो० टी०–महात्मेत्युक्तं विशदयति–वध इति । अस्य वालिनः स्वमाहात्म्यस्य स्वमहत्त्वस्य अव्यतिक्रमात् अनतिक्रमात् मे वधः मन्निधनं मतो नासीत् । मम तु बुद्धिदौरात्म्यात् बुद्धेर्दुःस्वभावात् प्राणहारी भ्रातृवधकारी व्यतिक्रमः अमर्यादा आसीत् ॥ १० ॥

११ ] ति० टी०–द्रुमशाखयाऽवभग्नः पलायितः, अत एव मुहूर्तं परिनिष्टनंस्त्वामाक्रोशन्यदाऽभवं तदा तेन भ्रात्रा सान्त्वयित्वा पुनरेवं दुश्चेष्टां कर्तुं नार्हसीत्युक्तः, न पुनर्मां हतवानित्यर्थः ॥ ११ ॥

रा० टी०–द्रुमेति । द्रुमशाखावभग्नः वालिना द्रुमशाखया निहतः अत एव मुहूर्तं परिनिष्टनन् त्वदाह्वानार्थं दीनशब्दं कुर्वन्नहम् अनेन वालिना सान्त्वयित्वा त्वां न हनिष्यामीत्यायुक्त्वा पुनः कर्तुं मया सह युद्धमिति शेषः, त्वं नार्हसीत्युक्तः । तुशब्द इत्यर्थे ॥ ११ ॥

गो० टी०–मतो नासीदित्युक्तं विशदयति–द्रुमेति । परिनिष्टनन् आर्तरवं कुर्वन् न पुनः कर्तुमर्हसि युद्धमिति शेषः अत्रेतिकरणं द्रष्टव्यम् ॥ ११ ॥ १२ ॥

१२ ] ति० टी०–अत एव–भ्रातृत्वमित्यादि ॥ १२ ॥

रा० टी०–भ्रातृत्वमिति । अनेन वालिना भ्रातृत्वादिः रक्षितः मया तु क्रोधादि प्रदर्शितं रक्षितम् । तत्र कपित्वं चाञ्चल्यम् ॥ १२ ॥

१३ ] ति० टी०–अचिन्तनीयं चिन्तयितुमप्ययोग्यम् अत एवार्यैर्नित्यं परिहरणीयं यत्किंचिदुपाधिनाप्यनीप्सनीयम् आत्मकर्तृकमपि सर्वथाऽनवेक्षणीयं दर्शनानर्हमिदं प्राप्तोऽस्मि । इदंपदार्थमाह—पाप्मानमिति । हे वयस्य ! भ्रातुर्ज्येष्ठस्य भ्रातुर्वधात्पाप्मानं तद्रूपं वास्त्वित्यर्थः । त्वाष्ट्रो विश्वरूपः ॥१३॥

रा० टी०–अचिन्तनीयमिति । वयस्य हे सखे ! त्वाष्ट्रवधात् वृत्रासुरहननात् इन्द्र इव भ्रातुर्वधात् अचिन्तनीयं चिन्तयितुमप्ययोग्यमत एव परिवर्जनीयं निवर्तयितव्यम् अत एव अनीप्सनीयम् अवाञ्छितव्यम् अत एव स्वनवेक्षणीयं विचारायोग्यमिमं पाप्मानं पापं प्राप्तोऽस्मि ॥ १३ ॥

गो० टी०–अचिन्तनीयमिति । अचिन्तनीयम् अपरिच्छेद्यमित्यर्थः । परिवर्जनीयं साधुभिस्त्यक्तव्यम् । अनीप्सनीयम् अनभिलषणीयं कदाचिदपि इच्छाया अयोग्यमित्यर्थः । स्वनवेक्षणीयं सुतरामदर्शनीयं जुगुप्सितमित्यर्थः । त्वष्टुः पुत्रः त्वाष्ट्रः विश्वरूपः तं हत्वा इन्द्रो महान्तं पाप्मानमगमदिति कथा ॥ १३ ॥

१४ ] ति० टी०–प्रतिपत्तुं प्राप्तुं क इच्छेत्को वा सहेत ग्रहीतुं शक्नुयादित्यर्थः ॥ १४ ॥

रा० टी०–ननु कृतपापोऽपीन्द्रः शुद्ध एवेत्यत आह–पाप्मानमिति । इन्द्रस्य पाप्मानं पापं मह्यादयः जगृहुः शाखामृगस्य मम तु इमं भ्रातृवधजनितं पाप्मानं पापं प्रतिपत्तुं प्राप्तुं क इच्छेत्, न कोऽपीत्यर्थः ॥ १४ ॥

गो० टी०–पाप्मानमिति । इन्द्रस्य परमैश्वर्यसंपन्नस्य पाप्मानं मह्यादयः ऊषरफेननिर्यासऋतुरूपेण जगृहुः खातपूरणादिवरप्रदत्वात् । मम तु शाखामृगस्य कस्याप्यनुपकारकस्य पाप्मानं प्रतिपत्तुं किंचिद्दूरं प्राप्तुमिच्छन् को नाम क्षमेत, ग्रहीतुमिति शेषः । यद्यपि विश्वरूपाख्यायिकायाम् त्वाष्ट्रशिरश्छेदकृतब्रह्महत्यात्रितयं पृथिवीवनस्पतिस्त्रिय एव जगृहुरित्युक्तं तथापि शाखान्तरानुरोधेन जलेनापि कश्चिदंशो गृहीत इत्यवगन्तव्यम् ॥ १४ ॥

१५ ] ति० टी०–प्रजानां संमानं ताभिः क्रियमाणं स्वसंमाननमपि नार्हामि पापग्रस्तत्वात् । न यौवराज्यं ज्येष्ठस्य पुत्रमङ्गदं राज्ये कृत्वा यथाप्राप्तं यौवराज्यमित्यर्थः । एवंविधं कर्म कृत्वा राज्यं सर्वथा नार्हामीत्यन्वयः ॥ १५ ॥

रा० टी०–ननु राज्यप्राप्त्यनन्तरं यागादिना शुद्धिर्भवितेत्यत आह–नेति । हे राघव ! अधर्मयुक्तम् अत एव कुलना-

१ इमं नरेन्द्रेति गो. रा. पाठः । २ क्षमेतेति गो. पाठः । ३ इच्छन्निति गो. पाठः ।

पापस्य कर्ताऽस्मि विगर्हितस्य क्षुद्रस्य लोकापकृतस्य लोके ।
शोको महान्मामभिवर्ततेऽयं वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥१६॥
सोदर्यघातापरगात्रवालः संतापहस्ताक्षिशिरोविषाणः ।
एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः ॥१७॥
अंहो बतेदं नृवराविषह्यं निवर्तते मे हृदि साधुवृत्तम् ।
अग्नौ विवर्णं परितप्यमानं किट्टं यथा राघव जातरूपम् ॥१८॥
महाबलानां हरियूथपानामिदं कुलं राघव मन्निमित्तम् ।
अस्याङ्गदस्यापि च शोकतापादर्धस्थितप्राणमितीव मन्ये ॥ १९ ॥

शयुक्तं कुलविध्वंसकारकम् एवंविधं भ्रातृविनाशनं कर्म कृत्वा प्रजानां संमानं प्रजाकर्तृकसत्कारं नार्हामि अत एव यौवराज्यं नार्हामि राज्यं कुतः, राज्यप्राप्तेर्न संभावनेत्यर्थः॥ १९॥

गो० टी०—नार्हामीति । कुलनाशयुक्तं कुलनाशफलकं वालिविनाशेनाङ्गदादेरजीवनादिति भावः । एवंविधं भ्रातृवधरूपं कर्म कृत्वा प्रजानां संमानं प्रजाकर्तृकराजसंमानं नार्हामि। अत एव यौवराज्यमेव नार्हामि कुतो महाराज्यमिति भावः ॥ १५ ॥

१६ ] ति० टी०—क्षुद्रस्य क्षुद्रयोग्यस्य लोके इहलोके विगर्हितस्य निन्दितस्य लोकापकृतस्य परलोकेऽपरमार्थसाधनस्य पापस्य कर्ताऽस्मि । अतो महाञ्शोको मामिव तथा भिवर्तते यथा वृष्टेरम्बुवेगो निम्नम् । इवशब्दस्तथाशब्दार्थे ॥ १६ ॥

रा० टी०—पापस्येति। लोके सर्वभुवने गर्हितस्य निन्दितस्य अत एव क्षुद्रस्य नीचजनयोग्यस्य लोकापकृतस्य राजापकृतिद्वारा सर्वजनापकारस्य कर्ताऽस्मि अत एव वृष्टेरम्बुवेगः निम्नमधोदेशमिव अयं महान् शोकः मामभिवर्तते मयि तिष्ठति ॥ १६ ॥

गो० टी०—पापस्येति । क्षुद्रस्य दुष्टस्य विगर्हितस्य विशेषेण शिष्टैर्निन्दितस्य लोकापकृतस्य सर्वलोकैस्त्यक्तस्य पापस्य कर्ताऽस्मि । एतादृशपापस्योत्तरपापहेतुत्वज्ञापनाय तृच्प्रत्ययः । वृष्टेरुत्पन्नोम्बुवेगो यथा तादृशशोको मां निम्नमिवाभिवर्तते । उभयत्राप्युपमावाचकप्रयोगो महाकविनिबन्धनेष्वस्त्येव ॥१६॥

१७ ] ति० टी०—सोदर्यघात एवापरगात्रभागो वालश्च यस्य तज्जसंताप एव हस्ताक्षिशिरोविषाणं यस्य सः दृप्तो मत्तः प्रवृद्धो महान् ॥ १७ ॥

रा० टी०—सोदर्येति । सोदर्यघातः समानोदर्यविध्वंसः स एव अपरगात्रवालः पुच्छकेशः यस्य सः, संतापाः अनेकविधखेदाः हस्ताक्षिशिरोविषाणानि यस्य सः, एनोमयः पापरूपः प्रवृद्धो दृप्तो हस्ती नदीकूलमिव मामभिहन्ति ॥ १७ ॥

गो० टी०—सोदर्येति । सोदर्यस्य भ्रातुः घात एवापरगात्रवालौ अपरकायपुच्छौ यस्य स तथा, संताप एव हस्तादीनि यस्य स तथा । वधादपि संतापस्य प्राधान्यादूर्ध्वकायत्वरूपणं, वधप्रकारवैविध्यात्संतापवैविध्याच्च नानावयवत्वेन रूपणम् । "एनोमय" इति स्वार्थे मयट् । पापमेव हस्ती । एनसो दृप्तत्वमुत्कटत्वं तस्य प्रवृद्धत्वं महत्वं गजस्योन्नतत्वम् ॥ १७ ॥

१८ ] ति० टी०—हे नृवर ! इदमंहः पापम् । बत खेदे । अविषह्यं सोढुमशक्यं प्राप्य मे हृदि स्थितं साधु वृत्तं जन्मान्तरार्जितपुण्यं निवर्तते । विवर्णम् अत एवाग्नौ परितप्यमानं जातरूपमविषह्यमशक्यसहावस्थानं प्राप्य किट्टं मलं यथा निवर्तते तथेत्यर्थः । यथा बलवतोत्तमेनाधमः स्थातुं न शक्नोति, तथा बलवताऽधमेन सहोत्तमोऽपीत्याशयः । एवं चानेन पापेन सर्वपुण्यक्षयो जात इति तात्पर्यम् । केचित्तु—अग्नौ परितप्यमानं जातरूपं स्वर्णं यथा विवर्णं विवर्णताकारकं किट्टं दाहकक्षारद्रव्यं प्राप्य निवर्तते भस्म भवति तथेत्यर्थ इत्याहुः ॥ १८ ॥

रा० टी०—अंह इति। हे नृवर! अविषह्यं दुःसहम् इदं भ्रातृवधजनितमंहः पापं मे हृदि विद्यमानं साधुवृत्तं साध्वाचरणं निवर्तते निवर्तयति । तत्र दृष्टान्तः—अग्नौ परितप्यमानं विवर्णं मलिनं जातरूपं सुवर्णं किट्टं स्वमलं यथा ॥ १८ ॥

गो० टी०—हे नृवर राघव ! मे हृदि इदं साधु वृत्तम् अंहः स्वेन सह वर्तमानं पापम् अविषह्यम् असोढ्वा निवर्तते निर्गच्छति । कथमिव विवर्णं जातरूपम् अग्नौ परितप्यमानं सत् किट्टं यथा ऋजीषांशमविषह्य निवर्तते किट्टाद्वियुज्यत इत्यर्थः । बतेति विषादे ॥ १८ ॥

१९ ] ति० टी०—मन्निमित्तम् मयैतत्स्वामिवधादिति भावः । अपि चास्याङ्गदस्य शोकतापाच्च। इतीव मन्य इत्युत्प्रेक्षाबोधकम् ॥ १९ ॥

रा० टी०—महाबलानामिति । महाबलानामतिबलवतां हरियूथपानां वानराधिपानामिदं कुलं मन्निमित्तं मदभिन्ननिमि-

१ चैवेति गो. पाठः । २ ऽविषह्येति गो. पाठः । ३ विवर्णमन्नाविति गो.पाठः ।

सुतः सुलभ्यः सुजनः सुवश्यः कुतस्तु पुत्रः सदृशोऽङ्गदेन ॥
न चापि विद्येत स वीर देशो यस्मिन्भवेत्सोदरसंनिकर्षः ॥ २० ॥
अद्याङ्गदो वीरवरो न जीवेज्जीवेत माता परिपालनार्थम् ।
विना तु पुत्रं परितापदीना सा नैव जीवेदिति निश्चितं मे ॥ २१ ॥
सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्रात्रा च पुत्रेण च सख्यमिच्छन् ।
इमे विचेष्यन्ति हरिप्रवीराः सीतां निदेशे परिवर्तमानाः ॥ २२ ॥
कृत्स्नं तु ते सेत्स्यति कार्यमेतन्मय्यप्यतीते मनुजेन्द्रपुत्र ।
कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥ २३ ॥
इत्येवमार्तस्य रघुप्रवीरः श्रुत्वा वचो वालिजघन्यजस्य ।
संजातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव ॥ २४ ॥

स्मात् अङ्गदस्यातीवशोकसंतापात् हेतोः अर्धस्थितप्राणं मन्ये । यद्वा मन्निमित्तमहं निमित्त यस्मिन् वालिवधजनितदुःखे तत् प्राप्य अतीव अत्यन्तम् अङ्गदस्य शोकतापात् शोकतापं विज्ञाय विद्यमानमिदं कुलम् अर्धस्थिताः प्राणा यस्मिन् तत् अहं मन्ये ॥ १९ ॥

गो० टी०–महाबलानामिति । अपि चेति समुच्चयः पूर्वश्लोकोक्तदोषापेक्षया मन्निमित्तं मत्तो निमित्तात् अस्याङ्गदस्य शोकतापात् महाबलानां हरियूथपानाम् इदं परिदृश्यमानं कुलं यूथम् अर्धस्थितप्राणमिव भवतीति मन्ये । 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः ॥ १९ ॥

२० ] ति० टी०–सुलभ्यः सुलभ इत्यर्थः ॥ २० ॥

रा० टी०–नन्वङ्गदादेरतिशोकवत्त्वे सुतान्तराण्युत्पाद्य सुजनान्वशीकृत्य भोगान् भुङ्क्ष्वेत्यत आह–सुत इति । सुतः पुत्रान्तरः सुलभ्यः सुजनः सुवश्यः एतत् द्वयं न दुर्लभमित्यर्थः, अङ्गदेन सदृशः पुत्रस्तु कुतो लभ्यः न लभ्य इत्यर्थः, सोदरसंनिकर्षः वालिसामीप्यं यस्मिन्देशे भवेत् स देशोऽपि न विद्येत । एतेन भ्रात्राद्यभावसत्त्वे राज्यभोगादि दुःखभोग एवेति सूचितम् ॥ २० ॥

गो० टी०–सुत इति । सुजनः सौजन्यवान् सुवश्यः सुतरां वश्यः स्वाधीनः सुतः सुलभ्यः लोके सुखेन लब्धुं योग्यः अङ्गदेन तुल्यः पुत्रस्तु कुतो हेतोः सुलभ्यः दुर्लभ इत्यर्थः । सोदरसंनिकर्षोऽपि दुर्लभ इत्याह–न चापीति । सन्निकर्षः सन्निधानम् ॥ २० ॥

२१ ] ति० टी०–अङ्गदो न जीवेत् । यदि जीवेत्तदा माता तारा पुत्रपालनाय जीवेत् । तदभावे तु सा सर्वथा न जीवेदित्यर्थः ॥ २१ ॥

रा० टी०–अद्येति । अद्य एतादृशपितृवियोगसमये वीरवरोऽङ्गदो न जीवेत् यदि जीवेत् तदा माता तारा परिपालनार्थं स्वसुतरक्षार्थं जीवेत् । पुत्रं विना तु परितापदीना अतिखेदेन क्षीणा सा तारा नैव जीवेदिति मे निश्चितम् । जीवेदित्युभयान्वयि यदीत्यध्याहृतम् ॥ २१ ॥

गो० टी०–अङ्गदो यदि जीवेत्तदा ताराऽपि जीवेत् अन्यथा नेत्याह–यदीति ॥ २१ ॥

२२ ] ति० टी०–सख्यं समानत्वम् । निदेशे त्वदाज्ञायाम् ॥ २२ ॥

रा० टी०–स इति । सः भ्रात्रादिवियुक्तोऽहं भ्रात्रादिना सख्यमिच्छन् सन् अतिदीप्तमग्निं प्रवेक्ष्यामि । ननु मत्कार्यसिद्धिः कथं भवितेत्यत आह–निदेशे मदाज्ञायां परिवर्तमाना इमे हनुमत्प्रभृतयो हरिप्रवीराः सीतां विचेष्यन्ति मार्गयिष्यन्ति ॥ २२ ॥

गो० टी०–अङ्गदमरणं निश्चित्याह–सोऽहमिति । पुत्रेण अङ्गदेन 'भ्रातॄणामेकजातानां यद्येकः पुत्रवान् भवेत् । तेन पुत्रेण ते सर्वे पुत्रिणो मनुरब्रवीत् ॥' इति स्मृतिः । सख्यमिति तन्मरणे मरणं हि स्नेहस्य पराकाष्ठा । निदेशे त्वदाज्ञायाम् ॥ २२ ॥

२३ ] ति० टी०–अनुजानीहि अग्निप्रवेशायेति शेषः ॥ २३ ॥

रा० टी०–कृत्स्नमिति । तु यतो मयि अतीते मृतेऽपि ते कृत्स्नं कार्यं सेत्स्यति अतः कुलस्य हन्तारम् अत एव कृतागसम् अत एव अजीवनार्हं मामनुजानीहि अग्निं प्रवेष्टुमाज्ञापय ॥ २३ ॥

गो० टी०–कृत्स्नमिति । अप्रतीते अप्रकाशे मृत इति यावत्, मां विनाऽपि त्वं सर्वं कार्यं कर्तुं क्षम इत्यर्थः ॥ २३ ॥

२४ ] ति० टी०–संजातबाष्पो दुःखिप्राणिदर्शनेन । महतामयं स्वभावः ॥ २४ ॥

रा० टी०–इत्येवमिति । एवमार्तस्य दुःखितस्य वालि-

१ स्थित गो. पाठः । २ यदीति गो. पाठः । ३ वरार्हेति गो. पाठः । ४ जीवेच्चेति गो. पाठः । ५ तारा नेति गो. पाठः । ६ तवेति गो. पाठः ।

तस्मिन्क्षणेऽभीक्ष्णमवेक्षमाणः क्षितिक्षमावान्भुवनस्य गोप्ता ।
रामो रुदन्तीं व्यसने निमग्नां समुत्सुकः सोऽथ ददर्श ताराम् ॥ २५ ॥
तां चारुनेत्रां कपिसिंहनाथां पतिं समाश्लिष्य तदा शयानाम् ।
उत्थापयामासुरदीनसत्त्वां मन्त्रिप्रधानाः कपिराजपत्नीम् ॥ २६ ॥
सा विस्फुरन्ती परिरभ्यमाणा भर्तुः समीपादपनीयमाना ।
ददर्श रामं शरचापपाणिं स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७ ॥
सुसंवृतं पार्थिवलक्षणैश्च तं चारुनेत्रं मृगशावनेत्रा ।
अदृष्टपूर्वं पुरुषप्रधानमयं स काकुत्स्थ इति प्रजज्ञे ॥ २८ ॥
तस्येन्द्रकल्पस्य दुरासदस्य महानुभावस्य समीपमार्या ।
आर्ताऽतितूर्णं व्यसनं प्रपन्ना जगाम तारा परिविह्वलन्ती ॥ २९ ॥

जघन्यजस्य वाल्यनुजस्य इति वचः श्रुत्वा संजातबाष्पो रामो मुहूर्तं विमना बभूव ॥ २४ ॥

गो० टी०–अथ रामस्याश्रितकार्यमेव स्वकार्यं नतु स्वतः किंचिदस्ति । अत एव मम शत्रुर्वालीति सुग्रीवेणोक्ते तं निहत्य तास्मिन्नश्रूणि मुक्त्वा शोचति सति स्वयमपि तथा शोचति स्मेत्याह–इत्येवमिति । यद्वा सर्वेश्वरस्य कुत्रचिद्विपर्यीकारस्तत्संतानपर्यन्तः घण्टाकर्णमालाकारादिष्विवेत्याह–इत्येवमिति । रघुप्रवीर इत्यनेन स्वस्य वानरेण संबन्धान्तरप्रसक्तिर्नास्तीत्युच्यते । वाल्यनुजस्य आर्तस्य वाल्यनुजे आर्ते सतीत्यर्थः, वचः श्रुत्वा तद्वचनं च श्रुत्वा सञ्जातबाष्पः तदार्तिनिमित्तकार्तिक इत्यर्थः । परवीरहन्ता आश्रितविरोधिनिरसनशीलः ताच्छील्ये तृच् । सुग्रीववचनात् कृतवालिवधत्वेन तच्छोचनादशोचदित्यर्थः । अनेन रामस्य क्रोधशोकावाश्रितक्रोधशोकायत्तावित्ययमर्थः सूचितः ॥ २४ ॥

२५ ] ति० टी०–तस्मिन्क्षणे तस्मिन्नवसरे तारां रुदन्तीमभीक्ष्णं वारंवारमवेक्षमाणो जीवन्तीमिच्छन्क्षितिरिव क्षमावान्समुत्सुकः शोकापनयनायेति शेषः ॥ २५ ॥

रा० टी०–तस्मिन्निति । क्षितिक्षमावान् पृथ्वीक्षमासदृशक्षमाविशिष्टः समुत्सुकस्तारावलोकनेच्छुः रामः अभीक्ष्णमवेक्षमाणः सन् व्यसने दुःखसागरे निमग्नां तारां ददर्श ॥२५॥

गो० टी०–तस्मिन्निति । तस्मिन्क्षणे तस्मिन्नवसरे अभीक्ष्णं पुनः पुनः अवेक्ष्यमाणः तारयेति शेषः, अनेन तारायाः रामविषयमानुकूल्यमुक्तम् । क्षितिक्षमावान् क्षितेर्यादृशी क्षमा तादृशक्षमावान् । क्षमावत्त्वभुवनगोप्तृत्वगुणौ तारया चिन्तितौ कविनोक्तौ । रुदन्तीमित्यादिना तारायाः दयनीयतोक्ता । समुत्सुकः शोकापनयने कृतादरः ॥ २५ ॥

२६–२७ ] ति० टी०–कपिसिंहनाथां कपिसिंहानां स्वामिनीम् ॥ २६ ॥ २७ ॥

रा० टी०–तामिति । कपिसिंहो वाली नाथो यस्यास्ताम् अदीनसत्त्वां न दीनाः सत्त्वाः सत्त्वावन्तो यस्यास्तामतिदीनामित्यर्थः, कपिराजपत्नीं तां तारां मन्त्रिप्रधानाः उत्थापयामासुः ॥ २६ ॥

रा० टी०–सेति । परिरभ्यमाणा परिरभमाणा भर्तारमालिङ्गयन्ती अत एव विस्फुरन्ती भर्तुः समीपादपनीयमाना सा तारा शरचापपाणिं रामं ददर्श । अविस्फुरन्तीति छेदो वा ॥ २७ ॥

गो० टी०–रामागमनमालोक्य मन्त्रिणस्तामुत्थापयामासुरित्याह–तामिति ॥ २६ ॥ २७ ॥

२८ ] ति० टी०–पुरुषप्रधानं पुरुषश्रेष्ठम् । सोऽङ्गदोक्तः काकुत्स्थोऽयमिति प्रजज्ञ इति संबन्धः ॥ २८ ॥

रा० टी०–सुसंवृतमिति । पार्थिवलक्षणैः राजोचितचिह्नैः सुसंवृतं संयुक्तमत एव चारुनेत्रमदृष्टपूर्वं पूर्वं न दृष्टः इत्यदृष्टपूर्वः "सह सुपा" इति समासः । किंच न दृष्टं दर्शनं पूर्वं यस्य तं, किंच न दृष्टः पौर्वकालिकदर्शनकर्मीभूतभिन्नः स एव पूर्वः सर्वेषामादिस्तं पुरुषप्रधानं तं रामं मृगशावस्य मृगबालस्य नेत्रे इव नेत्रे यस्याः सा तारा अयं सः सुग्रीवमित्रीभूतः काकुत्स्थः ककुत्स्थवंशोद्भवः इति प्रजज्ञे बुबुधे ॥ २८ ॥

गो० टी०–सुसंवृतमिति । पार्थिवलक्षणैः राजलक्षणैः सुसंवृतम् अन्यूनतया युक्तमित्यर्थः, चारुनेत्रम् पुण्डरीकाक्षं मृगशावनेत्रा 'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्' इति न्यायेन स्वयं चारुनेत्रतया तत्रैव प्रथमं दृष्टिं न्यधादिति भावः । अदृष्टपूर्वम् इतः पूर्वं कुत्राप्यदृष्टचरं योगं विना अदृष्टमित्यर्थः । पुरुषप्रधानं पुरुषोत्तमम् अयं स इति विजज्ञे । यः पूर्वं भर्तारं हतवान् सोऽयमिति ज्ञातवती । यद्वा यः पूर्वमङ्गदाच्छ्रुतः यद्वा यः पूर्वं पुण्डरीकाक्षत्वादिगुणविशिष्टतया महाजनेभ्यः श्रुतः स एवायमित्यर्थः । अत एव वक्ष्यति–त्वमप्रमेयश्चेति ॥ २८ ॥

२९ ] ति० टी०–परिविह्वलन्ती कष्टेन स्खलनपूर्वं गच्छन्ती ॥ २९ ॥

रा० टी०–तस्येति । इन्द्रकल्पस्य इन्द्रादिनिर्माणे सम-

१ अवेक्ष्यमाण इति गो. पाठः । २ नाथमिति गो. पाठः । ३ वीरेति गो. पाठः । ४ सकाशादिति गो. पाठः । ५ व्यसनाभिपन्नेति गो. पाठः ।

[1]तं सा समासाद्य विशुद्धसत्त्वं[2] शोकेन संभ्रान्तशरीरभावा।
मनस्विनी वाक्यमुवाच तारा रामं रणोत्कर्षणलब्धलक्ष्यम्[3] ॥ ३० ॥
त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधर्मकश्च[4]।
अक्षीणकीर्तिश्च[5] विचक्षणश्च क्षितिक्षमावान्क्षतजोपमाक्षः ॥ ३१ ॥

र्थस्य अत एव दुरासदस्य पराभावयितुमशक्यस्य तस्य रामस्य समीपमार्ता अति दुःखिता अत एव व्यसनम् उरआयङ्गताडनाय हस्तादिप्रक्षेपं प्रपन्ना प्राप्ता अत एव परिविह्वलन्ती क्वचित् क्वचित् स्खलन्ती तारा अतितूर्णं जगाम ॥ २९ ॥

गो० टी०–तस्येति। व्यसननिवर्तनक्षमा गुणा उच्यन्ते। परिविह्वलन्ती मूर्छन्तीत्यर्थः ॥ २९ ॥

३० ] ति० टी०–संभ्रान्तो विस्मृतः शरीरभावो राजस्त्रीत्वादिर्यया सा। रणेषु युद्धेषूत्कर्षणेन सर्वाधिकोत्कर्षेण लक्ष्यं येन। सर्वतोऽधिकवेध्यवेधक इत्यर्थः ॥ ३० ॥

रा० टी०–तमिति। विशुद्धसत्त्वं प्राकृतविलक्षणसत्त्वविशिष्टं रणोत्कर्षणलब्धलक्ष्यं रणे यदुत्कर्षणमाश्रयोत्कर्षस्तेन लब्धं लक्ष्यं देवादिकर्तृकदर्शनकर्मता येन तं रामं शोकेन संभ्रान्तः वैपरीत्यं प्राप्तः शरीरभावः देहधर्मो यस्याः सा मनस्विनी सा प्रसिद्धा तारा उवाच ॥ ३० ॥

गो० टी०–सेति। रणे उत्कर्षणेन उत्कर्षेण लब्धः लक्षः शरव्यं यस्य तथा एकेन शरेण स्वभर्तृहन्तारमित्यर्थः। तं रामं शोकेन संभ्रान्तः अयथाभूतः शरीरभावः शरीरकृतभावः यस्याः सा कुपितेत्यर्थः, मनस्विनी मत्प्रियहन्तारं यावच्छक्ति परुषाणि वदेयमिति कृताध्यवसाया समासाद्य विशुद्धसत्त्वा रामसंनिधिमाहात्म्येन निवृत्तकालुष्यतया समुन्मिषितशुद्धसत्त्वा तारा वाक्यमुवाच परुषभाषणोन्मुखयैव वाचा अस्तौषीदित्यर्थः ॥ ३० ॥

३१ ] ति० टी०–अप्रमेयो देशतः कालतश्चापरिच्छेद्यो गुणैर्यत्तया दुर्ज्ञेयश्च। दुरासदो योगिभिरपि प्राप्तुमशक्यः। उत्तमधर्मकः पुरुषोत्तमधर्मा। अक्षीणकीर्तिः पापवदाभासमानेनापि कर्मणेति शेषः। अत एव पुरुषोत्तमधर्मा क्षतजोपमाक्षो रक्ताक्षः ॥ ३१ ॥

रा० टी०–तद्वचनाकारमाह–त्वमिति। अप्रमेयः अनियतप्रभावः अत एव दुरासदः पराभावयितुमशक्यः अत एव जितेन्द्रियः नित्यं वशीकृतसकलकरणः अत एव उत्तमधर्मकः उत्तमः सर्वकालमधर्मसंसर्गशून्यत्वेन अतिश्रेष्ठः धर्मो यस्मिन् सः अत एव क्षितिक्षमावान् अत एव न क्षीणा कस्मिंश्चित्समये निवृत्ता कीर्तिर्यस्य सः अत एव विचक्षणः सर्वविलक्षणः क्षतजोपमाक्षः अरुणनयनस्त्वमसीति शेषः ॥ ३१ ॥

गो० टी०–एवं पुरुषोत्तमत्वपुण्डरीकाक्षत्वादिभिरव्यसंहितं परत्वं तारानुसंधत्ते—त्वमप्रमेयश्चेति। त्वं वक्ष्यमाणकल्याणगुणानुगुणधर्मिवैलक्षण्ययुक्तः अप्रमेयः "वेदाहं–" इत्युपक्रम्य "महान्तं क इत्था वेद" इति देवैरप्यपरिच्छेद्यः, अप्रमेयः "सो अङ्ग वेद यदि वा न वेद" इति स्वेनापि परिच्छिद्य ज्ञातुमशक्यः, त्वमप्रमेयः प्रत्यक्षगम्योऽपि मनसा दुर्विभाव्यस्वभावः, । त्वमप्रमेयः शरचापधरोऽपि त्वं शङ्खचक्रधरोऽसि, त्वमप्रमेयः सौलभ्यदशैव ? न परिच्छेत्तुं शक्यते, त्वमप्रमेयः परिकररहितोऽपि प्रतापातिशयेन निरवधिकपरिकरपरिगत इव दुरवगाहोऽसीत्येकवचनस्य भावः। एवमन्तःकरणेन दुष्प्रापोऽपि किं बाह्यकरणैः सुप्रापः नेत्याह–दुरासदश्च। मनसाऽपि दुरासदः कथं प्रकारान्तरेण स्वासद इति भावः। दुरासदश्च 'महाजनो येन गतः स पन्थाः' इत्युक्तं सन्मार्गं विना पथस्खलितेन दुष्प्राप इत्यर्थः। दुरासदश्च "षद्लृ–विशरणगत्यवसादनेषु" इति धातुपाठोक्तार्थत्रयमपि तन्त्रेणोच्यते। नित्यत्वान्न विशरणार्हः, विभुत्वान्न विचालनार्हः, नित्यानन्दत्वान्नावसादमापादयितुं शक्य इत्यर्थः। दुरासदश्च वालिवधकुपितानां प्रतिकाराय संनिधानमपि गन्तुमशक्य इत्यर्थः। दुरासदश्च बाह्यकुदृष्टिभिरुक्त्याभासैरप्रकम्प्यवैभव इत्यर्थः। एवमप्रमेयत्वदुर्धर्षत्वाभ्यां सुप्राप्तोऽपि न परदारराज्यपरिग्रहलुब्ध इत्याह–जितेन्द्रियश्च। निःस्पृहतया सुग्रीवाय दत्तराज्य इत्यर्थः। जितेन्द्रियश्च यः कोऽपि पुरुषः कांचिद्योषितमालक्ष्य निर्वर्णयति त्वं तु न तथा 'न रामः परदारान् वै चक्षुर्भ्यामपि पश्यति' इत्युक्तेः जितेन्द्रियश्च। "पश्यत्यचक्षुः स शृणोत्यकर्णः। अपाणिपादो जवनो ग्रहीता" इत्यादुक्तरीत्या सर्वेन्द्रियैर्विनापि सर्वं सर्वत्र सर्वदा जानन्नित्यर्थः। जितेन्द्रियः 'दुर्ग्रहं मनसाप्यन्यैरिन्द्रियैरपि दुर्जयैः' इत्युक्तरीत्या वाङ्मनसागोचरः। त्वं जितेन्द्रियः त्वमेव जितेन्द्रियः सर्वं वाक्यं सावधारणम् अब्भक्षो वायुभक्ष इतिवत् 'अहल्यायै जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम्' इत्युक्तरीत्या त्वद्व्यतिरिक्ताः सर्वेऽपि विषयचपलाः। त्वमेको जितेन्द्रियः इत्यर्थः। एवं विरक्तोऽप्ययमस्मद्धिंसया अधार्मिक इति मया स्थितं न तथेत्याह–उत्तमधार्मिकश्च स्वाश्रितसंरक्षणार्थमेवंविधव्यापारकारितया परमधार्मिकः, स्वार्थकर्मकारी अधमधार्मिकः, स्वपरसाधारणकर्मकारी मध्यमधार्मिकः, परार्थमेव प्रवर्तमान उत्तमधार्मिकः। यद्वा वर्णाश्रमाचारसमाराध्यो धार्मिकः, उत्तमधार्मिको भक्तिमार्गभजनीयः। यद्वा उत्तमधार्मिकः शरणागतसंरक्षकः। यद्वा उपायो गुरुरेव स्यात्तेनानुगृहीतो ब्रह्मलोकं गच्छतीत्युक्तधर्मवानुत्तमधार्मिकः। यद्वा आनृशंस्यं परो धर्म इत्युक्तधर्म-

१ सा तामिति गो. पाठः। २ सत्त्वेति गो. पाठः। ३ लक्ष्ममिति गो. पाठः। ४ धार्मिक इति गो. पाठः। ५ अक्षय्येति गो. पाठः।

त्वमात्तबाणासनबाणपाणिर्महाबलः संहननोपपन्नः ।
मनुष्यदेहाभ्युदयं विहाय दिव्येन देहाभ्युदयेन युक्तः ॥ ३२ ॥
येनैवं बाणेन हतः प्रियो मे तेनैव बाणेन हि मां जहीहि ।
हता गमिष्यामि समीपमस्य न मां विना वीर रमेत वाली ॥ ३३ ॥
स्वर्गेऽपि पद्मामलपत्रनेत्रै समेत्य संप्रेक्ष्य च मामपश्यन् ।
नह्येष उच्चावचताम्रचूडा विचित्रवेषाप्सरसोऽभजिष्यत् ॥ ३४ ॥

वान् धार्मिकः, स्वाश्रितानामापत्सु स्ववक्षोलक्षीकुर्वन्नुत्तमधार्मिकः । यद्वा आर्तसुग्रीवरक्षणाद्धार्मिकः, अकृत्यकरणेन नारकिणं वालिनं निहत्य तस्य पूतत्वकरणादुत्तधार्मिकः । प्रच्छन्नवेषितया निरपराधवधेन च कथमस्य धार्मिकत्वमित्याशङ्कयाह—अक्षय्यकीर्तिश्च आश्रितापराधितया तिर्यक्षु मृगयान्यायेन पराङ्मुखवधस्यादोषत्वात्तिर्यग्भिराभिमुख्येन युद्धकरणस्य सार्वभौमस्यावश्यावहत्वाच्च तव कीर्तिर्न दूषयितुं शक्येत्यर्थः । अक्षय्यकीर्तिश्च 'तस्य नाम महद्यशः' इत्युक्तरीत्या परत्वप्रथायुक्तः । विचक्षणश्च दूरदृष्टितया युक्तायुक्तविचारपूर्वकं सर्वकार्यकृत् अत एव हि निरपराधवधो मा भूदिति कदाचिद्वालितः पराभवं प्रापितवान् । लक्ष्यवैपरीत्यपरिहाराय गजपुष्पीं धारितवान् । एवं शत्रुसंहर्ताऽपि 'सपुत्रपौत्रं सामात्यं समन्त्रिज्ञातिबान्धवम् । हत्वा' इत्युक्तरीत्या अङ्गदादिष्वकिंचित्करतया प्रशस्तक्षमावानसीत्याह—क्षितिक्षमावान् स्वाश्रितापराधकारिविषये तव सान्वयविनाशकरणे प्राप्तेऽपि तत्क्षमणं तत्रातिश्लाघ्यमित्यर्थः। क्षितिक्षमावान् 'क्षमया पृथिवीसमः' इत्युक्तरीत्या पञ्चाशत्कोटिविस्तीर्णायाः पृथिव्या यावती क्षमा तावती तवैकस्यास्तीति भावः। नित्ययोगे मतुप्, ते न कदाचिदप्यस्याक्षमाप्रसङ्गोऽपि नास्तीति द्योत्यते । क्षतजोपमाक्षः वालिविषये कोपातिशयेनाद्यापि शोणीकृतनयनोऽपि तदीयेषु क्षमावान् । यद्वा 'रक्तास्यनेत्रपाणिः त्रिताम्रः' इत्यादिसामुद्रिकोक्तरीत्या रक्तान्तनेत्रः 'रामो रक्तान्तलोचनः' इति श्रुतेः । अत्र प्रतिपदं चकारप्रयोगः एकैक एव गुणः परत्वे पर्याप्तं लिङ्गमिति द्योतयितुम् । क्षमावानित्यत्र चकाराप्रयोगस्तु रामेण क्षान्ते सर्वैरपि क्षान्तमेव अतोऽन्यत्रापि संभवेन निरपेक्षत्वाभावाच्चकाराप्रयोगः । क्षतजोपमाक्ष इत्यत्र तु विग्रहगुणत्वेन भिन्नाधिकरणत्वात् समुच्चयाभावः, क्षतजोपमाक्षेति संबुद्ध्यन्तं वा । यद्वा अप्रमेयः अनाश्रितानां दुर्ज्ञेयः, चकारादाश्रितानां सुप्रमेयः। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति श्रुतेः 'नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये' इत्युक्तेश्च। एवमनाश्रितानां दुरासदो दुष्प्रापः, चकारादाश्रितानां सुलभः । जितेन्द्रियः चकारादाश्रितविषये चपलः । उत्तमधार्मिकः चकाराद्दूरीकृताधर्मः । अक्षय्यकीर्तिः तदनुरूपकृत्यश्चशब्दार्थः । विचक्षणः चकारादाश्रितविषयत्यागाशक्तश्च 'मित्रभावेन संप्राप्तं न त्यजेयम्' इत्यशक्तिर्लुच्यते । अत्रत्यचकारः देहलीदीपन्यायेनोभयत्रान्वेति तेन दयादिकं समुच्चीयते ॥ ३१ ॥

३२ ] ति० टी०—आत्तबाणासनश्चासौ बाणपाणिश्चेति कर्मधारयः । संहननं दृढगात्रता, तादृशेन त्वया हतो वाली मनुष्यदेहाभ्युदयं मनुष्यलोकवर्तिदेहप्राप्यमभ्युदयसुखं विहाय दिव्यदेहेन प्राप्यो योऽभ्युदयस्तेन युक्तः । समास आर्षः॥३२॥

रा० टी०—त्वमिति । आत्तं गृहीतं बाणासनं धनुर्येन बाणः पाणौ यस्य स एव स इति कर्मधारयः । संहननोपपन्नः संहननेन दृढगात्रत्वेन उपपन्नः युक्तः मनुष्यदेहानाम् अभ्युदयोऽतिमङ्गलं यस्मात् तत्स्वराज्यं विहाय दिव्येन प्राकृतविलक्षणेन देहाभ्युदयेन स्वशरीरजनितमङ्गलकर्मणा युक्तो महाबलस्त्वं येन बाणेन इ अन्यविस्मयेन मे प्रियस्त्वया हतस्तेनैव बाणेन मां हि निश्चयेन जहि । ननु तेनैव बाणेन हननं किमर्थं प्रार्थयसे इत्यत आह—हता तेनैव बाणेन हिंसिता अहम् अस्य वालिनः समीपं गमिष्यामि । तत्प्रयोजनमाह—हे वीर ! मां विना वाली न रमेत । मनुष्यदेहाभ्युदयं मनुष्यदेहोचितसुखं विहाय दिव्येन देहाभ्युदयेन देहसुखेन युक्त इति वालिविशेषणमिति भट्टाः ॥ ३२ ॥ ३३ ॥

गो० टी०—त्वमिति । अनेनाप्राकृतविग्रहत्वमुच्यते । संहननेन समीचीनावयवसंस्थानेन उपपन्नः युक्तः मनुष्यदेहाभ्युदयं मानुषशरीरपरिग्रहं विहाय दिव्येन देहाभ्युदयेन देहसौभाग्येन युक्तः॥ ३२ ॥

३३ ] ति० टी०—अतः—येनैवेति । रमेत रंस्यते॥३३॥

गो० टी०—एवं रामस्य दिव्यतेजोविशेषदर्शनेन विस्मिता क्षणं विस्मृतशोका तद्वैभवं वर्णयित्वा स्वप्रकृत्यनुसारेण प्रलपति—येनेत्यादिना ॥ ३३ ॥

३४ ] ति० टी०—पद्मस्यामलं यत्पत्रं तद्वन्नेत्र ! समेत्याप्सरोभिस्ताः संप्रेक्ष्य च मामपश्यन्न रमेतेत्यन्वयः । उच्चावचैर्नानाप्रकारैस्ताम्रै रक्तपुष्पैः कृतः शेखरो याभिस्ता अप्सरसो नाभजिष्यन्न भेजिष्यति । रक्तपुष्पधारणं वालिवशीकरणाय ॥ ३४ ॥

रा० टी०—ननु दिव्यलोके अनेकविधवरस्त्रीणां विद्यमान-

१ ऐकति गो.पाठः। २ मा त्वं जहि सायकेनेति गो.पाठः। ३ ऋते रामेति गो.पाठः। ४ नेत्रः इति गो.पाठः। ५ भजिष्यतीतिरूप चिन्त्यमिति भाति।

स्वर्गेऽपि शोकं च विवर्णतां च मया विना प्राप्स्यति वीर वाली ।
रम्ये नगेन्द्रस्य तटावकाशे विदेहकन्यारहितो यथा त्वम् ॥ ३५ ॥
त्वं वेत्थ तावद्वनिताविहीनः प्राप्नोति दुःखं पुरुषः कुमारः ।
तत्त्वं प्रजानञ्जहि मां न वाली दुःखं ममादर्शनजं भजेत ॥ ३६ ॥
यच्चापि मन्येत भवान्महात्मा स्त्रीघातदोषस्तु भवेन्न मह्यम् ।
आत्मेयमस्येति हि मां जहि त्वं न स्त्रीवधः स्यान्मनुजेन्द्रपुत्र ॥ ३७ ॥
शास्त्रप्रयोगाद्विविधाच्च वेदादनन्यरूपाः पुरुषस्य दाराः ।
दारप्रदानाद्धि न दानमन्यत्प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८ ॥
त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर ।
अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीर घातात् ॥ ३९ ॥

त्वात् तत्र तव काऽपेक्षेत्यत आह–स्वर्ग इति । हे पद्मामलपत्रनेत्र ! एष वाली स्वर्गेऽपि समेत्य संप्राप्य संप्रेक्ष्य मदुद्देशेन चतुर्दिक्ष्ववलोक्य च मामपश्यन् सन् उच्चावचाभिस्ताम्रचूडाभिः अरुणपुष्पादिकृतारुणकेशवेषैः विचित्राणि वेषाः यासां ता एवं अप्सरसः न अभजिष्यत् अभक्ष्यत् सेविष्यते॥ ३४॥

गो० टी०–स्वर्गेऽपीति । पद्मामलपत्रनेत्रो वाली स्वर्गेऽपि अप्सरोभिः समेत्य ताः संप्रेक्ष्य च मामपश्यन् उच्चावचताम्रचूडाः विविधताम्रकुसुमैः कृतशेखराः विचित्रवेषाप्सरसः नाभजिष्यत् न भजिष्यति, लृडर्थे लृङ् ॥ ३४ ॥

३५ ] ति० टी०–तटावकाशे तटदेशे ॥ ३५ ॥

रा० टी०–स्वर्ग इति । हे वीर ! रम्ये मनोरमे नगेन्द्रस्य उत्तमपर्वतस्य तटावकाशे विस्तीर्णतटे विदेहकन्यारहितस्त्वं यथा शोकं विवर्णतां च प्राप्नोषि तथा स्वर्गेऽपि मया विना वाली शोकादि प्राप्स्यति ॥ ३५ ॥

गो० टी०–स्वर्गेऽपीति । नगेन्द्रस्य ऋश्यमूकस्य ॥३५॥

३६ ] ति० टी०–यद्वनिताहीनो दुःखं प्राप्नोति तत्त्वं वेत्थ, अतस्तज्जानंस्त्वं मां जहि । कुमारः सुन्दरः पुरुषः । यद्वा दुःखहेतुमाह–कुमार इति कुत्सितो मारो यस्य मारकत्वेन मदनस्य प्रसिद्धेः, अथवा कुत्सितो मारो मरणं यस्य मरणादपि दुःखजनकत्वादेवमुक्तिः । भावे घञ् ॥ ३६ ॥

रा० टी०–त्वमिति । वनिताविहीनः पुरुषः यावत् यत्परिमितं दुःखं प्राप्नोति तावत् दुःखं कुमारः नित्यं कुमारत्वेन प्रतीयमानस्त्वं वेत्थ अतः तत्त्वं याथार्थ्यं जानन् त्वं मां जहि । तत्र हेतुः–वाली ममादर्शनजं दुःखं न भजेत प्राप्नुयात् ॥ ३६ ॥

गो०टी०–त्वंवेत्थेति । कुमारः युवा सन् वनिताविरहदुःखं प्रजानन् त्वं मां जहि वाली ममादर्शनजं दुःखं न भजेत॥३६॥

३७ ] ति० टी०–मह्यं स्त्रीघातदोषो भवेदिति भवान्महात्मा मन्येत तदपि न । इयं ताराऽस्य वालिन आत्मेति ज्ञात्वा जहि । एवं च तदभिन्नत्वान्मम न ते स्त्रीवधदोष इति भावः । महात्मेत्यनेन ताटकावधादिकृतत्वतः स्त्रीवधोऽकिंचित्कर इत्यपि सूचितम् ॥ ३७ ॥

रा० टी०–यदिति । महात्मा भवान् स्त्रीघातदोषो मह्यं भवेत् तव वधे इति शेषः, यत् यदि मन्येत तदा इयमस्य वालिनः आत्मा इति बुद्ध्या मां जहि अतः स्त्रीवधो न स्यात् तेन तद्दोषस्याशङ्का न कर्तव्येति सूचितम् ॥ ३७ ॥

गो० टी०–यच्चापीत्यादि सार्धश्लोकः । मह्यं स्त्रीघातदोषो न भवेदिति भवान् यन्मन्यते तत्र युक्तम् । इयं तारा अस्य वालिनः आत्मा इति मत्वा मां जहि तेन ते स्त्रीवधः स्त्रीवधदोषो न स्यात् । आत्मेत्येतदुपपादयति–शास्त्रेति । "अर्धो वा एष आत्मनो यत्पत्नी आत्मा हि दाराः" इत्यादिरूपात् विविधात् वेदाद्वेदरूपात् शास्त्रप्रयोगादित्यन्वयः । यद्वा वेदात् शास्त्रप्रयोगात् धर्मशास्त्रप्रयोगाच्चेति वार्थः ॥ ३७ ॥

३८ ] ति० टी०–स्त्रीणां पुरुषात्मत्वमेव साधयति–शास्त्रेति । शास्त्रे शास्त्रीययागाद्यनुष्ठाने प्रकर्षेण सहैव योगादधिकारात् । विविधाच्च वेदात् । "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः । अनन्यरूपा अभिन्नरूपाः । न केवलं दोषाभावमात्रम्, अपि तु स्त्रीदानफलमपीत्याह—दारेति । अन्यदधिकं दानं नेति भावः ॥ ३८ ॥

रा० टी०–ननु कथं त्वं तस्यात्मेत्यत आह–शास्त्रेति । विविधात् अनेकानुपूर्वीविशिष्टात् वेदात् "अर्धो वा एष आत्मनो यत् पत्नी" इत्यादिरूपात् हेतोर्दाराः पुरुषस्य अनन्यरूपाः अभिन्नस्वरूपाः अतः ज्ञानवतां लोके विचारे दारप्रदानात् अन्यत् श्रेष्ठं दानं न दृश्यते दारप्रदानमेव वरं दानमित्यर्थः । एतेन रामबाणेन वधे पतिलोकमहं प्राप्स्यामीति तस्या निश्चयो ध्वनितः ॥ ३८ ॥

गो० टी०–सुकृतमप्यस्तीत्याह–दारेति ॥ ३८ ॥

३९ ] ति० टी०–त्वं चापीति । एवं च 'धर्मेण पापमप-

१ यावदिति गो. पाठः । २ दोषो न भवेत्तु गो. दोषस्तु भवेत्तु रा. पाठः । ३ आत्मा ह्यनन्य इति गो. पाठः ।

आर्तामनाथामपनीयमानामेवंगतां नार्हसि मामहन्तुम्[1] ।
अहं हि मातङ्गविलासगामिना प्लवङ्गमानामृषभेण धीमता ॥ ४० ॥
विना वरार्होत्तमहेममालिना चिरं न शक्ष्यामि नरेन्द्र जीवितुम् ।
इत्येवमुक्तस्तु विभुर्महात्मा तारां समाश्वास्य हितं बभाषे ॥ ४१ ॥
मा वीरभार्ये विमतिं कुरुष्व लोको हि सर्वो विहितो विधात्रा ।
तं चैव सर्वं सुखदुःखयोगं लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२ ॥
त्रयोऽपि[2] लोका विहितं विधानं नातिक्रमन्ते वशगा हि तस्य ।
प्रीतिं परां प्राप्स्यसि तां तथैव पुत्रश्च[3] ते प्राप्स्यति यौवराज्यम् ॥ ४३ ॥

त्रुदति' इति न्यायेनापि हे वीर ! ते न मद्वधाद्दोष इति भावः । यद्वा मम वीरस्य पत्युश्छलेन घातात्प्राप्तमधर्मसंबन्धं न लप्स्यसे । किं च–तत एव मच्छापतः प्राप्तमधर्मयोगमधर्मफलयोगं स्त्रीवियोगरूपं न लप्स्यसे ममावधे तु लप्स्यस एव । अत एव क्वचित्पठ्यते 'अचिरेणैव कालेन त्वया वीर्यबलाहृता । सा सीता मम शापेन न चिरात्त्वयि वत्स्यति ॥' इति ॥ ३९ ॥

रा० टी०–ननु पुण्यसत्त्वेऽपि अवध्यवधदोषस्तु दुरुद्धर एवेत्यत आह–त्वमिति । हे वीर ! मम प्रियस्य तस्य वालिनो यदि धर्ममवेक्ष्य मां प्रदास्यसे तर्हि अनेन दानेन मम घाताद् जनितमधर्मयोगं त्वं न लप्स्यसे ॥ ३९ ॥

गो० टी०–न केवलं पापनिवृत्तिसुकृते प्रायश्चित्तं चेदमित्याह–त्वं चापीति । वीर ! घातादित्येतत्सुग्रीवदुःखदुःखितरामहृदयानुसारेणोक्तं त्वमुत्तमधार्मिकश्चेति पूर्वमुक्तत्वात्॥३९॥

४० ] ति० टी०–अपनीयमानाम् प्रियसकाशादन्यत इति शेषः । अहन्तुं नार्हसि अपि तु हन्तुमेवेत्यर्थः । तत्र हेतुः–अहं हीति ॥ ४० ॥

४१ ] ति० टी०–वरार्होत्तमहेममालिना श्रेष्ठयोग्योत्तमस्वर्णमालावता ॥ ४१ ॥

रा० टी०–आर्तामिति । अनाथां पतिरहितामत एव अपनीयमानां पत्यालिङ्गनात् बहिष्कृतामत एव आर्तामतिदुःखिताम् अत एव एवंप्रकारेण गतां स्ववधाय त्वां प्राप्तां माम् अहन्तुं नार्हसि । अर्धं पृथक् । ननु पुत्रलालनादिसुखं संत्यज्य स्वविघातं कथं प्रार्थयसीत्यत आह–अहमिति । वरार्ह ! हे सकलश्रेष्ठपूज्य ! मातङ्गविलासगामिना मत्तगजगमनसदृशगमनशीलेन प्लवङ्गमानां वानराणामृषभेण स्वामिना उत्तमहेममालिना इन्द्रदत्तत्वेनोत्तमा या हेममाला तद्युक्तेन वालिना विना चिरं जीवितुमहं न शक्ष्यामि । विभुः स्वप्रकाशब्रह्माद्वारा सर्वत्र पूर्णः महात्मा रामस्तारां समाश्वास्य हितं बभाषे । सार्धश्लोक एकान्वयी ॥ ४०॥४१॥

गो० टी०–आर्तामिति । अपनीयमानां वालिना वञ्चिताम् ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०–विमतिं मरणविषयां विरुद्धमतिम् । सर्वो लोको विधात्रा विहितोऽदृष्टद्वारा सृष्टस्तं लोकं सुखदुःखाभ्यामवर्ज्याभ्यां योगोऽस्य तं तेनैव विधात्रा कृतम् । लोक्यतेऽनेनेति लोको वेदोऽब्रवीत् । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः ॥ ४२ ॥

रा० टी०–तद्वचनाकारमाह–मेति । हे वीरभार्ये ! विमतिं मरणविषयकविरुद्धबुद्धिं मा कुरुष्व हि यतः सर्वो लोकः प्राकृतजनः विधात्रा विहितः सृष्टः तं विधात्रा कृतं लोकं सुखदुःखयोगं नित्यं सुखदुःखाभ्यां संयुक्तं लोको वेदोऽब्रवीत् तेन वेदोक्तेन हेतुना कृतं ब्रह्मणाऽपि तथैव निर्मितम् । लोकशब्दस्य वेदपरत्वं लोक्यते ब्रह्मणाऽपि ज्ञायतेऽनेनेति व्युत्पत्तेः॥४२॥

गो० टी०–हितवचनमेवाह–मा वीरेति । विमतिं जीवितुं न शक्ष्यामीत्यादिविरुद्धमतिम् । सर्वो लोकः विधात्रा ब्रह्मणा विहितो निर्मितः । हिः प्रसिद्धौ । तं सुखदुःखयोगं च विधात्रा कृतमिति लोकः पण्डितः पामरश्चाब्रवीत् ॥ ४२ ॥

४३ ] ति० टी०–त्रयोऽपि लोका लोकत्रयवासिनोऽपि जना विधातृविहितं विधानं नातिक्रमन्ते । हि यतस्तस्य वशगा ब्रह्मादिस्थावरान्ताः । वाली परां प्रीतिं स्वस्संबन्धजां प्राप्स्यति मत्संकल्पात् । किं च भवत्यपि वालिसंबन्धजां प्रीतिं सुग्रीवसंबन्धात्प्राप्स्यसि । ते पुत्रो यौवराज्यं प्राप्स्यति च । येनाहमपि शापं प्राप्स्याम्येवेति ॥ ४३ ॥

रा० टी०–त्रय इति । त्रयः त्रिविधलोकवासिनः लोकाः जनाः तस्य विधातुर्वशगाः अत एव विहितं विधात्रा नियुक्तं विधानं कर्मफलं नातिक्रमन्ते त्यक्तुं शक्नुवन्ति । एतेन विधातृविहितस्याशक्यवारणत्वात् शोको न कर्तव्य इति सूचितम् । ननु मम निर्वाहः कथं भविष्यतीत्यत आह–ते पुत्रः यौवराज्यं प्राप्स्यति अतस्तथा पौर्वकालिकीमिव तां प्रसिद्धपरां प्रीतिं ध्रुवं प्राप्स्यसि ॥ ४३ ॥

गो० टी०–वस्तुस्थितिश्च तथेत्याह–त्रय इति । लोका लोकस्थजनाः विहितं विधानं ब्रह्मकल्पितं प्रकारं नातिक्रमन्ते हि यस्मात्तस्य वशगाः । प्रीतिमिति । तां वालिसंभोगसदृशभोगमिति द्योतयति ॥ ४३ ॥

१ विधामर्हसि मां निहन्तुमिति गो. पाठः । २ हीति गो. पाठः । ३ श्चिति गो. पाठः । ४ अत्र प्रथमपुरुषेण भवितव्यमिति भाति ।

धात्रा विधानं विहितं तथैव न शूरपत्न्यः परिदेवयन्ति ।
आश्वासिता तेन महात्मना तु प्रभावयुक्तेन परंतपेन ॥
सा वीरपत्नी ध्वनता मुखेन सुवेषरूपा विरराम तारा ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

राम- सुग्रीवादीन्समाश्वासयति । लक्ष्मणो वालिसंस्करणार्थं काष्ठाद्यानयनाय सुग्रीव नियोज्याङ्गद शिबिकानयनाय प्रेषयति । गृहीतरामाज्ञाः सुग्रीवादय आनीतवाहने वालिनमारोप्य गिरिनदी प्राप्ताः सैकते शिबिकामवरोप्य चिता निर्ममुः । उत्सङ्गे शिर आरोप्य वालिन शोचन्ती तारां वानर्य आश्वासयन्ति । अङ्गदो वालिनः काय चितायामारोप्य संस्करोति । समापितसंस्कारास्ते वालिने जलमासिच्य रामान्तिकमीयुः ।

स सुग्रीवं च तारां च साङ्गदां सहलक्ष्मणः । समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥ १ ॥
न शोकपरितापेन श्रेयसा युज्यते मृतः । यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥ २ ॥
लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् । न कालादुत्तरं किंचित्परं कर्म उपासितुम् ॥ ३ ॥

४४ ] ति० टी०–धात्रेदं विधानं तथैव विहितम्, यथा मयोक्तं कृतं च । अनेन सर्वेश्वरत्वशक्तिराविष्कृता । एवमीश्वरकृतं सर्वं ज्ञात्वा शूरपत्न्यो न शोचन्ति । ध्वनता मुखेनोपलक्षिता विरराम त्यक्तपरिदेवनाऽभूत् ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०–धात्रेति । धात्रा यथा विहितं नियुक्तं तथैव विधानं मत्कर्तृकानुष्ठानमवेहीति शेषः, तेन मयि रिपुबुद्धिर्न कर्तव्येति सूचितम् । विलापस्यायुक्तत्वमाह–शूरपत्न्यः न परिदेवयन्ति विलपन्ति । अर्धं पृथक्–आश्वासितेति । ध्वनता विलापशब्दवता मुखेनोपलक्षिता अत एव महात्मना रामेण आश्वासिता सुवेषरूपा शोभनवेषरूपाभ्यां युक्ता तारा विरराम विलापात् निवृत्ते । अर्धद्वयमेकान्वयि ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो० टी०–आश्वासितेति । प्रभावयुक्तेन अङ्गदयौवराज्यप्रदानसमर्थेन परंतपेन तद्विरोधिनिरसनसमर्थेन आश्वासिता अत एव ध्वनता शब्दायमानेन मुखेनोपलक्षिता । सुवेषरूपेत्यनेन समाश्वासनकृतान्तरहर्षवत्त्वं सूचितं स्वलंकारयुक्तशरीरेत्यर्थः ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्विंश सर्गः ॥ २४ ॥

१ ] ति० टी०–समानशोकः सुग्रीवादिभिरिति शेषः ॥१॥

रा० टी०–रामकर्तृकसुग्रीवादिसान्त्वनमुपक्रममाह–स इति । समानशोकः सुग्रीवमित्रत्वात् तत्तुल्यशोकविशिष्टः सहलक्ष्मणः लक्ष्मणसहितः स रामः साङ्गदमङ्गदसहितं सुग्रीवं तारां च सान्त्वयन् इदमब्रवीत् ॥ १ ॥

गो० टी०–अथ रामः सर्वसान्त्वनपूर्वकं वालिनः संस्कारं कारयति पञ्चविंशे–सुग्रीवमित्यादि । साङ्गदमिति सुग्रीवविशेषणम् । समानशोकः ताराङ्गदादिभिस्तुल्यशोकः ॥ १ ॥

२ ] ति० टी०–शोकयुक्तः परितापस्तेन शोकश्चित्तधर्मः । तावन्मात्रेणैव न मृतस्य श्रेयः समाधातुमनुष्ठातुम् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–नेति । मृतो जनः शोकपरितापेन करणेन श्रेयसा कल्याणेन न युज्यते अतः अत्र अस्मिन् समये अनन्तरं मरणात्पश्चात् यत्कार्यं तत् समाधातुं सम्यक्कर्तुमर्हथ ॥ २ ॥

गो० टी०–नेति । शोकपरितापेन शोककृतपरितापेन युष्मदीयेनेति शेषः, मृतो वाली श्रेयसा न युज्यते । अत्र वालिनि विषये अनन्तरं मरणानन्तरम् यत् श्रेयस्करं कार्यम् और्ध्वदैहिकरूपं तत्समाधातुं कर्तुम् अर्हथ ॥ २ ॥

३ ] ति० टी०–लोकवृत्तं लोकाचारोऽप्यनुष्ठेय एव । तत्र बाष्पमोक्षणरूपं कृतं युष्माभिरिति शेषः । यद्वा कृतं पर्याप्तम् । बाष्पमोक्षणमिति द्वितीया तृतीयार्थे । यतः कालात्तत्तत्कर्मणि विहितात्कालादुत्तरं परम्, तस्मिन्ननिक्रान्त इति यावत् । किंचिदपि परं कर्म विहितं कर्मोपासितुं कर्तुमशक्यं कालस्योपादेयकारणत्वात् । अकाले कृतस्याकृतप्रायत्वादिति भावः ॥ ३ ॥

रा० टी०–लोकेति । लोकवृत्तं लोकाचारः अत एव अनुष्ठेयं कर्तव्यं बाष्पमोक्षणं वो युष्माभिः कृतं कालादुत्तरं कालप्रापितमरणानन्तरकाले किंचित् कर्म मरणनिवृत्तिसंपादकक्रिया उपासितुं कर्तुं न शक्यम् ॥ ३ ॥

१ तु राघवेणेति गो. पाठः । २ सुग्रीवं चैवेतिगो. पाठः । ३ साङ्गदमिति गो. रा. पाठः । ४ कर्म शक्यमिति गो. रा. पाठः

**नियतिः कारणं लोके नियतिः कर्मसाधनम् । नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥४॥**
**न कर्ता कस्यचित्कश्चिन्नियोगे नापि चेश्वरः । स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ ५ ॥**
**न कालः कालमत्येति न कालः परिहीयते । स्वभावं च समासाद्य न [1]किंचिदतिवर्तते ॥ ६ ॥**

गो० टी०–लोकेति । लोकवृत्तं लोकाचारसिद्धम् अत एव सर्वैरनुष्ठेयं बाष्पमोक्षणं वः युष्माभिः कृतम् । बाष्पमोक्षणादतिरिक्तं किमपि न युष्माभिः कर्तुं शक्यमित्याह–न कालादिति । कालादुत्तरं कालं विनेत्यर्थः, किंचित्कर्म उपासितुं कर्तुं न शक्यं देवाज्ञामुल्लङ्घ्य स्वातन्त्र्येण किंचिदपि कर्म कर्तुं न शक्यमित्यर्थः ॥ ३ ॥

४] ति० टी०–कालस्य मुख्यत्वं दर्शयति–नियतिरिति । नियतिः नियम्यतेऽनयेति नियतिः कालः । कालकृता व्यवस्था निमेषादिपरार्धान्ता । कालस्त्वीश्वर एव । लोके लोकसृष्ट्यादिव्यवहारे । कर्मणो लौकिकालौकिककर्मप्रवृत्तेर्दिनादिरूपेण कारणं काल एव । सर्वभूतानां नियोगाधिकृतप्राणिमात्रस्य नियोगेषु ज्योतिष्टोमादिषु नियतिर्वसन्तादिः कारणम् ॥ ४ ॥

रा० टी०–कालस्य प्राबल्यमाह–नियतिरित्यादिभिः । नियम्यते तत्तत्कर्मणि प्रवर्त्यते अनयेति, किंच नितरां यतिः ऐहिकभोगाभिवृत्तिः यया सा नियतिः काल एव कर्मसाधनं सकलकर्मप्रवर्तकं नियतिरेव सर्वभूतानां नियोगेषु तत्तज्जातिविषयकाग्रहेषु कारणं हेतुः अतः इह प्राकृते लोके नियतिरेव कारणं निखिलहेतुः ॥ ४ ॥

गो० टी०–तदेतदुपपादयति–नियतिरिति । नियम्यतेऽनेनेति नियतिः ईश्वरः लोके विषये कारणं सर्वलोककर्तेत्यर्थः । क्रियत इति कर्म कार्यं तस्य साधनं सहकारीत्यर्थः । सर्वभूतानाम् नियोगेषु प्रेरणेषु नियतिः कारणं सर्वप्रवर्तकोऽपीश्वर इत्यर्थः, तेन विना तृणाग्रमपि न चलतीति न्यायात् । ईश्वरपरतन्त्रतया लोकः कर्म करोति न तु स्वातन्त्र्येणेत्यर्थः ॥ ४ ॥

५ ] ति० टी०–कालातिरिक्तं न साक्षात्प्रवर्तकमित्याह–न कर्तेत्यादि । कस्यचित्कृष्यादेः कश्चित्कर्ता न नियतिनिरपेक्षः कर्ता न । तथा नियोगे नियोगानुष्ठानेऽपि नियतिनिरपेक्षः कश्चिदीश्वरो न नियतिनैरपेक्ष्येण समर्थो न । यतो लोको लोकव्यवहारः स्वभावे ईश्वरसहिते प्राक्तनस्वकर्मणि वर्तते तदधीनो वर्तते । तस्य च स्वभावस्य कालः परायणम् । सहकारीत्यर्थः । तदुक्तं सूतसंहितायां शिववाक्येन–'स्वभावादेव संभूतं समस्तमिति केचन । तन्न सिध्यति विप्रेन्द्रा देशकालाद्यपेक्षणात् ॥ मत्तः कर्मानुरूपेण जगज्जन्मादि जायते । एष स्वभावो विप्रेन्द्रा इति वेदार्थनिर्णयः ॥ न मया केवलेनापि न च केवलकर्मणा । प्राणिनां कर्मपाकेन मया च मुनिसत्तमाः । जगतः संभवो नाशः स्थितिश्च भवति द्विजाः ॥' इति ॥ ५ ॥

रा० टी०–नतु निखिलप्रवृत्तिकारणत्वेन स्वभावस्य प्रसिद्धिरित्यत आह–नेति । यो लोको जनः स्वभावे वर्तते स्वभावाधीनतया तिष्ठति तस्य लोकस्य परायणं परमप्रवर्तकः कालः अत एव कस्यचित्कर्मणः कश्चित्स्वभावादिः कर्ता कालमनपेक्ष्य कारको न अत एव नियोगे जात्यादिविषयकाग्रहेऽपि ईश्वरः समर्थो न ॥ ५ ॥

गो० टी०–एवमन्वयमुखेन ईश्वराधीनत्वमुक्त्वा व्यतिरेकमुखेन दर्शयति–न कर्तेति । कश्चित्पुरुषः कस्यचित्कर्मणः न कर्ता न स्वातन्त्र्येण कर्ता नियोगे कस्यचित्प्रेरणे च नेश्वरः किं तु स्वभावे वर्तते स्वभावाधीनो वर्तते लोकः । तत्र हेतुमाह–तस्येति । कालः तस्य परायणं गतिः। अत्र स्वभावनियतिकालादिशब्दैरीश्वर एवाभिधीयते अन्यथाऽनेकराजत्वापत्तेः, श्वेताश्वतरश्रुतिश्च–" स्वभावमेके कवयो वदन्ति " इत्यादिकैवमाह ॥ ५ ॥

६ ] ति० टी०–कालात्मा भगवानेव सर्वकर्मप्रवर्तक इत्याह–न काल इति । कालो भगवानीश्वरः कालं स्वकृतां कालव्यवस्थां जन्ममरणादिरूपां नात्येति नातिक्रामति, स भगवान्कालो न परिहीयते । अनुक्षणं जगद्धानिकरस्य हानिकारणाभावात् । स्वभावमुक्तलक्षणं समासाद्य किंचिदप्युत्कृष्टमपि जीवजातं नातिवर्तते । उत्पत्तियोग्यमुत्पद्यते नश्वरं नश्यत्येवेत्यर्थः ॥ ६ ॥

रा० टी०–नतु कालस्यापि कदाचिन्नाशे कः प्रवर्तक इत्यत आह–नेति । कालः कालं स्वात्मानं नात्येति उल्लङ्घते असंभवात् न विघातयतीत्यर्थः, अतः कालः न परिहीयते केनचित् निवर्त्यते अतः स्वभावं समासाद्य प्राप्य किंचिदपि वस्तु न अतिवर्तते कालमुल्लङ्घ्यते ॥ ६ ॥

गो० टी०–न काल इति । कालः ईश्वरः कालम् आत्मानं न त्येति नातिक्रामति सः स्वाधीन एव न तु लोकवत् कस्यचित्परतन्त्रः " न चास्य कश्चिज्जनिता न चाधिपः " इति श्रुतेः । न कालः परिहीयते न नश्यति । इदमुपलक्षणं षड्भावविकाररहित इत्यर्थः । ' अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् । इति ह्युक्तम् । स्वस्मिन् भवतीति स्वभाव ईश्वरः । चाशब्दोऽवधारणे स्वभावमासाद्यैव वर्तते न तु कश्चित्तमतिवर्तते । निरङ्कुशः स्वतन्त्रः स्वकृतां व्यवस्थां स्वयमपि नातिवर्तते तत्परतन्त्रोऽनीशः किमुतेति भावः ॥ ६ ॥

१ कश्चिदिति गो. पाठः ।

न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः । न मित्रज्ञातिसंबन्धः कारणं नात्मनोऽवशः ॥ ७ ॥
किं तु कालपरीणामो द्रष्टव्यः साधु पश्यता । धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥
इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् । सामदानार्थसंयोगैः पवित्रं प्लवगेश्वरः ॥ ९ ॥
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना । स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता ॥१०॥

७-८ ] ति० टी०-स च भगवान्न पक्षपातस्वभाव इत्याह-न कालस्येति । न कालस्य बन्धुत्वमस्ति । प्राप्तकालं वस्तु सर्वथा संहरत्येव । न तु पक्षपातेन किमपि त्यजतीत्यर्थः । न हेतुः स्वसृज्ये स्वनाश्ये वा स्वकृतव्यवस्थातिरिक्तकारणनिरपेक्ष इत्यर्थः । यद्वा प्राप्तकालसंहारनिवर्तने न कश्चिदपि हेतुर्मन्त्रतन्त्रौषधादिः प्रभवतीत्यर्थः । तस्यैव प्रपञ्चः-न पराक्रमः । महापराक्रमवतामपि काले प्राप्ते संहारो भवत्येव । न मित्रज्ञातिसंबन्धो न बहुमित्रता न बहुज्ञातिता प्राप्तकालसंहारनिवर्तने हेतुः । सोऽपि भगवानात्मनः प्रत्यग्वर्गस्य जीवजातस्य न वशस्तदिच्छाधीनो न, किंतु परमस्वतन्त्र एव । तेन च भगवता कालेन क्रियमाणो नियत्यधीनः स्वस्वकर्मपरिणाम एव सर्वसुखदुःखादिलाभ इत्येव साधु पश्यता सुमतिना विवेकवता द्रष्टव्यो ज्ञातव्यः, न तु विषादहर्षौ कर्तव्यौ नापि स्वसामर्थ्यनिन्देति भावः । एवं धर्मादयोऽपि, चाद्धर्मादयोऽपि, कालक्रमेणैव समाहिताः संपादिता भवन्ति ॥ ७ ॥ ८ ॥

रा० टी०-ननु तर्हि काल एव सर्वैः सेव्यः परमात्मा किमर्थं सेव्यते इत्यत आह-नेति । आत्मनः स्वप्रकाशब्रह्मद्वारा सर्वत्र परिपूर्णस्य परमात्मनो वशो यः कालस्तस्य कालस्य बन्धुत्वं सेवयापि स्नेहो नास्ति अत एव हेतुः तद्वशे कारणं न अत एव पराक्रमस्तद्वशकारकबलं नास्ति अत एव मित्रज्ञातिसंबन्धः मित्रत्वज्ञात्यादिसंसर्गः कालस्य नास्ति अत एव कारणं कस्य सुखस्य अरणं प्राप्तिर्नास्ति एतेन कालस्य जडत्वं सूचितं तेन परमात्मानमनपेक्ष्य कालमात्राश्रयणे कल्याणं न भवतीति ध्वनितं तेन परमात्मैव सेव्य इति व्यञ्जितम् ॥ ७ ॥

गो० टी०-पुनरपीश्वरस्य स्वातन्त्र्यमुपपादयति-न कालस्येति । कालस्येश्वरस्य बन्धुत्वं नास्ति पक्षपातो नास्तीत्यर्थः । हेतुश्च नास्ति वशीकरणोपायश्च नास्ति तत्प्रसादं विना स्वयत्नेन वशीकर्तुं न शक्यते इत्यर्थः । न पराक्रमः तज्जयहेतुपराक्रमोऽपि नास्ति । पुरुषपराक्रमस्य स न बिभेति इति भावः । न मित्रज्ञातिसंबन्धः न सुहृत्सगोत्रसंबन्धः । अपराधिषु दण्डधरत्वमुक्तम् "एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति श्रुतेः । अतः कारणमीश्वरः आत्मनो जीवस्य न वशः न परतन्त्रः तत्तत्कर्मानुगुणमेव ईश्वरः सर्वं वर्तयतीत्यर्थः॥ ७ ॥

रा० टी०-तर्हि किं कालः उपेक्षणीय इत्यत आह-किं त्विति । धर्मादयः कालक्रमसमाहिताः कालक्रमेणैव भवन्ति अतः साधु पश्यता सम्यग्जानता जनेन धर्मादिः कालपरीणामः परमात्माधीनकालकृतः द्रष्टव्यः ज्ञातव्यः । कालस्य परमात्मवशत्वे "यः कालकालो गुणी सर्वविद्यः" इत्यादिश्रुतिरनुग्राहिका ॥ ८ ॥

गो० टी०-तर्ह्यनीशेन जन्तुना किं कर्तव्यं तत्राह-किं त्विति । साधु सम्यक् पश्यता शास्त्रनिष्कर्षमवगच्छतेत्यर्थः, कालस्य ईश्वरस्य परिणामः चेतनकर्मानुगुणप्रवृत्तिविशेषः द्रष्टव्यः ईश्वरकृतव्यापारेषु न शोकः कर्तव्यः यद्धितं तत्करिष्यतीति स्थातव्यमिति भावः । धर्मार्थकामास्तु कालक्रमेण ईश्वरमर्यादया समाहिताः समर्पिता भवन्ति धर्मादिषु यत् प्राप्तव्यं तत् प्रापयतीश्वर एवेति भावः । अत्र नियतिकालस्वभावपदैः व्यामिश्रतयोक्तिस्तदानीं रहस्यं वक्तुमनर्हत्वादिति बोध्यम्॥८॥

९ ] ति० टी०-प्रकृतमाह-इत इति । सामदानाभ्यामर्जितैरर्थसंयोगैरैश्वर्यैः पवित्रं शुभं क्रियाफलं भोगमिह लोके प्राप्तवान्वाली इतो लोकाद्देहाच्च गतोऽपगतः स्वां प्रकृतिं गतः प्राप्तः । कार्याणां कारणे लयात् । एवं चन्द्रलोकं गतो वालीति सूचितम् ॥ ९ ॥

रा० टी०-प्रासङ्गिकमुक्त्वा प्रकृतमाह-इत इति । स्वां प्रकृतिं चाञ्चल्यं तद्वशात् अधर्ममित्यर्थः, गतः प्राप्तः अतः क्रियाफलमधर्महेतुकमरणं प्राप्तोऽपि प्लवगेश्वरो वाली इतोऽस्मिन् समये सामदानार्थसंयोगैः साम्ना दानेन च अर्थस्तेन प्रार्थितः यः संयोगो मद्बाणसंबन्धस्तेन च पवित्रं लोकं प्राप्तः इति शेषः, सामदानप्रभावेण मद्बाणप्रहारप्रार्थना तेन च सल्लोकप्राप्तिरिति तात्पर्यम् ॥ ९ ॥

गो० टी०-एवमर्थस्थितिमुक्त्वा तां प्रकृते संगमयति-इत इति । स्वां प्रकृतिं गतः मद्बाणवेधकृतप्रायश्चित्ततया स्वकीयं शुद्धभावं प्राप्तः सन् प्लवगेश्वरो वाली इतः अस्माल्लोकात् धर्मार्थकामसंयोगैः विहितकालानुष्ठितधर्मार्थकामसंबन्धैः पवित्रं क्रियाफलं स्वर्गं प्राप्तः । 'सामदानार्थसंयोगैः' इति पाठे नीतिशास्त्रानुष्ठानैरित्यर्थः॥ ९ ॥

१० ] ति० टी०-स्वधर्मस्य संयोगात्तेन महात्मना वालिना पूर्वं स्वर्गो जितोऽर्जितः । युद्धे प्राणानपरिरक्षतेदानीं परिगृहीतश्च प्राप्तश्च ॥ १० ॥

रा० टी०-स्वधर्मस्य बाणप्रहारप्रार्थनाहेतुत्वेन प्रशंसां कुर्वन्नाह-स्वधर्मस्येति । महात्मना पुरुषेण जितः प्राप्तः स्वर्गः स्वधर्मस्य संयोगाद्धेतोस्तेन वालिना परिगृहीतः प्राप्तः अत एव प्राणा न परिरक्षिताः ॥ १० ॥

१ धर्मार्थकामेति गो. पाठः ।

एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः । तदलं परितापेन प्राप्तकालमुपास्यताम् ॥ ११ ॥
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा । अवदत्प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२ ॥
कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम् । ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥ १३ ॥
समाज्ञापय काष्ठानि शुष्काणि च बहूनि च । चन्दनानि च दिव्यानि वालिसंस्कारकारणात् ॥ १४ ॥
समाश्वासय [1]दीनं त्वमङ्गदं दीनचेतसम् । मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५ ॥
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च । घृतं तैलमथो गन्धान्[2]यच्चात्र समनन्तरम् ॥ १६ ॥
त्वं तार शिबिकां शीघ्रमादायागच्छ संभ्रमात् । त्वरा गुणवती युक्ता ह्यस्मिन्काले विशेषतः ॥ १७ ॥
सज्जीभवन्तु प्लवगाः शिबिकावा[3]हनोचिताः । समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥ १८ ॥
एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः । तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा ॥ १९ ॥
लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः । प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः ॥ २० ॥
आदाय शिबिकां तारः स तु पर्यापतत्पुनः । वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ २१ ॥

गो० टी०—केन स्वां प्रकृतिं प्राप्त इत्यपेक्षायामुक्तं विशदयति—स्वधर्मस्य चेति । स्वधर्मस्य संयोगात्स्वविहितधर्मानुष्ठानात् रणे प्राणानपरिरक्षतेत्यनेन शौर्यकृतधर्मोऽप्युक्तः । उभाभ्यां जितः पूर्वं स्ववशीकृतः स्वर्गः इदानीं परिगृहीतश्च॥१०॥

११-१२ ] ति० टी०—एषा नियतिः कालकृतव्यवस्थाप्राप्तिः । प्राप्तकालम् कर्मेति शेषः ॥ ११ ॥ १२ ॥

रा० टी०—एषेति । यां हरियूथपो वाली गतः प्राप्तः सा एषा युद्धे प्राणापहारिका नियतिः कालः श्रेष्ठा तत्तस्माद्धेतोः परितापेन तद्विषयकशोकेन अलं शोको न कर्तव्य इत्यर्थः, अतः प्राप्तः कालो यस्य तत् प्रमीतक्रियादि उपास्यतां क्रियताम् ॥ ११ ॥

गो० टी०—एषेति । हरियूथपः यां नियतिं गतः सा नियतिर्गतिः श्रेष्ठा तत्तस्मात्कारणात् परितापेनालं सद्गतिं प्राप्तं प्रति शोको न कार्यः । प्राप्तकालम् एतत्कालोचितम् उपास्यताम् अनुष्ठीयताम् ॥ ११ ॥

रा० टी०—वचनान्त इति । रामस्य वचनान्ते उक्त्यवसाने लक्ष्मणः प्रश्रितं नम्रं वाक्यं गतचेतसं नष्टविवेकं सुग्रीवमवदत् ॥ १२ ॥

गो० टी०—वचनान्त इति । गतचेतसं दुःखितमिति यावत् ॥ १२ ॥

१३ ] ति० टी०—अस्य प्रेतकार्यं कुर्वित्यन्वयः । दहनं प्रति दहननिमित्तम् यतस्वेति शेषः ॥ १३ ॥

१४ ] ति० टी०—वालिसंस्कारनिमित्तं काष्ठान्यानेतुं समाज्ञापयेति संबन्धः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—कुर्विति । हे सुग्रीव ! अनन्तरं शीघ्रमित्यर्थः, अस्य वालिनः प्रेतकार्यं ताराङ्गदाभ्यां सहितस्त्वं कुरु अत एव वालिनो दहनं प्रति दहनार्थं बहूनि शुष्काणि काष्ठानि वालिसंस्कारकारणात् दिव्यानि चन्दनानि च समाज्ञापय आनेतुं भृत्यानिति शेषः । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—कुरु त्वमस्येत्यर्धमेकं वाक्यम् ॥ १३ ॥

गो० टी०—तारेत्यादि । वालिनो दहनं प्रति ताराङ्गदाभ्यां सहितः सन् वालिसंस्कारकारणात् वालिसंस्कारार्थं चन्दनादीनि काष्ठानि समाज्ञापय यच्चात्र समनन्तरं मरणानन्तरं यदानेतव्यमस्ति तत्सर्वमङ्गदः समानयेदित्यर्थः॥१४--१६॥

१५ ] ति० टी०—त्वं सुग्रीव ! अङ्गदं समाश्वासय ॥१५॥

रा० टी०—समिति । यतः इदं किष्किन्धाख्यं पुरं त्वदधीनमतो बालिशबुद्धिः अविवेकचित्तस्त्वं मा भूः अत एवाङ्गदं समाश्वासय ॥ १५ ॥

१६]ति० टी०—कः कुत्राज्ञपनीयस्तत्राह—अङ्गदस्त्विति। समनन्तरमपेक्षि तत् ॥ १६ ॥

रा० टी०—अङ्गद इति । माल्यादीनि यदत्र समनन्तरं शीघ्रमपेक्षितं तदन्यत्तिलादि च अङ्गद आनयेत् ॥ १६ ॥

१७ ] ति० टी०—तारः सचिवः । संभ्रमाद्वेगात् । हि यतोऽस्मिन्काले विशेषतस्त्वरा युक्ता, सैव चेदृशेऽवसरे गुणवतीति संबन्धः ॥ १७ ॥

रा० टी०—वालिमन्त्रिणं संबोध्याह—त्वमिति । हे तार! संभ्रमात् अतिवेगात् शिबिकामादाय किष्किन्धातो गृहीत्वा शीघ्रमागच्छ हि यतः अस्मिन् काले त्वरा वेगः गुणवती अनेकगुणविशिष्टा, अतः विशेषतो युक्ता कर्तव्येत्यर्थः ॥ १७ ॥

गो० टी०—त्वमिति । त्वरा गुणवती अस्मिन्काले विशेषतो युक्ता ॥ १७ ॥

१८-२१ ] ति० टी०—समर्था बलिनः शिबिकावाहनोचिता ये निर्हरिष्यन्ति ते सज्जीभवन्त्वित्यन्वयः । निर्हारो दहनदेशनयनम् ॥ १८-२१ ॥

रा० टी०—सज्जीभवन्त्विति । बलिनः अतिबलवन्तः

१ चैनं त्वमिति गो. पाठः । २ अन्यच्चेति रा. पाठः । ३ वहनोचिता इति गो. पाठः ।

दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम् । पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम् ॥ २२ ॥
आचितां चित्रपत्तीभिः सुनिविष्टां समन्ततः । विमानमिव सिद्धानां जालवातायनायुताम् ॥ २३ ॥
सुनियुक्तां विशालां च सुकृतां शिल्पिभिः कृताम् । दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम् ॥ २४ ॥
वराभरणहारैश्च चित्रमाल्योपशोभिताम् । गुहागहनसंछन्नां रक्तचन्दनभूषिताम् ॥ २५ ॥
पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च । तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६ ॥
ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् । क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम् ॥ २७ ॥

अत एव समर्था वालिवहनसामर्थ्ययुक्ताः अत एव शिबिकावाहनोचिताः शिबिकानयनयोग्याः ये प्लवगाः वालिनं निर्हरिष्यन्ति चिताभूमिं प्रापयिष्यन्ति ते सज्जीभवन्तु कृतप्रयत्नास्तिष्ठन्तु ॥ १८ ॥

रा० टी०—एवमिति । लक्ष्मणः सुग्रीवमेवमुक्त्वा तस्थौ तूष्णीं बभूव ॥ १९ ॥

गो० टी०—सज्जीभवन्त्विति । ये निर्हरिष्यन्ति ते सज्जीभवन्त्विति योजना । निर्हारः शववहनम् ॥ १८ ॥ १९ ॥

रा० टी०—लक्ष्मणस्येति । संभ्रान्तमानसः उद्विग्नचित्तस्तारो वालिमन्त्री लक्ष्मणस्य वचः श्रुत्वा शिबिकासक्तमानसः शिबिकानयने आसक्तमनाः सन् गुहां प्रविवेश ॥ २० ॥

गो० टी०—लक्ष्मणस्येति । गुहां किष्किन्धाम् ॥ २० ॥ २१ ॥

रा० टी०—आदायेति । उद्वहनोचितैर्वानरैः उह्यमानाम् ॥ २१ ॥

गो० टी०—वानरैरित्यादि । भद्रासनयुतां राजासनयुक्ताम्, राजार्होन्नतासनयुक्तामिति रामानुजार्यः । पक्षिकर्मभिराचित्रां कृत्रिमपक्षिभिः समन्तादाश्चर्यभूताम् । क्रियत इति कर्म प्रतिकृतिः, द्रुमकर्मभिः द्रुमप्रतिकृतिभिः विभूषिताम् आचितां चित्रपत्तीभिः चित्रलेखाभिः पदातिभिरित्येके । आर्षो दीर्घः । सुनिविष्टां शोभनसन्निवेशवतीं जालवातायनावृतां सूक्ष्मरन्ध्रसमूहो जालं गोनयनाकृतिरन्ध्रसमूहो गवाक्षं तदावृताम्, सुनियुक्तां सुश्लिष्टां सुकृतां सुष्ठु कृतां यत्नेन कृतामित्यर्थः । दारुपर्वतकोपेतां दारुनिर्मितक्रीडापर्वतयुक्तां, चारुकर्मणा उत्तेजनेन परिष्कृताम् अलंकृतां, वराभरणैः हारैश्च युक्तामिति शेषः । गुहागहनसंछन्नां कृत्रिमैर्गुहागहनैः गुहाभिः काननैश्च संछन्नां पुष्पौघैः मुक्तकपुष्पनिचयैः आस्तरणार्थैः समभिच्छन्नां व्याप्तां, पद्मेति चतुर्दिक्षु पुष्पसरोपतत्स्वेऽप्यन्तरान्तरा पद्ममालाभिः पद्मपङ्क्तिभिर्युक्तामित्यर्थः ॥ २२–२६ ॥

२२ ] ति० टी०—भद्रासनयुतां मध्ये राजोचितमहार्हासनवतीम् । पक्षिकर्मभिः पक्षिप्रतिकृतिभिरासमन्ताच्चित्रां चित्रवतीम् द्रुमकर्मभिर्द्रुमप्रतिकृतिभिर्भूषिताम् ॥ २२ ॥

रा० टी०—दिव्यां देवलोकात् प्राप्तां भद्रासनयुतां कल्याणकारकासनविशिष्टामत एव शिबिकामारोहकाणां कल्याणप्रदाम् "उदीचां" इतीत्वम् । स्यन्दनोपमाम् अतिविपुलत्वेन रथसदृशीं पक्षिकर्मभिः पक्षिनिर्मापकक्रियाभिः आचित्रां समन्ताच्चित्रितां शिल्पिनिर्मितानेकविधपक्षिविशिष्टामित्यर्थः, द्रुमकर्मभिः कृत्रिमद्रुमैर्विभूषितां शिल्पिनिर्मितानेकविधद्रुमविशिष्टामित्यर्थः ॥ २२ ॥

२३ ] ति० टी०—चित्रपत्तीभिश्चित्रपदातिभिः दीर्घ आर्षः, सुनिविष्टां सुसंनिवेशाम् जालवातायनयुतां जालवन्निर्मितवातमार्गयुताम् ॥ २३ ॥

रा० टी०—चित्रपत्तीभिः । चित्रीभूतपदातिभिः आचितां व्याप्तां सुनिविष्टां शोभनप्रवेशमार्गविशिष्टां विमानमिव विमानसदृशीं जालवातायनायुताम् जालवन्निर्मितवायुमार्गविशिष्टाम् ॥ २३ ॥

२४ ] ति० टी०—सुनियुक्तां सुश्लिष्टाम् । शिल्पिभिर्विशालां कृतामेवमुक्तरीत्या सुकृताम् । दारुनिर्मितक्रीडापर्वतयुक्ताम् । चारुकर्मभिः परिष्क्रियाकर्मभिः परिष्कृताम् ॥ २४ ॥

रा० टी०—सुनियुक्तां शोभनावयवसंनिवेशविशिष्टां विशालां विस्तीर्णस्थलां शिल्पिभिः सुकृतां शोभनप्रयत्नजनितां कृतामारोहकानां दुःखनिवर्तिका दारुपर्वतकोपेतां दारुनिर्मितक्रीडापर्वतविशिष्टां चारुकर्मपरिष्कृतां चारु शोभनं कर्म येषां तैरनेकशिल्पिभिरित्यर्थः, परिष्कृतां सेविताम् ॥ २४ ॥

२५–२६ ] ति० टी०—तदेवाह—वराभरणहारैरिति । युक्तामिति शेषः । गुहागहनशब्देन शिबिकोपरि प्रसार्यमाणं पञ्जरमुच्यते ॥ २५ ॥ २६ ॥

रा० टी०—वराभरणहारैर्युक्तामिति शेषः, चित्रमाल्योपशोभिताम् चित्रीभूतानेकविधपुष्पयुक्ताम्, गुहागहनसंछन्नाम् शिल्पिनिर्मितगुहाकाननाभ्यां संछन्नां संयुक्ताम् ॥ २५ ॥

रा० टी०—पुष्पाढ्यैः बहुपुष्पैः समभिच्छन्नाम्, तरुणादित्यवर्णाभिः अत एव भ्राजमानाभिः पद्ममालाभिः आवृताम् शिबिकामादाय स लक्ष्मणाज्ञप्तस्तारः पुनः पर्यापतत् आगच्छत् । श्लोकषट्कमेकान्वयि ॥ २६ ॥

२७ ] ति० टी०—विनीयतां दहनदेशमिति शेषः ॥ २७ ॥

रा० टी०—ईदृशीमिति । शिबिकां दृष्ट्वा वाली क्षिप्रं विनीयतां चितां प्राप्यताम् प्रेतकार्यं विधीयतामिति रामो लक्ष्मणमब्रवीत् ॥ २७ ॥

गो० टी०—ईदृशीं शिबिकामिति । पुनरुक्तिर्व्यवहितानुस्मरणार्था ॥ २७ ॥

---

१ ऽऽवृतामिति गो. पाठः । २ विश्वकर्मणेति गो. पाठः । ३ ओघैरिति गो. पाठः ।

ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा । आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २८ ॥
आरोप्य शिबिकां चैव वालिनं गतजीवितम् । अलंकारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २९ ॥
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः । और्ध्वदेहिकमार्यस्य क्रियतामनुकूलतः ॥ ३० ॥
विश्राणयन्तो रत्नानि विविधानि बहूनि च । अग्रतः प्लवगा यान्तु शिबिका तदनन्तरम् ॥ ३१ ॥
राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः । तादृशैरिह कुर्वन्तु वानरा भर्तृसत्क्रियाम् ॥ ३२ ॥
तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदेहिकम् । अङ्गदं परिरभ्याशु तारप्रभृतयस्तथा ॥ ३३ ॥
क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः । ततः प्रणिहिताः सर्वा वानर्योऽस्य वशानुगाः ॥ ३४ ॥
चुक्रुशुर्वीर वीरेति भूयः क्रोशन्ति ताः प्रियम् । ताराप्रभृतयः सर्वा वानर्यो हतबान्धवाः ॥ ३५ ॥
अनुजग्मुश्च भर्तारं क्रोशन्त्यः करुणस्वनाः । तासां रुदितशब्देन वानरीणां वनान्तरे ॥ ३६ ॥
वनानि गिरयश्चैव विक्रोशन्तीव सर्वतः । पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते ॥ ३७ ॥
चितां चक्रुः सुबहवो वानरा वनचारिणः । अवरोप्य ततः स्कन्धाच्छिबिकां वानरोत्तमाः ॥ ३८ ॥
तस्थुरेकान्तमाश्रित्य सर्वे शोकपरायणाः । ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ॥ ३९ ॥
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता । हा वानर महाराज हा नाथ मम वत्सल ॥ ४० ॥

२८ ] ति० टी०—उद्यम्य हस्ताभ्यां भूमेरूर्ध्वं कृत्वा ॥२८॥

रा० टी०—तत इति । ततः रामवचनश्रवणानन्तरम् अङ्गदेन सहैव विक्रोशन् सुग्रीवः उद्यम्य यत्नेनोत्थाप्य वालिनं शिबिकामारोपयत ॥ २८ ॥

गो० टी०—तत इति । ततः लक्ष्मणं प्रति वाली विनीयतामित्युक्तिश्रवणानन्तरमित्यर्थः । यद्वा लक्ष्मणं प्रत्युक्तिः स्वमुद्दिश्यैवेति ज्ञात्वेत्यर्थः । आरोपयत आरोपयत् ॥ २८ ॥

२९ ] ति० टी०—शिबिकामारोप्य शिबिकायां स्थापयित्वा २९

३० ] ति० टी०—आज्ञापनप्रकारः—और्ध्वदेहिकमित्यादि । और्ध्वदेहिकं तत्क्रियायोग्यं स्थानमनुकूलतो नदीतीरसमीपतः क्रियतामित्युत्तरमिति द्रष्टव्यम् ॥ ३० ॥

रा० टी०—आरोप्येति । सुग्रीवः अलंकारादिभिर्भूषितं वालिनं शिबिकामारोप्य आज्ञापयत् । आज्ञापनप्रकारमाह—आर्यस्य वालिनः और्ध्वदेहिकम् अनुकूलतो नदीकूलसमीपे शास्त्रानुसारतो वा क्रियताम् । श्लोकद्वयमेकान्वयि ॥२९॥३०॥

गो० टी०—आरोप्येति । आर्यस्य ज्येष्ठस्य देहादूर्ध्वं कर्तव्यम् और्ध्वदैहिकम् उत्तरक्रिया । शिबिकासमनन्तरम् आसन्नीसमीपे । अत्रेतिकरणं द्रष्टव्यम् इत्याज्ञापयदिति पूर्वेण संबन्धः ॥ २९—३१ ॥

३१ ] ति० टी०—विश्राणयन्तः क्षिपन्तः । इत्याज्ञापयदित्यन्वयः ॥ ३१ ॥

रा० टी०—विश्राणयन्त इति । रत्नानि विश्राणयन्तः प्रक्षेपेण ददतः प्लवगा अग्रतो यान्तु, तदनन्तरम् शिबिका यातु ३१

३२—३३ ] ति० टी०—तादृशै ऋद्धिविशेषैः सत्क्रियां कुर्वन्तु ॥ ३२ ॥ ३३ ॥

रा० टी०—राज्ञामिति । राज्ञां भुवि चिताभूमिसमीपे यादृशा ऋद्धिविशेषा दृश्यन्ते अदृश्यन्त तादृशैः ऋद्धिविशेषैः हे वानरा.! भर्तृसत्क्रियां समीचीनप्रमीतक्रियां भवन्तः कुर्वन्तु ॥ ३२॥

गो० टी०—राज्ञामिति । ऋद्धिविशेषाः ऋद्धिविशेषानुरूपाः यादृशा और्ध्वदैहिकक्रियाप्रकारा दृश्यन्ते तादृशमौर्ध्वदैहिकं क्षिप्रं प्राकुर्वन् ॥ ३२ ॥

रा० टी०—तादृशमिति । तदा सुग्रीववचनश्रवणानन्तरकाले तारप्रभृतयः अङ्गदं परिरभ्य परिगृह्य तादृशं राजान्तरौर्ध्वदेहिकसदृशमौर्ध्वदेहिकं प्राकुर्वन् कर्तुमारभन्त ॥ ३३ ॥

गो० टी०—अङ्गदमिति । तारप्रभृतयो वानरा इति सम्यक् ॥ ३३ ॥

३४—३६ ] ति० टी०—प्रणिहिताः समेताः ॥ ३४—३६ ॥

रा० टी०—क्रोशन्त इति । हताः राजविघातेन निहतप्राया बान्धवा येषां ते क्रोशन्तो वानराः प्रययुः । ततोऽनन्तरं प्रणिहिताः समीपं प्राप्ताः अस्य वालिनो वशानुगाः वानर्यः वीरवीरेतिभूयश्चुक्रुशुः अत एव वानरा अपि भूयः क्रोशन्ति आक्रोशन् । सार्धश्लोक एकान्वयी ॥ ३४ ॥

रा० टी०—तारेति । करुणस्वनाः दयोत्पादकस्वनवत्यः ताराप्रभृतयो नार्यः क्रोशन्त्यः सत्यः भर्तारमनुजग्मुः । अर्धद्वयमेकान्वयि ॥ ३५ ॥

रा० टी०—तासामिति । वनान्तरे वनमध्ये वानरीणां रुदितशब्देन वनादीनि क्रोशन्तीव ॥ ३६ ॥

गो० टी०—तत इति । प्रणिहिताः आप्ताः ॥ ३४—३७ ॥

३७—४० ] ति० टी०—विक्रोशन्तीव प्रतिध्वनिनेति शेषः । जलसंवृते समन्ताज्जलावृतभूदेशे ॥ ३७—४० ॥

१ और्ध्वदेहिकमिति गो. पाठः । २ रूपत इति गो. पाठः । ३ ऽपीति गो. पाठः । ४ समनन्तरमिति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ और्ध्वदैहिकमिति गो. पाठः । ७ तदेति गो. रा. पाठः । ८ प्रिय इति गो. पाठः । ९ यूथपा इति गो. पाठः । १० शोककर्षिता इति गो. पाठः । ११ बहनोचिता इति गो. पाठः । १२ समन्विता इति गो. पाठः ।

हा महार्ह महाबाहो हा मम प्रिय पश्य माम् । जनं न पश्यसीमं त्वं कस्माच्छोकाभिपीडितम् ॥ ४१ ॥
प्रहृष्टमिह ते वक्त्रं गतासोरपि मानद । अस्तार्कसमवर्णं च [१]दृश्यते जीवतो यथा ॥ ४२ ॥
एष त्वां रामरूपेण कालः कर्षति वानर । येन स्म विधवाः सर्वाः कृता एकेषुणा [२]रणे ॥ ४३ ॥
इमास्तास्तव राजेन्द्र वानर्यो[३]ऽप्लवगास्तव । पादैर्विकृष्टमध्वानमागताः किं न बुध्यसे ॥ ४४ ॥
तवेष्टा ननु [४]चैवेमा भार्याश्चन्द्रनिभाननाः । इदानीं नेक्षसे कस्मात्सुग्रीवं प्लवगे[५]श्वर ॥ ४५ ॥
एते हि सचिवा राजंस्तारप्रभृतयस्तव । पुरवा[६]सिजनश्चायं परिवार्य [७]विषीदति ॥ ४६ ॥
विसर्जयैनान्सचिवान्यथापुरमरिन्दम । ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः ॥ ४७ ॥
एवं विलपतीं तारां पतिशोकपरी[८]वृताम् । उत्थापयन्ति स्म तदा वानर्यः शोककर्शिताः [९]॥ ४८ ॥
सुग्रीवेण ततः सार्धं [१०]सोऽङ्गदः पितरं रुदन् । चितामारोपयामास शोकेनाभिप्लुतेन्द्रियः ॥ ४९ ॥
ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह । पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ५० ॥

रा० टी०–पुलिन इति । विविक्ते जनैरसेविते जलसंवृते जलसमीपे चतुर्दिक्षु जलैराच्छादिते वा गिरिनद्याः पर्वतीयसरितः पुलिने सुबहवो वानराः चितां चक्रुः ॥ ३७ ॥

रा० टी०–अवेति । ततः चितासमीपप्राप्त्यनन्तरं शोकपरायणाः वानरोत्तमाः शिबिकां स्कन्धादवरोप्य उत्तार्य एकान्तमेकदेशमाश्रित्य तस्थुः ॥ ३८ ॥

रा० टी०–तत इति । सुदुःखिता तारा शिबिकातलशायिनं पतिं दृष्ट्वा तस्य शिरः अङ्के आरोप्य तस्याङ्के शिर आरोप्य वा विललाप ॥ ३९ ॥

रा० टी०–विलापप्रकारमाह–हेत्यादिभिः । महार्ह ! हे वीरकर्तृकातिसत्कृत ! मां पश्य ॥ ४० ॥

गो० टी०–अवरोप्येति । वहनोचिताः वाहकाः॥३८–४२॥

४१–४२ ] ति० टी०–महार्ह ! उत्तमभोगार्ह ॥४१॥४२॥

रा० टी०–जनमिति । इमं जनं कस्मात् त्वं न पश्यसि । अर्थं पृथक् ॥ ४१ ॥

रा० टी०–प्रहृष्टमिति । अस्तार्कसमवर्णम् अस्तकालिकसूर्यवर्णसदृशवर्णविशिष्टं गतासोरपि ते वक्त्रं जीवतो वक्त्रमिव प्रहृष्टं दृश्यते ॥ ४२ ॥

४३ ] ति० टी०–रणे सुग्रीवेण सह युद्धे ॥ ४३ ॥

रा० टी०–एष इति । येन एकेषुणा एकबाणेन सर्वा वयं विधवाः कृताः स एषः रामरूपेण काल एव त्वां कर्षति लोकान्तरं नयति ॥ ४३ ॥

४४–४६ ] ति० टी०–अप्लवगाः प्लवगतिमजानन्त्यः[११] । विकृष्टं दूरम् ॥ ४४–४६ ॥

रा० टी०–इमा इति । विकृष्टं दूरमध्वानं पादैरागताः तव वानर्यस्तव प्लवगाश्च किं न बुध्यसे जानासि । वाक्यस्य कर्मत्वान्न द्वितीया ॥ ४४ ॥

गो० टी०–इमास्ता इति । विकृष्टं विप्रकृष्टम् अध्वानं पादैरागताः ॥ ४३ ॥

रा० टी०–तवेति । तवेष्टा ईप्सिता भार्याः सुग्रीवं च इदानीं कस्मात् नेक्षसे ॥ ४५ ॥

रा० टी०–एते इति । तारप्रभृतयः सचिवाः पुरवासिजनश्च परिवार्य त्वां संवेष्ट्य विषीदन्ति, विषीदति वचनविपरिणामेन पूर्वत्राप्यन्वयः ॥ ४६ ॥

गो० टी०–इदानीमित्यादि । मदनोत्कटाः उत्कटमदनाः ॥ ४४ ॥ ४६ ॥

४७–४९ ] ति० टी०–यथापुरं यथापूर्वं क्रीडामहे । त्वया सहेति विललापेति शेषः ॥ ४७–४९ ॥

रा० टी०–विसर्जयेति । हे अरिन्दम ! एतान् सचिवान् यथापुरं पूर्वमिव विसर्जय ततोऽनन्तरं मदनोत्कटा उत्कटमदनवत्यो वयं वनेषु क्रीडामहे, त्वया सहेति शेषः ॥ ४७ ॥

रा० टी०–एवमिति । पतिशोकपरीवृताम् अत एव एवं विलपतीं विलपन्तीं तारां वानर्यः उत्थापयन्ति स्म ॥ ४८ ॥

गो० टी०–एवमिति । विलपतीं विलपन्तीम् ॥ ४६ ॥

रा० टी०–सुग्रीवेणेति । सोऽङ्गदः सुग्रीवेण सार्धं रुदन् सन् पितरं चितामारोपयामास प्रापयामास, तत्र संस्थापयामासेत्यर्थः ॥ ४९ ॥

गो० टी०–सुग्रीवेणेति । पितरं पितृशरीरम् ॥ ४७ ॥

५० ] ति० टी०–अपसव्यमपसव्यपरिक्रमणम् ॥ ५० ॥

रा० टी०–तत इति । ततः आरोपणानन्तरम् अग्निं विधिवत् दत्त्वा संस्थाप्य दीर्घं पथिकानिवर्तकम् अध्वानं प्रस्थितं पितरं वालिनं सोऽङ्गदः अपसव्यं चकार प्रदक्षिणेन परिक्रमणं चक्रे इत्यर्थः ॥ ५० ॥

गो० टी०–तत इति । अपसव्यम् अप्रदक्षिणम् ॥४८॥

१ लक्ष्यते इति गो. पाठः । २ वने इति गो. पाठः । ३ वल्लभाः सदेति गो. प्लवगा इति रा. पाठः । ४ नामेमा इति गो. पाठः । ५ ईश्वरमिति गो. पाठः । ६ वासी जनश्चेति गो. पाठः । ७ आसतेऽनघेति गो. पाठः । ८ प्लवगान्यथोचितमिति गो. पाठः । ९ परिप्लुतामिति गो. पाठः १० स इति गो. नास्ति । ११ अजानत्य इति युक्तं भाति ।

संस्कृत्य वालिनं [1]तं तु विधिवत्प्लवगर्षभाः । आजग्मुरुदकं कर्तुं नदीं [2]शुभजलां शिवाम् ॥ ५१ ॥
ततस्ते सहितास्तत्र [3]अङ्गदं स्थाप्य चाग्रतः । सुग्रीवतारासहिताः सिषिचुर्वानरा जलम् ॥ ५२ ॥
सुग्रीवेणेव दीनेन दीनो भूत्वा महाबलः । समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥ ५३ ॥
ततोऽथ तं वालिनमग्र्यपौरुषं प्रकाशमिक्ष्वाकुवरेषुणा हतम् ।
प्रदीप्य दीप्ताग्निसमौजसं तदा सलक्ष्मणं राममुपेयिवान्हरिः ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

हनुमता किष्किन्धाप्रवेशं प्रति प्रार्थितो रामः पित्राऽहं ग्रामनगरप्रवेशे निषिद्धोऽस्म्यतः सुग्रीवं किष्किन्धाराज्येऽङ्गदं च यौवराज्येऽभिषेचयतेति नियोज्य स्वस्यावर्षान्तं गुहानिवासं प्रतिजानीते, ततश्च सीतान्वेषणमनुमनुते । गृहीतरामाज्ञः सुग्रीवस्तथाऽनुतिष्ठति ।

ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससम् । शाखामृगमहामात्राः परिवार्योपतस्थिरे ॥ १ ॥
अभिगम्य महाबाहुं राममक्लिष्टकारिणम् । स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २ ॥
ततः काञ्चनशैलाभस्तरुणार्कनिभाननः । अब्रवीत्प्राञ्जलिर्वाक्यं [7]हनूमान्मारुतात्मजः ॥ ३ ॥
भवत्प्रसादात्काकुत्स्थ पितृपैतामहं महत् । [10]वानराणां सुदंष्ट्राणां संपन्नबलशालिनाम् ॥ ४ ॥
महात्मनां सुदुष्प्रापं प्राप्तं राज्यमिदं प्रभो । भवता समनुज्ञातः प्रविश्य नगरं शुभम् ॥ ५ ॥

५१-५२ ] ति० टी०-विधिवद्देवांशत्वेन स्वयंज्ञातवेदस्वाज्ज्ञानवत् तिर्यग्देहोचितविधिवदित्यर्थः, विधिवदग्निहोत्रविधिनेत्यर्थ इत्यन्ये ॥ ५१ ॥ ५२ ॥

रा० टी०-संस्कृत्येति । प्लवगर्षभाः वालिनं विधिवत् संस्कृत्य वह्निसंस्कारं कारयित्वा उदकं कर्तुं दातुं नदीमाजग्मुः ॥ ५१ ॥

गो० टी०-संस्कृत्येति । वालिनं वालिशरीरम् उदकं कर्तुं जलतर्पणं कर्तुं नदीं किष्किन्धासमीपवर्तिनीम् ॥ ४९ ॥

रा० टी०-तत इति । ततः सहिताः संघीभूताः सुग्रीवतारासहिताः ते वानरर्षभाः वालिनः वालिने जलं सिषिचुः ॥५२॥

गो० टी०-ततस्त इति । सुग्रीवतारासहिता इति तारयाप्युदकदानं कुलाचारः ॥ ५० ॥

५३-५४ ] ति० टी०-प्रेतकार्याणि जलदानादिरूपाण्यकारयत् तदितिकर्तव्यतामुपदिष्टवानित्यर्थः ॥ ५३ ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०-सुग्रीवेणेति । सुग्रीवेण समानशोकः काकुत्स्थो रामः दीनो भूत्वा सुग्रीवेण प्रेतकार्याणि अकारयत्॥५३॥

गो० टी०-सुग्रीवेणेति । अनेन रामः सहैवागत इत्यवगम्यते ॥ ५१ ॥

रा० टी०-तत इति । ततः प्रेतकृत्यसाधनानन्तरम् अग्र्यपौरुषम् अतिबलवन्तं प्रकाशं प्रसिद्धम् इक्ष्वाकुवरेषुणा हतं तं वालिनं प्रदीप्य विधिवत्संदह्य दीप्ताग्निसमौजसं सलक्ष्मणं रामं हरिः सुग्रीवः उपेयिवान् प्राप ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०-ततस्त्विति । प्रकाशं प्रसिद्धं प्रदीप्य दग्ध्वा हरिः सुग्रीवः । अन्ये पुरं प्रविविशुरित्यर्थसिद्धम् । यद्यपि तिर्यगधिकरणरीत्या तिरश्चां न शास्त्रविहितसंस्काराधिकारः तथापि देवांशसंभूतानां तिर्यगवस्थामात्रभाजां वेदाध्ययनसंयोगादेवक्षत्रजातत्वात् संस्कारार्हताऽस्तीति बोध्यम् ॥ ५२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

१-५ ] ति० टी०-क्लिन्नवाससमार्द्रवाससम् । शाखामृगमहामात्रा वानरबलप्रधानाः ॥ १-६ ॥

रा० टी०-सुग्रीवकर्तृकागमनानन्तरकालिकं वृत्तान्तमाह-तत इत्यादिभिः । क्लिन्नवाससम् आर्द्रवस्त्रयुक्तं सुग्रीवं शाखामृगमहामात्राः शाखामृगमहस्य सकलवानरपूज्यस्य सुग्रीवस्य

---

१ ते इति गो. पाठः । २ पूर्वं प्लवङ्गमाः इति गो. पाठः । ३ शीतेति गो. पाठः । ४ ह्रीत्यधिकम् गो. पाठे । ५ वालिने इति गो. पाठः । ६ त्विति गो. पाठः । ७ हनुमानिति गो. पाठः । ८ सुग्रीव इति गो. पाठः । ९ अर्धमेतत् गो. नास्ति । १० वानराणामिति गो. पाठः । ११ प्राप्त इति गो. पाठः ।

संविधास्यति कार्याणि सर्वाणि ससुहृद्गणः । स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि ॥ ६ ॥
अर्चयिष्यति माल्यैश्च रत्नैश्च त्वां विशेषतः । इमां गिरिगुहां रम्यामभिगन्तुं त्वमर्हसि ॥ ७ ॥
कुरुष्व स्वामिसंबन्धं वानरान्संप्रहर्षय । एवमुक्तो हनुमता राघवः परवीरहा ॥ ८ ॥
प्रत्युवाच हनूमन्तं बुद्धिमान्वाक्यकोविदः । चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् ॥ ९ ॥
न प्रवेक्ष्यामि हनुमन्पितुर्निर्देशपारगः । सुसमृद्धां गुहां दिव्यां सुग्रीवो वानरर्षभः ॥ १० ॥
प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् । एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् ॥ ११ ॥
वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् । इममप्यङ्गदं [६]वीरं यौवराज्येऽभिषेचय ॥ १२ ॥
ज्येष्ठस्य [८]हि सुतो ज्येष्ठः सदृशो विक्रमेण च । अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥ १३ ॥
पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः । प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिताः[९] ॥ १४ ॥
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् । अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥ १५ ॥

अमात्याः मन्त्रिणः परिवार्य उपतस्थिरे सुग्रीवेण सह जग्मुः॥१॥

गो० टी०—अथ सुग्रीवाभिषेकः षड्विंशे—तत इत्यादि । क्लिन्नवाससम् आर्द्रवस्त्रं सद्यःस्नानादिति भावः । शाखामृगमहामात्राः वानररूपा मन्त्रिणः ॥ १ ॥

रा० टी०—अभिगम्येति । अक्लिष्टकारिणं क्लेशाभावेन सकलकर्मप्रवर्तनशीलं रामम् अभिगम्य प्राप्य सर्वे सुग्रीवप्रभृतयः पितामहं ब्रह्माणम् ऋषय इव प्राञ्जलयः प्रणयसूचकबद्धयुगलकराः सन्तः स्थिताः ॥ २ ॥

रा० टी०—तत इति । ततः रामसमीपप्राप्त्यनन्तरं काञ्चनशैलाभः सुमेरुसदृशः तरुणार्कनिभाननः तरुणसूर्यसदृशमुखः हनूमान् अब्रवीत् ॥ ३ ॥

गो० टी०—अभिगम्येति । सर्वे सुग्रीवादयः ॥ २॥३ ॥

रा० टी०—तद्वचनाकारमाह—भवादिति । सुदंष्ट्राणां तीक्ष्णदंष्ट्राविशिष्टानां संपन्नबलशालिनाम् अतिबलवतां महात्मनां वानराणां सुदुष्प्रापं प्राप्तुमशक्यं पितृपैतामहं महदिदं राज्यं भवत्प्रसादात् प्राप्तं सुग्रीवेणेति शेषः। सार्धश्लोक एकान्वयी॥४॥

रा० टी०—भवतेति । भवता समनुज्ञातः ससुहृद्गणः सुग्रीवः नगरं किष्किन्धां प्रविश्य सर्वाणि कार्याणि राज्ञा कर्तव्यानि संविधास्यति ॥ ५ ॥

गो० टी०—भवत्प्रसादादिति । वानराणां राज्यमित्यन्वयः ॥ ४ ॥ ५ ॥

६-७ ] ति० टी०—कार्याणि राजकार्याणि । यथाविधि स्नातो राज्याभिषेकाभिषिक्तः ॥ ६ ॥ ७ ॥

रा० टी०—स्नात इति । गन्धैरौषधैश्च स्नातोऽयं सुग्रीवः माल्यैः रत्नैश्च त्वां विशेषतोऽर्चयिष्यति अतः गिरिगुहां किष्किन्धामितो गन्तुमर्हसि। सार्धश्लोक एकान्वयी ॥ ६ ॥ ७॥

गो० टी०—अतिनिपुणतया हनुमान् प्रथमं संग्रहेण विज्ञाप्य तच्छृण्वति रामे पुनर्विशदमाह—स्नात इति ॥ ६ ॥

गो० टी०—इमामिति। गिरिगुहां किष्किन्धाम् । वानराणां स्वामिना संबन्धं कुरु सुग्रीवं वानरराजं कुर्वित्यर्थः॥७—११॥

८-१० ] ति० टी०—स्वामिसंबन्धं वानरस्वामित्वसंबन्धम् । सुग्रीवस्य राज्याभिषेकेणेति शेषः ॥ ८-१० ॥

रा० टी०—कुरुष्वेति । स्वामिसंबन्धं सुग्रीवे वानरनिरूपितस्वामित्वसंसर्गं कुरुष्व सुग्रीवं राज्ये स्थापयेत्यर्थः, अत एव वानरान् संप्रहर्षय । अर्धं पृथक्—एवमिति । हनुमता एवमुक्तो राघवः हनूमन्तं प्रत्युवाच । अर्धद्वयमेकान्वयि ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—चतुर्दशेति । हे हनुमन् ! पितुः निर्देशपारगः आज्ञानिर्वाहकोऽहं चतुर्दश समाः वर्षाणि ग्रामं पुरं च न प्रवेक्ष्यामि ॥ ९ ॥

रा० टी०—ननु तर्हि सुग्रीवोऽपि इहैव तिष्ठतु इत्यत आह—सुसमृद्धामिति । गुहां किष्किन्धां प्रविष्टः मदाज्ञया संप्राप्तः सुग्रीवः क्षिप्रं राज्ये राज्यासने अभिषिच्यतामभिषेकेण प्राप्यताम् ॥ १० ॥

११-१२ ] ति० टी०—अभिषिच्यताम् । मदाज्ञया त्वयेति शेषः ॥ ११ ॥ १२ ॥

रा० टी०—एवमिति । हनूमन्तमेवमेवमुक्त्वा रामः सुग्रीवमब्रवीत् ॥ ११ ॥

रा० टी०—तद्वचनाकारमाह—वृत्तज्ञ इति । वृत्तज्ञः लोकशास्त्रवृत्तान्ताभिज्ञस्त्वमुदारबलविक्रमम् उदारौ अधिकावित्यर्थः बलविक्रमौ पराक्रमप्रतापौ यस्य तमङ्गदं यौवराज्ये अभिषेचय ॥ १२ ॥

गो० टी०—इममपीत्यादि । भाजनम् योग्यमित्यर्थः॥१२

१३ ] ति० टी०—यतो ज्येष्ठस्य ज्येष्ठः सुतो विक्रमेण ज्येष्ठस्य सदृशश्च, तस्माद्यौवराज्ये योग्यः ॥ १३ ॥

रा० टी०—तत्र हेतुमाह—ज्येष्ठस्येति । ज्येष्ठस्य भ्रातुः ज्येष्ठः सुतः अत एव विक्रमेण सदृशः अत एव अदीनात्मा अयमङ्गदः यौवराज्यस्य भाजनं पात्रम् ॥ १३ ॥

१४-१५ ] ति० टी०—सीतान्वेषणोद्योगं सुग्रीवस्या-

१ जन इति गो. पाठः । २ इत इति गो. रा. पाठः । ३ हर्षयाशुति गो. पाठः । ४ पालक इति गो. पाठः । ५ रम्यामिति गो. पाठः । ६ वीरेति गो. पाठः । ७ स इति गो. पाठः । ८ ते इति गो. पाठः । ९ संज्ञिका इति गो. पाठः ।

इयं गिरिगुहा रम्या विशाला युक्तमारुता । प्रभूतसलिला सौम्य प्रभूतकमलोत्पला ॥ १६ ॥
कार्तिके समनुप्राप्ते त्वं रावणवधे यत । एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ॥ १७ ॥
अभिषिञ्चस्व राज्ये च सुहृदः संप्रहर्षय । इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः ॥ १८ ॥
प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् । तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् ॥ १९ ॥
अभिवार्य प्रविष्टानि सर्वतः प्लवगेश्वरम् । ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् ॥ २० ॥
प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः । सुग्रीवः प्रकृतीः सर्वाः संभाष्योत्थाप्य वीर्यवान् ॥ २१ ॥

लक्ष्याह—पूर्वोऽयमिति । ये चत्वारो वार्षिकसंज्ञकाः प्रवृत्तास्तेषामयं पूर्व इति योजना ॥ १४ ॥ १६ ॥

रा० टी०—ननु भवत्कार्यसाधनमन्तरा सुग्रीवाभिषेको नोचित इत्यत आह—पूर्व इति । वार्षिकसंज्ञकाः वार्षिकवृष्टिकर्तृत्वं तस्य संज्ञा ज्ञानं ज्ञाता येषु ते ये चत्वारो मासाः प्रवृत्ताः संप्राप्ताः । किंच प्रकृष्टवृत्तान्तवन्तः राजादियात्रानिवर्तका इत्यर्थः, तेषां मध्ये सलिलागमः अतिवृष्टिप्रवर्तकः वार्षिकः वर्षर्तुसंबन्धी पूर्वोऽयं श्रावणो मासः वर्तते इति शेषः, अतः अयमुद्योगसमयः सीतान्वेषणोद्योगकालो न अतस्त्वं पुरीं किष्किन्धां प्रविश सलक्ष्मणोऽहं तु अस्मिन्पर्वते वत्स्यामि । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १६ ॥

गो० टी०—अस्त्वभिषेकः सीतान्वेषणरावणवधादिकं प्रत्युद्योगः क्रियत इत्याशङ्क्याह—पूर्व इत्यादि । पूर्वः वर्षर्त्वपेक्षया प्रथमः वर्षाः वर्षर्तुः 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा' इत्यमरः । तत्र भवो वार्षिकः । 'द्वौ द्वौ मार्गादिमासौ स्यादृतुः' इति श्रावणभाद्रपदौ वर्षर्तुः तदेकदेशत्वाच्छ्रावणो वार्षिक इत्युच्यते "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । वार्षिकसंज्ञिकाश्चत्वारो मासा इति आश्वयुजाषाढाभ्यां चतुष्टुमिति ज्ञेयं छत्रिन्यायात् । वर्षर्तुत्वाद्वर्षानन्तरकालत्वाच्च चत्वारोऽपि युद्धयोग्या न भवन्ति । कश्चित्तु—"पक्षा वै मासा" इति श्रुतिपक्षमाश्रित्य चत्वारो वार्षिका मासा इत्युक्तम् । श्रावणः प्रथमो मास इत्यत्रापि प्रथमः पक्ष इत्यर्थः । चत्वारो वार्षिका मासा गता वर्षशतोपमा इत्युपसंहारादित्याह ॥ १३–१६ ॥

१६ ] ति० टी०—युक्तमारुता मारुतेन युक्तेत्यर्थः । अस्यां स्थास्यामीति शेषः ॥ १६ ॥

रा० टी०—इयमिति । विशाला विस्तीर्णा युक्तमारुता नित्यं मारुतयुक्ता प्रभूतसलिला बहुनिर्झरवतीत्वे बहुसलिलविशिष्टा प्रभूतानि अत्यन्तं संजातानि कमलोत्पलानि यस्यां सा अत एव रम्या रन्तुं योग्या इयं गिरिगुहा, अस्तीति शेषः । एतेन तस्याः स्थितियोग्यता सूचिता ॥ १६ ॥

१७-२० ] ति० टी०—यत यतस्व । एष नः समय इति आश्विनेऽतीतयत्नारम्भरूपः संकेत इत्यर्थः ॥ १७–२० ॥

रा० टी०—कार्तिके इति । कार्तिके समनुप्राप्ते सति रावणवधे यत प्रयत्नं कुरु, एष नः समयः अस्मत्कृतः संकेतः बोद्धव्य इति शेषः, अतस्त्वं स्वमालयं प्रविश स्वराज्ये प्रविश्य सुहृदः संप्रहर्षय । सार्धश्लोक एकान्वयी ॥ १७ ॥

रा० टी०—इतीति । इति रामाभ्यनुज्ञातः सुग्रीवः किष्किन्धां प्रविवेश ॥ १८ ॥

रा० टी०—तमिति । प्रविष्टं प्रवेशाय गच्छन्तं वानरेश्वरं सुग्रीवं प्रहृष्टानि वानरसहस्राणि अभिवाद्य सर्वतः पर्यवारयन् ॥ १९

गो० टी०—कार्तिक इति । कार्तिके मासि समनुप्राप्ते समीपं प्राप्ते आश्वयुजान्त इत्यर्थः । यत यतस्व सेनासंनहनं कुरु । कार्तिकशब्दस्य आश्वयुजान्तपरत्वं स्वयमेव वक्ष्यति—'वयमाश्वयुजे मासि पिङ्गाक्षप्रतिचोदिताः' इति । प्रचोदनं संनहनं न तु निर्गमः निर्गमस्तु मार्गशीर्षे । स्वसंकेतितकार्तिकातिक्रमादेव रामस्य सुग्रीवे कोपो लक्ष्मणप्रेषणं च । स्वयंप्रभाबिलनिर्गमनानन्तरं द्रुमान् वासन्तिकान् दृष्ट्वेत्येतद्वसन्तपुष्पोद्गमोपक्रमभूतपत्रविगलनहेतुफाल्गुनापेक्षया । पक्षान्तरे फाल्गुनचैत्रयोर्वसन्तत्वोक्तेर्वा । अयमत्र क्रमोऽनुसंधेयः—'उत्तरस्यादिना पूर्वस्यावधिं जानीयात्' इति न्यायेन उत्तरस्योत्तरस्य ग्रहणात् पूर्वपूर्वकालसंख्याज्ञापनं वाल्मीकेः शैली । तथा च चैत्रे रामस्य साकेतान्निर्गमः । अगस्त्याश्रमागमनात्पूर्वं दश संवत्सरा गता इत्युक्तम् । अथ पञ्चवट्यां वर्षत्रयानन्तरं चैत्रे प्राप्ते शूर्पणखानासिकाच्छेदनखरवधादिकं कृतमित्यवगम्यते । रावणेन च मारीचवचनादिना किंचिद्विलम्ब्य तस्मिन्नेव चैत्रे सीता हृता । सीताविरहेण दूयमानस्य रामस्य वसन्तवर्णने चैत्रवनानिल इत्युक्तेः लङ्कायां सीतायाः संवत्सरवासोक्तेश्च पुनः फाल्गुने हि रावणवधः, आषाढे वालिवधः शरदि सेनासंनहनम्, मार्गशीर्षे वानरप्रस्थापनम्, स्वयंप्रभाबिले बहुकालयापनम् 'कालश्च नो महान् यातः' इत्युक्तेः । बहिर्निर्गमनानन्तरं फाल्गुनशुद्धत्रयोदश्यां हनुमतः समुद्रतरणम्, चतुर्दश्यां पुनरागमनम् (?) पौर्णमास्यां दण्डयात्रेत्यादि । अग्ययुद्धकाण्डे वक्ष्यते । समयः संकेतः ॥ १६–१९ ॥

रा० टी०—तत इति । ततः सुग्रीवप्रवेशानन्तरं हरिगणेश्वरं सुग्रीवं दृष्ट्वा सर्वाः प्रकृतयः मूर्ध्ना प्रणम्य वसुधायां समाहिताः संस्थिताः ॥ २० ॥

गो० टी०—तत इति । प्रणम्येति । मूर्ध्ना प्रणम्य वसुधायां पतिताः समाहिताः अनन्यमनस्काः ॥ २० ॥

२१ ] ति० टी०—मूर्ध्ना प्रणम्य नम्रीभूय वसुधायां दण्डवत्पतिताः । उत्थाप्य वसुधायां पतिता इति शेषः ॥ २१ ॥

१ षिञ्चः स्वेति गो. पाठः । २ अभिप इति गो. पाठः । ३ वार्येति गो. वाद्य प्रहृष्टानीति रा. पाठः । ४ पर्यवारयन्निति गो. पाठः ।

भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः । [1]प्रविष्टं भीमविक्रान्तं सुग्रीवं [2]वानरर्षभम् ॥ २२ ॥
अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः । तस्य पाण्डुरमाजह्रुश्छत्रं हेमपरिष्कृतम् ॥ २३ ॥
शुक्ले च वालव्यजने हेमदण्डे यशस्करे । तथा रत्नानि सर्वाणि सर्वबीजौ[3]षधानि च ॥ २४ ॥
सक्षीराणां च वृक्षाणां प्ररोहान्कुसुमानि च । शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् ॥ २५ ॥
सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च । चन्दनानि च दिव्यानि गन्धांश्च विविधान्बहून् ॥ २६ ॥
अक्षतं जातरूपं च प्रियङ्गुमधुसर्पिषी । दधि चर्म च वैयाघ्रं [4]पराध्यौं चाप्युपानहौ ॥ २७ ॥
समालम्भनमादाय [5]गोरोचनं मनःशिलाम् । आजग्मुस्तत्र मुदिता वराः कन्याश्च षोडश ॥ २८ ॥
ततस्ते वानरश्रेष्ठमभिषेक्तुं [6]यथाविधि । रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ॥ २९ ॥
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् । मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ ३० ॥
ततो हेमप्रतिष्ठाने वरास्तरणसंवृते । प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ॥ ३१ ॥
प्राङ्मुखं विधिवन्मन्त्रैः स्थापयित्वा वरासने । नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ॥ ३२ ॥
आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः । अपः कनककुम्भेषु निधाय [7]विमलं जलम् ॥ ३३ ॥

---

रा० टी०—सुग्रीव इति । सुग्रीवः प्रकृतीः प्रजाः संभाष्य संबोध्य उत्थाप्य च भ्रातुः सौम्यमन्तःपुरं प्रविवेश ॥ २१ ॥

गो० टी०—सुग्रीव इति । भ्रातुरन्तःपुरं प्रविवेशेति तारां संमान्य स्ववशीकरणार्थमिति भावः ॥ २१ ॥ २२ ॥

२२–२४ ] ति० टी०—प्रविष्टं भीमविक्रान्तमिति ' प्रविश्य त्वभिनिष्क्रान्तम्' इति पाठे प्रविश्यान्तःपुरगतशोकादिकं दृष्ट्वाऽभिषेकाय तु पुनर्निष्क्रान्तं प्रतिनिवृत्तं सभामागतमित्यर्थः ॥ २२–२४ ॥

२५ ] ति० टी०—क्षीरवृक्षप्ररोहा अधोजटाः ॥ २५ ॥

२६–२७ ] ति० टी०—गन्धान्गन्धद्रव्याणि ॥२६॥२७॥

रा० टी०—प्रविष्टमिति । भीमविक्रान्तं भीमो रिपुभयंकरो विक्रान्तो विक्रमो यस्य तं सुग्रीवं सहस्राक्षममराः इव सुहृदः अभ्यषिञ्चन्त ॥ २२ ॥

रा० टी०—तत्प्रकारमाह–तस्येत्यादिभिः । हेमपरिष्कृतं पाण्डुरं छत्रं हेमदण्डे वालव्यजने केशमयव्यजने चामरे चेत्यर्थः, तस्य समीपमाजह्रुः ॥ २३ ॥

रा० टी०—तथेति । रत्नादीनि षोडश कन्याश्चादाय आजग्मुः, वानरा इति शेषः । तत्र प्ररोहा अधोजटाः, गन्धाः गन्धद्रव्याणि, जातरूपं सुवर्णं, परार्ध्ये बहुमूल्ये समालम्भनमनुलेपनविशेषः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ २४–२८ ॥

रा० टी०—तत इति । ते हनुमदादयः वानरश्रेष्ठमभिषेक्तुं रत्नाद्यैर्द्विजर्षभान् तोषयित्वा आसन्निति शेषः ॥ २९ ॥

गो० टी०—तस्येत्यादि । प्ररोहान् पल्लवान् । अनुलेपनं कर्पूरादि । गन्धाः अगरुप्रभृतयः । अक्षतम् जातरूपम् । अक्षततण्डुलं हरिद्रामिश्रम् । प्रियङ्गुः सूक्ष्मधान्यविशेषः । वाराही वराहचर्मविकृती । " सुपां सुलुक् " इत्यादिना पूर्वसवर्णदीर्घः ॥ २३–२६ ॥

२८–२९ ] ति० टी०—समालम्भनमनुलेपनद्रव्यम् । तदेवाह—गोरोचनमित्यादि ॥ २८ ॥ २९ ॥

गो० टी०—समालम्भनमिति । समालम्भनम् अनुलेपनविशेषः । ' समालम्भो विलेपनम् ' इत्यमरः । रोचनां गोरोचनाम् । समनःशिलां शैलधातुविशेषसंहितं तिलकसाधनं मनःशिला ॥ २७ ॥

गो० टी०—ततस्ते वानरश्रेष्ठमित्यारभ्य वसवो वासवं यथेत्यन्तमेकं वाक्यम् । यथाकालं विहितकालमनतिक्रम्य । यथाविधि यथाक्रमं द्विजर्षभान् याजनार्थमाहूतान् । समिद्धं ज्वलितं जातवेदसम् अग्निं । मन्त्रविदः वानरपुरोहिताः हैमप्रतिष्ठाने हेममयपादयुक्ते वरासनविशेषणमेतत् । नदीनदेभ्यस्तीर्थेभ्यः समुद्रेभ्यश्च अपः आहृत्य आनीय संहृत्य संमिश्रीकृत्य तद्विमलं जलं कनककुम्भेषु निधाय तेभ्यो वृषभशृङ्गादिभिरुद्धृत्य शास्त्रदृष्टेन विधिना क्रमेण महर्षिविहितेन कल्पसूत्रविहितेन च विधिना अभ्यषिञ्चन्त ॥ २८–३७ ॥

३०–३१ ] ति० टी०—ततः कुशेति । अनेनाग्निसाध्यकर्माधिकारं तेषां दर्शयति । मनुष्यसदृशसर्वव्यवहाराद्देवांशत्वाच्च ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—मन्त्रैः स्थापयित्वा । 'वसवस्त्वा गायत्रेण च्छन्दसा' इत्यादिमन्त्रैरासने स्थापयित्वेत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—अप आहृत्य मिलिताः कृत्वा विमलं जलं कुम्भेषु निधायेति संबन्धः ॥ ३३ ॥

---

१ प्रविश्य त्वभिनिष्क्रान्तमिति गो. पाठः । २ प्लवगेश्वरमिति गो. पाठः । ३ औषधैरपीति गो. पाठः । ४ वाराहीति गो. पाठः । ५ रोचनां समनः शिलामिति गो. गोरोचनमनःशिलामिति रा. पाठः । ६ यथाकालमिति गो. पाठः । ७ विमलाः शुभा इति गो. पाठः ।

शुभैर्ऋषभशृङ्गैश्च कलशैश्चैव काञ्चनैः । शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३४ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव हनूमाञ्जाम्बवांस्तथा ॥ ३५ ॥
अभ्यषिञ्चत सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ३६ ॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुंगवाः । प्रचुक्रुशुर्महात्मानो हृष्टाः शतसहस्रशः ॥ ३७ ॥
रामस्य तु वचः कुर्वन्सुग्रीवो वानरेश्वरः । अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३८ ॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः । साधु साध्विति सुग्रीवं महात्मानो ह्यपूजयन् ॥ ३९ ॥
रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः । प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र वर्तिनि ॥ ४० ॥
हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता । बभूव नगरी रम्या किष्किन्धा गिरिगह्वरे ॥ ४१ ॥
निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ।
रुमां च भार्यामुपलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

३४-३६ ] ति० टी०–महर्षिविहितेन बौधायनादिविहितेन ॥ ३४-३६ ॥

रा० टी०–तत इति । ततः प्राप्तसंतोषानन्तरं मन्त्रविदो जनाः द्विजर्षभाः कुशपरिस्तीर्णं परितः कुशैर्विशिष्टं समिद्धं प्रज्वलितं जातवेदसं वह्निं मन्त्रपूतेन हविषा हुत्वा अवर्तन्त इति शेषः ॥ ३० ॥

रा० टी०–तत इति । रम्ये प्रासादशिखरे प्रासादाकारशृङ्गे विद्यमाने हेमप्रतिष्ठाने हेम्नः प्रतिष्ठानानि पादाः यस्मिन् वरास्तरणसंवृते आसने राजपीठे सुग्रीवं मन्त्रैः विधिवत् प्राङ्मुखं स्थापयित्वा तीर्थेभ्यः पुण्यहेतुभ्यः नद्यादिभ्यः शुभैः ऋषभशृङ्गादिभिराहृत्य संस्थापितानि अपो जलानि कनककुम्भेषु निधाय प्रसन्नेन प्रसादेनोपलक्षिताः वानरर्षभाः गजादयः शास्त्रदृष्टेन शास्त्रोक्तेन विधिना महर्षिविहितेन महर्षीणामाज्ञया च सुग्रीवमभ्यषिञ्चन्त । तत्र दृष्टान्तः सुगन्धिना सलिलेन सहस्राक्षं सहस्रसंख्याकनयनविशिष्टं वासवमिन्द्रं वसवो यथा । श्लोकषट्कमेकान्वयि ॥ ३१-३६ ॥

३७-३९ ] ति० टी०–हृष्टाः प्रचुक्रुशुः किलकिलाशब्दं कृतवन्तः ॥ ३७-३९ ॥

रा० टी०–अभिषिक्त इति । सुग्रीवे अभिषिक्ते सति वानरपुंगवाः हृष्टाः सन्तः प्रचुक्रुशुः प्रभूतं स्वजातीयशब्दं चक्रुः ३७

रा० टी०–रामस्येति । सुग्रीवः रामस्य वचः रामकर्तृकाज्ञां कुर्वन् सन् अङ्गदं संपरिष्वज्य यौवराज्ये अभ्यषेचयत् ॥ ३८ ॥

रा० टी०–अङ्गद इति । अङ्गदे अभिषिक्ते यौवराज्याभिषेकं प्राप्ते सति सानुक्रोशाः दयावन्तः प्लवङ्गमाः साधु साध्विति सुग्रीवमपूजयन् ॥ ३९ ॥

गो० टी०–अङ्गद इति । सानुक्रोशाः अङ्गदे सदयाः ३८

४०-४२ ] ति० टी०–तादृशे तत्रवर्तिनि । अभिषिक्ते सुग्रीवेऽङ्गदे च, तत्र किष्किन्धायां वर्तिनि वर्तमाने सतीत्यर्थः ॥ ४०-४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०–राममिति । तादृशे विधिपूर्वके तत्र तस्मिन्नभिषेके वर्तति वर्तमाने सति सर्वे वानराः समं लक्ष्मणं च पुनः पुनस्तुष्टुवुः ॥ ४० ॥

गो० टी०–रामं चैवेति । तादृशे सुग्रीवाङ्गदाभिषेकरूपोत्सवे वर्तति वर्तमाने सति ॥ ३९ ॥

रा० टी०–हृष्टेति । गिरिगह्वरे विद्यमाना किष्किन्धा हृष्टपुष्टजनाकीर्णा अत एव पताकाध्वजशोभिता अत एव रम्या बभूव ॥ ४१ ॥

गो० टी०–हृष्टेति । पताकाध्वजयोर्भेद उक्तः ॥ ४० ॥

रा० टी०–निवेद्येति । कपिवाहिनीपतिः वानरसेनाधीशः सुग्रीवः महाभिषेकं रामाय निवेद्य रुमां भार्यामुपलभ्य प्राप्य त्रिदशाधिप इव राज्यमवाप ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०–निवेद्येति । निवेद्य रामसमीपमागत्य निवेद्येत्यर्थः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

१ शुभैर्वृषभेति गो. पाठः । २ अपीति गो. पाठः । ३ हनुमानिति गो. पाठः । ४ नल इति गो. पाठः । ५ तत्रेति गो. पाठः । ६ वर्ततीति गो. रा. पाठः । ७ प्रतिलभ्येति गो. पाठः ।

# सप्तविंशः सर्गः ।

प्रस्रवणगिरिगुहां प्राप्तो रामस्तत्र स्वनिवासानुगुणसंपदं दृष्ट्वोवास । कदाचिच्चन्द्रदर्शनागुद्दीपनैरुद्दीपितानङ्गतापं रामं लक्ष्मणः समाश्वासयति ।

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् । आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ १ ॥
शार्दूलमृगसंघुष्टं सिंहैर्भीमरवैर्वृतम् । नानागुल्मलतागूढं बहुपादपसंकुलम् ॥ २ ॥
ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् । मेघराशिनिभं शैलं नित्यं शुचिकरं शिवम् ॥ ३ ॥
तस्य शैलस्य शिखरे महतीमायतां गुहाम् । प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४ ॥
कृत्वा च समयं रामः सुग्रीवेण सहानघः । कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः ॥ ५ ॥
विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् । इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ ६ ॥
अस्यां वैत्स्याम सौमित्रे वर्षरात्रमरिन्दम । गिरिशृङ्गमिदं रम्यमुत्तमं पार्थिवात्मज ॥ ७ ॥
श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम् । नानाधातुसमाकीर्णं नदीदर्दुरसंयुतम् ॥ ८ ॥
विविधैर्वृक्षषण्डैश्च चारुचित्रलतायुतम् । नानाविहगसंघुष्टं मयूरवरनादितम् ॥ ९ ॥
मालतीकुन्दगुल्मैश्च सिन्दुवारैः शिरीषकैः । कदम्बार्जुनसर्जैश्च पुष्पितैरुपशोभितम् ॥ १० ॥

१ ] ति० टी०—गुहां किष्किन्धाख्याम् । प्रस्रवणं तदाख्यम् ॥ १ ॥

रा० टी०—रामवृत्तान्तमुपक्रमते—अभिषिक्त इति। अभिषिक्ते वानरे सुग्रीवे गुहां प्रविष्टे रामं संप्रार्थ्य याते सति रामः प्रस्रवणं गिरिमाजगाम ॥ १ ॥

गो० टी०—अथ रामस्यैकान्तवाससमुद्भूतसीताविरहशोकप्रशमनं लक्ष्मणेन क्रियते सप्तविंशे—अभिषिक्त इत्यादि । शैलं शिलामयमिति मृच्छिलोभयमयगिरिभ्यो व्यावृत्तिः, अतो न गिरिं शैलमिति पुनरुक्तिः ॥ १–४ ॥

२–३ ] ति० टी०—गिरिवर्णनम्—शार्दूलेति ॥२॥३॥

रा० टी०—गिरिं वर्णयन्नाह—शार्दूलेति। शार्दूलमृगसंघुष्टं शार्दूलैः मृगैश्च शब्दितं भीमरवैः सिंहैर्वृतं नानागुल्मलतागूढमनेकविधैर्गुल्मैर्लताभिश्च आच्छादितम् ॥ २ ॥

रा० टी०—ऋक्षादिभिश्च निषेवितं मेघराशिनिभं शुचिकरं दर्शनादिकर्तॄणां पवित्रकारकं शिवं मङ्गलप्रदं यत् शैलम् ॥ ३ ॥

४ ] ति० टी०—प्रत्यगृह्णत प्रत्यग्रहीत् ॥ ४ ॥

रा० टी०—तस्य शैलस्य शिखरे महतीं गुहां रामः प्रत्यगृह्णीत स्वीचकार ॥ ४ ॥

५ ] ति० टी०—समयं पूर्वोक्तम् । कालयुक्तं तत्कालोचितम् ॥ ५ ॥

रा० टी०—कृत्वेति । अनघः शरणागतानामघनिवर्तकः सुग्रीवेण सह समयं कृत्वा प्रस्रवणमागत इति शेषः, रामः कालयुक्तं कालोचितं वाक्यं भ्रातरं लक्ष्मणमुवाच । सार्धश्लोक एकान्वयी ॥ ५ ॥

गो० टी०—कृत्वेति । कालयुक्तं तत्कालोचितम् ॥ ५ ॥

६ ] ति० टी०—युक्तमारुतोचितवाता ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—इयमिति । इयं गिरिगुहा विशाला युक्तमारुता नित्यं मारुतविशिष्टा अत एव रम्या अतः अस्यां गुहायां वर्षरात्रं वार्षिकान् मासान् इत्यर्थः, वत्स्याम ॥ ६ ॥

गो० टी०—इयमिति । युक्तमारुता उचितमारुता यावदपेक्षमारुतेत्यर्थः । वसाव लोडुत्तमद्विवचनम् । वर्षरात्रमिति अच् समासान्त आर्षः, जात्येकवचनम् ॥ ६ ॥

७ ] ति० टी०—वर्षरात्रं जातावेकवचनं वार्षिका मासा इत्यर्थः ॥ ७ ॥

८ ] ति० टी०—नदीसंबन्धिदर्दुरैः संयुतम् ॥ ८ ॥

रा० टी०—गिरिशृङ्गं वर्णयन्नाह—गिरीति । पार्थिवात्मज ! हे लक्ष्मण! श्वेतादिभिः शिलाभिः उपशोभितं नानाधातुभिः समाकीर्णं व्याप्तं नदीदर्दुरसंयुतं नदीसंसर्गिमण्डूकैर्विशिष्टम् ॥ ७ ॥ ८ ॥

गो० टी०—गिरिशृङ्गमित्यादि । कदम्बाः अर्जुनाः नदीसर्जाः ॥ ७–१० ॥

९–१० ] ति० टी०—वृक्षषण्डैश्चारु सुन्दरम् ॥ ९ ॥ १० ॥

रा० टी०—वृक्षखण्डैस्तरुसमूहैः चारु रमणीयं चित्रलतावृतम् ॥ ९ ॥

रा० टी०—पुष्पितैः मालत्यादिभिः उपशोभितमत एव रम्यमिदमस्तीति शेषः, एतेनात्रैव वस्तव्यमिति सूचितम् । सार्धश्लोकत्रयमेकान्वयि ॥ १० ॥

१ गृह्णीतेति रा. पाठः । २ सौम्य इति गो. पाठः । ३ वसाव इति गो. पाठः । ४ दरीनिर्झरशोभितमिति गो. पाठः । ५ वृक्षखण्डैरिति रा. पाठः । ६ वृतमिति गो. रा. पाठः । ७ सिन्दुवारकुरण्टकैरिति गो. पाठः ।

इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता । नातिदूरे गुहाया नौ भविष्यति नृपात्मज ॥ ११ ॥
प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति । पश्चाच्चैवोन्नता सौम्य निवातेयं भविष्यति ॥ १२ ॥
गुहाद्वारे च सौमित्रे शिला समतला शिवा । कृष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३ ॥
[1]गिरिशृङ्गमिदं तात पश्य चोत्तरतः शुभम् । भिन्नाञ्जनचयाकारमम्भोधरमिवोदितम् ॥ १४ ॥
दक्षिणस्यामपि दिशि स्थितं श्वेतमिवाम्बरम् । कैलासशिखरप्रख्यं नानाधातुविराजितम् ॥ १५ ॥
प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् । गुहायाः परतः पश्य त्रिकूटे जाह्नवीमिव ॥ १६ ॥
चन्दनैस्तिलकैः सालैस्तमालैरतिमुक्तकैः । पद्मकैः सरलैश्चैव अशोकैश्चैव शोभिताम् ॥ १७ ॥
वानीरैस्तिमिदैश्चैव बकुलैः केतकैरपि । हिन्तालैस्तिनिशैर्नीपैर्वेतसैः कृतमालकैः ॥ १८ ॥
तीरजैः शोभिता भाति नानारूपैस्ततस्ततः । वसनाभरणोपेता प्रमदेवाभ्यलंकृता ॥ १९ ॥

११ ] ति० टी०—गुहाया नातिदूरे भविष्यति । भाविवारिपूरसमृद्ध्या गुहासमीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥

रा० टी०—इयमिति । हे नृपात्मज ! फुल्लपङ्कजमण्डिता पुष्पितकमलैः शोभिता इयं नलिनी सरसी नौ आवयोः गुहायाः नातिदूरे समीपे इत्यर्थः, भविष्यति वृष्टिवशात्पूर्णतां प्राप्स्यतीत्यर्थः ॥ ११ ॥

गो० टी०—इयं चेति । नातिदूरे भविष्यतीत्यनेन वर्षाकालस्य प्रवृत्तत्वाद्भाविजलसमृद्ध्या समीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—प्रागुदक्प्रवण ईशानदिङ्निम्नवति देशे वर्तमाना गुहा साधु सम्यग्भविष्यति, सुखसाधनमिति शेषः । पौरस्त्यवर्षवातप्रवेशाभावाच्च साधुत्वं बोध्यम् । तेन निर्ऋतिद्वारत्वं सूचितम् । पश्चाद्भागे चैषोन्नता, अत एव पुरोवातनिरोधकत्वान्निवाता च ॥ १२ ॥

रा० टी०—प्रागिति । प्रागुदक्प्रवणे ईशानदिशि निम्ने देशे विद्यमाना इयं गुहा साधु वासाय शोभना भविष्यति तेन ईशानदिग्भागे निम्नत्वादसंभवेन गुहाद्वाराभावः सूचितः अत एव पश्चात् नैर्ऋत्यदिग्भागे उन्नता एतादृग्द्वारिकेति तात्पर्यम् । अत एव निवाता प्रायो वातप्रवेशाभाववती भविष्यति एतेन प्रायो वातेरितवृष्टिजलकणसंसर्गाभावः सूचितः ॥ १२ ॥

गो० टी०—प्रागिति । प्रागुदक्प्रवणे देशे वर्तमाना गुहा साधु भविष्यति । प्रागुदक्प्रवणे देशे वर्तमानत्वाभिधानाद्गुहाया नैर्ऋत्याभिमुखद्वारत्वमुक्तम् । अत एव पौरस्त्यवर्षप्रवेशाभावेन साधुत्वमुक्तं भवति । इयं पश्चादुन्नता पश्चाद्भागोन्नता अत एव पुरोवातनिरोधकत्वान्निवाता च भविष्यति ॥ १२ ॥

१३ ] ति० टी०—गुहाद्वारे इति । तेन बहिरुपवेशनसौकर्यम् ॥ १३ ॥

रा० टी०—गुहेति । समतला निम्नोन्नतरहितमध्या शिवा स्थातृणां कल्याणप्रदा आयता विशाला भिन्नाञ्जनचयोपमा विविक्तदेशस्थाञ्जनसमूह इव अत एव कृष्णा गुहाद्वारे शिलास्तीति शेषः ॥ १३ ॥

गो० टी०—गुहाद्वारे चेति । अस्मिन् श्लोके वर्तत इति शेषः ॥ १३ ॥

१४ ] ति० टी०—उत्तरत उत्तरभागे ॥ १४ ॥

रा० टी०—गिरेरिति । भिन्नाञ्जनचयाकारं विविक्तदेशस्थाञ्जनसमूहसदृशमुदितमुत्थितमम्भोधरं समुद्रमिव उत्तरतः उत्तरस्यां दिशि इदं गिरेः शृङ्गं पश्य ॥ १४ ॥

गो० टी०—गिरिशृङ्गमित्यादि । श्वेतमिव रूप्यमिव 'दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतम्' इत्यमरः । अपरम्, अपरं शृङ्गं पश्येति पूर्वेणान्वयः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—श्वेतमिवाम्बरं श्वेतवस्त्रमिव स्थितम् । 'श्वेतमिवापरम्' इति पाठेऽपरं शृङ्गं श्वेतमिव रूप्यमिव स्थितमित्यर्थः ॥ १५ ॥

रा० टी०—दक्षिणस्यामिति । श्वेतमम्बरं वस्त्रमिव कैलासशिखरप्रख्यं कैलासशृङ्गसदृशं नानाधातुविराजितं दक्षिणस्यामपि दिशि स्थितमिदं गिरेःशृङ्गं पश्येत्यत्राप्यनुकृष्यते॥१५॥

१६ ] ति० टी०—त्रिकूटे पूर्वोषितत्रिकूटाचले । जाह्नवीपदेन तत्रत्या जाह्नवीसदृशी मन्दाकिन्याख्या नदी ॥ १६ ॥

१७–१९ ] ति० टी०—अतिमुक्तः पुण्ड्रकः । पद्मकश्चन्दनभेदः सरलः पीतद्रुमः ॥ १७–१९ ॥

रा० टी०—प्राचीनेति । त्रिकूटे जाह्नवीं गङ्गामिव भृशमत्यन्तम् अकर्दमां कर्दमरहितां प्राचीनवाहिनीं पूर्वदिग्वाहिनीं चन्दनाद्यैः शोभितां नदीं गुहायाः पुरतः पूर्वस्यां दिशि पश्य । श्लोकत्रयमेकान्वयि ॥ १६–१८ ॥

रा० टी०—तीरजैरिति । नानारूपैः अनेकविधैस्तीरजैश्चन्दनादिभिः शोभिता युक्ता नदी वसनाभरणोपेता अभ्यलंकृता सिन्दूरादिविभूषिता प्रमदा इव भाति ॥ १९ ॥

गो० टी०—प्राचीनवाहिनीमित्यादि । अतिमुक्तकैः

१ गिरेरिति रा. पाठः । २ इवोत्थितमिति गो. पाठः । ३ अपरमिति गो. पाठः । ४ भूषितमिति गो. पाठः । ५ पूर्वत इति गो. पुरत इति रा. पाठः । ६ चम्पकै…तालैरिति गो. पाठः । ७ तिमिशैरिति गो. रा. पाठः । ८ भवैरिति गो. पाठः । ९ तिरिटैरिति गो. पाठः । १० वेत्रकैरिति गो. पाठः।

शतशः पक्षिसङ्घैश्च नानानादविनादिता । एकैकमनुरक्तैश्च चक्रवाकैरलंकृता ॥ २० ॥
पुलिनैरतिरम्यैश्च हंससारससेविता । प्रहसन्त्येवै भात्येषा नानारत्नसमन्विता ॥ २१ ॥
क्वचिन्नीलोत्पलैश्छन्ना भाति रक्तोत्पलैः क्वचित् । क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२ ॥
पारिप्लवशतैर्जुष्टा बर्हिक्रौञ्चविनादिता । रमणीया नदी सौम्या मुनिसंघैर्निषेविता ॥ २३ ॥
पश्य चन्दनवृक्षाणां पङ्क्तीः सुरुचिरा इव । ककुभानां च दृश्यन्ते मनसैवोदिताः समम् ॥ २४ ॥
अहो सुरमणीयोऽयं देशः शत्रुनिषूदन । दृढं रंस्याव सौमित्रे साध्वत्र निवसावहे ॥ २५ ॥
इतश्च नातिदूरे सा किष्किन्धा चित्रकानना । सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज ॥ २६ ॥
गीतवादित्रनिर्घोषः श्रूयते जयतां वर । नदतां वानराणां च मृदङ्गाडम्बरैः सह ॥ २७ ॥
लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः । ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥ २८ ॥
इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः । बहुदृश्यदरीकुञ्जे तस्मिन्प्रस्रवणे गिरौ ॥ २९ ॥

पुण्ड्रकैः, पद्मकैः पद्मपर्णाख्यवृक्षविशेषैः, सरलैः यूपसरलैः, तिमिशैः स्यन्दनैः 'तिमिशे स्यन्दनो नेमिः' इत्यमरः । धवैः धुन्धुरैः, हिंतालैः लताङ्कुराख्यवृक्षैः 'अथ स्याल्लताङ्कुरः । हिन्तालस्तृणराजश्च' इति वैजयन्ती । तिरिटैः तिल्वकवृक्षैः 'तिरिटस्तिल्वमार्जनौ' इत्यमरः । वेत्रकैरिति सम्यक् ॥१६–१९॥

२०–२२ ] ति० टी०–एकैकमनुरक्तैः परस्परानुरागैः ॥ २०–२२ ॥

रा० टी०–शतश इति । शतशः पक्षिसंघैः पक्षिणां समूहैः नानानादविनादिता एकैकं परस्परमनुरक्तैः चक्रवाकैः अतिरम्यैः पुलिनैश्च अलंकृता हंससारससेविता नानारत्नसमन्विता एषा नदी प्रहसन्ती अवभाति । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

रा० टी०–क्वचिदिति । क्वचित् कस्मिंश्चित् स्थले नीलोत्पलैः क्वचित् रक्तोत्पलैः छन्ना सती आभाति । शुक्लैः दिव्यैः क्रीडायोग्यैः कुमुदकुड्मलैः क्वचिदाभाति ॥ २२ ॥

गो० टी०–शतश इति । एकैकमनुरक्तैः अन्योन्यानुरागयुक्तैः ॥ २०–२२ ॥

२३ ] ति० टी०–पारिप्लवा जलपक्षिणः ॥ २३ ॥

रा० टी०–पारिप्लवेति । पारिप्लवशतैः अनेकजलपक्षिभिः जुष्टा बर्हिणदेवैस्तस्मादिति ? अत एव रमणीया सौम्या नदी मुनिसंघैर्निषेविता अस्तीति शेषः ॥ २३ ॥

गो० टी०–पारिप्लवेति । पारिप्लवैः जलोपरिसंचारिपक्षिभिः ॥ २३ ॥

२४–२६ ] ति० टी०–सुरुचिरा इव इवोऽन्यर्थे । शोभमानाश्चन्दनवृक्षपङ्क्तीरपि पश्य । मनसा संकल्पेन सममेवोदिताः । ककुभानां वृक्षविशेषाणां पङ्क्तय इति शेषः ॥२४–२६॥

रा० टी०–पश्येति । मनसा मदिच्छया समम्मुदिताः जाता इव चन्दनवृक्षाणां ककुभानामर्जुनवृक्षाणां च याः पङ्क्तयः दृश्यन्ते ताः सुरुचिराः पङ्क्तीः पश्य अवलोकय ॥ २४ ॥

गो० टी०–पश्येति । सुरचिता इव मालारूपेण ग्रथिता इव ककुभानाम् अर्जुनवृक्षाणाम् दृश्यन्ते पङ्क्तय इति शेषः । मनसेवोदिताः सममिति मनसा संकल्पेन समं युगपत् उदिता इव स्थिताः ॥ २४ ॥

रा० टी०–अहो इति । हे शत्रुनिषूदन ! अयं देशः अहो आश्चर्यं रमणीयः अतः अत्र साधु निवसावहे रंस्याव च दृढं निश्चितमेतत् ॥ २५ ॥

गो० टी०–अहो इति । रंस्याव रंस्यावहे अतः अत्र गिरौ निवसावहै निवसाव ॥ २५ ॥

रा० टी०–इत इति । सुग्रीवस्य पुरी किष्किन्धा इतो नातिदूरे समीपे अस्तीत्यर्थः ॥ २६ ॥

गो० टी०–अत्र वासे क्रियमाणे किष्किन्धा च समीपवर्तिनी भविष्यतीत्याह–इतश्चेति ॥ २६ ॥

२७–२८ ] ति० टी०–नातिदूरत्वगमकम्–गीतेत्यादि । मृदङ्गाडम्बरैर्मृदङ्गशब्दैः ॥ २७ ॥ २८ ॥

रा० टी०–तत्र ज्ञापकमाह–गीतेति । मृदङ्गाडम्बरैः मृदङ्गशब्दैः सह नदतां वानराणां गीतवादित्रनिर्घोषः श्रूयते ॥ २७ ॥

रा० टी०–लब्ध्वेति । सुग्रीवः राज्यं महतीं श्रियं च संप्राप्य भार्यां च लब्ध्वा ध्रुवं नन्दति ॥ २८ ॥

गो० टी०–गीतेति । मृदङ्गाडम्बरैः सह नर्दतां वानराणां निर्घोषः श्रूयत इत्यन्वयः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०–बहूनि दृश्यान्युत्तमवस्तूनि यत्र ता दर्यः कुञ्जाश्च यस्मिन्निति गिरिविशेषणम् ॥ २९ ॥

रा० टी०–इतीति । राघवः इत्युक्त्वा बहूनि दृश्यानि अपूर्वत्वेन द्रष्टव्यानि अनेकविधवस्तूनि यस्मिन् तदेव दरीकुञ्जं तस्मिन् प्रस्रवणे गिरौ न्यवसत् ॥ २९ ॥

गो० टी०–इतीति । तत्र गुहायाम् । कुञ्जः लतागृहम् ॥२९॥

१ नादैरिति गो. पाठः । २ सेवितैरिति गो. पाठः । ३ अवेति रा. पाठः । ४ नारीसर्वविभूषितेति गो. पाठः । ५ बर्हिणक्रौञ्चनादितेति गो. रा. पाठः । ६ संघैरिति गो. पाठः । ७ रचिता इति गो. पाठः । ८ वहै इति गो. पाठः ।

सुसुखे[1]ऽपि बहुद्रव्ये तस्मिन्हि धरणीधरे । वसतस्तस्य रामस्य रतिरल्पाऽपि नाभवत् ॥ ३० ॥
हृतां हि भार्यां स्मरतः प्राणेभ्योऽपि गरीयसीम् । उदयाभ्युदितं दृष्ट्वा शशाङ्कं स[2] विशेषतः ॥ ३१ ॥
आविवेश न तं निद्रा निशासु शयनं गतम् । तत्समुत्थेन शोकेन बाष्पोपहतचेतनम्[3] ॥ ३२ ॥
तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् । तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयं[4] वचः ॥ ३३ ॥
अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि । शोचतो ह्यवसीदन्ति सर्वार्था विदितं हि ते ॥ ३४ ॥
भवान्क्रियापरो लोके भवान्देवपरायणः । आस्तिको धर्मशीलश्च व्यवसायी च राघव ॥ ३५ ॥
नह्यव्यवसितः[5] शत्रुं राक्षसं तं विशेषतः । समर्थस्त्वं रणे हन्तुं विक्रमे[6] जिह्मकारिणम् ॥ ३६ ॥
समुन्मूलय शोकं त्वं व्यवसायं[8] स्थिरीकुरु । ततः सपरिवारं तं राक्षसं हन्तुमर्हसि ॥ ३७ ॥
पृथिवीमपि काकुत्स्थ ससागरवनाचलाम् । परिवर्तयितुं शक्तः किं पुनस्तं हि रावणम् ॥ ३८ ॥
शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः । ततः सराष्ट्रं सगणं रावणं तं वधिष्यसि ॥ ३९ ॥

---

३० ] ति० टी०—बहुद्रव्ये सुखसाधनबहुद्रव्यवति । रतिः सुखम् ॥ ३० ॥

रा० टी०—सुसुख इति । सुसुखे अतिसुखहेतावपि तस्मिन् धरणीधरे पर्वते वसतः प्राणेभ्योऽपि गरीयसीं भार्यां स्मरतः रामस्य अल्पाऽपि रतिः प्रीतिर्नाभवत् । सार्धश्लोक एकान्वयी ॥ ३० ॥

गो०टी०—सुसुखेऽपीति । बहुद्रव्ये बहुपुष्पफलादिधने ३०

३१-३२ ] ति० टी०—उदये उदयपर्वतेऽभ्युदितमुदयं प्राप्तम् ॥ ३१ ॥ ३२ ॥

रा० टी०—उदयेति । सविशेषतः विशेषेण सकलकलयेत्यर्थः, उदयाभ्युदितम् उदयाचलात् प्रकाशितं शशाङ्कं चन्द्रं दृष्ट्वा शयनं गतं तत्समुत्थेन हृतभार्यास्मरणजनितेन शोकेनोपलक्षितमत एव बाष्पोपहतचेतनमस्यश्रुद्गमहेतुकचैतन्याभाववत्त्वेन प्रतीयमानं तं हृतभार्यं रामं निद्रा न आविवेश । सार्धश्लोक एकान्वयी ॥ ३१ ॥ ३२ ॥

गो०टी०—उदयेति । उदयाभ्युदितम् उदयपर्वतादुद्गतम् ३१

गो० टी०—तत्समुत्थेनेत्यादि । 'लक्ष्मणोऽनुनयन् वचः' इति पाठः ॥ ३२-३४ ॥

३३ ] ति० टी०—अनुनयमनुनयवत् ॥ ३३ ॥

रा० टी०—तमिति । शोचमानं काकुत्स्थं रामं लक्ष्मणः अनुनयं विनीतं वचो अब्रवीत् ॥ ३३ ॥

३४] ति०टी०—व्यथां गत्वालम् व्यथा मास्त्वित्यर्थः॥३४॥

रा० टी०—तद्वचनाकारमाह—अलमिति । व्यथां चित्तचाञ्चल्यं गत्वा प्राप्य अलं बहु शोचितुं नार्हसि। तत्र हेतुः—सर्वथा अत्यन्तं शोचन्तो जनाः अवसीदन्ति इति ते विदितम् ॥ ३४ ॥

३५ ] ति० टी०—क्रियापरो नित्यकर्मानुष्ठाता देवपरायणो देवपूजकः व्यवसायुद्यमी ॥ ३५ ॥

रा० टी०—शोकानर्हत्वे हेतुं वदन्नाह—भवानिति । लोके सर्वभुवने क्रियापरः निखिलक्रियाप्रवर्तकः भवानेव देवपरायणः देवपराणां देवतृप्तिकारकाणामयनः आश्रयः भवानेव अत एव आस्तिकादिर्भवानेव । एतेन स्वत्सावधानतामात्रेण सर्वं कार्यं सेत्स्यतीति सूचितम् ॥ ३५ ॥

गो० टी०—भवानिति । क्रियापर इत्यनेन कार्यसिद्धिहेतुभूतपुरुषकारवत्त्वमुक्तम् । दैवपरायण इत्यनेन कार्यसिद्धिहेतुभूतदेवतानिष्ठतोक्ता ॥ ३५ ॥

३६ ] ति० टी०—अव्यवसितः शोकेनोद्यमहीनस्त्वं हन्तुं न समर्थः । विक्रमे विक्रमस्थाने रणे जिह्मकारिणं कुटिलम् ॥३६॥

रा० टी०—तदभावे दोषमाह—नहीति । विक्रमे विशेषतो जिह्मकारिणं कापट्यकर्मशीलं राक्षसं तं रावणं रणे हन्तुम् अव्यवसितः व्यवसायरहितस्त्वं समर्थो न प्रतीयसे इति शेषः ॥ ३६ ॥

गो० टी०—न हीति । अव्यवस्थितः धैर्यरहित इत्यर्थः । रणे विक्रमैर्हन्तुं न समर्थ इत्यन्वयः ॥ ३६ ॥ ३७ ॥

३७ ] ति० टी०—अतः शोकं समुन्मूलय । व्यवसायमुद्योगम् ॥ ३७ ॥

रा० टी०—समिति । शोकं समुन्मूलय संत्यज, व्यवसायमुद्यमं स्थिरीकुरु, ततोऽनन्तरं राक्षसं रावणं हन्तुमर्हसि ॥ ३७ ॥

३८-३९] ति० टी०—परिवर्तनमधरोत्तरीकरणम् ३८॥३९

रा० टी०—पृथ्वीमिति । ससागरवनाचलां पृथिवीं परिवर्तयितुं त्वं शक्तः रावणं परिवर्तयितुं शक्तश्चेत् किं वक्तव्यम् ॥३८॥

रा० टी०—ननु किमिदानीमेवोद्योगः कर्तव्य इत्यत आह—शरदिति । अयं प्रावृट्काल आगतः प्राप्तः अतः शरत्कालं शरत्कालावयवीभूताश्विनपर्यन्तं प्रतीक्षस्व क्षमस्व ततोऽनन्तरं सराष्ट्रं रावणानुकूलराष्ट्रसहितं रावणं वधिष्यसि ॥ ३९ ॥

गो० टी०—पृथिवीमपीति । परिवर्तयितुम् अधरोत्तरं कर्तुम् । अङ्गेति संबोधनम् । पुनरित्यत्र दीर्घाभाव आर्षः ॥ ३८ ॥ ३९ ॥

---

१ ऽपीति गो. पाठः । २ चेति गो. पाठः । ३ चेतसमिति गो. पाठः । ४ ऽनुनयन्निति गो. पाठः । ५ व्यवेति गो. पाठः । ६ दैवेति गो. पाठः । ७ विक्रमैरिति गो. पाठः । ८ स्थिरमिति गो. पाठः । ९ निर्मूलं कुरु राक्षसमिति गो. पाठः । १० अङ्ग पुन रावणमिति गो. पाठः ।

अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये । दीप्तैराहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४० ॥
लक्ष्मणस्य हि तद्वाक्यं प्रतिपूज्य हितं शुभम् । राघवः सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४१ ॥
वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च । सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ ४२ ॥
एष शोकः परित्यक्तः सर्वकार्यावसादकः । विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३ ॥
शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव । सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४४ ॥
उपकारेण वीरस्तु प्रतिकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ४५ ॥

तदेव युक्तं प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनः शुभम् ॥ ४६ ॥
यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता न चिरात्तु वानरः ।
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७ ॥

---

४०-४१ ] ति० टी०—दीप्तैः दीपकैर्वाक्यैरिति शेषः । काले होमकाले ॥ ४० ॥ ४१ ॥

रा० टी०—अहमिति । काले होमसमये आहुतिभिः भस्मच्छन्नमनलमिव दीप्तैस्तव वीर्यप्रकाशकैः वचनैः प्रसुप्तं शोकवशात् तिरोहितं ते वीर्यं प्रतिबोधये संस्मारयामि ॥ ४० ॥

रा० टी०—लक्ष्मणस्येति । राघवः लक्ष्मणस्य वाक्यं प्रतिपूज्य सुहृदं लक्ष्मणं स्निग्धं वचनमब्रवीत् ॥ ४१ ॥

गो० टी०—अहं त्विति । दीप्तैः उज्वलनकरैः उद्बोधकैः वाक्यैरिति शेषः ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०—अनुरक्तेनानुरागयुतेन स्निग्धेन तत्कालोचितप्रियपरेण हितेनोदर्कहितैषिणा सत्यविक्रमयुक्तेनामोघविक्रमयुक्तेन ॥ ४२ ॥

रा० टी०—तद्वचनाकारमाह—वाच्यमिति । अनुरक्तेन अनुरागयुक्तेन जनेन यत् वाच्यं तत् स्निग्धेन स्नेहयुक्तेन अत एव हितेन हिताचरणप्रवर्तकेन सत्यविक्रमयुक्तेन त्वया उक्तम् ॥ ४२ ॥

गो० टी०—वाच्यमिति । अनुरक्तेन अनुरागयुक्तेन स्निग्धेन तत्कालोचितप्रियपरेण हितेन हितपरेण सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन यद्वाच्यं तत्सर्वं त्वयोक्तमिति संबन्धः ॥ ४२-४४ ॥

४३ ] ति० टी०—विक्रमकालेषु तेजः सहजमिति शेषः । प्रोत्साहयामि वर्धयामि । अधुना त्वाच्छन्नमिव तदिति भावः ४३

रा० टी०—एष इति । सर्वकार्यावसादकः सकलकार्यविघातकः एषः स्ववीर्यविस्मृतिहेतुकः शोकः परित्यक्तः अत एव विक्रमेषु अप्रतिहतं तेजः स्ववीर्यं प्रोत्साहयामि संस्मरामि॥४३॥

४४ ] ति० टी०—शरत्कालं तत्प्रान्तम् । सुग्रीवस्य प्रसादं चित्तसौमनस्यम् नदीनां चामलोदकत्वरूपम् ॥ ४४ ॥

रा० टी०—शरदिति । तव वचने अहं स्थितोऽस्मि अतः सुग्रीवस्य नदीनां च प्रसादमानुकूल्यमनुपालयन् सन् शरत्कालमाश्विनं प्रतीक्षिष्ये ॥ ४४ ॥

४५ ] ति० टी०—उपकारेण युक्तो वीरोऽवश्यं प्रतिकारेण प्रत्युपकारेण युज्यते । केनचित्कृतोपकारो वीरपुरुषोऽवश्यं प्रत्युपकरोत्येवेति भावः । कुत एवं निश्चयस्तत्राह—अकृतज्ञो भूत्वा यद्यप्रतिकृतोऽकृतप्रत्युपक्रियो भवति तदा सत्त्ववतामस्मादृशां मनो हन्ति मैत्रीं नाशयत्येव । अतो मित्रत्वादवश्यं स प्रत्युपकर्तेति भावः ॥ ४५ ॥

रा० टी०—सुग्रीवोऽवश्यं मत्कार्यं साधयितेति बोधयन्नाह—उपेति । उपकारेण युक्तो वीरः प्रतिकारेण प्रत्युपकारेण युज्यत एव । तत्र हेतुः—अकृतज्ञः विस्मृतोपकारः अत एव अप्रतिकृतः प्रत्युपकाररहितः जनः सत्त्ववतां महात्मनां मनः इंद्रियसतां धर्मशास्त्रमित्यर्थः, हन्ति न मन्यते । एतेन शास्त्रानुसारित्वात् सुग्रीवो मदुपकृतिं न विस्मरिष्यतीति सूचितम् ॥ ४५ ॥

गो० टी०—उपकारेणेति । तुशब्दोऽवधारणे । उपकारेण युक्तो वीरः प्रतिकारेण युज्यत एव प्रत्युपकारं करोत्येवेत्यर्थः । अप्रतिकृतः अकृतप्रत्युपकारः पुरुषः सत्त्ववतां सात्त्विकानाम् मनः हन्ति पीडयति सात्त्विकास्तमजस्रं निन्दन्तीत्यर्थः । सज्जनापवादभीतः सुग्रीवोऽस्माकं प्रत्युपकारं करोत्येवेति भावः ॥ ४५ ॥

४६ ] ति० टी०—तदेव रामवाक्यमेव युक्तं प्रणिधाय, निश्चित्यात्मनः शुभं दर्शनं शुभां बुद्धिं, प्रदर्शयन्नुवाच ॥ ४६ ॥

रा० टी०—तदिति । तत् रामोक्तं युक्तमेव इति प्रणिधाय निश्चित्य कृताञ्जलिः लक्ष्मणः तत् रामसंबन्धि भाषितं प्रतिपूज्य आत्मनः शुभं दर्शनं ज्ञानं प्रदर्शयन् रामाय बोधयन् स्वभिरामदर्शनम् अत्यानन्दकारकदर्शनविशिष्टं राममुवाच ॥ ४६ ॥

गो० टी०—अथैवमिति । प्रणिधाय भाविकार्यमालोच्य दर्शनं मतं प्रणिधानेन दृष्टार्थमित्यर्थः ॥ ४६ ॥

४७ ] ति० टी०—जलप्रपातं वर्षाकालम् । धृतः स्थिरनिश्चयः ॥ ४७ ॥

१ त्विति गो. पाठः । २ अथैवमुक्त इति गो. पाठः । ३ हरीश्वर इति गो. पाठः ।

नियम्य कोपं परिपाल्यतां शरत्क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिन्मृगराजसेविते संवर्तयञ्शत्रुवधे समर्थः ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

वैधुर्यप्राप्तकशिमा प्रावृट्कैत्यं सोढुमशक्नुवन्नप्याश्रितविश्लेषासहिष्णुत्व प्रकटयन्रामो लक्ष्मणेन संलपन् वर्षासमयमुपश्लोकयति ।

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च । वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥
अयं स कालः संप्राप्तः समयोऽद्य जलागमः । संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः ॥ २ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः । पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—यथेति । उक्तं सुग्रीवाय त्वया कथितं सर्वमेतत्तवेप्सितं शरत्प्रतीक्षः त्वदाज्ञया शरत्कालपर्यन्तं प्रतीक्षावान् वानरः सुग्रीवः न चिरात् शीघ्रमेव यथा यथावत्कर्ता अ.ः इमं जलप्रपातं वृष्टिकालं रिपुनिग्रहे धृतः दृढनिश्चयो भवान् क्षमताम् ॥ ४७ ॥

गो० टी०—यथोक्तमिति । न चिरात् अविलम्बितम् । जलानि प्रपतन्त्यस्मिन्निति जलप्रपातो वर्षाकालः भवान् क्षमतां त्वं क्षमस्व वर्षाकालकृतविरहवेदनां मा कुर्वित्यर्थः । रिपुनिग्रहे धृतः धैर्ययुक्तः ॥ ४७ ॥

४८ ] ति० टी०—किं तु सुग्रीवेणैव रावणं हनिष्यामीत्युक्त्वा कुतो विलम्ब्यत इत्येवं क्रुद्धं राममालक्ष्याह—नियम्येति । शरत्तदन्तः संवर्तयन्नुक्तकालं क्षपयन् ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०—उपसंहरन्नाह—नियम्येति । कोपं राक्षसापराधस्मृतिजनितक्रोधाभासं नियम्य शरत् परिपाल्यतां गमनाय निश्चीयताम् । अत एव शत्रुवधे समर्थः सर्वकालं सामर्थ्यविशिष्टोऽपि त्वं संवर्तयन् स्वधर्मज्ञत्वं विस्तारयन् अस्मिन्नचले पर्वते मया सह चतुरो मासान् वस क्षमस्व वियोगदुःखं सहस्व च ॥ ४८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०—सुग्रीवः प्रत्युपकारं करोतु वा मा वा सद्यः शत्रुवधः कर्तव्य इति पुनः संजातकोपं रामं प्रत्याह—नियम्येति । चतुरो मासान् आषाढश्रावणभाद्रपदाश्वयुजान् । शरत् कार्तिकमासः । शत्रुवधे समुद्यमम् उत्साहम् संवर्धयन् अभिवर्धयन् । 'समुद्यत' इति पाठे संवर्तयन् मृगराजादीन्नाशयन्॥४८॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७॥

१ ] ति० टी०—स तदेति ॥ १ ॥

रा० टी०—रामोक्तिमुपक्रमते—स इति । माल्यवतः पृष्ठे वसन् स रामः लक्ष्मणमब्रवीत् ॥ १ ॥

गो०टी०—अथ रामः स्वस्याश्रितविश्लेषासहिष्णुत्वमन्यापदेशेन लक्ष्मणाय प्रदर्शयन् वर्षर्तुवर्णनमारभतेऽष्टाविंशे—स तथेत्यादि । यत्किंचिद्विरोधिनिरसनाश्रितसंरक्षणलाभेऽप्यसत्कल्पमेतन्मन्यमानः माल्यवतः पूर्वं प्रस्रवणाख्यतयोक्तस्य गिरेः पृष्ठे उपरि वसन् सर्वजनोज्जीवनाय सन्निहित इत्यर्थः ॥ १ ॥

२ ] ति० टी०—स विरहिप्रमाथकः स कस्तत्राह—अथ जलागमः समयः संप्रवृत्तस्तं संपश्य । नभ आकाशम् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—अयमित्यादिभिः । जलागमः वृष्टिप्रापकः अत एव कालः सर्वस्थित्युपदेशकः स प्रसिद्धोऽयं समयः संप्राप्तः अतः गिरिसंनिभैः मेघैः संवृतं नभः त्वं पश्य । काल इति उपदेशार्थककालधातुप्रकृतिककर्त्रजन्तः अत एव न पौनरुक्त्यम् ॥ २ ॥

गो० टी०—अयमिति । समयः सुग्रीवस्य स्थानावधित्वेन संकेतितः सोऽयं जलागमः कालः वर्षाकालः अद्य संप्राप्तः संप्रवृत्तः ॥ २ ॥

३ ] ति० टी०—समुद्राणां रसं जलं भास्करस्य गभस्तिभिर्द्यौः पीत्वा कार्तिकादिनवमासधृतं गर्भं जलरूपं रसायनं लोकजीवातुभूतं प्रसूते त्यजति । गर्भमाहात्म्यात्साक्षाद्रसस्य क्षारस्यापि स्वादुता ॥ ३ ॥

रा० टी०—समयं वर्णयति—नवेत्यादिभिः । द्यौराकाशं सूर्यस्य गभस्तिभिः किरणैः रसायनं सर्वरसानां मूलं समुद्राणां रसं पीत्वा नवमासधृतं गर्भमिव प्रसूते । गर्भशब्द आचारक्विबन्तः ॥ ३ ॥

गो० टी०—नवेति । द्यौः भास्करस्य गभस्तिभिः किरणैः समुद्राणां रसं पीत्वा नवमासधृतं कार्तिकाद्याषाढपर्यन्तनवमासधृतं रसायनं बहुरसानां कारणं गर्भं जलं प्रसूते जनयति । भास्करस्य गभस्तिभिरित्यनेन "याभिरादित्यस्तपति

१ प्रतीति गो. पाठः । २ संवर्धयन्निति गो. पाठः । ३ समुद्यममिति गो. पाठः । ४ तथेति गो. पाठः

शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः । कुटजार्जुनमालाभिरलंकर्तुं दिवाकरः ॥ ४ ॥
संध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः । स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५ ॥
मन्दमारुतनिःश्वासं संध्याचन्दनरञ्जितम् । आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६ ॥
एषा धर्मपरिक्लिष्टा नववारिपरिप्लुता । सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति ॥ ७ ॥
मेघोदरविनिर्मुक्ताः कर्पूरदलशीतलाः । शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ॥ ८ ॥
एष फुल्लार्जुनः शैलः केतकैरभिवासितः । सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ९ ॥

रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतिः सूच्यते । समुद्राणां रसमित्यनेन हंसस्य क्षीरनीरविभागचातुर्यवत् नीरलवणविभागसामर्थ्यं द्योत्यते । अत्र प्रस्तुतद्योवर्षवृत्तान्तेनाप्रस्तुतस्यानेकनायकाहितवीर्यगर्भम् भविकाभिर्धृत्वा काले प्रेमास्पदसुतप्रसवकृद्वधूवृत्तान्तस्य प्रतीतेः समासोक्तिरलंकारः । यदि सीता संनिहिता साऽपीदानीं नवप्रसूतिः स्यादिति राममनोरथो गम्यते ॥ ३ ॥

४ ] ति० टी०–दिवाकरोऽलंकर्तुं शक्यः सुकर इत्यर्थः ॥ ४ ॥

रा० टी०–शक्यमिति । कुटजार्जुनमालाभिः कर्तृभिः मेघसोपानपङ्क्तिभिः मेघरूपसोपानसमूहमार्गेण अम्बरमारुह्य दिवाकरोऽलंकर्तुं शक्यम्, सामान्ये नपुंसकम् ॥ ४ ॥

गो० टी०–शक्यमिति । मेघा एव सोपानानि तेषां पङ्क्तिभिरम्बरमारुह्य कुटजार्जुनानां वार्षिकपुष्पाणां मालाभिः दिवाकरम् अस्मत्कुलगुरुभूतसूर्यमध्ये सदा ध्येयं विष्णुम् 'अलंकारप्रियो विष्णुः' इति न्यायेनालंकर्तुं शक्यम् । लिङ्गसामान्ये नपुंसकम् । सह पत्न्या विशालाक्ष्या नारायणमुपागमदित्युक्तरीत्या सीतया सहाराधनं न लब्धमित्युत्कण्ठा द्योत्यते ॥ ४ ॥

५ ] ति० टी०–संध्यारागोत्थितैरुद्भिन्नसंध्यारागैः, अत एव ताम्रैरन्तेषु पर्यन्तभागेषु श्वेतैः स्निग्धैः । किंचिज्जलसंबन्धात् अभ्रपटच्छेदैरभ्ररूपैश्छिन्नपटैर्बद्धव्रणमिवेत्युत्प्रेक्षा ॥ ५ ॥

रा० टी०–संध्येति । संध्यारागोत्थितैः संध्यारागसंबद्धैः अत एव ताम्रैः अरुणैः अन्तेषु च पाण्डुभिः श्वेतैः अभ्रपटच्छेदैः अभ्ररूपपटखण्डैः बद्धव्रणमिव अम्बरमाकाशमभवदिति शेषः ॥ ५ ॥

गो० टी०–संध्येति । संध्यारागोत्थितैः उत्थितसन्ध्यारागैः आहिताग्न्यादित्वात् परनिपातः । वस्त्रखण्डपक्षे उत्थितसंध्यातुल्यरागैः अत एव ताम्रैः अन्तेषु प्रान्तेषु अधिकपाण्डुरैः अत्यन्तशुभ्रैः स्निग्धैः आर्द्रैः अभ्रपटच्छेदैः अभ्राणि मेघा एव पटच्छेदाः वस्त्रखण्डाः तैः बद्धव्रणमिवाम्बरं भाति । रूपमालंकारः ॥ ५ ॥

६ ] ति० टी०–मन्दमारुत एव निःश्वासो यस्य तम् । संध्यारूपेण चन्दनेन हरिचन्दनेन रञ्जितम् । आपाण्डुजलदं प्रान्तपाण्डुजलदम् । जलदस्थाने कामातुरस्य कपोलादि ॥ ६ ॥

रा० टी०–मन्देति । मन्दमारुत एव निश्वासो यस्य तत् संध्याचन्दनरञ्जितं संध्यारूपचन्दनचर्चितम् आपाण्डुजलदम् ईषत्पाण्डुजलदविशिष्टम् अम्बरं कामातुरमिव भाति । ईषत्पाण्डुजलदस्य कपोलरूपकत्वं तेन वियुक्तत्वं व्यज्यते ॥ ६ ॥

गो० टी०–मन्देति । मन्दमारुत एव निश्वासो यस्य तत् तथा । अनेन निरन्तरनिश्वासवत्त्वमुच्यते । संध्या संध्यारागः स एव चन्दनं तेन रञ्जितम् आलिप्तम् अनेन तापशान्तिकरशीतोपचार उक्तः । आपाण्डुजलदमित्यनेन विरहपाण्डुतोक्ता । अत एव कामातुरं कान्ताविरहपीडितमिवेत्युत्प्रेक्षा रूपकानुप्राणिता ॥ ६ ॥

७ ] ति० टी०–घर्मेण रवितेजसा परिक्लिष्टा संतप्ता । बाष्पमूष्माणं बाष्पं नेत्रजलं च ॥ ७ ॥

रा० टी०–एषेति । घर्मपरिक्लिष्टा घर्मेण संतप्ता अनन्तरं नववारिपरिप्लुता एषा मही शोकसंतप्ता सीतेव बाष्पं विमुञ्चति ॥ ७ ॥

गो० टी०–एषेति । घर्मेण ग्रीष्मसंतापेन सीतापक्षे विरहतापेन परिक्लिष्टा नववारिभिः परिप्लुता सिक्ता सीतापक्षे अश्रुक्लिन्ना बाष्पम् ऊष्म अश्रुजलं च विमुञ्चति । प्रथमजलनिपाते हि भूमेरूष्मा समुद्गच्छति । श्लेषालंकारः ॥ ७ ॥

८ ] ति० टी०–मेघैः स्वोदराद्विनिर्मुक्ता इति मन्दता । कर्पूरलिप्तदलवच्छीतलाः केतकगन्धिनो वाताः । अञ्जलिभिः पातुमित्यादरातिशयादुक्तिः । जलवच्छ्रान्तिहरत्वात् ॥ ८ ॥

रा० टी०–मेघेति । मेघोदरविनिर्मुक्ताः मेघोदरादागताः अत एव कर्पूरदलशीतलाः कर्पूरलिप्तदलवत् शीतलाः केतकगन्धिनो वाताः अञ्जलिभिः पातुं शक्या इव ॥ ८ ॥

गो० टी०–मेघेति । मेघेत्यादिना मान्द्यमुक्तम् । कह्लारेत्यादिना शैत्यसौरभ्ये । एवंगुणत्वात् वाताः आदरातिशयेन अञ्जलिभिरादाय पातुं शक्यम् । अतिशयोक्तिरलंकारः ॥ ८ ॥

९ ] ति० टी०–फुल्लाः पुष्पिता अर्जुना यस्मिन् । धारा जलधाराः । अत्र शैलस्यारिर्वनदाहकत्वाद्दावाग्निः ॥ ९ ॥

रा० टी०–एष इति । फुल्लाः प्रफुल्लिताः अर्जुना यस्मिन् सः केतकैरभिवासित एष शैलः शान्तारिः सुग्रीव इव धाराभिरभिषिच्यते ॥ ९ ॥

गो० टी०–एष इति । फुल्लार्जुन इत्यनेन मालालंकृतत्वमुच्यते । केतकैरधिवासित इत्यनेन चन्दनादिमत्त्वं च सुग्री-

१ करमिति गो. पाठः । २ अधिकपाण्डरैरिति गो. पाठः । ३ निश्वासेति गो. रा. पाठः । ४ कह्लारसुखेति गो. पाठः । ५ केतकिगन्धिन इति गो. पाठः । ६ अधीति गो. पाठः । ७ इदं चिन्त्यम् ।

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः । मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १० ॥
कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् । अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११ ॥
नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति [1]मे । स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२ ॥
इमास्ता मन्मथवतां हिताः प्रतिहता दिशः । अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ १३ ॥
क्वचिद्बाष्पाभिसंरुद्धान्वर्षागमसमुत्सुकान् । कुटजान्पश्य सौमित्रे पुष्पितान्गिरिसानुषु ॥
मम शोकाभिभूतस्य कामसंदीपनान्स्थितान् ॥ १४ ॥
रजः प्रशान्तं स हिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५ ॥

---

वस्य सूच्यते । शान्तारिरित्यनेन शैलस्य निस्तापत्वमुक्तम् । बिम्बप्रतिबिम्बभावेन साम्यप्रतिपादनादुपमालंकारः ॥ ९ ॥

१० ] ति० टी०—धारा वर्षधारास्तद्रूपयज्ञोपवीतधराः । मारुतापूरितत्वेन शब्दवत्ता । प्राधीताः उपक्रान्ताध्ययना बटव इवेत्यर्थः ॥ १० ॥

रा० टी—मेघेति । मेघकृष्णाजिनधराः मेघरूपकृष्णाजिनधारिणः धारा एव यज्ञोपवीतानि तद्वन्तः मारुतेन आपूरिता गुहा येषां ते पर्वताः प्राधीताः आरब्धाध्ययना इव आसन्निति शेषः ॥ १० ॥

गो० टी०—मेघेति । मेघा एव कृष्णाजिनानि तेषां धराः नीलवर्णतया तद्रूपणम् । शुभ्रत्वेन धाराया उपवीतत्वरूपणम् । धारा निर्झरधाराः । मारुतापूरितगुहा इत्यनेन शब्दहेतुवायुमत्कण्ठत्वमुच्यते । प्राधीताः प्रकर्षेणाध्येतुमुपक्रान्ताः आदिकर्मणि क्तः । रूपकानुप्राणित उपमालंकारः ॥ १० ॥

११–१२ ] ति० टी०—अन्तर्गतस्तनितरूपो निर्घोषः कशाप्रहारे क्रियमाणः शब्दो यस्य तत् । सवेदनमित्यस्योत्तमाश्वमिति शेषः ॥ ११ ॥ १२ ॥

रा० टी०—कशाभिरिति । विद्युद्भिरन्तःस्तनितनिर्घोषमम्बरं हैमीभिः कशाभिस्तोत्रैः अभिताडितं सवेदनमश्वमिव पश्येति शेषः ॥ ११ ॥

गो० टी०—कशाभिरिति । विद्युद्भिरेव हैमीभिः कशाभिः व्यस्तरूपकम् । ताडितमिव स्थितं स्तनितमेव निर्घोषो यस्य तत् । अत एव अन्तः सवेदनमिवाम्बरं भाति । कशाभिघातेन उच्चैरधीयानसखेदमाणवकसाम्यमुच्यते । उपमोत्प्रेक्षारूपकाणामङ्गाङ्गिभावेन संकरः ॥ ११ ॥

रा० टी०—नीलेति । नीलमेघाश्रिता स्फुरन्ती विद्युत् रावणस्याङ्के स्थामे स्फुरन्ती वैदेहीव मे प्रतिभाति ॥ १२ ॥

गो० टी०—नीलेति । स्फुरन्ती चलन्ती । तपस्विनी शोच्या ॥ १२ ॥

१३] ति० टी०—घनैरनुलिप्ता इव, अत एव नष्टा अदृश्या ग्रहादयो यासु ताः, प्रतिहताः प्रतिहतप्राचीत्वादिज्ञानाः, इमा दिशो मन्मथवतां मन्मथोत्सवसाधनप्रियासहितानां हिताः सुखजनिकाः ॥ १३ ॥

रा० टी०—इमा इति । घनैर्मेघैरनुलिप्ताः अत एव नष्टग्रहनिशाकराः अदृष्टग्रहचन्द्राः अत एव प्रतिहता इव इमा दिशः मन्मथवतां हिताः उद्दीपकचन्द्रादिदर्शनाभाववत्तया हिता एवेत्यर्थः ॥ १३ ॥

गो० टी०—इमा इति । घनैरनुलिप्ता इव स्थिताः । नष्टग्रहनिशाकराः अदृष्टशुक्रादिग्रहचन्द्राः 'णश–अदर्शने' इत्यस्मान्निष्ठा । यद्वा नष्टग्रहः ग्रहणरहितः अदृश्यमान इत्यर्थः, तादृशश्चन्द्रो यासु ताः अत एव प्रतिहताः अज्ञातप्राच्युदीच्यादिदिग्विभागाः ता इमाः दिशः मन्मथवतां सस्त्रीकाणां हिताः सुखकराः विरहिणां तु दुःखकरा इत्यर्थः । यद्वा मन्मथवताम् अभिसारिकजनानां हिताः ॥ १३ ॥

१४ ] ति० टी०—बाष्पाभिसंरुद्धान्नववारिसेकजमहीसमुद्गतोष्मणा वृतान्वर्षाया आगमेन समुत्सुकान्सहर्षान्सानुषु स्थितानित्यन्वयः ॥ १४ ॥

रा० टी०—क्वचिदिति । क्वचित्स्थले बाष्पाभिसंरुद्धान् बाष्पैः नवजलसेकजनितपार्थिवाद्युष्मभिः अभिसंरुद्धान् व्याप्तान् वर्षागमसमुत्सुकान् पुष्पितान् शोकाभिभूतस्य मम कामसंदीपनान् गिरिसानुषु स्थितान् कुटजान् पश्य । सार्धश्लोक एकान्वयी ॥ १४ ॥

गो० टी०—क्वचिदित्यादिसार्धश्लोक एकान्वयः । बाष्पाभिसंरुद्धान् अभिनवजलकणसेचनसमुत्थनिदाघोष्मसमावृतान् कामुकपक्षे आनन्दबाष्पवतः वर्षागमेन समुत्सुकान् आप्यायितान् अन्यत्र स्त्रीसङ्गमसंतुष्टान् गिरिसानुषु पुष्पितान् अन्यत्र सहासान् अत एव मम शोकाभिभूतस्य कामसंदीपनान् अन्यरतिदर्शनस्योद्दीपनत्वादिति भावः । अनेन केषुचिदस्मदीयेषु स्त्रीसङ्गमसंतुष्टेषु सत्सु केषांचिदस्मदनुभवाभावो ममातीव दुःसह इत्युक्तम् ॥ १४ ॥

१५ ] ति० टी०—सहिमः सशीतः । निदाघस्य ग्रीष्मस्य दोषप्रसरास्तापादयः । स्थिता स्तब्धा निवृत्तेति यावत् । स्वदेशान्यान्ति प्रियावियुक्तैः स्थातुमशक्यत्वात् ॥ १५ ॥

---

१ मेति गो. पाठः ।

संप्रस्थिता मानसवासलुब्धाः प्रियान्विताः संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु यानानि मार्गेषु न संपतन्ति ॥ १६ ॥
क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित्पर्वतसंनिरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ १७ ॥
व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥ १८ ॥
रसाकुलं षट्पदसंनिकाशं प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् ॥ १९ ॥

---

रा० टी०–रज इति । रजः धूलिः प्रशान्तं वृष्ट्या निवृत्तं सहिमः सशीतः वायुर्वातीति शेषः, अत एव निदाघदोषप्रसराः निदाघदोषाणां तापादीनां प्रसराः विस्ताराः प्रशान्ताः अत एव वसुधाधिपानां यात्रा स्थिता निवृत्तेत्यर्थः, अत एव प्रवासिनो नराः स्वदेशान् यान्ति ॥ १५ ॥

गो० टी०–अथ भगवत्कटाक्षफलमन्यापदेशेन दर्शयति–रज इत्यादिना । रज इत्युपलक्षणम् रजस्तमसी प्रकान्ते । वायुशब्देन सततसंसारगतिर्जन इत्युच्यते । सहिम इति शीतलहृदयत्वम् । निदाघेत्यादिना आध्यात्मिकादितापशान्तिः । यात्रा संसारगतिः । स्वदेशान् स्वप्राप्यभूतपरमपदम् । स्वभावार्थस्तु स्पष्ट एव ॥ १५ ॥

१६ ] ति० टी०–मानसं सरः । अभीक्ष्णमतिशयितं यद्वर्षोदकं तेन विक्षतेषु क्लिष्टगमनेषु मार्गेष्विति शेषः, यानानि रथादीनि न संपतन्ति न गच्छन्ति ॥ १६ ॥

रा० टी०–समिति । संप्रति वृष्टिकाले मानसवासलुब्धाः मानससरोवासविषयकोत्कटेच्छावन्तः सन्तः प्रियान्विताः चक्रवाकाः संप्रस्थिताः मानसं सरोऽगच्छन् । अभीक्ष्णानि पुनः पुनः पतितानि एव वर्षोदकानि तैः विक्षतेषु विनष्टेषु मार्गेषु यानानि रथादीनि न संपतन्ति गच्छन्ति ॥ १६ ॥

गो० टी०–संप्रस्थिता इति । मानसवासलुब्धाः हंसाः संप्रस्थिताः वर्षभीततया क्वचिल्लीनाः परमहंसाख्यानां संन्यासिनां चातुर्मास्यतया संचारनिवृत्तिर्घोत्यते । चक्रवाकाः कामोद्रेकेण प्रियासमन्विता भवन्ति । यानासंपतने हेतुः–अभीक्ष्णेति । यानानि शकटरथादीनि संप्रस्थिता इत्यनेन कृतवैराग्यत्वमुच्यते । प्रियान्विता इति भगवद्भक्तिः । अभीक्ष्णेत्यादिना भगवत्कटाक्षेण निवृत्तकर्मत्वमुच्यते ॥ १६ ॥

१७ ] ति० टी०–शान्तमहार्णवस्य निस्तरङ्गसमुद्रस्य॥१७॥

रा० टी०–क्वचिदिति । प्रकीर्णाः प्रक्षिप्ताः अम्बुधराःमेघा यस्मिन् तत् नभः क्वचित्प्रकाशं क्वचिदप्रकाशं विभाति । तत्र दृष्टान्तः–पर्वतसंनिरुद्धं प्रशान्तमहार्णवस्य तरङ्गरहितसमुद्रस्य रूपं स्वरूपं यथा क्वचित्क्वचिद्विभाति ॥ १७ ॥

गो० टी०–क्वचिदिति । प्रकीर्णाम्बुधरं विप्रकीर्णमेघम् अत एव क्वचित्प्रकाशं क्वचिदप्रकाशं नभः क्वचित्क्वचित् पर्वतसंनिरुद्धं शान्तमहार्णवस्य निस्तरङ्गसमुद्रस्य रूपं स्वरूपमिव भाति । अनेन मन्दाशमेन प्रकाशाप्रकाशं ब्रह्मस्वरूपमुच्यते ॥ १७ ॥

१८ ] ति० टी०–सर्जादिपुष्पैर्मिश्रं पर्वतसंबन्धिधातुभिस्ताम्रं ताम्रवर्णं मयूरशब्दैरनुप्रयातमनुसृतं जलं नद्यः शीघ्रं वहन्ति समुद्रं इन्ते ॥ १८ ॥

रा० टी०–व्यामिश्रितमिति । सर्जकदम्बपुष्पैः व्यामिश्रितं पर्वतधातुताम्रं पर्वतधातुभिः गैरिकादिभिस्ताम्रमरुणं मयूरकेकाभिः मयूरशब्दैः अनुप्रयातं जलं शैलापगाः पर्वतसरितः शीघ्रतरं वहन्ति समुद्रं प्रापयन्ति ॥ १८ ॥

गो० टी०–व्यामिश्रितमिति । सर्जैः असनपुष्पैः कदम्बपुष्पैश्च व्यामिश्रितं संमिलितम् । पर्वतधातुताम्रमित्यनेन नदीनां पर्वतादुत्पत्तिरुक्ता । मयूराणां केकाभिः केकारवैः अनुप्रयातम् अनुसृतं नवं जलं वहन्ति । अत्र सात्त्विकराजसज्ञानमिश्रं भगवद्विषयानुरागयुक्तं भक्तिप्रेरितस्तुतिरवमुखरितपरिसरं हृदयं वहन्तो भक्ताः कथ्यन्ते ॥ १८ ॥

१९ ] ति० टी०–रसाकुलं रसवत् । षट्पदसंनिकाशं भ्रमरसदृशवर्णम् । प्रकामं यथेच्छं यथा भवति तथा प्रभुज्यते जनैरिति शेषः । आम्रफलस्यातिपक्वत्वात्स्वत एव भूमौ पातः ॥ १९ ॥

रा० टी०–रसेति । रसाकुलं रसैर्व्याप्तं षट्पदसंनि षट्पदैः संनीयते रसपानार्थं प्राप्यते तत् अनेकवर्णं पवनावधूतं वायुना कम्पितं विपक्वं जम्बुफलम् आम्रफलं च भूमौ पतति अत एव काशं सुलभ्यासं यथा भवति तथा प्रकामं प्रभुज्यते जन्तुभिरिति शेषः ॥ १९ ॥

गो० टी०–रसेति । रसाकुलं माधुर्यव्याप्तं षट्पदसंनिकाशं भृङ्गवन्नीलं जम्बु जम्ब्वाख्यं फलम् ‘ जम्बूः स्त्री जम्बु जाम्बवम् ’ इत्यमरः । प्रकामम् अतिशयेन प्रभुज्यते जनैरिति शेषः । अनेकवर्णं रक्तहरितायनेकरूपम् । आम्रफलं चूतफलम् । अनेन भगवत्कृपया जीवफलाभोग उच्यते ॥ १९ ॥

विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसंनिकाशाः ।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २० ॥
वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टबलाहकानि पश्यापराह्णेष्वधिकं विभान्ति ॥ २१ ॥
समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२ ॥
मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः ।
वातावधूता वरपौण्डरीकी लम्बेव माला रुचिराम्बरस्य ॥ २३ ॥
बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुपृक्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ २४ ॥

२० ] ति० टी०—बलाकमालया तत्पङ्क्त्या सहिताः। कूटः शिखरं तदाकारसदृशाकाराः ॥ २० ॥

रा० टी०—विद्युदिति । विद्युतः पताका इव येषां ते सबलाकमालाः बलाकपङ्क्तिसहिताः शैलेन्द्रकूटस्य गिरिराजशिखरस्य आकृतिरिव संनिकाश आकृतिर्येषां ते समुदीर्णः अतिगम्भीरः नादो येषां ते मेघाः मत्ताः संयुगस्थाः गजेन्द्रा इव गर्जन्ति ॥ २० ॥

गो० टी०—विद्युदिति । नक्षत्रमालास्थानीया बलाकमाला शैलेन्द्रस्य कूटानां शृङ्गाणामाकृतेः संस्थानस्य सन्निकाशास्तुल्याः । अनेन सर्वलोकप्रसिद्धाः सकलवावदूकाः वेदमार्गप्रतिष्ठापका उक्ताः ॥ २० ॥

२१ ] ति० टी०—प्रवृत्तेत्यादि । नृत्तोत्सवप्रवृत्तमयूराणि नितरां वृष्टा बलाहका येषु तानि ॥ २१ ॥

रा० टी०—वर्षेति । वर्षोदकैः आप्यायितानि प्रवृद्धानि शाद्वलानि येषु तानि प्रवृत्तनृत्तोत्सवाः बर्हिणाः मयूराः येषु निर्वृष्टाः बलाहकाः मेघा येषु तानि वनानि अपराह्णेषु अधिकं विभान्ति त्वं पश्य ॥ २१ ॥

गो० टी०—वर्षेति । निर्वृष्टाः वर्षुकाः बलाहकाः मेघाः येषु तानि कर्तरि क्तः । अत्र दिव्यदम्पत्योः स्वकरोद्धृतकुम्भजलसिक्तालवालकलितोद्यानतुल्या लोकाः सर्वे भगवत्कृपावर्षेण संपन्नार्थकामा इत्युच्यते ॥ २१ ॥

२२ ] ति० टी०—सलिलातिभारं सलिलरूपभारम् । भारवत्त्वाच्च विश्रम्य विश्रम्य गमनम् ॥ २२ ॥

रा० टी०—समिति । बलाकिनः बकपङ्क्तियुक्ताः सलिलातिभारं समुद्वहन्तः नदन्तः वारिधराः मेघाः महीधराणां पर्वतानां महत्सु शृङ्गेषु विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२ ॥

गो० टी०—समुद्वहन्त इति । सगर्भस्त्रीजनाः पर्वतमारोहन्त इव महत्सु शृङ्गेषु पुनः पुनर्विश्रम्य प्रयान्ति । अनेन 'हृदयेनोद्वहन् हरिम्' इत्युक्तरीत्या भगवद्ध्यानेन युक्ताः विश्वद्ज्ञानाः सन्ततस्तुतिशीलाः पूर्वाघोत्तराघश्लेषं क्रमेणोत्तीर्य परां कोटिमापन्नाः प्रतिपाद्यन्ते ॥ २२ ॥

२३ ] ति० टी०—गर्भार्थं मेघेष्वभिकामो यस्याः सा । परिसंपतन्ती नभसि गच्छन्ती, अत एव संमोदिता हर्षवती । बलाकपङ्क्तिरित्यार्षो ह्रस्वः । तदुत्प्रेक्षा—वातेत्यादि । वरा श्रेष्ठा पौण्डरीकी श्वेतपद्मसंबन्धिनी लम्बा रुचिराम्बरस्य मालेव ॥ २३ ॥

रा० टी०—मेघेति । मेघाभिकामा गर्भधारणार्थं मेघविषयकेच्छावती अत एव परिसंपतन्ती मेघानवलोक्य परितो गच्छन्ती संमोदिता बलाकपङ्क्तिः अम्बरस्य आकाशस्य वातावधूता वरपौण्डरीकी श्रेष्ठश्वेतपद्मनिर्मिता लम्बा बृहती रुचिरा रमणीया मालेव भाति ॥ २३ ॥

गो० टी०—मेघेति । गर्भधारणार्थं मेघमभिकामयत इति मेघाभिकामा परिसंपतन्ती मेघं प्राप्तुमागच्छन्तीत्यर्थः । संमोदिता संजातसंमोदा पुण्डरीकाणां सितपद्मानां विकारः पौण्डरीकी वरा चासौ पौण्डरीकी चेति कर्मधारयः । लम्बा रचिता लम्बमानतया कृता । अनेन भगवन्तं कालमेघश्यामं प्राप्तुं प्रवृत्ता भक्तिरूपापन्नधीर्भवति सत्पुरुषस्येति द्योत्यते ॥ २३ ॥

२४] ति० टी०—बालैरिन्द्रगोपैरन्तरे मध्ये मध्ये चित्रितेन शाद्वलेन युता भूमिः स्वतः शुकवर्णेन मध्ये मध्ये लाक्षाबिन्दुयुतेन कम्बलेन गात्रानुपृक्तेन गात्रसंपृक्तेन वृता नारीव ॥ २४ ॥

रा० टी०—बालेति । बालेन्द्रगोपान्तरचित्रितेन बालैर्नवैः इन्द्रगोपैः अन्तराचित्रितेन मध्ये चित्रीकृतेन नवशाद्वलेन युक्ता भूमिः गात्रानुपृक्तेन शरीरलग्नेन शुकप्रभेण हरितवर्णेन लाक्षोक्षितकम्बलेन मध्ये लाक्षारसरक्तीभूतकम्बलविशेषेण युक्ता नारीव विभाति ॥ २४ ॥

गो० टी०—बालेति । बालेन्द्रगोपैः अन्तरेषु चित्रितेन नानावर्णीकृतेन नवशाद्वलेन उपलक्षिता भूमिः शुकप्रभेण प्राचुर्येण शुकवर्णेन लाक्षोक्षितकम्बलेन मध्ये मध्ये लाक्षारसरञ्जितेन कम्बलेन नारीव भाति । अत्र भगवत्कटाक्षवर्षेण किंचिदुदञ्चितभक्तिका उच्यन्ते ॥ २४ ॥

१ रचितेति गो. पाठः । २ वृत्तेनेति गो. पाठः ।

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ २५ ॥
जाता वनान्ताः शिखिसुप्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ २६ ॥
वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः [1]प्लवङ्गमाः ॥ २७ ॥
प्रहर्षिताः [2]केतकिपुष्पगन्धमाघ्राय [3]मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ २८ ॥
धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९ ॥
अङ्गारचूर्णोत्करसंनिकाशैः फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा [4]निपीयमाना इव षट्पदौघैः ॥ ३० ॥
तडित्पताकाभिरलंकृतानामुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणो[5]त्सुकानामिव [6]वानराणाम् ॥ ३१ ॥

२५ ] ति० टी०–निद्रेति । आषाढ्यां स्वापोत्सवाद्धृष्टा गर्भधारणार्थम् ॥ २५ ॥

रा० टी०–निद्रेति । निद्रा केशवमभ्युपैति प्राप्नोति नदी सागरमभ्युपैति बलाका बकपङ्क्तिः घनमभ्युपैति सकामा कान्ता प्रियमभ्युपैति ॥ २५ ॥

गो० टी०–निद्रेति । आषाढे स्वापारम्भः श्रावणे निद्रासक्तिरुच्यते । अत्र तुल्ययोगितालंकारः । लोकोज्जीवनप्रवृत्त्या हरेस्तदेकचित्तत्वं शेषभूतानां शेषिपारतन्त्र्यसिद्धिश्च द्योतिता २५

२६ ] ति० टी०–शिखिनां सुष्ठु प्रनृत्तं येषु ते सकदम्बाः सकदम्बपुष्पाः शाखा येषाम् समानकामाः उभयेऽपि कामवन्त इत्यर्थः सस्यैर्वनैश्चाभिरामा ॥ २६ ॥

रा० टी०–जाता इति । वनान्ताः वनमध्यदेशाः शिखिनां सुप्रनृत्तमतिनर्तनं येषु ते । जाताः कदम्बाः सकदम्बाः कदम्बपुष्पसहितशाखावन्तो जाताः वृषाः । वर्दाः गोषु समानकामा जाताः । मही सस्यवनाभिरामा सस्यैर्वनैश्च रामा रमणीया जाता ॥ २६ ॥

गो० टी०–जाता इति । शिखिभिः संप्रनृत्तं येषु ते तथोक्ताः । कदम्बशब्देन कदम्बपुष्पमुच्यते सकदम्बपुष्पशाखा इत्यर्थः । सस्यवनेन सस्यसमूहेन अभिरामा रम्या । अनेन सर्वानुकूल्यमुक्तम् ॥ २६ ॥

२७ ] ति० टी०–वहनादिक्रियाणां नद्यादीनां च क्रमेणान्वयाद्यथासंख्यमत्रालंकारः । प्लवङ्गमाः समाश्वसन्ति सुग्रीवराज्यलाभात् ॥ २७ ॥

रा० टी०–वहन्तीति । नदीप्रभृतयः यथाक्रमं वहनादि कुर्वन्ति तत्र प्लवङ्गाः वानराः समाश्वसन्ति इदानीं न कस्माच्चित्ते भयमिति बोधयन्तीत्यर्थः । 'समाह्वयन्ति' इति पाठान्तरम् तत्र हर्षेणेतस्ततो गच्छन्तीत्यर्थः ॥ २७ ॥

गो० टी०–वहन्तीति । यथासंख्यमलंकारः । प्लवङ्गाः वानराः समाश्वसन्ति एकत्रैव बहुभक्ष्यलाभेन अचलचित्ता भवन्तीत्यर्थः ॥ २७ ॥

२८ ] ति० टी०–वननिर्झरे क्रीडया केतकगन्धमाघ्राय प्रहर्षिताः । प्रपातशब्दः प्रपतन्निर्झरशब्दः ॥ २८ ॥

रा०टी०–प्रहर्षित्ता इति। केतकपुष्पगन्धमाघ्राय प्रहर्षिताः प्रपातशब्दाकुलिताः निर्झरशब्दश्रवणेन चञ्चलचित्ताः समदाः मदसहिताः अत एव मत्ताः गजेन्द्राः मयूरैः सार्धं नदन्ति ॥२८॥

गो० टी०–प्रहर्षिता इति । हृष्टाः पूर्वमेव संतुष्टाः केतकगन्धमाघ्राय प्रहर्षिताः प्रकर्षेण संतुष्टाः वननिर्झरेषु यः प्रपातशब्दः पतनकृतशब्दः तेनाकुलिताः ॥ २८ ॥

२९ ] ति० टी०–पुष्परसैस्तदास्वादैरवगाढं दृढं मदं क्षणेनोत्सवेनार्जितम् ॥ २९ ॥

रा० टी०–धारेति । धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः षट्चरणाः भ्रमराः क्षणार्जितम् उत्सवेन गृहीतं पुष्परसावगाढं पुष्परसैः प्रवृद्धं मदं शनैस्त्यजन्ति ॥२९॥

गो० टी०–धारेति । क्षणार्जितं तत्क्षणसंपादितं पुष्परसेनावगाढम् उत्पन्नं मदं धारानिपातैः अभिहन्यमानाः अत एव पुष्पं विहाय केवलं शाखासु लम्बमानाः षट्चरणाः भृङ्गाः त्यजन्ति । कदम्बपुष्पेषु रसबाहुल्यात्क्षणेन मदः क्षणेन तद्धानिश्च भवतीत्यर्थः ॥ २९ ॥

३०-३१ ] ति० टी०–अङ्गारः शान्ताग्निस्तच्चूर्णस्य

१ प्लवङ्गा इति गो. रा. पाठः । २ केतकेति गो. रा. पाठः । ३ हृष्टा इति गो. पाठः । ४ निलीयेति गो. पाठः । ५ उद्यतानामिति गो. पाठः । ६ वारणानामिति गो. रा. पाठः ।

मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य ।
युद्धाभिकामः प्रतिनादशङ्की मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥ ३२ ॥
क्वचित्प्रगीता इव षट्पदौघैः क्वचित्प्रनृत्ता इव नीलकण्ठैः ।
क्वचित्प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३ ॥
कदम्बसर्जार्जुनकन्दलाढ्या वनान्तभूमिर्मधुवारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमा विभाति ॥ ३४ ॥
मुक्तासमाभं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५ ॥
षट्पादतन्त्रीमधुराभिधानं प्लवङ्गमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३६ ॥

---

य उत्करस्तत्समैः । अनेन फलानामतिमहत्त्वं सूचितम् । अत्युक्तिरत्रालंकारः ॥ ३० ॥ ३१ ॥

रा० टी०—अङ्गारेति । अङ्गारचूर्णोत्करसंनिकाशैः जलासिक्तकाष्ठाग्निचूर्णसमूहसदृशैः सुपर्याप्तरसैः परिपूर्णरसविशिष्टैः समृद्धैः बृहत्स्वरूपैः फलैर्युक्ता जम्बूद्रुमाणां शाखाः षट्पदौघैः निपीयमाना इव भान्ति ॥ ३० ॥

गो० टी०—अङ्गारेति । अङ्गारचूर्णानाम् इङ्गालचूर्णानाम् उत्करैः समूहैस्तुल्याः अङ्गारचूर्णोत्करसंनिकाशाः तद्वन्नीला इत्यर्थः ॥ ३० ॥

रा० टी०—तडिदिति । तडितः पताका इव ताभिरलंकृतानाम् उदीर्णः संजातो गम्भीरमहारवो येषां तेषां बलाहकानां मेघानां रूपाणि रणोत्सुकानां वारणानां गजानां रूपाणीव विभान्ति ॥ ३१ ॥

गो० टी०—तडिदिति । विद्युत्पताका इति श्लोकोक्तमेवार्थमादरातिशयेन भङ्ग्यन्तरेणोक्तवान् ॥ ३१ ॥

३२ ] ति० टी०—पृष्ठतो मेघरवं निशम्य श्रुत्वा प्रतिनादशङ्की शत्रुभूतगजान्तरनादशङ्की प्रतिनिवृत्तः ॥ ३२ ॥

रा० टी०—मार्गेति । शैलवनानुसारी शैलवनेषु विचरणशीलः युद्धाभिकामः गजेन सह युद्धाय अभिकामो यस्य सः अत एव मार्गानुगः मार्गाय गजान्वेषणाय अनुगः निरन्तरं गन्ता मत्तो गजः मेघरवं निशम्य पश्चाद्देशे श्रुत्वा प्रतिनादशङ्की योद्धुकामगजान्तरशब्दविषयकशङ्कावान् प्रतिसंनिवृत्तः अग्रे गमनात् निवृत्तः पश्चाद्देशं चलित इत्यर्थः ॥ ३२ ॥

गो० टी०—मार्गेति । मार्गानुगः सन्मार्गचारी वेदमार्गानुसारी दिग्जयाय प्रवृत्तः प्रतिवादिशब्दं श्रुत्वा वादाहवकाङ्क्षी प्रतिसंनिवृत्तः पुरुषधौरेयोऽत्र गम्यते ॥ ३२ ॥

३३ ] ति० टी०—अनेकाश्रयिणोऽनेकभावाश्रयिणः॥३३॥

रा० टी०—क्वचिदिति । षट्पदौघैः भ्रमरसमूहैः क्वचित्प्रगीता इव नीलकण्ठैर्मयूरैः क्वचित्प्रनृत्ता इव वारणेन्द्रैर्गजैः क्वचित्प्रमत्ता इव वनान्ता वनमध्यदेशाः अनेकाश्रयिणः बहुधर्मविशिष्टा भान्ति ॥ ३३ ॥

गो० टी०—क्वचिदिति । प्रकृष्टं गीतं येषां ते प्रगीताः एवमुत्तरत्रापि योज्यम् । अनेकाश्रयिणः गीतनृत्तमदाश्रयिणः॥३३

३४ ] ति० टी०—कन्दलं स्थलोत्पलम् मधुवारि मधुसदृशवारि आपानभूमिर्मद्यपानभूमिस्तस्यामपि कदम्बादिपुष्पाणि मद्यपूर्णता मत्तजनशब्दस्तन्नृत्यं च ॥ ३४ ॥

रा० टी०—कदम्बेति । कदम्बादिभिस्तरुभिराढ्या मधुवारिभिः मद्यसदृशवर्णविशिष्टजलैः पूर्णा वनान्तभूमिः मयूरमत्ताभिरुतप्रनृत्तैः मत्तमयूररुतनृत्यैः आपानभूमिप्रतिमा मद्यपानभूमिसदृशी विभाति। मद्यपानभूमौ मद्यपनृत्यादि प्रसिद्धम्॥३४॥

गो० टी०—कदम्बेति । कदम्बैः सर्जैः बन्धूकैः कन्दलैः भूता(?)ढ्यपुष्पैश्चाढ्या मयूराणां मत्ताभिरुतैः प्रनृत्तैश्च आपानभूमिप्रतिमा मद्यपानस्थलीतुल्या विभाति । सा हि संस्कारपुष्पाढ्या मद्यपूर्णा उन्मादनृत्तवत्पुरुषयुक्ता च भवति ॥ ३४ ॥

३५ ] ति० टी०—विवर्णच्छदनाः जलसेकतो विवर्णपक्षाः ॥ ३५ ॥

रा० टी०—मुक्तेति । सुरेन्द्रदत्तम् इन्द्रप्रेरणया मेघैर्मुक्तम् अत एव पतत् अधः आगच्छत् अत एव पत्रपुटेषु द्रोणाकारपत्रेषु लग्नं मुक्तासमाभं सुनिर्मलसलिलं हृष्टाः स्वपेयजलप्राप्त्या प्राप्तहर्षाः विवर्णच्छदनाः जलसिक्तत्वेन परिणतपक्षास्तृषिताः विहङ्गा चातकाः पिबन्ति । चातकाः सद्योवृष्टस्वातिजलमेव पिबन्तीति प्रसिद्धिः ॥ ३५ ॥

गो० टी०—मुक्तेति । विवर्णच्छदनाः विविधवर्णपक्षाः विहङ्गाः चातकाः सुरेन्द्रदत्तं देवेन्द्रदत्तम् । चातकाः भूस्थं जलं न पिबन्ति किंतु सद्योवर्षदेवताभूतेन्द्रदत्तमेव पिबन्तीति प्रसिद्धिः ॥ ३५ ॥

३६ ] ति० टी०—षट्पदो भ्रमरस्तद्ध्वनिरूपं तन्त्रीणां मधुरमभिधानं गीतं यस्मिन् प्लवङ्गमानां भेकानामुदीरितमेव

१ नवेति गो. पाठः। २ सकाशमिति गो. पाठः।

क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३७ ॥
स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ ३८ ॥
नद्यः समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्रावृतपूर्णभोगा द्रुतं स्वभर्तारमुपोपयान्ति ॥ ३९ ॥
नीलेषु नीला नववारिपूर्णा मेघेषु मेघाः प्रतिभान्ति सक्ताः ।
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥ ४० ॥

कण्ठतालं सूत्रधारमुखशब्दतालो यस्मिन् मेघशब्दा एव मृदङ्गनादास्तैराविष्कृतं प्रकटितं संगीतं वनेषु प्रवृत्तमिव ॥ ३६ ॥

रा० टी०–षट्पादेति । षट्पादा भ्रमरास्तन्त्र्यो वीणा इव तेषां मधुराभिधानं मधुरशब्दो यस्मिन् तत् प्लवङ्गमैः दर्दुरैः उदीरितः कण्ठतालः सूत्रधारकण्ठनिःसृतशब्दविशेषो यस्मिन् तत् मेघा एव मृदङ्गास्तेषां नादैः आविष्कृतं प्रकटितं वनेषु संगीतमिव प्रवृत्तम् ॥ ३६ ॥

गो० टी०–षट्पादेति । षट्पादा भृङ्गाः एव तन्त्री तस्या मधुराभिधानं मधुरनादः यस्मिन् तत् प्लवङ्गमोदीरितं मण्डूकनाद एव कण्ठतालो यस्मिन् तत् मेघा एव मृदङ्गा मर्दलाः तेषां नादैराविष्कृतं प्रकटीकृतं संगीतं वनेषु प्रवृत्तमिव संबभूवेति योजना ॥ ३६ ॥

३७ ] ति० टी०–प्रनृत्तैरारब्धनृत्तैः उन्नदन्तो गायकास्तैः वृक्षाग्रनिषण्णकायास्ते संगीतोपलक्षितनृत्यद्रष्टारः॥३७॥

रा० टी०–क्वचिदिति । क्वचित्कस्मिंश्चित् समये प्रनृत्तैः प्रकृष्टनर्तनविशिष्टैः क्वचित् उन्नदद्भिः महानादं कुर्वद्भिः क्वचिद्वृक्षाग्रेषु निषण्णाः संस्थापिताः कायाः शरीराणि यैस्तैः व्यालम्बीनि अतिविशालानि बर्हाणि पिच्छानि एव आभरणानि येषां तैः मयूरैः वनेषु संगीतमिव प्रवृत्तम् ॥ ३७ ॥

गो० टी०–क्वचिदिति । संगीतविषये केचिन्नृत्यन्ति केचिद्गायन्ति केचित् प्रधाना अनुभवन्ति तत्सर्वं वनेऽपि दर्शयति–नृत्यन्तो मयूराः नर्तकस्थानीयाः नदन्तो मयूराः गायकस्थानीयाः वृक्षाग्रनिषण्णकायाः मयूराः अनुभवितृस्थानीयाः । अतस्तैः संगीतं प्रवृत्तमिव ॥ ३७ ॥

३८ ] ति० टी०–चिरसंनिरुद्धां चिरसंपादिताम् । शुष्कमृत्तिकास्विति शेषः, प्लवगा भेकाः अनेकरूपाकृतिः संस्थानं वर्णो नीलपीतादिर्नादश्च येषाम् ॥ ३८ ॥

रा० टी०–स्वनैरिति । चिरसंनिरुद्धां बहुकालं स्थितां निद्रां घनानां स्वनैः करणैर्विहाय प्रबुद्धाः सावधानाः अनेकरूपाकृतिवर्णनादाः अनेकरूपादिविशिष्टाः प्लवगाः भेका अम्बुधाराभिहताः सन्तो नदन्ति ॥ ३८ ॥

गो० टी०–स्वनैरिति । प्लवगाः मण्डूकाः घनानां स्वनैः चिरसंनिरुद्धां चिरकालव्यापारनिरोधिकां निद्रां विहाय प्रबुद्धा इति संबन्धः ॥ ३८ ॥

३९ ] ति० टी०–कामातुरयुवतिवृत्तान्तं नदीष्वारोपयति–नद्य इति । वारिपूरेण समुद्वाहिता उन्नमिताश्चक्रवाकरूपस्तना याभिः । शीर्णानि तटानि रोधकजरतीस्थानीयान्यपवाहयित्वा निरस्य नवप्रावृतपूर्णभोगाद्द्रुतं नवं प्रावृतं पुष्पाद्युपहारात्पूर्णभोगायाद्दृतं स्वीकृतम् । उपोपयन्ति 'प्रसमुपोदः पादपूरणे' इति द्वित्वम् ॥ ३९ ॥

रा० टी०–नद्य इति । समुद्वाहिताः वारिपूरेणोन्नीताः चक्रवाकाः याभिस्ताः दृप्ताः नद्यः शीर्णानि स्ववेगेन विदारितानि तटानि अपवाहयित्वा नवप्रावृतपूर्णभोगाः नवैः प्रावृतैः पुष्पाद्युपहारैः पूर्णाः भोगा यासां ताः सत्यः स्वभर्तारं समुद्रं द्रुतमुपोपयान्ति ॥ ३९ ॥

गो० टी०–अथ नदीनां स्वभर्तृसङ्गममिच्छन्तीभिरुत्कटमन्मथाभिर्युवतिभिः साम्यमुच्यते । समुद्वाहितचक्रवाकाः वारिपूरोन्नमितचक्रवाकाः स्तनस्थानीयाः । अपवाहयित्वेत्येतत्नवोढोचितलज्जातिलङ्घनस्थानीयम् । नवप्राभृतपूर्णभोगाः प्राभृतं फलाद्युपहारः भोगश्चन्दनकर्पूरकुसुमताम्बूलादिः, स्वभर्तारं समुद्रम् उपोपयान्ति उपयान्तीत्यर्थः ॥ ३९ ॥

४० ] ति० टी०–नीलेषु मेघेषु सक्ता नीलमेघाः प्रतिभान्ति । दवाग्निदग्धेषु शैलेषु तादृशाः शैला यदि सक्ता भवन्ति तदा ते इव । बद्धमूला इत्युभयान्वयि ॥ ४० ॥

रा० टी०–नीलेष्विति । नीलेषु जलपूर्णतया नैल्यविशिष्टेषु मेघेषु सक्ताः आसक्ताः वारिपूर्णाः मेघाः दवाग्निदग्धेषु शैलेषु बद्धमूलाः सक्ताः दग्धा शैला इव प्रतिभान्ति ॥ ४० ॥

गो० टी०–नीलेष्विति । दवाग्निदग्धेषु बद्धमूला दवाग्निदग्धाः शैला इव नीलेषु मेघेषु सक्ता नववारिपूर्णाः नीला मेघाः प्रतिभान्ति । बद्धमूलत्वस्थाने नववारिपूर्णा इत्युक्तम् उभयत्र स्थायित्वमर्थः ॥ ४० ॥

---

१ व्यालम्बीति रा. पाठः । २ भृतेति गो. पाठः । ३ यान्तीति गो. रा. पाठः । ४ प्रवीति गो. पाठः । ५ शक्ता इति रा. पाठः

[1]प्रमत्तसंनादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ॥ ४१ ॥
नवाम्बुधाराहतकेसराणि [2]ध्रुवं परिष्वज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि नवानि हृष्टा भ्रमराः पिबन्ति ॥ ४२ ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु [4]विक्रान्ततरा मृगेन्द्राः ।
रम्या [5]नेरेन्द्रा निभृता नरेन्द्रा प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ४३ ॥
मेघाः समुद्भूतसमुद्रनादा महाजलौ[6]घैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति ॥ ४४ ॥
वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णवेगाः ।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो [7]जलं विप्रतिपन्नमार्गाः ॥ ४५ ॥
नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्र[8]नीतैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६ ॥
घनोपगूढं गगनं [9]न तारा न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः [10]प्रकाशाः ॥ ४७ ॥

४१-४२ ] ति० टी०—प्रमत्तशब्दवन्मयूरवन्ति । शक्रगोपः इन्द्रगोपः ॥ ४१ ॥ ४२ ॥

रा० टी०—प्रमत्तेति । प्रमत्ताः अत एव संनादिताः संनादवन्तो बर्हिणाः मयूराः येषु तानि सशक्रगोपैः(?)आकुलानि व्याप्तानि शाद्वलानि येषु तानि नीपार्जुनवासितानि नीपार्जुनयोर्गन्धविशिष्टानि वनान्तराणि गजाः चरन्ति ॥ ४१ ॥

गो० टी०—प्रहृष्टेति । वनान्तराणि वनमध्यानि चरन्ति वनमध्येषु चरन्तीत्यर्थः ॥ ४१ ॥

रा० टी०—नवेति । नवाम्बुधाराभिः हताः केसराः येषां तानि सरोरुहाणि कमलानि परित्यज्य सकेसराणि नवानि कदम्बपुष्पाणि हृष्टाः भ्रमराः पिबन्ति ॥ ४२ ॥

गो०टी०-नवेति। कदम्बकेसराणामहतत्वे हेतुर्नवानीति ४२

४३ ] ति० टी०—गवेन्द्रा वृषभाः । निभृतास्त्यक्तोद्योगाः सर्वत्र जाता इति शेषः । सुरेन्द्रो देवेन्द्रः प्रक्रीडितः कर्तरि निष्ठा ॥ ४३ ॥

रा० टी०—मत्ता इति । गजेन्द्राः मत्ताः गवेन्द्राः वृषभाः मुदिताः मृगेन्द्राः वनेषु विक्रान्ततराः अतिविक्रमवन्तः नगेन्द्राः महापर्वताः रम्याः नरेन्द्राः निभृताः त्यक्तयुद्धोत्साहाः सुरेन्द्रः वारिधरैः प्रक्रीडितः ॥ ४३ ॥

गो० टी०—मत्ता इति । मृगेन्द्राः सिंहाः नगेन्द्राः पर्वतश्रेष्ठाः रम्याः पल्लवपुष्पाङ्कुरादिति भावः । प्रक्रीडित इति कर्तरि निष्ठा ॥ ४३ ॥

४४ ] ति० टी०—समुद्भूतस्तिरस्कृतः समुद्रनादो यैः । अपवाहयन्ति प्रवहज्जलानि कुर्वन्ति ॥ ४४ ॥

रा० टी०—मेघा इति । समुद्भूतः तिरस्कृतः समुद्रनादः यैस्ते गगनावलम्बाः मेघाः महाजलौघैः नद्यादीनि अपवाहयन्ति पूरयन्तीत्यर्थः ॥ ४४ ॥

गो० टी०—मेघा इति । अपवाहयन्ति परिवाहयन्ति ॥ ४४ ॥

४५ ] ति० टी०—वर्षप्रवेगा वृष्टयः । विप्रतिपन्नः प्रतिबद्धो मार्गो नृणां याभिस्ताः ॥ ४५ ॥

रा० टी०—वर्षेति । विपुलाः वर्षप्रवेगाः वृष्टिप्रवाहाः पतन्ति । समुदीर्णवेगाः अतिवेगवन्तो वाताः प्रवान्ति । अत एव प्रणष्टकूलाः अत एव विप्रतिपन्नाः निवर्तिताः मार्गाः जनानामध्वानः याभिस्ताः नद्यः जलं शीघ्रं प्रवहन्ति ॥ ४५ ॥

गो० टी०—वर्षेति । वर्षप्रवेगाः अतिवेगा वृष्टय इत्यर्थः । विपुलाः निरन्तराः नद्यो जलैः विप्रतिपन्नमार्गाः विरुद्ध प्राप्तमार्गाः ॥ ४५ ॥

४६ ] ति० टी०—रूपं निर्मलमाकारम् । श्रियं विविधधातुयुक्तत्वरूपां दर्शयन्तीव ॥ ४६ ॥

रा० टी०—नरैरिति । नरैर्नरेन्द्रा राजान इव सुरेन्द्रदत्तैरिन्द्रप्रेरितैः पवनोपनीतैः घनाम्बुकुम्भैः घना एव अम्बुकुम्भास्तैरभिषिच्यमानाः पर्वतेन्द्राः रूपं स्वां श्रियं चाभिदर्शयन्ति ॥ ४६ ॥

गो० टी०—नरैरिति । अभिषिक्ताः नरेन्द्राः स्वां श्रियमिव अभिषिच्यमानाः पर्वताः स्वं रूपं दर्शयन्ति नैर्मल्यादिनेति भावः ॥ ४६ ॥

४७ ] ति० टी०—घनोपगूढत्वाद्गगनस्य ताराविदर्शनाभावः । वितृप्ता जामितां ? प्राप्ता ॥ ४७ ॥

१ प्रहृष्टेति गो. पाठः । २ द्रुतं परित्यज्येति गो. परित्यज्येति रा. पाठः । ३ पतन्तीति गो. पाठः । ४ विश्रान्तेति गो.पाठः । ५ नगेन्द्रा इति गो. रा. पाठः । ६ घोषा इति गो. पाठः । ७ जलैरिति गो. पाठः । ८ दत्तैरिति गो. रा. पाठः । ९ सतारमिति गो. पाठः । १० प्रकाश इति रा. पाठः ।

महान्ति कूटानि महीधराणां धाराविधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ४८ ॥
शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रपाताः ।
गुहासु संनादितबर्हिणासु हारा विकीर्यन्त इवावभान्ति ॥ ४९ ॥
शीघ्रं प्रवेगा विपुलाः प्रपाता निर्धौतशृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्गतलैर्ध्रियन्ते ॥ ५० ॥
सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः । पतन्ति चातुला दिक्षु तोयधाराः समन्ततः ॥ ५१ ॥
विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५२ ॥
वृत्ता यात्रा नरेन्द्राणां सेना पथ्येव वर्तते । वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३ ॥
मासि प्रौष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् । अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४ ॥

रा० टी०–घन इति । गगनं घनोपगूढं घनैराच्छन्नम् अतः तारादर्शनं नाभ्युपैति भास्करश्च दर्शनं नाभ्युपैति जलौघैर्धरणी वितृप्ता तमोविलिप्ता अन्धकारेणावृता च अत एव दिशः प्रकाशो न ॥ ४७ ॥

गो० टी०–घनेति । तमोविलिप्ता दिशः न प्रकाशाः ॥४७॥

४८ ] ति० टी०–प्रपातैर्निर्झरैः ॥ ४८ ॥

रा० टी०–महान्तीति । महाप्रमाणैः अतिविस्तृतैर्विपुलैर्बहुभिः मुक्ताकलापैः मुक्तासमूहैः लम्बमानैरिव प्रपातैर्निर्झरैः धाराविधौतानि महीधराणां महान्ति कूटानि अधिकं विभान्ति ४८

गो० टी०–महान्तीति । प्रपातैः निर्झरैः ॥ ४८ ॥

४९ ] ति० टी०–प्रपतन्तीति प्रपाता निर्झराः । विकीर्यन्तस्त्रुट्यन्तः ॥ ४९ ॥

रा० टी०–शैलेति । शैलोपलेषु प्रस्खलमानो वेगो येषां ते विपुलाः प्रपाताः निर्झराः संनादितबर्हिणासु शैलोत्तमानां गुहासु विकीर्यन्तः त्रुट्यन्तो हारा इव भान्ति ॥ ४९ ॥

गो० टी०–शैलेति । शैलोत्तमानां विपुलाः प्रपाताः निर्झराः शैलोपलप्रस्खलमानवेगाः सन्तः सन्नादितबर्हिणासु गुहासु विकीर्यन्तः विकीर्यमाणाः हारा इव अवभान्ति ॥ ४९ ॥

५०–५१ ] ति० टी०–निर्धौतं क्षालितं शृङ्गाणामुपतलं यैस्ते ॥ ५० ॥ ५१ ॥

रा० टी०–शीघ्रेति । शीघ्रप्रवगाः विपुला बहवः निर्धौतश्रृङ्गोपतलाः प्रक्षालितशृङ्गप्रदेशाः मुक्ताकलापप्रतिमाः मुक्तासमूहसदृशाः पतन्तो गिरीणां प्रपाताः महागुहानामुत्सङ्गतलैर्ध्रियन्ते ॥ ५० ॥

गो० टी०–शीघ्रेति । निर्धौतानि निर्मलीकृतानि श्रृङ्गोपतलानि श्रृङ्गसमीपतलानि यैस्ते तथा । गुहोत्सङ्गतलैः गुहामध्यतलैः ॥ ५० ॥

रा० टी०–सुरतेति । सुरतामर्दविच्छिन्नाः सुरतेषु विहारेषु आमर्दैर्विच्छिन्नाः पतिताः स्वर्गस्त्रीहारमौक्तिका इव तोयधारा समन्ततः पतन्ति ॥ ५१ ॥

गो० टी०–सुरतेति । तोयधाराः मौक्तिका इव पतन्तीति स्वरूपोत्प्रेक्षा ॥ ५१ ॥

५२] ति० टी०–ज्ञायतेऽनुमीयते । अनुमानालंकारः॥५२॥

रा० टी०–सूर्यदर्शनाभावेन रात्रिदिवसयोस्तुल्यत्वेऽपि रात्रिबोधकमसाधारणचिह्नमाह–विलीयमानैरिति । विलीयमानैः स्वस्ववासवृक्षं गच्छद्भिर्विहगैः निमीलद्भिर्मुकुलीभावं प्राप्नुवद्भिः पङ्कजैः विकसन्त्या मालत्या च अस्तं गतो रविर्ज्ञायते ॥ ५२ ॥

गो० टी०–निलीयमानैरिति । निलीयमानैः नीडेषु गच्छद्भिः ॥ ५२ ॥

५३ ] ति० टी०–वृत्ता निवृत्ता । 'पृक्ता' इति पाठेऽप्ययमेवार्थः । प्रस्थितापि सेना पथ्येव वर्तते । समीकृताः निरुद्धत्वं साधारणधर्मः ॥ ५३ ॥

रा० टी०–वृत्तेति । नरेन्द्राणां यात्रा वृत्ता निवृत्ता अत एव सेना पथि वर्तते न क्वचिद् यातीत्यर्थः, अत एव वैराणि परस्परं राज्ञां द्वेषा मार्गाश्च सलिलेन समीकृताः ॥ ५३ ॥

गो० टी०–वृत्तेति । वृत्ता निवृत्ता अतोऽग्रे गता सेना प्रतिनिवृत्ता । सलिलेन वैराणि समीकृतानि सलिलप्रतिरोधाद्वैराणि शान्तानीत्यर्थः । मार्गाश्च समीकृताः जलेन मार्गामार्गविवेको नासीदित्यर्थः ॥ ५३ ॥

५४ ] ति० टी०–प्रौष्ठपदो भाद्रपदः । ब्रह्म वेदं विवक्षतामध्येतुमिच्छताम् अध्यायसमय उपाकरणकालः ॥ ५४ ॥

रा० टी०–मासीति । ब्रह्म वेदं विवक्षतां पठितुमिच्छतां सामगानां प्रोष्ठपदे भाद्रे मासि अयं शुक्लतृतीयातिथिः अध्यायसमयः उपाकरणकालः उपस्थितः प्राप्तः ॥ ५४ ॥

गो० टी०–मासीति । अनेन भाद्रपदो मासः संप्रवृत्त इति सूचयति । ब्रह्म वेदं विवक्षताम् अध्येतुमिच्छताम् अध्यायसमयः वेदारम्भसमयः ॥ ५४ ॥

१ शीघ्रप्रवेगा इति गो. रा. पाठः । २ इवाकुला इति गो. पाठः । ३ निलीयेति गो. पाठः । ४ प्रतिनीति गो. पाठः । ५ प्रोष्ठपद इति गो. पाठः ।

विवृत्तकर्मायतनो नूनं संचितसंचयः। आषाढीमभ्युपगतो भरतः कोशलाधिपः ॥ ५५ ॥
नूनमापूर्यमाणायाः सरय्वा वर्धते रयः। मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६ ॥
इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते। विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ५७ ॥
अहं तु हृतदारश्च राज्याच्च महतश्च्युतः। नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ ५८ ॥
शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः। रावणश्च महाञ्छत्रुरपारः प्रतिभाति मे ॥ ५९ ॥
अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान्। प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ६० ॥
अपि चापि परिक्लिष्टं चिराद्दारैः समागतम्। आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ६१ ॥

५५ ] ति० टी०—निवृत्तं कर्म छादनादि कर्म यस्य तादृशमायतनं यस्य। संचिताः संचया जीवनसाधनानि येन स भरत आषाढीं प्राप्याभ्युपगतः कृतयत्किंचिद्व्रतसंकल्पः॥५५॥

रा० टी०—निवृत्तेति। निवृत्तं कर्मायतनं राजकर्मणां मूलं यात्रेत्यर्थः, यस्य सः अत एव संचिता आर्जिताः संचयाः कर्मसाधकपदार्थाः येन स कोशलाधिपो भरतः आषाढीं पूर्णिमां प्राप्य अभ्युपगतः विशेषानुष्ठानमारभत ॥ ५५ ॥

गो० टी०—निवृत्तेत्ति। निवृत्तं कर्म यस्य तन्निवृत्तकर्म आयतनं गृहं यस्य सः निवृत्तकर्मायतनः उपरतसकलगृहोपकरणसंपादन इत्यर्थः। संचितसंचयः संपादितधननिचयः। आषाढीम् आषाढमाससमाप्तिपौर्णमासीम् अभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान्। अनेन चत्वारो वार्षिका मासा इति पूर्वोक्तमासानाम् आषाढः प्राथमिक इति सूचितम् ॥ ५५ ॥

५६ ] ति० टी०—मामायान्तं समीक्ष्य। वनतः प्रतिनिवृत्तमिति शेषः ॥ ५६ ॥

रा० टी०—नूनमिति। आयान्तं मां समीक्ष्य अयोध्यायां स्वन इव आपूर्यमाणायाः सरय्वा रयो वेगः वर्धते ॥ ५६ ॥

गो० टी०—नूनमिति। अयोध्यायाः अयोध्यावासिजनस्य ॥ ५६ ॥

५७ ] ति० टी०—वर्षाः प्राप्येति शेषः ॥ ५७ ॥

रा० टी०—इमा इति। स्फीतगुणाः इमाः वर्षा राज्ये च स्थितः सुग्रीवः सुखमश्नुते ॥ ५७ ॥

गो० टी०—इमा इति। वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥ ५७ ॥

५८ ] ति० टी०—नदीकूलं कर्तृ ॥ ५८ ॥

रा० टी०—अहमिति। हृता दारा यस्य सः अत एव महतो राज्यात् शोभायाश्च्युतोऽहं तु क्लिन्नमाप्लावितं नदीकूलमिव अवसीदामि ॥ ५८ ॥

गो० टी०—अहं त्विति। अजितारिश्चेत्यपि ज्ञेयम्। क्लिन्नम् आर्द्रम् ॥ ५८ ॥

५९ ] ति० टी०—वर्षाश्च विस्तीर्णा इत्यनुकर्षः। अपारो दुष्प्रापवैरनिर्यातनपरः ॥ ५९ ॥

रा० टी०—शोक इति। मम शोकादिः अपारः बहुकालमन्तरहित इव भाति ॥ ५९ ॥

गो० टी०—शोकश्चेति। मम शोकश्च विस्तीर्णः वर्षाश्च भृशदुर्गमाः अत्यन्तं दुरत्ययाः रावणश्च महान् शत्रुः अतश्च एतत्त्रितयम् अपारं दुस्तरं प्रतिभाति ॥ ५९ ॥

६० ] ति० टी०—अयात्रां वर्षवशाद्यात्राभावम्। कार्योन्मुखतया सुग्रीवे प्रणतेऽपि मया सीतान्वेषणाद्युद्दिश्य किंचिदपि नोक्तम् ॥ ६० ॥

रा० टी०—अयात्रामिति। दुर्गमान् मार्गान् दृष्ट्वा अत एव अयात्रां यात्राभावं दृष्ट्वा प्रणतेऽपि सुग्रीवे मया किंचिन्न ईरितम् ॥ ६० ॥

गो० टी०—अयात्रामिति। अयात्रां राज्ञामेतत्कालोचितदण्डयात्राभावम्। प्रणते चैव इदानीमेव सीतान्वेषणरावणनिरसनोद्योगः कर्तव्य इति प्रार्थनापूर्वकं प्रह्वीभूते सत्यपीत्यर्थः ॥ ६० ॥

६१ ] ति० टी०—अपि च तदानीं गरीयसे आत्मकार्याय वक्तुमनुचितमित्याह—अपि चेति। अपिपरिक्लिष्टमतिपरिक्लिष्टम् गरीयस्त्वादल्पकालाल्पयत्नासाध्यस्वात् नेच्छामि नैषिषम् ॥ ६१ ॥

रा० टी०—अपीति। अपि च अन्यदुच्यते चिरात् बहुकालं परिक्लिष्टं दारैः समागतम् इदानीं स्त्रीभिः संयुक्तं वानरं सुग्रीवं वक्तुम् आज्ञापयितुम् आत्मनः कार्यस्य गरीयस्त्वात् बहुकालादितः साध्यत्वात् हेतोः नेच्छामि, किंच आत्मकार्यस्य गरीयस्त्वात् गुरुत्वादपि नेच्छामि ॥ ६१ ॥

गो० टी०—अपि चेति। आत्मकार्यगरीयस्त्वात् अस्मत्प्रयोजनस्यातिमहत्त्वात् अल्पयत्नेन अल्पकालेन चासाध्यत्वादित्यर्थः, वक्तुं नियोक्तुं नेच्छामीति भूतार्थे लट् ॥ ६१ ॥

१ अपारमिति गो. पाठः।

स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् । उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ ६२॥
तस्मात्कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण । सुग्रीवस्य नदीनां च प्रसादमभिकाङ्क्षयन् ॥ ६३ ॥
उपकारेण वीरो हि प्रतीकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ६४ ॥
अथैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनः शुभम् ॥ ६५ ॥
यदुक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता न चिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिदं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

विषयासक्त्या विस्मृतरामकार्यमतः शरदागमेऽपि सुहृत्कार्योदासीनं सुग्रीवं रामगुणानुवर्णनपूर्वकं स्मारयन्हनुमान्सीतान्वेषणार्थं सैन्यसमानयने प्रेरयति । प्रबुद्धः सुग्रीवः सकलकपिबलानयनार्थं दूतप्रेषणे नीलं नियुङ्क्ते ।

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् । सारसाकुलसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १ ॥
समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् । अत्यर्थं चासतां मार्गमेकान्तगतमानसम् ॥ २ ॥
निवृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा । प्राप्तवन्तमभिप्रेतान्सर्वानेव मनोरथान् ॥ ३ ॥
स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् । विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४ ॥
क्रीडन्तमिव देवेशं गन्धर्वाप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ॥ ५ ॥

---

६२–६६ ] ति० टी०–वेत्स्यते प्रत्युपकारकः स्मरिष्यति शेषं व्याख्यातम् ॥ ६२–६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

रा० टी०–स्वयमिति । विश्रम्य स्वश्रमं निवर्त्य उपागतं प्राप्तं कालमन्वेषणसमयं ज्ञात्वा उपकारं मत्कर्तृकोपकृतिं वेत्स्यते समयं प्राप्य यतिष्यत इत्यर्थः, अत्र संशयो न ॥ ६२॥

गो० टी०–स्वयमिति । कालं शरत्कालम् ॥ ६२ ॥

रा० टी०–तस्मादिति । तस्मादुक्तहेतोः सुग्रीवस्य नदीनां च प्रसादं स्वेच्छयोद्योगप्रवृत्तिं मार्गदात्रीत्वं चेत्यर्थः, अभिकाङ्क्षयन् कालप्रतीक्षोऽहं स्थितोऽस्मि ॥ ६३ ॥

गो० टी०–उक्तोपपत्तिभिः पूर्वसर्गोक्तं द्रढयति–तस्मादित्यादिना ॥ ६३ ॥

रा० टी०–उपकारेणेत्यादि । श्लोकत्रयमित्थं पूर्वमपि पठितमिति व्याख्यातत्वान्नात्र व्याख्यायते ॥ ६४–६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०–उपकारेणेति । अकृतज्ञः कृतोपकारानभिज्ञः पुरुषः अप्रतिकृतः प्रत्युपकारमकुर्वन् सत्त्ववतां महात्मनां मनो हन्ति क्षोभयति । वीरः प्रत्युपकारसमर्थः उपकारेण हेतुना प्रतिकारेण प्रत्युपकारेण युज्यते हि युज्यत एव । सुग्रीवोऽप्येवंविधत्वात् प्रत्युपकारं करिष्यतीति भावः । अनेन प्रत्युपकारं कारयित्वा लोके प्रत्युपकारधर्मं प्रवर्तयिष्यामि इत्याशयः ॥ ६४ ॥

गो० टी०–अस्य रामवचनस्य पूर्वसर्गान्तोक्तरमाह–तमिति । तं राममित्यन्वयः । दर्शनं मतम् ॥ ६५ ॥

गो० टी०–यथोक्तमिति । कर्ता करिष्यति लुट् ॥ ६६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टाविंशः सर्गः ॥ २८ ॥

१ ] ति० टी०–ईदृशं व्योम समीक्ष्य हरीश्वरमुपागम्य हनुमानब्रवीदित्युत्तरेण नवमश्लोकस्थेनान्वयः ॥ १ ॥

२ ] ति० टी०–मन्दो धर्मार्थयोः संग्रहो यस्य तम् । असतां मार्गं कामप्रवृत्तिलक्षणम् अत्यर्थमाश्रयन्तमिति शेषः । एकान्तगतमानसं कामभोगार्थैकान्तदेशगतचित्तम् ॥ २ ॥

३ ] ति० टी०–निवृत्तकार्यं निष्पन्नवालिवधरूपस्वकार्यम् । सिद्धार्थं प्राप्तराज्यम् । अभिप्रेतानीप्सितानर्थान्प्राप्तवन्तम् ॥ ३ ॥

४–५ ] ति० टी०–स्वां पत्नीं रुमाम् ॥ ४ ॥ ५ ॥

---

१ अनुपाल्यान्निति गो. पाठः । २ प्रतिकारेणेति गो. पाठः । ३ तमेवमिति गो. पाठः । ४ यथोक्तमिति गो. पाठः । ५ इममिति गो. रा. पाठः । ६ रवेति गो. पाठः । ७ अत्यर्थमसतामिति गो. पाठः । ८ नन्दन इति गो. पाठः ।

उ[1]च्छिन्नराज्यसंदे[2]हं कामवृत्तमि[3]व स्थितम् । निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६ ॥
प्रसाद्य [4]वाक्यैर्विविधैर्हेतुमद्भिर्मनोरमैः । वाक्यविद्वाक्यतत्त्व[5]ज्ञं हरीशं मारुतात्मजः ॥ ७ ॥
हितं तथ्यं च पथ्यं च सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ॥ ८ ॥
हरीश्वरमुपागम्य [6]हनूमान्वाक्यमब्रवीत् । राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ॥ ९ ॥
मित्राणां संग्रहः शेषस्तद्भवान्कर्तुमर्हति । यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ॥ १० ॥

६ ] ति० टी०—उच्छिन्नराज्यसंदेहं मन्त्रिसौष्ठवेन नष्टराज्यपालनसंदेहम् । निश्चितार्थो निश्चितसर्वशास्त्रार्थः, अत एवार्थतत्त्वज्ञः कर्तव्याकर्तव्यसकलार्थतत्त्वज्ञः । कालेति कालोचितं धर्मविशेषमनुष्ठेयं वेत्ति तादृशः ॥ ६ ॥

७ ] ति० टी०—वाक्यैः प्रसादप्रयोजनैः ॥ ७ ॥

८ ] ति० टी०—हितं तत्कालहितम् । पथ्यं कालान्तरहितम् । तथ्यं सत्यम् । सामादिचतुष्कवदेतच्चतुष्टयं वाक्यविशेषणम् । प्रणयत्वं प्राप्तया प्रीत्या संयुक्तम् । विश्वासे स्ववचनप्रामाण्ये कृतनिश्चयमीदृशं हरीश्वरमित्यन्वयः ॥ ८ ॥

रा० टी०—सुग्रीवं प्रति हनुमदुक्तिमाह—समीक्ष्येत्यादिभिः । गतविद्युद्बलाहकं गता निवृत्ता विद्युतो बलाहकाश्च यस्मात् तत् अत एव विमलं सारसैराकुलं व्याप्तम् अत एव संघुष्टं तदेव तदिति कर्मधारयः रम्यज्योत्स्नाया अनुलेपनं व्याप्तिर्यस्मिन् तत् व्योम समीक्ष्य समृद्धः संपन्नः अर्थो यस्य तमत्यर्थमत्यन्तमसतां मार्गं कामित्वं प्राप्तमिति शेषः, अत एव एकान्ते स्त्रीमात्रसेवितस्थले गतं संलग्नं मानसं यस्य तम् अत एव निवृत्तं कार्यं कृत्यान्तरं यस्य अत एव सदा प्रमदाभिरभिरतम् अत एव मन्दः शिथिलीभूतः धर्मार्थयोः संग्रहो यस्य तम् अभिप्रेतान् इच्छाविषयीभूतान् सर्वान् मनोरथान् उत्तमपदार्थान् अभिप्रेतां स्वां पत्नीं रुमां च समीप्सितां तारां च प्राप्तवन्तम् अत एव गन्धर्वाप्सरसां गणैः क्रीडन्तं कृतार्थं विगतज्वरं देवेशमिव अहोरात्रं विहरन्तम् अत एव सिद्धार्थं मन्त्रिषु न्यस्तानि अधीनीकृतानि कार्याणि येन तं मन्त्रिणामनवेक्षकम् उच्छिन्नः राज्यसंदेहो यस्य तं कामैः कामिभिः वृत्तं वर्तनं यस्य तं वाक्यतत्त्वज्ञम् अवस्थितं हरीशं हरयः ईशाः समर्थाः यस्य तं हरीश्वरं सुग्रीवमुपागम्य प्राप्य अर्थतत्त्वज्ञः अर्थयाथार्थ्यज्ञाता अत एव निश्चितः अर्थः कर्तव्यं वस्तु येन कालधर्मविशेषवित् वाक्यवित् मारुतात्मजो हनुमान् हेतुमद्भिः सयुक्तिकैः वाक्यैः हितं तत्कालोचितं पथ्यमुपकारकं तथ्यं सत्यं सामधर्मार्थनीतिमत् सामादियुक्तं प्रणयप्रीतिभ्यां संयुक्तं प्रणयो नम्रता विश्वासकृतानां आप्तोक्तौ विश्वासयुक्तानां निश्चयो यस्मिन् तत् वाक्यमब्रवीत् । सार्धश्लोकाष्टकमेकान्वयि ॥ १–८ ॥

गो० टी०—अथ हनुमान् रामभक्तोऽपि स्वस्वाम्यनुज्ञाभावेन तं ध्यायन् सुग्रीवसमीप एव स्थितः स्वस्वामिना सर्वस्वामिहितानुगुणं कार्यमारब्धवानित्याहैकोनत्रिंशे—समीक्ष्येत्यादि । हनुमान्वाक्यमब्रवीदित्यन्तमेकं वाक्यम् । हनुमान् उक्तगुणविशिष्टं व्योम उक्तगुणविशिष्टं सुग्रीवं च समीक्ष्य हरीशं प्रसाद्य हरीश्वरमुपागम्य प्रणयाद्वाक्यमब्रवीदिति संबन्धः । विमलमित्यादिना सेनासंनाहस्य प्राप्तकालत्वमुक्तं समृद्धार्थमित्यादिना समयातिक्रमहेतवः प्रदर्श्यन्ते । समृद्धार्थं संपूर्णरत्नवस्त्राभरणादिकं मन्दः अल्पः धर्मार्थयोः संग्रहः संपादनं यस्य तम् एकान्तगतमानसम् एकस्मिन् कामपुरुषार्थे अन्तं निश्चयं गतं मानसं यस्य तथोक्तम् । यद्वा असतां कामुकानां मार्गम् एकान्तगतम् अत्यन्तगतम् मानसं यस्य स तथा 'तीव्रैकान्तनितान्तानि' इत्यमरः । निवृत्तकार्यं निष्पन्नवालिवधरूपकार्यं सिद्धार्थं प्राप्तराज्यम् अभिप्रेतानीप्सितान् मनोरथान् राज्यप्राप्त्यनन्तरमेवं करिष्यामीति संकल्पविषयीभूतानर्थान् तारां च प्राप्तवन्तमिति संबन्धः । कृतार्थं निष्पन्नधनम् । मन्त्रिणामनवेक्षकं मन्त्रिकृतकार्यापरामर्शकम् उत्सन्नराज्यसंदेशं नष्टराज्यनियमनं कामवृत्तं कामव्यापारम् अवस्थितं कामव्यापारपरतन्त्रतयाऽवस्थितमित्यर्थः । निश्चितार्थः निश्चितकर्तव्यः । अत्र हेतुः—अर्थतत्त्वज्ञ इति । कालोचितो धर्मः कालधर्मः तद्विशेषवित् वाक्यवित् तदुचितव्यवहारवित् हितम् उदर्कसुखकरं तथ्यं यथार्थं पथ्यं नीतिमार्गादनपेतं सामधर्मार्थनीतिमत् साम च धर्मश्च अर्थश्च नीतिश्च सामधर्मार्थनीति तदस्यास्तीति सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तं प्रणयः समानविषयस्नेहः, प्रीतिः न्यूनविषयः, विश्वासकृतनिश्चयम् आप्तवाक्यत्वविश्वासे विषये कृतनिश्चयम् ॥ १–८ ॥

९ ] ति० टी०—तत्र प्रसादप्रयोजनवाक्यान्याह—राज्यं प्राप्तमित्यादि । कौली कुलक्रमागता ॥ ९ ॥

रा० टी०—तद्वाक्याकारमाह—राज्यमिति । राज्यं यशश्च प्राप्तं त्वयेति शेषः, अत एव कौली स्वकुलसंबन्धिनी श्रीः अभिवर्धिता वृद्धिं प्रापिता । मित्राणां संग्रहः तत्कार्यसाधनं तु शेषः अवशिष्टः तत्साधनं कर्तुमर्हति ॥ ९ ॥

गो० टी०—राज्यमिति । कौली कुलक्रमागता श्रीः संपत् अभिवर्धिता अप्रतिद्वन्द्वत्वादिति भावः । मित्राणां संग्रहः तत्कार्यकरणं शेषः अवशिष्टो भवति । इदमेव वचनं प्रसाद्य वाक्यैरित्यादिना पूर्वं प्रशंसितम् ॥ ९ ॥

१० ] ति० टी०—शेषः कर्तव्यशेषः । कालज्ञः प्रत्युपकारकालज्ञः साधु वर्तते साध्वनुष्ठानवान्वर्तते ॥ १० ॥

---

१ उत्सन्नेति गो. पाठः । २ संदेशमिति गो. पाठः । ३ भवेति गो. रा. पाठः । ४ वाक्यैर्मधुरैरिति गो. पाठः । ५ तत्त्वामिति गो. पाठः । ६ हनुमानिति गो. पाठः ।

तस्य राज्यं च कीर्तिश्च प्रतापश्चापि वर्धते । यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ॥
समान्येतानि सर्वाणि स राज्यं महदश्नुते ॥ ११ ॥
तद्भवान्वृत्तसंपन्नः स्थितः पथि निरत्यये । मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥ १२ ॥
संत्यज्य सर्वकर्माणि मित्रार्थे यो न वर्तते । संभ्रमाद्धि कृतोत्साहः सोऽनर्थेनावरुध्यते ॥ १३ ॥
यो हि कालव्यतीतेषु मित्रकार्येषु वर्तते । स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते ॥ १४ ॥
तदिदं मित्रकार्यं नः कालातीतमरिन्दम । क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम् ॥ १५ ॥
[ तदिदं वीर कार्यं ते कालातीतमरिन्दम ]
न च कालमतीतं ते निवेदयति कालवित् । त्वरमाणोऽपि स प्राज्ञस्तव राजन्वशानुगः ॥ १६ ॥

रा० टी०–तत्र हेतुमाह–य इति । यो जनः मित्रेषु साधु वर्तते तस्य राज्यादि वर्धते ॥ १० ॥

गो० टी०–मित्रकार्यस्यावश्यकर्तव्यत्वमाह–यो हीति । कालज्ञः मित्रसंग्रहकालज्ञः तत्कालातिक्रमे विपरीतं भवतीत्यर्थः । मित्रेषु वर्तते मित्राधीनो भवतीत्यर्थः ॥ १० ॥

११ ] ति० टी०–दण्ड्यतेऽनेन दण्डः सैन्यम् । आत्मा सकरणग्रामः समानि स्ववशत्वेन समत्वम् । 'समवेतानि' इति पाठे मिलितानीत्यर्थः । न त्वेकमपि पृथग्भूतमिति भावः ॥ ११ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–यस्येति । कोशः धनागारं दण्डयते अनेन दण्डः सेना मित्राणि च आत्मा स्वदेहश्च एतानि सर्वाणि यस्य समानि स्वदेहवत् कोशादयोऽपि परिपाल्यन्ते इत्यर्थः, स पुरुषः महत् राज्यमश्नुते प्राप्नोति ॥ ११ ॥

गो० टी०–यस्येति । दण्डयतेऽनेनेति दण्डः सेनाविशेषः आत्मा प्रभुरित्यर्थः । समवेतानि समुदितानि एकन्यूनत्वे महाराज्यहानिरिति भावः ॥ ११ ॥

१२ ] ति० टी०–निरत्यये निरपाये । अभिनीतार्थं प्रतिज्ञातार्थम् ॥ १२ ॥

रा० टी०–तदिति । निरत्यये ध्वंसरहिते पथि रामाश्रयणरूपमार्गे स्थितः अत एव वृत्तं प्राप्तं संपन्नं संपत्तिर्यस्य सः भवान् अभिनीतार्थं प्रतिज्ञाविषयीभूतवस्तुसिद्ध्यर्थं मित्रार्थं यथावत्कर्तुमर्हति ॥ १२ ॥

गो० टी०–तदिति । निरत्यये अविनाशिनि पथि सन्मार्गे इत्यर्थः । मित्रार्थं मित्रकार्यम् अभिनीतार्थं प्रापितप्रयोजनं यथा भवति तथा । यथावत् यथाप्रतिज्ञमिति यावत् ॥ १२ ॥

१३ ] ति० टी०–संभ्रमात्त्वरया । विशेषेण कृतोत्साहः अन्यत्र कर्मणीति शेषः ॥ १३ ॥

रा० टी०–विपक्षे दोषमाह–सामिति । यो जनः सर्वकर्माणि संत्यज्य मित्रार्थे मित्रप्रयोजनसिद्धये संभ्रमात् उद्वेगात् न वर्तते स जनः कृतः छिन्नः उत्साहो यस्य स सन् अनर्थेन अवरुध्यते प्राप्यत इत्यर्थः । कृतोत्साहः जातोत्साहविशिष्टः सन् न वर्तते इति वा योजना ॥ १३ ॥

गो० टी०–संत्यज्येति । सर्वकर्माणि स्वभोगसाधनानि संत्यज्य कृतोत्साहः सन् संभ्रमात् आदरात् मित्रार्थे विषये य अनुवर्तते अनुस्यूततया तिष्ठति सोऽनर्थेनावरुध्यते न संबध्यते ॥ १३ ॥

१४ ] ति० टी०–कालव्यतीतेषु करणोचितकालमतिक्रान्तेषु पश्चात्तेषु वर्तते तत्सिद्ध्यर्थं यतते स मित्रस्य महतोऽर्थान्कृत्वाऽपि मित्रार्थेन मित्रत्वप्रयोजनकार्येन न युज्यते । उचितकालेऽकृतम् । कृतमप्यकृतप्रायमिति भावः ॥ १४ ॥

रा० टी०–कालात्यये दोषमाह–य इति । कालः कर्तव्यसमयो व्यतीतो येषां तेषु मित्रकार्येषु यो वर्तते सः महतोऽर्थान् कृत्वाऽपि मित्रार्थे न युज्यते मित्रार्थकारी न भवतीत्यर्थः ॥ १४ ॥

गो० टी०–एवं कर्तव्यं मित्रकार्यमुचितकाले कर्तव्यमित्याह–यस्त्विति । कालव्यतीतेषु अतिक्रान्तकालेषु ॥ १४ ॥

१५ ] ति० टी०–तत्कालातीतम् । भविष्यतीति शेषः । तस्मात्क्रियतामित्यादि ॥ १५ ॥

रा० टी०–यदिति । एतत्प्राप्तकालं राघवस्य वैदेह्याः परिमार्गणं यत् यतः कालातीतं नो भवेदिति शेषः, तस्मात् इदं मित्रकार्यं मित्रीभूतवानरनियोगो वैदेह्याः परिमार्गणं वा क्रियताम् ॥ १५ ॥

गो० टी०–यदिदमिति । हे वीर ! नः अस्माभिः यदिदं मित्रकार्यं कर्तव्यम् एतत् वैदेह्याः परिमार्गणं क्रियतामिति संबन्धः ॥ १६ ॥

गो० टी०–तदिदमिति । ते कार्यं त्वया कर्तव्यम् इदं मित्रकार्यम् ॥ १६ ॥

१६ ] ति० टी०–ननु तत्कार्यकालात्ययश्चेत्स तं ज्ञापयिष्यत्येवेत्याह–न चेति । कालवित्कालज्ञोऽपि स प्राज्ञस्त्वात्वदभिप्रायमेव केवलमनुगच्छेत् । तूष्णीं तिष्ठतीति भावः॥१६॥

---

१ ऽमीति गो. पाठः । २ समवेतानीति गो. पाठः । ३ स्थितमिति गो. पाठः । ४ हि कृतेति गो. रा. पाठः । ५ ऽनर्थैर्नेति गो. पाठः । ६ त्विति गो. पाठः । ७ हीति रा. पाठः । ८ यदिदं वीरेति गो. यदिदमिति रा. पाठः । ९ नो इति रा. पाठः । १० मित्रकार्यमिति गो. पाठः । ११ अर्धमेतत् गो. अधिकम् । १२ सन्निति गो. पाठः ।

कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः । अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ॥ १७ ॥
तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव । हरीश्वर कपिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १८ ॥
नहि तावद्भवेत्कालो व्यतीतश्चोदनादृते । चोदितस्य हि कार्यस्य भवेत्कालव्यतिक्रमः ॥ १९ ॥
अकर्तुरपि कार्यस्य भवान्कर्ता हरीश्वर । किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ॥ २० ॥
शक्तिमानतिविक्रान्तो वानरर्क्षगणेश्वर । कर्तुं दाशरथेः प्रीतिमाज्ञायां किं नु सज्जसे ॥ २१ ॥
कामं खलु शरैः शक्तः सुरासुरमहोरगान् । वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञामवेक्षते ॥ २२ ॥
प्राणत्यागाविशङ्केन कृतं तेन महत्प्रियम् । तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २३ ॥

रा० टी०—ननु अन्वेषणसमये राम एव आज्ञापयितेत्यत आह—नेति । कालवित् तव वशानुगः त्वद्वशं प्राप्तः प्राज्ञः स रामः त्वरमाणोऽपि अतीतं कालं न निवेदयति स्वयं न निवेदयिष्यति । एतेन रामस्य सौशील्यगुणो व्यञ्जितः ॥ १६ ॥

गो० टी०—न चेति । कालवित् राम इति शेषः । त्वरमाण इत्यर्धं पूर्वेणान्वेति । कालवित् प्राज्ञो रामः त्वरमाणोऽपि सन् वैदेहीसमानयनाय त्वरमाणोऽपि सन् न निवेदयतीति संबन्धः ॥ १७ ॥

१७ ] ति० टी०—त्वदीयस्य स्फीतस्य महतः कुलस्य हेतुर्वृद्धिहेतुः । दीर्घबन्धुरिदानीं कालान्तरे च बन्धुः । स्वयं च चाप्रलक्ष्मणः ॥ १७ ॥

रा० टी०—कुलस्येति । कुलस्य वंशस्य स्फीतस्य प्रशस्तत्वस्य हेतुः यस्मिन्कुले तस्य प्रसादो भवति तदेव प्रशस्तं भवतीत्यर्थः, दीर्घबन्धुः गुणैः अप्रतिमः अत एव अप्रमेयप्रभावः यस्त्वयं राघवः तस्य कार्यं त्वं कुरु । तत्र हेतुः—तेन रामेण तव कार्यं कृतम् अतः कपिश्रेष्ठान् आज्ञापयितुमर्हसि । अर्धचतुष्टयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—कुलस्येति । स्वयं चेति त्वमपि गुणैरप्रतिम इत्यर्थः ॥ १८ ॥

१८ ] ति० टी०—कृतम् तव कार्यमिति शेषः । आज्ञापयितुमर्हसि । रामनियोगात्पूर्वमिति शेषः ॥ १८ ॥

गो० टी०—तस्येति । आज्ञापयितुं वानरसेनामानेतुमिति शेषः ॥ १९ ॥

१९ ] ति० टी०—नन्वेवमपि कालव्यतिक्रमस्तुल्योऽत आह—नहीति । चोदनादृते रामप्रेरणां विना जातोऽपि कालातिक्रमो न दोषायेति भावः । तत्प्रेरणया यदि कार्यकरणं तदा कालव्यतिक्रमो भवेदेवेत्यर्थः ॥ १९ ॥

रा० टी०—ननु कालोऽतीतो जात एवेत्यत आह—नहीति । चोदनात् रामप्रेरणायाः ऋते विना व्यतीतोऽपि कालः व्यतीतो नैव भवेत् हि यतः चोदितस्य प्रेरितस्य कार्यस्य व्यतीतः कालः कालव्यतिक्रमो भवेत् । कालो व्यतीत इति व्यन्वयि ॥ १९ ॥

गो० टी०—इदानीं वानरानयनेऽपि कालव्यतिक्रमस्तुल्य इत्याशङ्क्याह—न हीति । चोदनादृते रामप्रेषणं विना कालो न व्यतीतो भवेत् रामचोदनानन्तरं कार्यं क्रियते चेत्तदा कालातिक्रमः तच्चोदनात्पूर्वमस्माभिः कार्यप्रवर्तने न कालातिक्रमदोष इति भावः ॥ २० ॥

२० ] ति० टी०—अकर्तुरप्यनुपकर्तुरपि कार्यस्य कर्ता अर्हे तृच् । प्रतिकर्तुरुपकर्तुः ॥ २० ॥

रा० टी०—अकर्तुरिति । हे हरीश्वर ! अकर्तुः अकृतोपकारस्यापि जनस्य कार्यस्य भवान् राज्येन धनेन च कर्ता करणशीलः ते प्रतिकर्तुः कार्यस्य कर्ता भवान् चेत्किं पुनर्वक्तव्यम् ॥ २० ॥

गो० टी०—अकर्तुरपीति । अकर्तुः अनुपकर्तुः ॥ २१ ॥

२१ ] ति० टी०—आज्ञायां किं नु सज्जसे किमर्थं तदाज्ञाप्रतीक्षया विलम्बसे ॥ २१ ॥

रा० टी०—शक्तिमानिति । शक्तिमानतिसामर्थ्यविशिष्टः अतिविक्रान्तः महाबलस्त्वं दाशरथेः प्रीतिं कर्तुम् आज्ञायां वानराज्ञापने किंतु किमर्थं सजसे विलम्बसे ॥ २१ ॥

गो० टी०—शक्तिमानपीति । प्रीतिं कर्तुम् आज्ञायाम् आज्ञापने न सजसे नोद्योगं करोषि ॥ २२ ॥ २३ ॥

२२ ] ति० टी०—यद्यपि रामस्य न सहायापेक्षा, तथापि सपरिवारोऽहं सीतामन्वेषयिष्यामीति त्वत्प्रतिज्ञामवेक्षते, सत्याऽसत्या वेति परीक्षत इत्यर्थः ॥ २२ ॥

रा० टी०—काममिति । सुरासुरमहोरगान् शरैर्वशे कर्तुं यो दाशरथिः शक्तः समर्थः स त्वत्प्रतिज्ञामवेक्षते । एतेन त्वदनुग्रहार्थमेव रामस्त्वामाश्रित इति सूचितम् ॥ २२ ॥

२३ ] ति० टी०—प्राणत्यागाविशङ्केनानपकारिवालिप्राणत्याजने तदनौचित्यशङ्काराहित्येन मित्रकृत्यं स्वकृत्यमेवेति बुद्ध्या तव प्रियं कृतम् । मार्गामान्वेषयाम ॥ २३ ॥

रा० टी०—प्राणेति । प्राणत्यागाविशङ्केन साक्षात्स्वानपराधित्वालिप्राणत्याजनानौचित्यशङ्कारहितेन तेन रामेण महत् प्रियं ते महाप्रमोदः कृतम् अतस्तस्य रामस्य वैदेहीं पृथिव्यामम्बरे च मार्गाम अन्वेषयाम ॥ २३ ॥

गो० टी०—प्राणत्यागेति । प्राणत्यागाविशङ्केनेत्यनेन उपकारमहत्त्वं द्योतितम् ॥ २४–२६ ॥

१ हरीति गो. पाठः । २ धनेनेति गो. रा. पाठः । ३ ऽपीनि गो. पाठः । ४ नेति गो. पाठः । ५ नु काङ्क्षन इति गो. पाठः । ६ नवेति गो. पाठः ।

देवैर्दानवगन्धर्वा असुराः समरुद्गणाः । न च यक्षा भयं तस्य कुर्युः किमिवै राक्षसाः ॥ २४ ॥
तदेवं शक्तियुक्तस्य पूर्वं प्रैतिकृतस्तैथा । रामस्यार्हसि पिङ्गेश कर्तुं सर्वात्मना प्रियम् ॥ २५ ॥
नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे । कस्यचित्सज्जतेऽस्माकं कपीश्वर तवाज्ञया ॥ २६ ॥
तदाज्ञापय कः किं ते कुतो वाऽपि व्यवस्यतु । हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रतोऽनघ ॥ २७ ॥
तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् । सुग्रीवः सत्त्वसंपन्नश्चकार मतिमुत्तमाम् ॥ २८ ॥
संदिदेशातिमतिमान्नीलं नित्यकृतोद्यमम् । दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ २९
यथा सेना समग्रा मे यूथपालाश्च सर्वशः । समागच्छन्त्यसङ्गेन सेनाग्र्येण तथा कुरु ॥ ३० ॥
ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः । समानयन्तु ते शीघ्रं त्वरिताः शासनान्मम ॥
स्वयं चानन्तरं कार्यं भवानेवानुपश्यतु ॥ ३१ ॥

२४ ] ति० टी०-भयमिति रणे इति शेषः ॥ २४ ॥

रा० टी०-देवैरिति । तस्य रामस्य भयं देवादयो नैव कुर्युः राक्षसाः किं कथं कुर्युः । एतेन राक्षसा अतिप्रबला इति कथं जेतव्या इति संशयो न कार्य इति ध्वनितम् ॥ २४ ॥

२५ ] ति० टी०-प्रतिकृतः कृतोपकारस्य । पिङ्गेश ! कपिराज ॥ २५ ॥

रा० टी०-तदिति । पिङ्गेश हे वानरेश ! तत् उक्तहेतोः एवं शक्तियुक्तस्य पूर्वं तव प्रतिकृतः कृतोपकारस्य रामस्य सर्वात्मना निखिलयत्नेन प्रियं कर्तुमर्हसि ॥ २५ ॥

२६ ] ति० टी०-इदानीं सुग्रीवस्याज्ञावैभवं दर्शयति— नाधस्तादिति । तवाज्ञयाह्वाने सत्यस्माकं हरीणां मध्ये यः कश्चिदपि सज्जते विलम्बते तस्य कस्यचित्कस्यापि बलिनो दुर्बलस्य वाऽधस्तात्पातालेऽन्यत्र वा गतिर्जीवनं नास्ति ॥ २६ ॥

रा० टी०-नेति । हे कपीश्वर ! तवाज्ञया अस्मासु मध्ये कस्यचिद्वानरादेर्गतिर्गमनम् अधस्तादादौ न सज्जते शिथिलीभवति तत् उपरि अन्तरिक्षे अम्बरे ततोऽप्यूर्ध्वदेशे । एतेन दुर्गमदेशे स्थापिता चेत्सीता कथमन्वेषणीयेति संशयो न कार्य इति ध्वनितम् ॥ २६ ॥

गो० टी०-नाधस्तादिति । कस्यचिदिति अस्माकं मध्ये कस्यचिद्गतिर्न सज्जते न मन्दीभवति ॥ २७ ॥

२७ ] ति० टी०-यदेवं तदाज्ञापय । आज्ञाप्रकारं पृच्छति—कः कपिस्ते किं कं नियोगं कुतो वापि । सार्वविभक्तिकस्तसिः । कुत्रापि स्थितो व्यवस्यत्वनुतिष्ठतु । आज्ञापनीया सेना कियत्यस्ति तत्राह—हरय इति । कोट्यग्रतः कोटिघटितसंख्याया न्यर्बुदस्याग्र उपरि या संख्या समुद्राख्या तया संख्यायेत्यर्थः ॥ २७ ॥

रा० टी०-तदिति । अप्रधृष्याः धर्षयितुमशक्याः ये हरयो वानराः कोट्यग्रतः कोटितोऽप्यधिकास्ते सन्ति तेषां मध्ये कः वानरः कुतः कस्मिन्प्रदेशे किं त्वदाज्ञापनं व्यवस्यतु निश्चिनोतु तदाज्ञापय ॥ २७ ॥

गो० टी०-तदिति । अप्रधृष्याः कोट्यग्रतः कोट्यधिकाः हरयः ते सन्ति तेषां मध्ये कः ते कृते त्वदर्थं किं करोत्विति शेषः । कुत्र कुत्र कार्ये व्यवस्यतु व्यवसायं करोतु तदाज्ञापय ॥ २८-३० ॥

२८-२९] ति० टी०-मतिं तदनुष्ठानविषयाम् ॥२८॥२९॥

रा० टी०-तस्येति । तस्य हनुमतः काले यथोचितसमये साधुनिरूपितं वचनं श्रुत्वा सत्त्वसंपन्नः सुग्रीवः उत्तमां रामकार्यसाधनविषयिकात्वेनोत्कृष्टां मतिं निश्चयं चकार ॥२८॥

रा० टी०-समिति । अतिमतिमान् सुग्रीवः सर्वासु दिक्षु विद्यमानानां सर्वेषां सैन्यानामुपसंग्रहे स्वसमीपानयनार्थं नित्यकृतोद्यमं नीलं संदिदेश ॥ २९ ॥

३० ] ति० टी०-असङ्गेनाविलम्बेन । सेनाग्र्येण सेनानाथेन सहेति शेषः ॥ ३० ॥

रा०टी०-आज्ञाप्रकारमाह-यथेति। सेनाग्र्येण सेनाग्रेसरैः सह मे समग्राः सेनाः सर्वशो यूथपालाश्च असङ्गेन अविलम्बेन यथा समागच्छन्ति तथा कुरु ॥ ३० ॥

गो० टी०-यथेति । सेनाग्राणि सेनाग्रेसरान् सेनानेतृनित्यर्थः, तथा कुरु तथा आज्ञापय ॥ ३१ ॥

३१ ] ति० टी०-अन्तपाला दिगन्तवर्तिसेनापतयः समानयन्तु समागच्छन्तु । अनन्तरमानयनानन्तरम् । कार्यं सेनादर्शनगणनादि अनुपश्यतु संपादयत्विति यावत् ॥ ३१ ॥

रा० टी०-समागमनप्रकारमाह-ये इति । ये अन्तपालाः अतिदूरदेशवर्तिसेनाधीशाः शीघ्रगा व्यवसायिनः प्लवगास्तेऽपि त्वरिताः सन्तः समानयन्तु आगच्छन्तु ॥ ३१ ॥

रा० टी०-स्वयमिति । अनन्तरं सेनासमागमनोत्तरकाले कार्यं सेनागणनादि स्वयं भवानेव अनुपश्यतु विचारयतु करोत्वित्यर्थः । अर्धं पृथक् ॥ ३२ ॥

गो० टी०-ये त्विति । अन्तपालाः सेनापर्यन्तपालकाः ॥ ३२ ॥

१ न देवा न च गन्धर्वा नासुरा न मरुद्गणा इति गो.पाठः । २ उतेति गो. पाठः । ३ प्रियेति गो. पाठः । ४ तवेति गो. पाठः । ५ ऽस्मास्विति रा. पाठः । ६ कृते कुत्रेति गो. पाठः । ७ ऽनघा इति गो. पाठः । ८ निर्वेदितमिति गो. पाठः । ९ स संदिदेशाभिमतमिति गो. पाठः । १० अग्राणीति गो. पाठः । ११ सैन्यमिति गो. पाठः ।

त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयादिह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥ ३२ ॥
हरींश्च वृद्धानुपयातु साङ्गदो भवान्ममाज्ञामधिकृत्य [5]निश्चितम् ।
इति व्यवस्थां हरिपुङ्गवेश्वरो विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ।

कालप्राप्तशारदचन्द्रकुमुदादिविभावैरुद्दीपितानङ्गव्यथं रामं सीता संस्मृत्य बहुशः शोचन्तं लक्ष्मणो वीरवादपुरस्कारेणाश्वासयति । शरद्गुणसंपद्विभावैर्भावितहृदयो रामः शरत्संपदं स्तौति शरदागमेऽप्यप्राप्तसुग्रीवमुद्योगे प्रवर्तयितुं लक्ष्मणं च प्रेषयति ।

गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः । वर्षरात्रे स्थितो रामः कामशोकाभिपीडितः ॥ १ ॥
पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् । शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २ ॥
कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् । दृष्ट्वा कालमतीतं च मुमोह परमातुरः ॥ ३ ॥
स तु संज्ञामुपागम्य मुहूर्तान्मतिमान्नृपः । मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४ ॥

३२ ] ति० टी०—त्रिपञ्चरात्रात्पञ्चदशदिनादूर्ध्वं य आगच्छेत्तस्य दण्डस्तेन पक्षमध्ये सर्वैरागन्तव्यमिति भावः । कार्तिकशुक्लादावियमाज्ञेति बोध्यम् ॥ ३२ ॥

रा० टी०—त्रिपञ्चेति । सीतावृत्तान्तज्ञानार्थं गतो यो वानरः त्रिपञ्चरात्रात् त्रिगुणितपञ्चरात्रात् पञ्चदशाहादित्यर्थः, ऊर्ध्वमिह प्राप्नुयात् तस्य प्राणान्तिकः प्राणविघातको दण्डो भवेत् अत्र अस्मिन् विषये विचारणा न कार्या ॥ ३३ ॥

गो० टी०—त्रिपञ्चेति । त्रिपञ्चरात्रादूर्ध्वं पञ्चदशरात्रादनन्तरदिवसे ॥ ३३ ॥

३३ ] ति० टी०—वृद्धान्हरीन्साङ्गदो भवानुपयातु । संमाननार्थमिति शेषः ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—हरीनिति । साङ्गदो भवान् निश्चितां ममाज्ञामधिकृत्य वृद्धान् हरीन् वानरान् उपयातु तेषां सत्कृत्यर्थं तत्समीपं गच्छतु । हरिपुङ्गवेश्वरः सुग्रीवः इति व्यवस्थां नियोगं विधाय कृत्वा वेश्म स्वशिबिरं प्रविवेश ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—हरींश्चेति । वृद्धान् जाम्बवत्प्रभृतीन् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

१–२ ] ति० टी०—॥ १ ॥ २ ॥

रा० टी०—रामवृत्तान्तमाह—गृहमित्यादिभिः । सुग्रीवे गुहां प्रविष्टे सति वर्षरात्रस्थितो रामः घनैर्गगने विमुक्ते सति कामशोकाभिपीडितः कामेन जानकीप्राप्तिविषयकोत्कटेच्छया शोकेन तत्प्राप्त्यभावजनितचिन्तया अभिपीडितो व्याप्त आसीदिति शेषः ॥ १ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—पाण्डुरमिति । विमलं निर्मलं गगनं दृष्ट्वा विमलं घनच्छायारहितं पाण्डुरं चन्द्रमण्डलं च दृष्ट्वा ज्योत्स्नायाः चन्द्रिकायाः अनुलेपनं व्याप्तिर्यस्यां तां शारदीं रजनीं च दृष्ट्वा ॥ २ ॥

गो० टी०—अथ शरत्समागमेऽपि सुग्रीवस्यानुद्योगाद्रामकोपातिशयो—गुहामित्यादि । सुग्रीवे गुहां प्रविष्टे वर्षरात्रोषितो रामः कामशोकाभिपीडितः सन् क्रमेण गगने घनैर्विमुक्ते पाण्डुरं निर्मलं गगनं दृष्ट्वा परमातुरः वर्षाकालिकशोकादधिकं शोकं प्राप्तः सन् मुमोह । एतावत्पर्यन्तं कस्यचिदवधेर्विद्यमानतया कथंचिद्धृतवान् संप्राते तदभावान्मुमोहेत्यर्थः ॥ १–३ ॥

३ ] ति० टी०—कालं सेनोद्योगकालम् । मुमोह व्याकुलचित्तो बभूव ॥ ३ ॥

रा० टी०—अत एव कालं वृष्टिसमयमतीतं व्यतीतं दृष्ट्वा सुग्रीवं कामवृत्तं कामासक्तं दृष्ट्वा जनकात्मजां नष्टां दृष्ट्वा संस्मृत्य परमातुरो रामो मुमोह ॥ ३ ॥

४ ] ति० टी०—संज्ञां चित्तस्वास्थ्यम् । मनस्थां मनःसंनिहितामपि चिन्तयामास । जीवति न वा कथमेनां प्रत्यानेष्यामीति चिन्ता ॥ ४ ॥

रा० टी०—स इति । सः विह्वलचित्तो नृपो राघवः मुहूर्तात्संज्ञां चैतन्यमुपागम्य प्राप्य मनःस्थां वैदेहीं चिन्तयामास ॥ ४ ॥

गो० टी०—स त्विति । मनःस्थामपि वैदेहीं चिन्तयामास पुनः पुनर्विशेषतश्चिन्तितवानित्यर्थः ॥ ४ ॥

१ नेह वानरेति गो.पाठः। २ निश्चितामिति गो.रा.पाठः। ३ गुहामिति गो.रा.पाठः। ४ रात्रोषित इति गो. रात्रस्थित इति रा.पाठः। ५ वृद्धेति गो.पाठः।

दृष्ट्वा च विमलं व्योम गतविद्युद्बलाहकम् । सारसारावसंघुष्टं विललापार्तया गिरा ॥ ५ ॥
आसीनः पर्वतस्याग्रे हेमधातुविभूषिते । शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ६ ॥
सारसारावसंनादैः सारसारावनादिनी । याऽऽश्रमे रमते बाला साऽद्य मे रमते कथम् ॥ ७ ॥
पुष्पितांश्चासनान्दृष्ट्वा काञ्चनानिव निर्मलान् । कथं सा रमते बाला पश्यन्ती मामपश्यती ॥ ८ ॥
या पुरा कलहंसानां कलेन कलभाषिणी । बुध्यते चारुसर्वाङ्गी साऽद्य मे रमते कथम् ॥ ९ ॥
निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् । पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥ १० ॥
सरांसि सरितो वापीः काननानि वनानि च । तां विना मृगशावाक्षीं चरन्नाद्य सुखं लभे ॥ ११ ॥
अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् । सुदूरं पीडयेत्कामः शरद्गुणनिरन्तरः ॥ १२ ॥
एवमादि नरश्रेष्ठो विललाप नृपात्मजः । विहङ्ग इव सारङ्गः सलिलं त्रिदशेश्वरात् ॥ १३ ॥

५ ] ति० टी०—सारसशब्दैः संघुष्टं शब्दवद्व्योम दृष्ट्वेति संबन्धः ॥ ५

रा० टी०—दृष्ट्वेति । गतविद्युद्बलाहकमत एव विमलं व्योम सारसारवसंघुष्टं दृष्ट्वा विज्ञाय आर्तया गिरा विललाप, राम इति शेषः ॥ ५ ॥

गो० टी०—दृष्ट्वा च विमलमिति । गिरा स्वरेण ॥ ६ ॥

६ ] ति० टी०—हेमवर्णा धातवो हेमधातवः ॥ ६ ॥

गो० टी०—आसीन इति । मनसा जगाम चिन्तयामासेति यावत् ॥ ५ ॥

७ ] ति० टी०—सारसनादसदृशनादवती या सा सारसानामारावाय परस्परसमाह्वानाय कृतैर्नादैर्या रमते आश्रमे ॥७॥

रा० टी०—विलापाकारमाह–सारसेति । सारसारवनादिनी सारसानां रववत् नदति तच्छीला या बाला सीता सारसारवसंनादैः सारसारवप्रतिध्वनिभिरुपलक्षिते आश्रमे मे मया सह रमते अरमत साऽद्य मद्वियोगसमये कथं रमते रमेत ॥६॥

गो० टी०—सारसेति । सारसारवसन्नादैः सारसारावोत्थितध्वनिभिः ॥ ७ ॥

८ ] ति० टी०—काञ्चनानिव काञ्चनपुष्पानिव निर्मलानासनवृक्षान्दृष्ट्वा सौन्दर्यातिशयात्पुनः पुनस्तान्पश्यन्ती तदा च मामपश्यन्ती कथं वर्तते ॥ ८ ॥

रा० टी०—पुष्पितानिति । या काञ्चनान् स्वर्णमयानिव निर्मलान् पुष्पितान् असनान् असनाभिधतरून् दृष्ट्वा मां पश्यन्ती आतिष्ठदिति शेषः, सा मामपश्यती अपश्यन्ती बाला सीता कथं रमते रमेत ॥ ७ ॥

गो० टी०—पुष्पितानिति । पश्यन्ती मदिदृक्षया इतस्ततो दृष्टिं निक्षिपन्ती ॥ ८ ॥ ९ ॥

९ ] ति० टी०—कलेन शब्देन बुध्यत इत्यन्वयः । कलभाषिणी कोमलशब्दवती ॥ ९ ॥

रा० टी०—येति । कलभाषिणी मधुरभाषणशीला या सीता पुरा पूर्वं कलहंसानां कलेन शब्देन बुध्यते तच्छब्दश्रवणमात्रेण सैवागतेऽतिप्रतीत्या द्रुतं गत्वा मयेतस्ततोऽवलोक्यते इत्यर्थः, सा अद्य कथं बुध्यते अवलोकयेत ॥ ८ ॥

१० ] ति० टी०—निशम्य श्रुत्वा ॥ १० ॥

रा० टी०—निःस्वनमिति । सहचारिणां स्त्रियां सहैव गमनशीलानां चक्रवाकानां निःस्वनं श्रुत्वा पुण्डरीकविशालाक्षी एषा सीता कथं भविष्यति स्थास्यति ॥ ९ ॥

गो० टी०—निःस्वनमिति । पुण्डरीकविशालाक्षी चक्रवाकनिनदश्रवणस्यासह्यतया नायकागमपथं सलीलमवलोकयन्तीत्यर्थः । कथं भविष्यति कथं सत्तां धारयिष्यतीत्यर्थः ॥ १० ॥

११ ] ति० टी०—काननवनयोः कान्तारोपवनात्मना भेदः ॥ ११ ॥

रा० टी०—सरांसीति । मृगशावाक्षीं मृगबालनयनां तां सीतां विना सर आदीनि चरन्नहं सुखं न लभे । काननवनयोः लघुत्वेन महत्वेन च भेदात् न पौनरुक्त्यम् ॥ १० ॥

गो० टी०—सरांसीति । वापीः कृत्रिमसरांसि । काननानि महावनानि ॥ ११ ॥

१२ ] ति० टी०—अपि तामित्यादि । शरद्गुणनिरन्तरः शरद्गुणैर्निरन्तरप्रवृत्तः कामः मद्वियोगसौकुमार्यातिशयाभ्यां हेतुभ्यां सुदूरमतिशयेन पीडयेदेव ॥ १२ ॥

रा०टी०—अपीति । मद्वियोगाद्धेतोः शरद्गुणनिरन्तरः शरद्गुणैः निरन्तरम् प्रवृत्तः कामः मद्विषयकोत्कटेच्छा भामिनीं नित्यप्रभां सीतां सौकुमार्यात् हेतोः सुदूरमत्यन्तं पीडयेत्॥११॥

गो० टी०—अपि तामिति । शरद्गुणनिरन्तरः शरद्गुणैः साधनैः निरन्तरः पूर्णः कामः सौकुमार्यात् मद्वियोगाच्च हेतोः तां भामिनीं दूरम् आमरणं न पीडयेत् । अपिः संभावनायां, पीडयेदेवेत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—सारङ्गाख्यचातकविहंगस्तृषितो यथा त्रिदशेश्वराज्जलं काङ्क्षमाणो विलपते स्म, एवं सीताप्राप्तिं काङ्क्षमाणो विललाप ॥ १३ ॥

रा० टी०—एवमिति । सारङ्गः चातको विहङ्गः पक्षी त्रिदशेश्वरात् इन्द्रात् सलिलं जलमिच्छन् यथा विलपति तथा

१ पञ्चमषष्ठश्लोकयोः गो. व्यत्यस्तः पाठः । २ आरवेति गो. रा.पाठः । ३ श्लोकोऽयं रा. नास्ति । ४ रवेति गो. रा.पाठः । ५ स्वरेणेति गो.पाठः ।

ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु । ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजम् ॥ १४ ॥
स चिन्तया दुःसहया परीतं विसंज्ञमेकं विजने मनस्वी ।
भ्रातुर्विषादात्त्वरितोऽतिदीनः समीक्ष्य सौमित्रिरुवाच [३]दीनम् ॥ १५ ॥
किमार्य कामस्य वशंगतेन किमात्मपौरुष्यपराभवेन ।
अयं [४]ह्रिया संह्रियते समाधिः किमत्र योगेन [५]निवर्तते न ॥ १६ ॥
क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् ।
सहायसामर्थ्यमदीनसत्त्वः स्वकर्म[६]हेतुं च कुरुष्व तात ॥ १७ ॥

एवमादि विललाप, सीताप्राप्तिमाचकाङ्क्षेत्यर्थः । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे' इति मेदिनी ॥ १२ ॥

गो० टी०–एवमादीति । त्रिदशेश्वरात् सलिलमुद्दिश्य सारङ्गश्चातक इव विललापेति संबन्धः ॥ १३ ॥

१४ ] ति० टी०–ततस्तत्र काले । रम्येषु गिरिसानुषु । चञ्चूर्य भ्रातृदुःखेन गर्हितं चरित्वा । यङ्लुगन्तादार्षोऽसमासे ल्यप् । पर्युपावृत्तो लक्ष्मणोऽग्रजं रामं ददर्श ॥ १४ ॥

रा० टी०–तत इति । ततः रामविलापकाले फलार्थी लक्ष्मणः रम्येषु गिरिसानुषु चञ्चूर्य बम्भ्रम्य पर्युपावृत्तः सन् अग्रजं ददर्श ॥ १३ ॥

गो० टी०–तत इति । चञ्चूर्य कुटिलं चरित्वा फलाभिलाषेण कुटिलमार्गेण चरित्वा "नित्यं कौटिल्ये गतौ" इति यङ् ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–विषादाद्विषाददर्शनात् ॥ १५ ॥

रा० टी०–स इति । एकं प्रियया विहीनमत एव दुस्सहया चिन्तया परीतं युक्तमत एव दीनं क्षीणत्वेन प्रतीयमानमत एव विसंज्ञं कर्तव्यविषयं विवेकरहितं रामं त्वरित वेगेन आगतः भ्रातुर्विषादात् अतिदीनः सौमित्रिः विजने वने समीक्ष्य उवाच ॥ १४ ॥

१६ ] ति० टी०–अथ लक्ष्मणः कर्मयोगज्ञानयोगावेव पौरुषवृद्धये दुःखशान्तये चानुतिष्ठेति स्मारयति—किमार्येत्यादि । हे आर्य ! कामस्य वशंगतेन त्वया किं कर्म कृतं स्यात्, अपि चैवं कामवशत्वेनात्मपौरुषस्य स्वपौरुषस्याभिभवेन किं प्रयोजनं साधितं स्यात्, तस्मात्कामवशत्वं त्यक्त्वा कर्मयोगं कुरु । किंच स्नानादिकर्मयोगोत्तरकालमवसरप्राप्तोऽयं समाधिर्ब्रह्मानुसंधानम् । ह्रिया हरतीति ह्रीः शोकस्तेन किमर्थं संह्रियते । अत्रास्यामवस्थायां योगेन समाधिना सर्वं दुःखमिति शेषः, किं न निवर्तते अपि तु निवर्तत एवेत्यर्थः । एवमेव पाङ्क्तः पाठ इति कतकहृत् । पाठान्तरं त्वस्य योजनाशक्त्या कल्पितमिति च सः ॥ १६ ॥

रा० टी०–तद्वचनाकारमाह—किमित्यादिभिः । कामस्य उत्कटेच्छायाः वशंगतेन अधीनभूतेन शोकेन किं न किंचित्साध्यमित्यर्थः । तत्र दोषमाह—आत्मपौरुष्यस्य पराभवस्तिरोधानं येन तेन ह्रिया आत्मनां लज्जाकारकेण शोकेन अयं महात्मभिः आहृतः समाधिः चित्तैकाग्र्यं संह्रियते निवर्त्यते अतः निवर्तितेन योगेन चित्तैकाग्र्येण किं चित्तैकाग्र्यविघातो न कार्य इत्यर्थः ॥ १५ ॥

गो० टी०–किमिति । वशंगतेन मनसेति शेषः । पौरुष्यं पौरुषं स्वार्थे ष्यञ् । अयं वर्तमानः समाधिः चित्तसमाधानं सदा तत्र तत्र काले संह्रियते संपाद्यते । अत्र अस्मिन् काले निवर्तितेन योगेन किम् । 'अयं यदा संह्रियते समाधिः' इति पाठान्तरम् । यदा यस्मिन् काले अयं समाधिः चित्तसमाधानं संह्रियते संपाद्यते अत्रास्मिन् काले निवर्तितेन योगेन सन्नहनेन उत्साहेन किमित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–उक्तमेव विवृणोति—क्रियाभियोगमिति । क्रियाणां शौचस्नानादीनामभितः कार्त्स्न्येन योगमनुष्ठानं मनसः प्रसादं चास्थाय, कालं सर्वकालं समाधियोगानुगतं तेन संबद्धमेव कुरुष्व । तथाऽदीनसत्त्वोऽक्षीणसत्त्वः सन्स्वकर्महेतुं पौरुषवृद्धेः कारणं सहायसामर्थ्यं तद्धटनरूपं स्वकर्म देवार्चनादिरूपकर्मयोगं च कुरुष्व । अनेन यावत्फलं निदिध्यासनजातकर्मसमुच्चय उक्तः ॥ १७ ॥

रा० टी०–क्रियेति । समाधियोगानुगतं चित्तैकाग्र्याधीनं मनसः प्रसादं कुरुष्व । तत्प्रयोजनमाह—स्वकर्महेतुं स्वकर्तव्यकारणं सहायानां सामर्थ्यं येन सहायसामर्थ्यसाधकमित्यर्थः, कालं समयमेव क्रियाभियोगं क्रियाणामन्वेषणादिकर्मणामभियोगः साधनमित्यर्थ, येन तत् कुरुष्व प्राप्तसमये एव यतितव्यमित्यर्थः ॥ १६ ॥

गो० टी०–क्रियेति । क्रियाभियोगं कार्योद्योगं मनसः प्रसादं समाधियोगानुगतं धैर्योपायाभ्यामनुबद्धं कालं च सहायसामर्थ्यं सुग्रीवादिसहायसामर्थ्यं स्वकर्म देवतोपासनात्मकं तदेव हेतुः तं च हेतुं कुरुष्व क्रियाभियोगादिकं सर्वं स्वकार्यसिद्धौ हेतुं कुरुष्वेत्यर्थः । अत्र प्रकरणे लक्ष्मणेन रामस्याश्रितरक्षणत्वरा संदीप्यत इति स्वोपदेशः सुलभः ॥ १७ ॥

१ तमिति गो. पाठः । २ परितापदीन इति गो. पाठः । ३ राममिति गो. पाठः । ४ सदेति गो. पाठः । ५ निवर्तितेनेति गो. पाठः । ६ हेतुमिति गो. पाठः ।

न जानकी मानववंशनाथ त्वया सनाथा सुलभा परेण ।
न चाग्निचूडां ज्वलितामुपेत्य न दह्यते वीर वरार्ह कश्चित् ॥ १८ ॥
सलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः ।
हितं च पथ्यं च नयप्रसक्तं ससामधर्मार्थसमाहितं च ॥ १९ ॥
निःसंशयं कार्यमवेक्षितव्यं क्रियाविशेषोऽप्यनुवर्तितव्यः ।
न[1] तु प्रवृद्धस्य दुरासदस्य कुमार वीर्यस्य[2] फलं च[3] चिन्त्यम् ॥ २० ॥
अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् । उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २१ ॥
तर्पयित्वा सहस्राक्षः सलिलेन वसुंधराम् । निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥ २२ ॥

१८ ] ति० टी०-त्वया सनाथा नाथवती जानकी परेण न सुलभा न सुग्रहा । ज्वलितामग्निचूडामग्निशिखामुपेत्य स्पृष्ट्वा कश्चिदपि न दह्यते इति न, अपि तु वह्निव्यतिरिक्तः सर्वोऽपि दह्यत एव । अतो या नीता सा तत्प्रतिकृतिरेव, सा तु त्वदुपासिताग्नाविति व्यङ्ग्यम् ॥ १८ ॥

रा० टी०-जानकीविषये कथंचित् शङ्का न कार्येति बोधयन्नाह-नेति । हे मानववंशनाथ ! त्वया सनाथा त्वदेकनाथेत्यर्थः, जानकी परेण त्वदन्येन न सुलभा । एतेन त्वदन्यस्तल्लाभकामो यदि भवेत्तर्हि नङ्क्ष्यत्येवेति सूचितम् । तत्र दृष्टान्तः-ज्वलितामग्निचूडां वह्निज्वालामुपेत्य प्राप्य कश्चित् वह्निभिन्नः न दह्यते इति न दह्यत एवेत्यर्थः ॥ १७ ॥

गो० टी०-न जानकीति । सुलभा लब्धुमर्हा । अग्निचूडाम् अग्निज्वालाम् ॥ १८ ॥

१९ ] ति० टी०-रामोऽप्रधृष्यं न्यायोपेतत्वादविचाल्यं स्वभावजं तत्त्वार्थकं वाक्यमुक्तवन्तं लक्षणसहितं लक्ष्मणमुवाच । किमुवाच—यत्त्वया प्रत्युक्तं वाक्यं तद्धितं तत्कालसुखम् पथ्यं कालान्तरेऽपि सुखम् नयप्रसक्तं राजनीत्युपेतम् । सामसहितधर्मार्थाभ्यां समाहितं संगतम् ॥ १९ ॥

रा०टी०-सेति । सलक्षणं राजवंशोचितचिह्नसहितमप्रधृष्यं परैः प्रधर्षयितुमशक्यं लक्ष्मणं हितं वर्धकम् अत एव पथ्यं नयप्रसक्तं नीतियुक्तमत एव ससामधर्मार्थसमाहितं सामसहितधर्मार्थाभ्यां सहितं स्वभावजं द्रुतस्खलितोच्चारणरहितमित्यर्थः, वाक्यं राम उवाच ॥ १८ ॥

गो० टी०-सलक्षणमिति । रामः अप्रधृष्यं युक्तिभिरविचाल्यं स्वभावजं स्वभावसिद्धं हितम् उदर्कसुखकरं पथ्यं तत्कालसुखकरं नयप्रसक्तं राजनीतियुक्तं ससाम सान्त्वयुक्तं धर्मार्थसमाहितं च वाक्यमुक्तवन्तं सलक्षणं लक्ष्मणमुवाचेति योजना । यद्वा अप्रधृष्यत्वादिविशेषणविशिष्टं वाक्यं राम उवाच । लक्ष्मणोक्तानुवादरूपत्वाद्रामवाक्यस्यापि तथात्वमिति बोध्यम् ॥ १९ ॥

२० ] ति० टी०-तस्मात्त्वदुक्तं निःसंशयं कार्यं त्वद्वाक्यार्थोऽनुष्ठेय एव । अनुष्ठेयमाह—अवेक्षितव्यं समाधियोगेन भगवत्तत्त्वं द्रष्टव्यम् । क्रियाविशेषः कर्मयोगः, सोऽप्यनुवर्तितव्योऽनुष्ठेयः । हे कुमार ! न तु कर्मज्ञानयोगौ हित्वा प्रकर्षेण वृद्धिं प्राप्तस्य, अत एव दुरासदस्य वीर्यस्य वीर्यवतः कर्मणः फलं च फलमेव चिन्त्यमपेक्षणीयम् । अनेन यावत्फलं निदिध्यासनकर्मसमुच्चय उक्तः ॥ २० ॥

रा० टी०-तद्वचनाकारमाह-निस्संशयमिति । हे कुमार ! कार्यं कर्तव्यं निस्संशयमवेक्षितव्यं विचारणीयमत एव क्रियाविशेषः कर्तव्यसाधकं कर्म अनुवर्तितव्यः संपादनीयः दुरासदस्य अन्यैरनिवर्तनीयस्य प्रवृद्धस्य अतिवृद्धिं प्राप्तस्य वीर्यस्य स्वपराक्रमस्य फलं चिन्त्यम् ॥ १९ ॥

गो० टी०-निःसंशयमिति । कार्यं सीतान्वेषणादिकं निःसंशयं यथा भवति तथा अवेक्षणीयं तदनुरूपं धैर्यं कर्तव्यमित्यर्थः । क्रियाविशेषः उत्साहादिः अनुवर्तितव्यः अनुवर्तितव्य एव । हे कुमार! प्रवृत्तस्य दुरासदस्य कार्यस्य फलं सीताप्राप्तिरूपम न चिन्त्यं ननु, चिन्त्यमेव ॥ २० ॥

२१ ] ति० टी०-लक्ष्मणवचसा तत्कालं स्वस्थस्यापि पुनर्मैथिलीं स्मृत्वा खिद्यमानस्य शरदनुभववर्णनम्—अथेत्यादि ॥ २१ ॥

रा० टी०-अथेति । अथ उक्तवचनानन्तरं मैथिलीमनुचिन्तयन् अत एव परिशुष्यता मुखेनोपलक्षितो रामः लक्ष्मणमुवाच ॥ २० ॥

गो० टी०-एवं लक्ष्मणसमाश्वासनेन प्रतिष्ठापितधैर्योऽपि सीताविषयकामातुरतया पुनः शरदं वर्णयति-अथेत्यादिना ॥ २१ ॥

२२] ति० टी०-निर्वर्तयित्वा संपाद्य । अहं त्वकृतकर्मेति व्यङ्ग्यम् ॥ २२ ॥

रा० टी०-तद्वचनाकारमाह-तर्पयित्वेति । सहस्राक्षः वसुन्धरां तर्पयित्वा अत एव सस्यानि निवर्तयित्वा कृतकर्मा साधितकृत्यः सन् व्यवस्थितः स्वस्थचित्तोऽभवदिति शेषः॥२१॥

गो० टी०-तर्पयित्वेति । निर्वर्तयित्वा परिपक्वानि कृत्वा कृतकर्मा कृतकृत्यः॥ २२ ॥

---

१ ननु प्रवृत्तस्येति गो. पाठः । २ कार्यस्येति गो. पाठः । ३ नेति गो. पाठः ।

[1]दीर्घगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः । विसृज्य सलिलं मेघाः परिशान्ता नृपात्मज ॥ २३ ॥
नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश । विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥ २४ ॥
जलगर्भा महामेघाः कुटजार्जुनगन्धिनः । चरित्वा विरताः सौम्य वृष्टिवाताः समुद्यताः ॥ २५ ॥
घनानां वारणानां च मयूराणां च लक्ष्मण । नादः प्रस्रवणानां च प्रशान्तः[2] सहसाऽनघ ॥ २६ ॥
अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः । अनुलिप्ता इवाभान्ति गिरयश्चन्द्ररश्मिभिः[3] ॥ २७ ॥

शाखासु सप्तच्छदपादपानां प्रभासु ताराकनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥ २८ ॥
संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मी शरत्कालगुणोपपन्ना[4] ।
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ २९ ॥
सप्तच्छदानां कुसुमोपगन्धी षट्पादवृन्दैरनुगीयमानः ।
मत्तद्विपानां पवनानुसारी दर्पं [5]विनेष्यन्नधिकं विभाति ॥ ३० ॥

२३ ] ति० टी०—गच्छन्तीति गमाः पचाद्यच् । शैलद्रुमपुर इति द्वितीयाबहुवचनान्तम् तान्गच्छन्ति तथा भूत्वा सलिलं विसृज्य परिशान्ताः ॥ २३ ॥

रा० टी०—दीर्घेति । दीर्घः गम्भीरः निर्घोषो येषां ते गमाः गगनमागताः मेघाः सलिलं शैलद्रुमपुरः विसृज्य प्राप्य परिशान्ताः अभवन्निति शेष. । शैलद्रुमपुरोगमा इत्येकं पदं वा, तदर्थस्तु शैलद्रुमाणां पुरोऽग्रभागे गच्छन्तीति ॥ २२ ॥

गो० टी०—स्निग्धेति । शैलद्रुमपुरोगमाः शैलद्रुमाणामग्रे गच्छन्तः अत्र प्रकरणे सर्वत्र त्रिषये प्रवृत्तिः रामावतारकृता सूच्यते ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—नीलोत्पलदलश्यामा इति पयोधरविशेषणम् । अहं स्वशान्तकामवेग इति व्यङ्ग्यम् । एवमग्रेऽप्यूह्यम् ॥ २४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—नीलेति । नीलोत्पलदलश्यामाः पयोधराः दशदिशः श्यामीकृत्वा विमदाः मातङ्गा इव शान्तवेगाः अभवन्निति शेषः ॥ २३ ॥

२५-२६ ] ति० टी०—वृष्टिसहितवाताः समुद्यता अपि विरताः ॥ २५ ॥ २६ ॥

रा० टी०—जलेति । जलगर्भाः जलरूपगर्भविशिष्टाः कुटजार्जुनगन्धिनः समुद्यताः प्रभूताः वृष्टिवाताः चरित्वा संव्याप्य विरताः निवृत्ताः अभवन्निति शेषः ॥ २४ ॥

गो० टी०—जलगर्भा इति । वृष्टिकरा वाता वृष्टिवाताः पुरोवाता इत्यर्थः ॥ २५ ॥ २६ ॥

२७] ति०टी०—महामेघैरभिवृष्टाः, अत एव निर्मलाः॥२७॥

रा० टी०—घनानामिति । घनादीनां नादः सहसा एककालावच्छेदेन प्रशान्तः प्रस्रवणाः निर्झराः ॥ २६ ॥

रा०टी०—अभीति। महामेघैः अभिवृष्टाः अत एव निर्मलाः चित्रसानवः चित्रशृङ्गविशिष्टाः गिरयः चन्द्ररश्मिभिः अनुलिप्ता इव आभान्ति ॥ २६ ॥

गो० टी०—अभिवृष्टा इति । चित्रदीप्तिभिः नानावर्णकान्तिभिः ॥ २७ ॥

गो० टी०—दर्शयन्तीति । अनेन चिरकालानुवर्तमेन गुरूणां शिष्येभ्यो रहस्यार्थप्रकाशनं सूच्यते ॥ २८ ॥

२८ ] ति० टी०—श्रियं विभज्येति शाखाप्रभालीलासु त्रिधा विभागं कृत्वेत्यर्थः ॥ २८ ॥

रा० टी०—शाखासु इति । सप्तच्छदपादपानां शरद्विकसनशीलसप्तच्छदाभिधतरूणां शाखासु ताराकनिशाकराणां प्रभासु च उत्तमवारणानां महागजानां लीलासु च श्रियं शोभां विभज्य त्रिविधविभागेन संस्थाप्य शरत्प्रवृत्ता ॥ २७ ॥

गो० टी०—शाखास्विति । सप्तच्छदा नाम शरत्पुष्पा वृक्षाः । शरत्कर्त्री श्रियं स्वसमृद्धिं विभज्य त्रेधा विभज्य सप्तच्छदशाखादिषु प्रवृत्ता सप्तच्छदेषु पुष्पविकासरूपा श्रीः तारादिप्रभासु निर्मलता रूपा गजलीलासु उन्मत्तकतारूपा ॥२९॥

२९ ] ति० टी०—अनेकपदार्थाश्रयाश्चित्राः शोभा यस्याः सा । अग्रहस्ताः प्रथमविसृतकिरणाः ॥ २९ ॥

रा० टी०—संप्रतीति । शरत्कालगुणोपपन्ना लक्ष्मीः अनेकाश्रयचित्रशोभा अनेकाश्रयाणां चित्रशोभा यया साऽपि संप्रति अस्मिन् काले सूर्याग्रहस्तप्रतिबोधितेषु सूर्यकिरणाग्रैः विकसितेषु पद्माकरेषु पद्मसमूहेषु अधिकं विभाति ॥ २८ ॥

गो० टी०—संप्रतीति । अनेकाश्रयचित्रशोभा सितरक्तनीलपङ्कजादिरूपानेकाश्रयतया चित्रशोभा नानावर्णकान्तिः शरत्कालगुणोपनीता शरत्कालोत्कर्षेण प्रापिता लक्ष्मीः समृद्धिः सूर्यस्याग्रहस्तैः प्राथमिककिरणैः । हस्तशब्देन करा लक्ष्यन्ते भगवत्कटाक्षबोधितेषु पुरुषेषु नानारूपसंविस्प्रकाश उच्यते॥३०॥

३० ] ति० टी०—पवनमनुसरति तच्छीलः विनेष्यन्नलं

१ स्निग्धेति गो. पाठः । २ श्रान्ता इति गो. पाठः । ३ चित्रदीप्तिभिरिति गो. पाठः । ४ उपनीतेति गो. पाठः । ५ वनेष्वभ्यधिकं करोतीति गो. पाठः ।

अभ्यागतैश्चारुविशालपक्षैः स्मरप्रियैः पद्मरजोवकीर्णैः ।
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥ ३१ ॥
मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३२ ॥
नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वरक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ३३ ॥
मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पातिभारावनताग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीव वनान्तराणि ॥ ३४ ॥
प्रियान्वितानां नलिनीप्रियाणां वनेप्रियाणां कुसुमोद्धतानाम् ।
मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३५ ॥

शोषयन् शरत्काल इति शेषः । मत्तद्विपानां दर्पमधिकं कुर्वन्विभाति ॥ ३० ॥

रा० टी०–सप्तेति । षट्पादवृन्दैः भ्रमरसमूहैः अनुगीयमानः पवनानुसारी पवनेन संचलनशीलः सप्तच्छदानां कुसुमोपगन्धः कुसुमोपगन्धत्वमस्मिन् सः तद्गन्ध एवेत्यर्थः, मत्तद्विपानां मदयुक्तगजानां दर्प गर्वं विनेष्यन् दूरीकुर्वन् सन् अधिकं विभाति । किंच मत्तद्विपानां पवनानुसारी पवन एवेत्यर्थः, अस्मिन्पक्षे कुसुमोपगन्धशब्देन भावप्रधानकल्पना ॥ २९ ॥

गो० टी०–सप्तेति । अनुसारी अनुसृत्य वर्तमानः अविच्छेदेनैव प्रवर्तमान इत्यर्थः । मत्तद्विपानां दर्पं करोति मदवृद्धिहेतुत्वादिति भावः ॥ ३१ ॥

३१ ] ति० टी०–मानससरस्तः स्वेन सहाभ्यागतैश्चक्रवाकैः सह क्रीडन्ति ॥ ३१ ॥

रा० टी०–अभ्यागतैरिति । चारुविशालपक्षैः अभ्यागतैः मानससरसः समागतैः स्मरप्रियैः कामप्रीतिविषयभूतैः पद्मरजोवकीर्णैः पद्मरजोभिर्व्याप्तैर्महानदीनां पुलिनेषु उपयातैः प्राप्तैः चक्रवाकैः सह हंसाः क्रीडन्ति ॥ ३० ॥

गो० टी०–अभ्यागतैरिति । मिथुनतया आभिमुख्येन संगतैः चारु यथा तथा विशालपक्षैः हर्षेण विस्तृतपक्षैरित्यर्थः । क्रीडन्ति हंसाः सह चक्रवाकैः । हंसाश्च क्रीडन्ति चक्रवाकाश्च क्रीडन्तीत्यर्थः ॥ ३२ ॥ ३३ ॥

३२ ] ति० टी०–विमुक्तं त्यक्तं बर्हरूपमाभरणं यैः । अरक्ता रागरहिताः ॥ ३२ ॥

रा० टी०–मदेति । मदप्रगल्भेषु वारणेषु गजेषु दर्पितेषु गवां समूहेषु च प्रसन्नतोयासु निम्नगासु नदीषु च बहुधा त्रिधा विभक्ता लक्ष्मीः शरत्संपत् विभाति ॥ ३१ ॥

३३ ] ति० टी०–प्रियकैरसनवृक्षैः ॥ ३३ ॥

रा० टी०–नभ इति । अम्बुधरैः मेघैः विमुक्तं संत्यक्तं नभो गगनं समीक्ष्य गतोत्सवाः भोगोत्साहरहिताः अत एव प्रियासु अरक्ताः अनुरागरहिताः अत एव विमुक्तं संत्यक्तं बर्हाभरणं बर्हरूपमाभरणं यैः अत एव निवृत्तशोभाः वनेषु विद्यमानाः मयूराः ध्यानपराः मेघचिन्तनरताः बभूवुरिति शेषः ॥ ३२ ॥

गो० टी०–नभ इति । गतोत्सवाः नष्टहर्षा इत्यर्थः, बभूवुरिति शेषः ॥ ३४ ॥

३४ ] ति० टी०–कुसुमोद्गतानां सप्तच्छदकुसुमाघ्राणप्रवृत्तानाम् । ‘ उद्गतानाम् ’ इत्येव प्राक्तः पाठः । ‘ उद्धतानाम् ’ इति कल्पित इति कतककृतः । मदोत्कटा अधिकमदाः, अत एव मदलालसाः मदशब्देन तज्जन्यः कामभोगस्तत्रेच्छावन्तः ॥ ३४ ॥

रा० टी०–मनोज्ञेति । पुष्पाग्रभारैः अवनताः अग्रशाखाः येषां तैः अत एव मनोज्ञगन्धैः सुवर्णगौरैः अत एव नयनाभिरामैः अनल्पैः बहुभिः प्रियकैः असनतरुभिः वनान्तराणि वनमध्यानि उद्योतितानि प्रकाशितान्येव । इव एवार्थे ॥ ३३ ॥

गो० टी०–मनोज्ञगन्धैरिति । प्रियकैः बन्धूकैः ‘सर्जकासनबन्धूकपुष्पप्रियकजीवकाः’ इत्यमरः ॥ ३५ ॥

३५ ] ति० टी०–शस्त्रवदुत्तेजितासिवद्विधौतो विमलो वर्णो नैल्यं यस्य तत् । कह्लारशीताः कह्लाराश्च शीताश्चेत्यर्थः ३५

रा० टी०–प्रियान्वितानामिति । प्रियैः पतिभिरन्वितानां नलिनी कमलिनी प्रिया येषां तेषां वनप्रियाणां कुसुमे सप्तच्छदकुसुमघ्राणे उद्गतानां प्रवृत्तानां मदेन उत्कटानां प्रवृद्धानाम् अत एव मदलालसानां मदजनितकामभोगविषयकोत्कटेच्छावतां गजोत्तमानां गतयोऽद्य शरदि मन्दाः कान्तिमत्यः शनैस्त्वविशिष्टा वा सन्तीति शेषः ॥ ३४ ॥

गो० टी०–प्रियान्वितानामिति । कुसुमोद्धतानां सप्तच्छदकुसुमाघ्राणेन मत्तानां मदोत्कटानां मदेन उद्भिन्नकटानाम् ॥ ३६ ॥

१ सर इति गो.पाठः । २ गर्भेष्विति गो.पाठः । ३ असक्ता इति गो.पाठः । ४असीनि गो.पाठः । ५ वने रतानामिति गो.पाठः । ६ उद्धतानामिति गो.पाठः ।

व्यक्तं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ।
कह्लारशीताः पवनाः प्रवान्ति तमो विमुक्ताश्च दिशः प्रकाशाः ॥ ३६ ॥
सूर्यातपक्रामणनष्टपङ्का भूमिश्चिरोद्घाटितसान्द्ररेणुः ।
अन्योन्यवैरेण समायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ ३७ ॥
शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुत्थिताङ्गाः ।
मदोत्कटाः संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ३८ ॥
समन्मथा तीव्रतरानुरागा कुलान्विता मन्दगतिः करेणुः ।
मदान्वितं संपरिवार्य यान्तं वनेषु भर्तारमनुप्रयाति ॥ ३९ ॥
त्यक्त्वा वराण्यात्मविभूषितानि बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमना मयूराः ॥ ४० ॥
वित्रास्य कारण्डवचक्रवाकान्महारवैर्भिन्नकटा गजेन्द्राः ।
सरःसु बुद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ ४१ ॥

रा० टी०—व्यक्तमिति । नभः शस्त्रविधौतवर्णं शाणसंस्कृतखड्गवर्णविशिष्टं व्यक्तं प्रादुर्भूतम्, नदीजलानि कृशप्रवाहानि जातानि, कह्लाराः तद्गन्धविशिष्टा एव शीताः पवनाः प्रवान्ति, दिशः तमोविमुक्ताः तमसा रहिताः अत एव प्रकाशाः॥ ३६ ॥

गो० टी०—व्यभ्रमिति । व्यभ्रं विगतमेघं शस्त्रविधौतवर्णं विधौतशस्त्रवर्णम् । कृशप्रवाहानि संकुचितप्रवाहानि ॥ ३७ ॥

३६–३७ ] ति० टी०—सूर्यातपस्य क्रामणं संबन्धः । चिरेणोद्घाटितः प्रकाशितः सान्द्रो रेणुर्यया अनेन शरदुत्तरार्धकालोऽयमिति ज्ञायते ॥ ३६ ॥ ३७ ॥

रा० टी०—सूर्येति । सूर्यातपक्रामणेन अस्यातपप्रवृत्त्या नष्टानि पङ्कानि यस्याः सा अत एव चिरोद्घाटिताः बहुकालादुत्थिताः सान्द्ररेणवो यस्यां सा भूमिरभवत् । अत एव अन्योन्यवैरेण समायुतानां नराधिपानामुद्योगकालोऽद्य प्रवृत्त इति शेषः ॥ ३६ ॥

गो० टी०—सूर्यातपेति । चिरोद्घाटितसान्द्ररेणुः चिरात् ईषत् उत्पादितनिबिडरेणुः स्थूलरेणुरित्यर्थः । अन्योन्यवैरामर्षायुतानामित्यत्र वृत्तभङ्ग आर्षः । वैरं विरोधः अमर्षः असहिष्णुता । ताभ्याम् आयुतानाम् आसमन्तायुतानां वैरामर्षपूर्णानामित्यर्थः ॥ ३८ ॥

३८ ] ति० टी०—आप्यायिते वर्धिते रूपशोभे येषाम् । पांसुसमुत्थिताङ्गाः पांसुयुक्ताङ्गाः ॥ ३८ ॥

रा० टी०—शरदिति । शरद्गुणैराप्यायिता प्रवृद्धा रूपशोभा येषाम् अत एव मदोत्कटाः प्रवृद्धमदाः अत एव प्रहर्षिताः अत एव युद्धलुब्धा युद्धविषयकलोभवन्तः अत एव गवां मध्यगताः युद्धार्थमिति शेषः अत एव पांसुभ्यः समुत्थितान्यङ्गानि येषां ते वृषा नदन्ति ॥ ३७ ॥

गो० टी०—शरद्गुणेति । रूपशोभाः शरीरशोभाः ॥३९॥

३९ ] ति० टी०—समन्मथत्वादिविशेषणचतुष्टयं करेण्वाः । करेणुरिति दीर्घत्वमार्षम् ॥ ३९ ॥

रा० टी०—सेति । समन्मथा मन्मथसहिता अत एव तीव्रतरः अनुरागः प्रीतिर्यस्याः सा अत एव मन्दगतिः कुलान्विता शोभनकुलजाता करेणुः हस्तिनी वनेषु यान्तं मदान्वितं भर्तारं संपरिवार्य आवर्त्य अनुप्रयाति निरन्तरं गच्छति ॥ ३८ ॥

गो० टी०—समन्मथमिति । कुलान्विताः सजातीयसमूहेन युक्ताः ॥ ४० ॥

४० ] ति० टी०—विभूषितं विभूषणम् । विमना मयूराः । मनःपर्यायो मनशब्दोऽकारान्तोऽपि द्विरूपकोशात् ॥ ४० ॥

रा० टी०—त्यक्त्वेति । विमनाः घनगर्जनाननुभवेनोदासीनचित्ता अत एव वराणि आत्मविभूषितानि विभूषणानि बर्हाणि त्यक्त्वा नदीनां तीरोपगताः अत एव दीनाः क्षीणाः मयूराः सारसौघैर्निर्भर्त्स्यमाना इव प्रयान्ति परावर्तन्ते । अदन्तोऽपि मनशब्दः प्रसिद्धः ॥ ३९ ॥

गो० टी०—त्यक्त्वेति । सारसौघैः हंससमूहैः ॥ ४१ ॥

४१ ] ति० टी०—बुद्धाम्बुजानि विकसितकमलानि ॥४१॥

रा० टी०—वित्रास्येति । भिन्नकटाः च्योतन्मदा गजेन्द्राः कारण्डवचक्रवाकान् महारवैर्वित्रास्य बुद्धैः विकसितैरम्बुजैर्भूषणं येषां तेषु सरस्सु विक्षोभ्य संचाल्य जलं पिबन्ति ॥ ४० ॥

गो० टी०—वित्रास्येति । महारवैः वित्रास्येति संबन्धः । भिन्नकटाः मदेनेति शेषः ॥ ४२ ॥

१ व्यभ्रमिति गो. पाठः । २ वैरामर्षेति गो. पाठः । ३ उत्थितेति गो पाठः । ४ समन्मथमिति गो पाठः । ५ करिण्य इति गो. करेणुरिति रा. पाठः । ६ प्रयान्तीति गो. पाठः ।

व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु नदीषु हंसा निपतन्ति हृष्टाः ॥ ४२ ॥
नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् ।
प्लवङ्गमानां च गतोत्सवानां ध्रुवं रवाः संप्रति संप्रनष्टाः ॥ ४३ ॥
अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता [2]विप्रसरन्ति सर्पाः ॥ ४४ ॥
चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका । अहो रागवती संध्या ज[3]हातु स्वयमम्बरम् ॥ ४५ ॥
रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥ ४६ ॥
विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः ।
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ ४७ ॥

४२ ] ति० टी०—ससारसाश्च तास्तदारावविनादिताश्च तासु ॥ ४२ ॥

रा० टी०—व्यपेतेति । सगोकुलासु गोकुलसमूहैर्युक्तासु ससारसा सारससहिता अत एव आरावविनादिता अतिशब्दवत्यः कर्मधारयः, तासु नदीषु हृष्टाः हंसा निपतन्ति ॥ ४१ ॥

गो० टी०—व्यपेतेति । सवालुकासु ससिकतासु ससारसा इति पदच्छेदः रावविनादितासु निजशब्देन संजातशब्दासु ॥ ४२ ॥

४३ ] ति० टी०—अतिप्रवृद्धानिलो महावायुः । बर्हिणा मयूराः । प्लवङ्गमा भेकाः ॥ ४३ ॥

रा० टी०—नदीति । गतोत्सवानां नद्यादित्रयाणाम् अतिप्रवृद्धानिला महावाताः बर्हिणा मयूराश्च तेषां प्लवङ्गमानां भेकानां च रवाः शब्दाः ध्रुवं संप्रनष्टाः ॥ ४२ ॥

गो० टी०—नदीति । नद्यश्च घनप्रस्रवणानि च तेषाम् उदकानां प्लवङ्गमानां मण्डूकानाम् ॥ ४४ ॥

४४ ] ति० टी०—अनेके वर्णा येषां ते । नवोदितेष्वम्बुधरेषु सुविनष्टकायाः सुतरां नष्टदेहयात्राः, अत एव नष्टा मृतप्रायाः ॥ ४४ ॥

रा० टी०—अनेकेति । अम्बुधरेषु नवोदयेषु सत्सु चिरोषिताः अत एव क्षुधा अर्दिताः पीडिताः अत एव सुविनष्टकायाः अत एव नष्टा नष्टप्रायाः घोरविषाः अनेकवर्णाः सर्पाः बिलेभ्यः प्रसरन्ति । चिरोषितापीत्यत्र संधिरत एव ज्ञापकात् ॥ ४३ ॥

गो० टी०—अनेकेति । अनेकवर्णा कृष्णपीतादिवर्णाः सुविनष्टकायाः अत्यन्तकृशशरीराः नष्टा लीनाः ॥ ४५ ॥

४५ ] ति० टी०—चञ्चतां शोभमानानां चन्द्रकिरणानां स्पर्शेन यो हर्षस्तेनोन्मीलिता ईषत्प्रकाशितास्तारका नक्षत्राणि नेत्रकनीनिका च यया सा । रागवती रक्तवर्णानुरक्ता च । अम्बरमाकाशं वस्त्रं च । समासोक्तिरलंकारः । कान्तकरस्पर्शसुखादर्धोन्मीलितनयनायास्तदनुरागवशात्स्वतो विगलितवसनायाः कामुक्या वृत्तान्तस्य संध्यायामारोपादिति बोध्यम् ॥४५॥

रा० टी०—चञ्चदिति । चञ्चत् शोभमानो यश्चन्द्रस्तस्य किरणैः यः स्पर्शः तस्माज्जातो यो हर्षस्तेन उन्मीलिता ईषत्प्रकाशविशिष्टा तारा यस्यां सा अत एव रागवत्यपि संध्या अम्बरं स्वयं जहाति अहो आश्चर्यमेतत् ॥ ४४ ॥

गो० टी०—चञ्चदिति । चञ्चच्चन्द्रकरस्पर्शेन यो हर्षः तेन उन्मीलिततारका निर्मलनक्षत्रा रागवती आरुण्यवती संध्या अम्बरम् आकाशं स्वयं जहाति । अत्र कान्तकरस्पर्शेन हर्षविस्फारितनेत्रकनीनिका उत्तेजितानुरागा स्वयमेव रतये अम्बरं त्यजन्ती कामुकी प्रतीयत इति समासोक्तिः । संध्यारागः प्रायेण शरद्येव भवतीत्येवमुक्तम् ॥ ४६ ॥

४६ ] ति० टी०—शशाङ्कोदितेति उदितशशाङ्केत्यर्थः । तारागणा एवोन्मीलितानि चारूणि नेत्राणि यस्याः सा ॥४६॥

रा० टी०—रात्रिरिति । शशाङ्कोदितः उदितचन्द्रः एव सौम्यं वक्त्रं यस्यास्तारागणाः एव उन्मीलितानि प्रकाशितानि चारुनेत्राणि यस्याः सा, ज्योत्स्नांशुकेन जोत्स्नारूपवस्त्रेण प्रावरणं यस्याः सा रात्रिः शुक्लांशुकसंवृताङ्गी नारीव विभाति ॥ ४५ ॥

गो० टी०—रात्रिरिति । शशाङ्कोदितसौम्यवक्त्रा उदितशशाङ्करम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा उन्मीलिततारागणचारुनेत्रा ॥ ४७ ॥

४७ ] ति० टी०—शालिप्रसवा व्रीहयः । मालेव नभः समाक्रामति ॥ ४७ ॥

रा० टी०—विपक्वेति । विपक्वान्येव शालिप्रसवानि व्रीहीन् भुक्त्वा प्रहर्षिता शीघ्रवेगा सारसचारुपङ्क्तिः वातावधूता ग्रथिता माला इव नभः समाक्रामति ॥ ४६ ॥

१ द्रुतमिति गो. पाठः । २ ऽपीति रा. पाठः । ३ जहातीति गो. रा. पाठः ।

सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥ ४८ ॥
प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाऽद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥ ४९ ॥
वेणुस्वरव्यञ्जिततूर्यमिश्रः प्रत्यूषकालेऽनिलसंप्रवृत्तः ।
संमूर्च्छितो गह्वरगोवृषाणामन्योन्यमापूरयतीव शब्दः ॥ ५० ॥
नवैर्नदीनां कुसुमप्रहासैर्व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥ ५१ ॥
वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ ५२ ॥

गो० टी०–विपक्केति । मुक्त्वा मुखाग्रे गृहीत्वा माला नानावर्णपुष्पमाला ॥ ४८ ॥

४८ ] ति० टी०–सुप्तैकहंसमिति चन्द्रप्रतिबिम्बवत् ॥४८॥

रा० टी०–सुप्तेति । सुप्तः एकः हंसो यस्मिन् कुमुदैः उपेतं युक्तं महाह्रदस्थं सलिलं घनैर्विमुक्तं घनरहितं पूर्णः चन्द्रो यस्मिन् तत् तारागणाकीर्णमन्तरिक्षमिव भाति ॥ ४७ ॥

गो० टी०–सुप्तैकहंसमिति । सुप्तैकहंसमिति इदं चन्द्रस्थाने महाह्रदस्थमिति गाम्भीर्यकृतनैर्मल्यातिशयेन आकाशसाम्याय घनैर्विमुक्तमिति परिपूर्णत्वायोक्तम् ॥ ४९ ॥ ५० ॥

४९ ] ति० टी०–प्रकीर्णा हंसा एवाकुला मेखला यासाम् । वाप्युत्तमानामुत्तमवापीनाम् ॥ ४९ ॥

रा० टी०–प्रकीर्णेति । प्रकीर्णाः प्रसृताः हंसाः एव आकुलमेखला यासां प्रबुद्धानि विकसितान्येव पद्मोत्पलानि तेषां माला समूहः तद्वतीनां वाप्युत्तमानां लक्ष्मीः संपत्तिः भूषितानां वराङ्गनानां लक्ष्मीरिव अधिका विभातीति शेषः ॥ ४८ ॥

५० ] ति० टी०–वेणुस्वररूपेण व्यञ्जितेन व्यक्तेन तूर्येण वाद्यघोषेण मिश्रः प्रत्यूषकाले प्रातःकालेऽनिलेन संप्रवृत्तस्तत्संबन्धेन जातः संमूर्च्छितो व्याप्तो गह्वराणां गिरिगह्वराणां गोवृषाणां च वनवर्तिनां शब्दोऽन्योन्यमापूरयतीव वर्धयतीव । गह्वरगोवृषशब्दाः साजात्यात्परस्परवर्धका इत्यर्थः । 'गह्वरगोवृषाणाम्' इतिपाठः ॥ ५० ॥

रा० टी०–वेण्विति । वेणुस्वनव्यञ्जितः प्रकटीभूतवेणुस्वन एव तूर्यं वाद्यस्वनः तेन मिश्रः संयुक्तः प्रत्यूषकाले अनिलसंवृत्तः वायुसंसर्गेण संवृद्धः अत एव संमूर्छितो व्याप्तः गह्वरगोवृषाणां वने विद्यमानानां गवां वृषाणां च शब्दः अन्योन्यमापूरयतीव ॥ ४९ ॥

गो० टी०–वेण्विति । वेणूनां सुषिरवंशानां स्वनेन व्यञ्जितं यत्तूर्यं गीतवाद्यं तेन मिश्रः प्रत्यूषकालानिलेन प्रातःकालवायुना संप्रवृद्धः अभिवृद्धः संमूर्छितः अभिव्याप्तः गर्गरगोवृषाणां गर्गराणां दधिमथनभाण्डानां गवां वृषाणां च शब्दः अन्योन्यमापूरयतीव परस्परमभिवर्धयतीव । प्रातःकालिकदधिमथनघोषः वत्सोत्सुकानां गवां पुष्ट्या कामातुराणां वृषाणां च शब्दः गोपालवेणुस्वनैः प्राभातिकवायुभिश्चापि वृद्धो जायत इत्यर्थः ॥ ५१ ॥

५१ ] ति० टी०–नदीनां कूलानि मृदुमारुतेन व्याधूयमानैः कम्पितैः कुसुमप्रहासैः कुसुमविकासैर्युतैः काशैरुपशोभितानि ॥ ५१ ॥

रा० टी०–नवैरिति । कुसुम एव प्रहासो येषां तैः मृदुमारुतेन व्याधूयमानैः धौताः अमलक्षौमपटाः तद्वत्प्रकाशो येषां तैः नवैः काशैः काशाभिधतृणैः नदीनां कूलानि उपशोभितानि ॥ ५० ॥

गो० टी०–नवैरिति । कुसुमैः प्रभासन्त इति कुसुमप्रभासाः तैः पटप्रकाशैः पटतुल्यैः काशैः शुभ्रपुष्पदर्भविशेषैः नदीनां कूलानि तटानीत्युक्त्या स्त्रीणां जघनोपमा सूच्यते॥ ५२॥

५२ ] ति० टी०–प्रचण्डाः प्रगल्भाः । शौण्डा मत्ताः । पद्मानामसनपुष्पाणां च रेणुभिर्गौराः पीताः पवनानुयात्रां कुर्वन्ति । गन्धलोभादिति भावः ॥ ५२ ॥

रा० टी०–वनेति । वनप्रचण्डा वनविचरणशीलाः मधुपानशौण्डाः पुष्परसपाने चतुराः अत एव पद्मासनरेणुगौराः पद्मपुष्पाणाम् असनपुष्पाणां च रेणुभिर्गौराः अत एव मत्ताः प्रहृष्टाः षट्चरणाः भ्रमराः पवनानुयात्रां गन्धप्राप्त्यर्थं पवनेन सह गमनं कुर्वन्ति ॥ ५१ ॥

गो० टी०–वनेति । वने प्रचण्डाःनिरङ्कुशगतयः मधुपाने शौण्डाः धूर्ताः पद्मानामसनानां च रेणुभिः गौराः षट्चरणाः भृङ्गाः वनेषु पवनानुयात्रां वातानुगमनं कुर्वन्ति । परिमलानुसारादिति भावः ॥ ५३ ॥

१ कुसुमैरिति गो. पाठः । २ स्वनेति गो. रा. पाठः । ३ कालानिलेति गो. पाठः । ४ गर्गरेति गो. पाठः । ५ प्रभासैरिति गो. पाठः ।

जलं प्रसन्नं कुसुमप्रहासं[1] क्रौञ्चस्वनं[2] शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ ५३ ॥
मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥ ५४ ॥
सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि ।
सपत्ररेखाणि सरोचनानि वधूमुखानीव नदीमुखानि ॥ ५५ ॥
प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु ।
गृहीतचापोद्यतदण्डचण्डः प्रचण्डचापो[3]ऽद्य वनेषु कामः ॥ ५६ ॥
लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः[4] ॥ ५७ ॥
दर्शयन्ति[5] शरन्नद्यः पुलिनानि शनैः शनैः । नवसंगमसव्रीडा[6] जघनानीव योषितः ॥ ५८ ॥
प्रसन्नसलिलाः सौम्य कुरराभि[7]विनादिताः । चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९ ॥
अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज । उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ॥ ६० ॥

५३ ] ति० टी०—कुसुमरूपः प्रहासो यस्य तम् । शालिवन शालिसमूहः । वर्षस्य व्यपनीतं व्यपनयो यस्मिंस्तं कालम् ॥ ५३ ॥

रा० टी०—जलमिति । प्रसन्नं स्वच्छं जलं कुसुम एव प्रहासो यस्य तत् क्रौञ्चानां स्वनो यस्मिन् तत् विपक्वं शालिवनं च मृदुर्वायुश्च विमलश्चन्द्रश्च व्यपनीतकालं गतसमयं वर्षं शंसन्ति बोधयन्ति ॥ ५२ ॥

गो० टी०—जलमिति । प्रभासत इति प्रभासं पचाद्यच्, विकस्वरमित्यर्थः । वर्षव्यपनीतकालं वर्षात्ययकालं शरत्कालमिति यावत् ॥ ५४ ॥

५४] ति० टी०—मीना एवोपसंदर्शिता मेखला यासाम् ५४

रा० टी०—मीनेति । मीनोपसंदर्शितमेखलानां मीना एव उपसंदर्शिताः प्रतीताः मेखला यासां तासां नदीवधूनां नदीरूपस्त्रीणां गतयः प्रभातकालेषु कान्तेन उपभुक्ताः अत एव अलसगामिन्यस्ता एव त्य इति कर्मधारयः, तासां कामिनीनां गतय इव मन्दाः भवन्तीति शेषः ॥ ५३ ॥

गो० टी०—मीनेति । कामिनीनां वारस्त्रीणामित्यर्थः ॥ ५५ ॥

५५ ] ति० टी०—चक्रवाकशैवलकाशा रोचनापत्ररेखादुकूलस्थानीयाः ॥ ५५ ॥

रा० टी०—सेति । सचक्रवाकानि चक्रवाकसहितानि सशैवलानि शैवलसहितानि दुकूलैरिव काशैः संवृतानि नदीमुखानि सपत्रलेखानि सरोचनानि वधूमुखानीव प्रकाशन्ते इति शेषः । तत्र चक्रवाकशैवालौ रोचनापत्रलेखास्थानीयौ ॥ ५४ ॥

गो० टी०—सचक्रवाकानीति । चक्रवाकशैवलकाशाः रोचनापत्रलेखावकुण्ठनदुकूलस्थानीयाः ॥ ५६ ॥

५६–५७ ] ति० टी०—सप्तम्यन्ते वनविशेषणे । वनेष्विति शेषः । गृहीतेन चापेनोद्यते आरब्धे विरहिविषयके दण्डे चण्डः प्रचण्डः । प्रचण्डश्चापो यस्य सः इदं हेतुगर्भम् ॥ ५६ ॥ ५७ ॥

रा० टी०—प्रफुल्लेति । वनेषु प्रफुल्लबाणासनाभ्यां पुष्पिततरुविशेषाभ्यां चित्रितेषु अत एव प्रहृष्टषट्पादनिकूजितेषु सत्सु गृहीतचाप आत्तधनुष्कः उद्यतः प्रारब्धः दण्डचण्डः चण्डदण्डो येन सः प्रचण्डचापः कामः वनेषु प्रादुर्भूत इति शेषः । वनेषु इत्युभयान्वयि ॥ ५५ ॥

गो० टी०—प्रफुल्लेति । बाणाः बाणवृक्षाः । असनाः सर्जकाः । गृहीतचापेन उद्यतः प्रयुक्तः चण्डदण्डः तीक्ष्णदण्डनं येन स तथा । यद्वा गृहीतचापश्चासौ उद्यतचण्डदण्डश्च दण्डः शरविशेषः 'दण्डादयः काण्डभेदाः स्युः' इति हलायुधः । प्रचण्डचारः उग्रसंचारः ॥ ५७ ॥

रा० टी०—लोकमिति । सुवृष्ट्या लोकं परितोषयित्वा परितोष्य नदीतटाकानि च पूरयित्वा वसुधां निष्पन्नसस्यां च कृत्वा नभस्त्यक्त्वा पयोधरा मेघाः प्रनष्टाः अदृश्याः बभूवुरिति शेषः ॥ ५६ ॥

गो० टी०—लोकमिति । लोकं जनम् ॥ ५८ ॥

५८–६० ] ति० टी०—दर्शयन्तीति पद्ये समासोक्तिः स्पष्टैव व्यङ्ग्या ॥ ५८–६० ॥

रा० टी०—दर्शयन्तीति । शरन्नद्यः नवसंगमसव्रीडाः योषितो जघनानीव पुलिनानि शनैः दर्शयन्ति ॥ ५७ ॥

रा० टी०—प्रसन्नेति । प्रसन्नानि सलिलानि येषां ते कुरराभिविनादिताः चक्रवाकगणैः आकीर्णाः सलिलाशयाः विभान्ति ॥ ५८ ॥

गो० टी०—प्रसन्नेति । कुररीभिः क्रौञ्चीभिः सलिलाशयाः सरांसि ॥ ५९

१ कुमुदं प्रभासमिति गो. पाठः । २ स्वन इति गो. पाठः । ३ चार इति गो. पाठः । ४ प्रणष्टा इति गो. पाठः । ५ श्लोकोऽयमष्टाविंशस्य स्थाने गो. पाठे । ६ संव्रीडा इति गो. पाठः । ७ कुररीभिरिति गो. पाठः ।

इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज । न च पश्यामि सुग्रीवमुद्योगं वै तथाविधम् ॥ ६१ ॥
²असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः । दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६२ ॥
हंससारसचक्राह्वैः कुररैश्च समन्ततः । पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ॥ ६३ ॥
चत्वारो वार्षिका मासा गता वर्षशतोपमाः । मम शोकाभितप्तस्य³ तथा सीतामपश्यतः ॥ ६४ ॥
चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम् । विषमं दण्डकारण्यमुद्यानमिव चाङ्गना⁴ ॥ ६५ ॥
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते । कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥ ६६ ॥
अनाथो हृतराज्योऽहं रावणेन च धर्षितः । दीनो दूरगृहः कामी मां चैव शरणं गतः ॥ ६७ ॥
इत्येतैः कारणैः सौम्य सुग्रीवस्य दुरात्मनः । अहं वानरराजस्य परिभूतः परंतपः⁵ ॥ ६८ ॥
स कालं परिसंख्याय सीतायाः परिमार्गणे । कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९ ॥
स⁶ किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवम् । मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥ ७० ॥

रा० टी०–अन्योन्येति । हे नृपात्मज ! पार्थिवानामुद्योगसमयः उपस्थितः संप्राप्तः ॥ ५९ ॥

गो० टी०–अन्योन्येति । हे नृपात्मज ! जिगीषूणां पार्थिवानामित्यन्वयः ॥ ६२ ॥

६१ ] ति० टी०–यात्रा यात्राकाल इत्यर्थः । तथाविधं यात्रोपयोगिनमुद्योगं च तस्य न पश्यामीत्यनुकर्षः ॥ ६१ ॥

रा० टी०–इयमिति । सा वर्षानन्तरकाला प्रथमा इयं पार्थिवानां यात्रा समयः प्राप्ता सुग्रीवं तथाविध पूर्वसुग्रीवप्रतिज्ञासदृशम् उद्योगं च न पश्यामि ॥ ६० ॥

गो० टी०–इयमिति । यात्रा उपस्थितेति शेषः ॥ ६३ ॥

६२–६३ ] ति० टी०–श्यामास्तमालाः ॥ ६२ ॥ ६३ ॥

रा० टी०–वृष्टिनिवृत्तिचिह्नमाह–असना इति । श्यामाः असनादयः गिरिसानुषु पुष्पिता दृश्यन्ते । श्यामा अपि तरुविशेषा एव वा ॥ ६१ ॥

रा० टी०–हंसेति । हंसाद्यैः अवकीर्णानि नदीना पुलिनानि पश्य ॥ ६२ ॥

गो० टी०–असना इति । बन्धुजीवाः श्यामाश्च लताविशेषाः ॥ ६० ॥ ६१ ॥

६४ ] ति० टी०–चत्वार इति । यद्यपि चतुर्थो मासो विद्यत एव, तथापि तत्रोद्योगाभावेन तस्यापि गतप्रायत्वाद्गता इत्युक्तिः ॥ ६४ ॥

६५–६६ ] ति० टी०–का सा सीता तत्राह—चक्रेति । या विषमं दण्डकारण्याख्यं वनमुद्यानमिव ज्ञात्वा चक्रवाकी भर्तारमिव मां पृष्ठतोऽनुगता ॥ ६५ ॥ ६६ ॥

रा० टी०–चत्वार इति । या अङ्गना विषमं दण्डकारण्यमुद्यानं वनं चक्रवाकीव भर्तार मामनुगता तां सीतामपश्यतः अत एव शोकाभितप्तस्य मम वार्षिकाश्चत्वारो मासाः वर्षशतोपमाः गताः । श्लोकद्वयमेकान्वयि ॥ ६३ ॥ ६४ ॥

रा० टी०–प्रियेति । हे लक्ष्मण ! प्रियाविहीनत्वादिविशिष्टे मयि सुग्रीवः कृपां न कुरुते ॥ ६५ ॥

गो० टी०–चत्वार इति । चत्वारः आषाढाद्याः । केचिदाहुः श्रावणाद्या इति । पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागम इत्युपक्रमोक्तेः आश्वयुजकार्तिकयोर्वर्षानुवृत्त्या वार्षिकत्वम् कार्तिके समनुप्राप्ते त्वं रावणवधे यतेति पूर्वोक्तवचने तु कार्तिके समनुप्राप्त इत्यस्य समाप्त इत्यर्थ इत्याहुः ॥६४–६६॥

६७ ] ति० टी०–कृपाया अकरणे हेतुमुपन्यस्यति–अनाथ इति । 'दूरग्रहः' इति पाठे दूरवर्तिस्त्रीविषयो ग्रहो रावणोऽभिनिवेशो वा यस्येत्यर्थः ॥ ६७ ॥

६८ ] ति० टी०–वानरराजस्य वानरराजेन शेषे षष्ठी ॥६८॥

रा० टी०––ननु स्वयं समर्थत्वात्सुग्रीवापेक्षा किमर्थं क्रियते इत्यत आह–अनाथ इति । रावणेन रावणसदृशेन वालिना धर्षितः अत एव अनाथः रक्षकरहितः अत एव दीनः कामी अयं सुग्रीवः मां शरणं गतः इत्येतैः कारणैः वानरराजस्य सुग्रीवस्य सुग्रीवेण परिभूतः वशीकृतः अहमस्मीति शेषः । श्लोकद्वयमेकान्वयि ॥ ६६ ॥ ६७ ॥

गो० टी०–अनाथ इत्यादि । सुग्रीवस्य परिभूत इति "क्तस्य च वर्तमाने" इति षष्ठी । कृपा न कुरुत इत्यादिकं सुग्रीवाभिमानमनुसृत्योक्तम् ॥ ६७––६९ ॥

६९–७० ] ति० टी०–परिसंख्याय गणयित्वा न बुध्यते । समयमिति शेषः ॥ ६९ ॥ ७० ॥

रा० टी०–स इति । कालम् अन्वेषणायोग्यमदुक्तवृष्टिसमयं परिसंख्याय ज्ञात्वा सीतायाः परिमार्गणे समयं गतवृष्टिकालकनिश्चयं कृत्वा कृतार्थो दुर्मतिः स सुग्रीवः नावबुध्यते६८

रा० टी०–स इति । सः तत्कृतनिश्चयज्ञाता त्वं किष्किन्धां प्रविश्य ग्राम्यसुखे सक्तमत एव मूर्खं सुग्रीवं मम वचनाद्ब्रूहि ॥ ६९ ॥

१ वेति गो. पाठः । २ एतदादी द्वौ श्लोकौ 'अन्योन्य' इत्यस्मात्प्राक् गो. पाठे । ३ ऽभिभूतस्य सौम्येति गो. पाठः । ४ याऽऽगता इति गो. पाठः। ५ परतपेति गो. पाठः । ६ त्वं प्रविश्य च. किष्किन्धामिति गो. पाठः ।

अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम् । आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ७१ ॥
शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् । सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः ॥ ७२ ॥
कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३ ॥
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे । द्रष्टुमिच्छसि चापस्य रूपं विद्युद्गणोपमम् ॥ ७४ ॥
घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे । निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छसि ॥ ७५ ॥
काममेवंगतेऽप्यस्य परिज्ञाते पराक्रमे । त्वत्सहायस्य मे वीर न चिन्ता स्यान्नृपात्मज ॥ ७६ ॥
यदर्थमयमारम्भः कृतः परपुरंजय । समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥ ७७ ॥
वर्षाः समयकालं तु प्रतिज्ञाय हरीश्वरः । व्यतीतांश्चतुरो मासान्विहरन्नावबुध्यते ॥ ७८ ॥
सामात्यपरिषत्क्रीडन्पानमेवोपसेवते । शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९ ॥

---

७१ ] ति० टी०—उपपन्नानां बलवीर्यादियुक्तानामाशाम-भिमतार्थविषयां संश्रुत्य प्रतिज्ञाय ॥ ७१ ॥

रा० टी०—वचनप्रकारमाह—अर्थिनामिति । उपपन्नाना-मतिवीर्यादियुक्तानामत एव पूर्वमुपकारिणामर्थिनामाशाम् ईप्सितं संश्रुत्य पूरयितुं प्रतिज्ञाय यो जनः हन्ति न पूरयति स पुरुषाधमः अधमपुरुषो ज्ञेय इति शेषः ॥ ७० ॥

७२ ] ति० टी०—सत्येनामोघतया ॥ ७२ ॥

रा० टी०—शुभमिति । शुभं पापं वा उदीरितं प्रतिज्ञातं वाक्यं यो यदि सत्यत्वेन अत्याज्यत्वेनेत्यर्थः, परिगृह्णाति स वीरस्तदा पुरुषोत्तमः मन्तव्यः ॥ ७१ ॥

गो० टी०—त्वं प्रविश्य चेत्यादि । शुभमिति । यः उदीरितं वाक्यं सत्येन परिगृह्णाति सत्यत्वेन स्वीकरोति यथोक्तमनुतिष्ठतीत्यर्थः । मित्राणां न भवन्ति मित्राणामुपकाराय न भवन्तीत्यर्थः । अस्य श्लोकस्य अन्ते इतिकरणं द्रष्टव्यम् इति सुग्रीवं ब्रूहीति पूर्वेण संबन्धः । शुभमिति । यो हि वाक्य-मुदीरितमिति पाठः ॥ ७०-७४ ॥

७३-७४ ] ति० टी०—न भवन्ति कार्यायेति शेषः । क्रव्यादाः श्वादयः ॥ ७३ ॥ ७४ ॥

रा० टी०—कृतार्था इति । कृतार्थाः साधितस्वप्रयोजनाः ये जनाः अकृतार्थानां मित्राणां न भवन्ति कार्यसाधनायेति शेषः, मृतानपि तान् कृतघ्नान् क्रव्यादाः मांसाशिनः श्वप्रभृतयः न उपभुञ्जते खादन्ति ॥ ७२ ॥

रा० टी०—नूनमिति । रणे मया विकृष्टस्य काञ्चनपृष्ठस्य चापस्य विद्युद्गणोपमं रूपं द्रष्टुमिच्छसि ननं किम् ॥ ७३ ॥

७५ ] ति० टी०—संश्रोतुमिच्छसीत्युत्तरमिति सुग्रीवं ब्रूहीति संबन्धः ॥ ७५ ॥

रा० टी०—घोरमिति । संयुगे क्रुद्धस्य मम वज्रस्य निर्घोषमिव घोरं ज्यातलनिर्घोषं पुनः संश्रोतुमिच्छसि किमिति शेषः ॥ ७४ ॥

गो० टी०—घोरमिति । 'निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छति' इति पाठः ॥ ७५ ॥

७६ ] ति टी०—एवंगते इत्यस्य विवरणम्—पराक्रमे परिज्ञाते इति । त्वत्सहायस्य मे पराक्रमे ज्ञातेऽप्यस्य सुग्रीवस्य चिन्ता वालिवन्मामपि मारयिष्यतीति चिन्ता कामं न स्यादित्याश्चर्यमिति भावः ॥ ७६ ॥

रा० टी०—तदुपकृत्यभावेऽपि मम न क्षतिरिति बोधयँल्लक्ष्मणं प्रत्याह—काममिति । अस्य सुग्रीवस्य एवम् अनेन प्रकारेण उपकृत्यभावं गतेऽपि पराक्रमे स्वपौरुषे परिज्ञाते चिन्तिते सति त्वत्सहायस्य मे चिन्ता न स्यात् ॥ ७५ ॥

गो० टी०—काममिति । वीर नृपात्मज ! त्वत्सहायस्य मे एवंगते सालगिरिभूदलनादिषु इत्थमप्रतिहते पराक्रमे कामं परिज्ञाते सत्यपि अस्य सुग्रीवस्य चिन्तासमयव्यतिक्रमे मामपि हनिष्यतीति विचारः मा भूदित्यर्थः ॥ ७६ ॥

७७ ] ति ० टी०—यदर्थं सीतान्वेषणार्थमयमारम्भ एतत्सख्यरूपः कृतस्तद्विषयं समयं कृतार्थो निष्पन्नस्वप्रयोजनः नाभिजानाति न स्मरति ॥ ७७ ॥

रा० टी०—यदर्थमिति । यदर्थं यत्प्रयोजनसाधनार्थमयं सख्यादिः आरम्भः आरब्धः अत एव कृतः अन्वेषणसमयः संपादितस्तं समयं कृतार्थः प्लवगेश्वरः सुग्रीवः नाभिजानाति स्म ॥ ७६ ॥

गो० टी०—यदर्थमिति । अयमारम्भः सख्यकरणवालिनिरसनरूपः यदर्थं यस्मै सीतान्वेषणप्रयोजनाय कृतः । समयं तद्विषयसंकेतं प्लवगेश्वरो नाभिजानातीति संबन्धः ॥७७॥

७८ ति० टी०—वर्षाः वर्षोत्तरकालं समयकालं संकेतविषयं कालं प्रतिज्ञाय । व्यतीतान्व्यतीतप्रायान् ॥ ७८ ॥

रा० टी०—वर्षेति । वर्षासमयकालं वर्षस्य वृष्टिसमयस्य आसमयः सम्यग्गमनं यस्मिन् तं कालं हरीश्वरः प्रतिज्ञाय विहरन् सन् व्यतीतान् चतुरो मासान् नावबुध्यते ॥ ७७ ॥

गो० टी०—वर्षेति । वर्षासमयकालं वर्षा एव समयकालः संकेतकालः तम् । वर्षाशब्देन चत्वारो मासा उपलक्ष्यन्ते॥७८॥

७९ ] ति ० टी०—पानं मद्यपानम् ॥ ७९ ॥

---

१ इच्छतीति गो. पाठः । २ वर्षासमयेति गो. रा. पाठः ।

उच्यतां गच्छ सुग्रीवस्त्वया [1]वीर महाबल । मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८० ॥
न स संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ ८१ ॥
एक एव रणे वाली शरेण निहतो मया । त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२ ॥
[2]यदेवं विहिते कार्ये यद्धितं पुरुषर्षभ । तत्तद्ब्रूहि [4]नरश्रेष्ठ त्वर कालव्यतिक्रमः ॥ ८३ ॥
कुरुष्व सत्यं मम वानरेश्वर प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।
मा वालिनं [3]प्रेतगतो यमक्षये त्वमद्य पश्येर्मम चोदितः शरैः ॥ ८४ ॥
स पूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् ।
चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशवर्धनः ॥ ८५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—सेति । सामात्यपरिषत् अमात्यपरिषत्सहितः सुग्रीवः पानमेवोपसेवते अत एव शोकदीनेषु अस्मासु दयां न कुरुते ॥ ७८ ॥

गो० टी०—सामात्येति । सामात्यपरिषत्सामात्यबान्धवः ॥ ७९ ॥

८०] ति० टी०—उच्यतामित्युक्तं किं वक्तव्यमित्यत आह—यद्रूपमिति । मम रोषस्य यद्रूपमुचितमिति शेषः । तद्ब्रूया इदं वचश्च ब्रूयाः ॥ ८० ॥

रा० टी०—उच्यतामिति । हे महाबल ! त्वं गच्छ मम रोषस्य यद्रूपं तत्सुग्रीवस्त्वया उच्यताम् इदं वक्ष्यमाणं वचः ब्रूयाश्च ॥ ७९ ॥

गो० टी०—उच्यतामिति । मम रोषस्य यद्रूपं तत्सुग्रीव उच्यताम् एनमिदं वक्ष्यमाणं वचश्च ब्रूयाः ॥ ८० ॥

८१–८२ ] ति० टी०—तद्वच आह—नेति । समये तिष्ठ । समयं मा हासीरित्यर्थः ॥ ८१ ॥ ८२ ॥

रा० टी०—तद्वचनाकारमाह—नेति । येन पथा हतो वाली गतः स पन्थाः न संकुचितः नष्टः अतः समये अन्वेषणकाले तिष्ठ समयं न त्यज अन्वेषणं कुर्वित्यर्थः, वालिपथं मान्वगाः ॥ ८० ॥

रा० टी०—एक इति । मया शरेण वाली एक एव निहतः सत्यादतिक्रान्तं त्वां तु सबान्धवं हनिष्यामि ॥ ८१ ॥

गो० टी०—न चेति । हतो वाली येन पथा गतः स पन्थाः परलोक इत्यर्थः, न संकुचितः न नष्ट इत्यर्थः । समये मर्यादायां तिष्ठ । वालिपथं वालिगतं मार्गम् ॥ ८१ ॥ ८२ ॥

८३ ] ति० टी०—एवं तेन विहिते कार्ये यद्धितमस्माकं तस्य च तत्तद्ब्रूहि । त्वराहेतुः—कालव्यतिक्रमः जायत इति शेषः ॥ ८३ ॥

रा०टी०—लक्ष्मणं प्रत्याह—यदिति। एवं कालविलम्बेन कार्ये हते असिद्धे सति यत् यत् हितं तत् तत् ब्रूहि सुग्रीवं प्रतीति शेषः, अतस्त्वर शीघ्रं गच्छ कालव्यतिक्रमो मा भूदिति शेषः ॥८२॥

गो० टी०—तदेवमिति । कार्ये एवं विहिते एवमवस्थिते सति यद्धितं तद्ब्रूहि । कालव्यतिक्रमः मा भूदिति शेषः । अतः त्वर त्वरस्वेति संबन्धः ॥ ८३ ॥

८४ ] ति० टी०—उपदेशसंक्षेपः—कुरुष्वेति । प्रेतगतः प्रेतत्वं प्राप्तः यमक्षये यमगृहे मा वालिनं पश्येः । मम शरैश्चोदितः प्रेरितः प्रेतत्वायेति शेषः । इति ब्रूहीत्यन्वयः ॥ ८४ ॥

रा० टी०—सुग्रीवं बोधयितुमुपसंहरन्नाह—कुरुष्वेति । हे वानरेश्वर ! शाश्वतं सर्वकालिकं धर्ममवेक्ष्य ममाग्रे प्रतिश्रुतं प्रतिज्ञातं सत्यं मम चोदितः प्रेरितस्त्वं कुरुष्व । मम शरैः प्रेतगतः परलोकं प्राप्तः सन् यमक्षये यमागोचरलोके विद्यमानं वालिनं मा पश्येः ॥ ८३ ॥

गो० टी०—उक्तमर्थं पुनः संक्षेपेण सर्गान्ते दर्शयति—कुरुष्वेति । मयि विषये प्रतिश्रुतं सत्यं कुरु । शाश्वतं धर्ममवेक्ष्य प्रतिश्रुतकरणम् अक्षयो धर्म इत्यवेक्ष्य ॥ ८४ ॥

८५ ] ति० टी०—मानववंशवर्धनो लक्ष्मणः ॥ ८५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिंशः सर्गः ॥३०॥

रा० टी०—स इति । दीनं प्रियावियोगेन कृशं तत्त्वेन भासमानम् अत एव तीव्रविवृद्धकोपम् अन्वेषणकालातिक्रमेण आश्रितातिक्रोधम् अत एव लालप्यमानम् अतिशयेन कथयन्तं पूर्वजं वीक्ष्य उग्रतेजाः स लक्ष्मणः हरीश्वरे सुग्रीवे तीव्रां तद्विघातिकारत्वेन क्रूरां मतिं चकार ॥ ८४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रिंशः सर्गः ॥ ३० ॥

गो० टी०—स इति । सः लक्ष्मणः हरीश्वरे सुग्रीवे तीव्रां मतिं निग्रहबुद्धिमित्यर्थः । लालप्यमानं प्रलपन्तम् ॥ ८५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

---

१ वत्सेति गो. पाठः । २ तदेवमिति गो. पाठः । ३ प्रेत्य गतो यमक्षयमिति गो. पाठः । ४ नाथ इति गो पाठः ।

# एकत्रिंशः सर्गः ।

रामोक्त्या सुग्रीवे कोप मन्वानो लक्ष्मणः सुग्रीववधे उद्यतोऽभूत् । तं सान्त्वयन्रामः सुग्रीवे साम्नैव व्यवहर्तुं लक्ष्मणं प्रेषयति। नातिकोपाटोपः शरचापपाणिर्लक्ष्मणः किष्किन्धामेत्य स्वागमन सुग्रीवाय निवेदयितुमङ्गद प्रेषयति । प्रविश्याङ्गदेन कथितलक्ष्मणागमनोऽपि सुग्रीवो मदवशतया न तज्जग्राहापि तु वित्रस्तकपिकुलकिलकिलारवेणोद्बुद्धो मन्त्रिवराभ्यां च वेदितलक्ष्मणागमनस्तं प्रसादयितुमप्रार्थि ।

स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोमम्[1] ।
नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ॥ १ ॥
न वानरः स्थास्यति साधुवृत्ते न मन्यते[2] कर्मफलानुषङ्गान् ।
न भोक्ष्यते वानरराज्यलक्ष्मीं तथा हि नातिक्रमतेऽस्य[3] बुद्धिः ॥ २ ॥
मतिक्षयाद्[4]ग्राम्यसुखेषु सक्तस्तव प्रसादात्प्रतिकारबुद्धिः ।
हतोऽग्रजं पश्यतु वीरवालिनं न राज्यमेवं विगुणस्य देयम् ॥ ३ ॥
न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य ।
हरिप्रवीरैः सह वालिपुत्रो नरेन्द्रपुत्र्या[5] विचयं करोतु ॥ ४ ॥

१ ] ति० टी०—स लक्ष्मणः ॥ १ ॥

रा०टी०—रामवचनश्रवणानन्तरकालिकां लक्ष्मणोक्तिमाह—स इत्यादिभिः । शोकाभिपन्नं प्रियावियोगजनितशोकविशिष्टम् अत एव कामिनं तदन्वेषणविषयकोत्कटेच्छावन्तम् अत एव समुदीर्णः संस्मृतः कामः सुग्रीवो येन तं दीनं दीनत्वेन प्रतीयमानम् अदीनसत्त्वम् अक्षीणमहापराक्रमं नरदेवपुत्रं पूर्वजं ज्येष्ठं रामं रामानुजः स लक्ष्मणः इत्युवाच ॥ १ ॥

गो० टी०—अथाङ्गदेन लक्ष्मणकोपकथनं सुग्रीवायैकविंशे—स कामिनमिति । कामिनम् अधिककामम् अत एव दीनं तथाप्यदीनसत्त्वम् । एतेन वस्तुतः अदीनसत्त्वोऽपि दैन्यं भावयतीति गम्यते । शोकाभिपन्नम् शोकं प्राप्तं समुदीर्णकोपम् अभिवृद्धकोपम् । अस्मिन् श्लोके नरदेवपुत्रमित्यत्र देकारो गायत्र्या एकादशाक्षरम् । दशसहस्रश्लोका गताः ॥ १ ॥

२ ] ति० टी०—साधुवृत्ते साधूनां वृत्ते स्थिरस्नेहतालक्षणे । कर्मणा जनितान्फलानुषङ्गानकण्टकराज्यभोगसंबन्धान् मन्यते सख्यमूलानिति शेषः । अत एव वानरराज्यलक्ष्मीं न भोक्ष्यते । हि यस्मात्तस्मात्तथा तत्प्रकाराऽस्य बुद्धिः प्रेमपरिपालनेऽत्यन्तं न क्रमते । 'तथा हि नातिक्रमते' इति पाठः पाङ्क्तः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—नेति । अस्य सुग्रीवस्य बुद्धिस्तथा उक्तप्रकारेण अति अत्यन्तं नाक्रमते अन्वेषणे न प्रवर्तत इत्यर्थः । तत्र हेतुः—वानरः सुग्रीवः कर्मफलानुषङ्गान् उद्योगनिष्पादितराज्यप्राप्तिरूपफलसाधकावस्मान्न मन्यते अतः साधुवृत्ते महात्मभिः सेविते धर्मेण राज्यपालन इत्यर्थः, न स्थास्यति अधर्मं करिष्यतीत्यर्थः । अतः वानरराजलक्ष्मीं न भोक्ष्यते एतेन तद्बुद्धिभ्रंशो जात इति सूचितम् ॥ २ ॥

गो० टी०—नेति । साधुवृत्ते साधूनां मित्रसमानसुखदुःखानां सुहृदां वृत्ते आचारे न स्थास्यति । कर्मफलानुषङ्गान् अग्निसाक्षिकसख्यरूपकर्मणा वालिनिरसनराज्यदारलाभरूपफलानुबन्धान् न मंस्यते । वानरराज्यलक्ष्मीं न भोक्ष्यते । तथा ह्यस्य बुद्धिः नाभिक्रमते अस्मत्प्रयोजनाभिमुख्ये च वर्तत इति योजना ॥ २ ॥

३ ] ति० टी०—तत्र हेतुमाह—मतिक्षयादिति । मतिक्षये हेतुस्तवाप्रसादः । अतस्तस्य प्रतिकारबुद्धिः प्रत्युपकारबुद्धिर्न वर्तत इति शेषः । न देयम् दत्तं नानुपालनीयमित्यर्थः ॥ ३ ॥

रा० टी०—तत्र गमकमाह—मतीति । मतिक्षयात् बुद्धिभ्रंशात् हेतोः प्रसादात् अतिप्रसन्नतां प्राप्य ग्राम्यसुखेषु सक्तः अत एव प्रतिकारबुद्धेः प्रत्युपकारविषयिणी मतिर्न अतः हतः सन् अग्रजं वीरवालिनं पश्यतु एवं विगुणस्य धर्मविरोधिगुणवतः राज्यं तव न देयं नत्र आवृत्तिः । किंच प्रतिकारबुद्धिः विनष्टमतिः सुग्रीवविशेषणम् अस्मिन् पक्षे कार इति कोरूपम्? ॥ ३ ॥

गो० टी०—मतीति । मतिभ्रमात् बुद्धिविपर्यासात् । तव प्रसादाप्रतिकारबुद्धिः प्रसादस्य राज्यप्रदानादिरूपस्य अप्रतिकारबुद्धिः प्रत्युपकारबुद्धिरहितः । अत एव हतः सुग्रीवः अग्रजं वालिनं पश्यतु । एवं विगुणस्य तस्य राज्यं न देयम् । 'वालिनम्' इति क्वचित्पाठः । तत्र वृत्तमुपजातिः ॥ ३ ॥

४ ] ति० टी०—न धारये धारयितुं न शक्नोमि । वालिपुत्रोऽङ्गदो विचयमन्वेषणम् । सुग्रीवं हत्वा तस्मै राज्यसमर्पणादिति भावः ॥ ४ ॥

१ कोपमिति गो.पाठः । २ मंस्यत इति गो.पाठः । ३ ऽभीति गो.पाठः । ४ भ्रमादिति । गो.पाठः । ५ तरयेति गो.पाठः । ६ पत्न्या इति गो.पाठः ।

तमात्तबाणासनमुत्पतन्तं निवेदितार्थं रणचण्डकोपम् ।
उवाच रामः परवीरहन्ता स्ववीक्षितं सानुनयं च वाक्यम् ॥ ५ ॥
नहि वै त्वद्विधो लोके पापमेवं समाचरेत् । कोपमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥
नेदमत्र त्वया ग्राह्यं साधुवृत्तेन लक्ष्मण । तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च संगतम् ॥ ७ ॥
सामोपहितया वाचा रूक्षाणि परिवर्जयन् । वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥ ८ ॥
सोऽग्रजेनानुशिष्टार्थो यथावत्पुरुषर्षभः । प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९ ॥
ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः । लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १० ॥
शक्रबाणासनप्रख्यं धनुः कालान्तकोपमम् । प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥ ११ ॥
यथोक्तकारी वचनमुत्तरं चैव सोत्तरम् । बृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्तदा ॥ १२ ॥

रा० टी०—नेति । उदीर्णवेगं कोपं न धारये निवर्तयामीत्यर्थः, अतः असत्यं सुग्रीवं निहन्मि अतः नरेन्द्रपुत्र्याः जनकात्मजायाः विचयमन्वेषणं हरिप्रवीरैः सह वालिपुत्रोऽङ्गदः करोतु ॥ ४ ॥

गो० टी०—नेति । न धारये अकार्यकरणं कर्तुं न क्षम इत्यर्थः । असत्यं सत्यवचनरहितं नरेन्द्रपत्न्याः सीतायाः विचयम् अन्वेषणम् ॥ ४ ॥

५ ] ति० टी०—निवेदितार्थं विज्ञापितसुग्रीववधप्रवृत्तिम् । स्ववीक्षितं सुष्ठुवीक्षितं समयोचितम् ॥ ५ ॥

रा० टी०—तमिति । आत्तबाणासनं गृहीतधनुषं निवेदितार्थं बोधितगमनप्रयोजनं रणचण्डकोपं रणकारकचण्डकोपविशिष्टं तं लक्ष्मणं परवीरहन्ता रामः स्वेन निश्चितं सानुनयं वाक्यमुवाच । किंच स्ववीक्षितमिति लक्ष्मणविशेषणं स्वस्मिन् वीक्षितं वीक्षणं यस्येत्यर्थः ॥ ५ ॥

गो० टी०—तमिति । मम अहृदयवचनमात्रेण अयं तं हन्यादेवेत्यनुतप्तो रामः प्राह स्म । परवीरहन्ता नतु स्वाश्रितहन्ता स्ववेक्षितं सुष्ठु निरूपितम् ॥ ५ ॥

६ ] ति० टी०—त्वद्विधो धर्मज्ञः पापं मित्रवधाध्यवसायरूपम् । आर्येण सम्यग्विवेकेन ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—नहीति । त्वद्विधः धर्मज्ञ इत्यर्थः, एवं मित्रविघातरूपं पापं नैव समाचरेत् धारयेत् । ननु गृहीतकोपस्य का गतिरित्यत आह—आर्येण विवेकेन कोपं यो हन्ति स वीरः स एव पुरुषोत्तमः पुरुषश्रेष्ठश्च । एतेन कोपं त्यजेति सूचितम् ॥ ६ ॥

गो० टी०—न हीति । पापं मित्रहननाध्यवसायरूपम् । आर्येण सम्यग्विवेकेन ॥ ६ ॥

७] ति० टी०—इदं मित्रघातरूपं वस्तु न ग्राह्यं न निश्चेयम् । साधुवृत्तं साधुत्वं तेन तां पूर्वकृतां प्रीतिमनुवर्तस्व, सुग्रीवे इति शेषः । पूर्ववृत्तं संगतं च सख्यं च स्मरेति शेषः ॥ ७ ॥

रा० टी०—नेति । तां समागमकालां प्रीतिं परस्परं प्रेम संगतमुचितं पूर्ववृत्तं परस्परोक्तिं च अनुवर्तस्व स्मरेत्यर्थः, अत एव इदं मित्रीभूतसुग्रीवविहननं साधुवृत्तेन त्वया न ग्राह्यं निश्चेतव्यम् ॥ ७ ॥

गो० टी०—नेदमिति । इदं मित्रहननाध्यवसायरूपं पापं पूर्ववृत्तं च संगतं पूर्ववृत्तं सख्यरूपं बान्धवं च ॥ ७ ॥

८] ति० टी०—कालपर्यये कालातिक्रमे व्यतीतमतिक्रममेव कालोऽतिक्रान्त इत्येव वक्तुमर्हसि नापरं किंचिदित्यर्थः ॥ ८ ॥

रा० टी०—तात्कालिककर्तव्यमाह—सामेति । सामोपहितया सान्त्वयुक्तया वाचा रूक्षाणि परिवर्जयन् सन् कालपर्यये कालातिक्रमे स्थितं सुग्रीवं व्यतीतं कालं वक्तुमर्हसि कालो व्यतीत इति बोधयेत्यर्थः ॥ ८ ॥

गो० टी०—सामेति । कालपर्यये कालक्रमे विषये व्यतीतं व्यतिक्रान्तवन्तं सुग्रीवं रूक्षाणि परुषाणि परिवर्जयन् सामोपहितया सान्त्वयुक्तया वाचा वक्तुमर्हसि ॥ ८ ॥ ९ ॥

९ ] ति० टी०—अग्रजेन रामेण ॥ ९ ॥

रा० टी०—स इति । अग्रजेन अनुशिष्टः अर्थो यस्मै स लक्ष्मणः पुरीं किष्किन्धां यथावत्प्रविवेश ॥ ९ ॥

१० ] ति० टी०—भवनं प्रतिजगाम । संरब्धो नातितकालातिक्रमजकोपः ॥ १० ॥

रा० टी०—तत इति । ततः पुरीप्रवेशानन्तरं भ्रातुः प्रियहिते रतः अत एव प्रतिसंरब्धः अन्वेषणकालातीतेन जातकोपो लक्ष्मणः शक्रबाणासनप्रख्यं इन्द्रधनुःसदृशं कालान्तकोपमं संहारककालसदृशं गिरिशृङ्गाभं पर्वतशिखरसदृशं धनुः प्रगृह्य सानुमान् शृङ्गविशिष्टः मन्दर इव कपेः सुग्रीवस्य भवनं जगाम । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—तत इति । प्रतिसंरब्धः प्रतिनिवृत्तहननाध्यवसायः ॥ १० ॥

११ ] ति० टी०—कालान्तकोपमं कालादिवद्भयंकरम् । सानुमान्मन्दर इव जगामेत्यन्वयः ॥ ११ ॥

गो० टी०—सोऽग्रजेनेत्यादिश्लोकद्वयोक्तं विस्तरेणाह—शक्रेत्यादिना । धनुः प्रगृह्य सानुमान् पर्वत इव स्थितः ॥ ११ ॥

१२ ] ति० टी०—यथोक्तकारी रामस्येति शेषः । वचनं

१ पापमिति गो. पाठः । २ अथेति गो. पाठः । ३ उपम इति गो. पाठः । ४ तथेति गो. पाठः ।

कामक्रोधसमुत्थेन भ्रातुः क्रोधाग्निना वृतः । प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्ततः ॥ १३ ॥
सालतालाश्वकर्णांश्च तरसा पातयन्बलात् । पर्यस्यन्गिरिकूटानि द्रुमानन्यांश्च वेगितः ॥ १४ ॥
शिलाश्च शकलीकुर्वन्पद्भ्यां गज इवाशुगः । दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद्द्रुतम् ॥ १५ ॥
तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् । दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसंकटे ॥ १६ ॥
रोषात्प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः । ददर्श वानरान्भीमान्किष्किन्धायां बहिश्चरान् ॥ १७ ॥
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् । शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥
जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे ॥ १८ ॥
तान्गृहीतप्रहरणान्सर्वान्दृष्ट्वा तु लक्ष्मणः । बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः ॥ १९ ॥
तं ते भयपरीताङ्गाः क्षुब्धं दृष्ट्वा प्लवङ्गमाः । कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥
ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः । क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥
तारया सहितः कामी सक्तः कपिवृषस्तदा । न तेषां कपिसिंहानां शुश्राव वचनं तदा ॥ २२ ॥

सुग्रीवं प्रति स्वेन वक्तव्यम् उत्तरं तदुपरि सुग्रीवेण वक्तव्यम् सोत्तरं तदुपरि स्ववक्तव्योत्तरसहितम् मत्वाऽऽलोच्य ॥ १२ ॥

१३] ति० टी०—भ्रातू रामस्य यः कामो मनोरथस्तज्जन्यो यः क्रोधस्तद्विघातजन्यः क्रोधस्तत्समुत्थेन तज्जन्येन क्रोधाग्निना वृतः, अत एवाप्रीतः प्रभञ्जनो वायुरिव वेगेन प्रययौ ॥ १३ ॥

रा० टी०—यथेति । यथोक्तकारी रामोक्तमनतिक्रम्य सकलकार्यकरणशीलः भ्रातुः कामक्रोधसमुत्थेन कामः सीतान्वेषणविषयकोत्कटेच्छा तद्विघातकसुग्रीवानवधानतेत्यर्थः, तस्मात्समुत्थेन जातेन क्रोधाग्निना स्वकोपरूपवह्निना वृतः अत एव अप्रीतः सुग्रीवविषयकप्रीतिरहितः बुद्ध्या बृहस्पतेः समः रामानुजो लक्ष्मणः सोत्तरं दास्यमानसुग्रीवप्रत्युत्तरसहितमुत्तरं सुग्रीवप्रत्युत्तरानन्तरकालकदास्यमानस्वप्रत्युत्तरं वचनं किंचोत्तरमुत्कृष्टं सोत्तरमुत्तरस्वसहितमुत्तरमित्यर्थः, मत्वा निश्चित्य प्रभञ्जनः वेगेन वायुरिव प्रययौ । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—यथोक्तेति । यथोक्तं रामोक्तमनतिक्रम्य करोतीति यथोक्तकारी लक्ष्मणः वचनं सुग्रीवं प्रति स्वेन वक्तव्यं वचनं यथोक्तकारीति विशेषणाद्रामोपदिष्टं वचनमिति सिद्धम् । उत्तरं च स्ववचनस्य सुग्रीवेण वक्ष्यमाणमुत्तरं च सोत्तरं स्वेन वक्ष्यमाणोत्तरसहितं मत्वा आलोच्य प्रययाविति संबन्धः। दूरमिति । एकपदं पौरस्त्यपदं दूरं त्यक्त्वा दूरे क्षिप्त्वा। अनेन द्रुतगमनं सूचितं, द्रुतं गच्छन् हि पुरुषः पुरः पादं दूरे क्षिपति ॥ १२–१५ ॥

१४ ] ति० टी०—तरसोरुवेगेन पर्यस्यन्क्षिपन् । वेगितः संजातवेगः ॥ १४ ॥

१५ ] ति० टी०—एकपदमेकैकपदं दूरं यथा भवति तथा त्यक्त्वा कार्यवशाद्द्रुतं ययौ ॥ १५ ॥

रा० टी०—गमनप्रकारं वर्णयन्नाह—सालेति । बलात् तरसा वेगेन सालादीन् पातयन् गिरिकूटानि अन्यांश्च द्रुमान् पर्यस्यन् उत्पाट्य इतस्ततः प्रक्षिपन् गज इव पद्भ्यां शिलाः शकलीकुर्वन् खण्डीकुर्वाणः एकपदं दूरं त्यक्त्वा दूरे दूरे पादं धृत्वेत्यर्थः, वेगितः आतिवेगं प्राप्तः अत एव आशुगः लक्ष्मणः कार्यवशात् द्रुतं ययौ । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

१६–१७ ] ति० टी०—बलाकीर्णां वानरसेनाव्याप्ताम् । गिरिसंकटे भूधरमध्ये वर्तमानान् ॥ १६ ॥ १७ ॥

रा० टी०—तामिति । गिरिसंकटे पर्वतमध्ये विद्यमानां बलाकीर्णां वानरसेनासंयुक्तामत एव दुर्गां परैरगम्यां हरिराजमहापुरीं तां प्रसिद्धां किष्किन्धां इक्ष्वाकुशार्दूलः लक्ष्मणः अपश्यत् ॥ १६ ॥

रा० टी०—रोषादिति । सुग्रीवं प्रति रोषाद्धेतोः प्रस्फुरमाणौ ओष्ठौ यस्य स लक्ष्मणः किष्किन्धायाः बहिश्चरान् वानरान् ददर्श ॥ १७ ॥

गो० टी०—तामिति । गिरिसंकटे निबिडगिरिमध्ये अनेन पूर्वोक्तगुहाशब्दो विवृतः ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—क्रुद्धलक्ष्मणदर्शनेन भीत्या शैलशृङ्गादिग्रहो वानराणाम् ॥ १८ ॥

रा० टी०—तमिति । वानराः नरा इव कुञ्जरप्रख्याः सर्वे वानराः तं लक्ष्मणं दृष्ट्वा पर्वतान्तरे पर्वतमध्ये विद्यमानानि शतशः शैलशृङ्गाणि प्रवृद्धान् महीरुहांश्च जगृहुः । वाशब्द इवार्थे सार्धश्लोक एकान्वयी ॥ १८ ॥

गो० टी०—तं दृष्ट्वेत्यादि । वानराः पूर्वोक्ता बहिश्चराः ॥ १८–२६ ॥

१९–२२ ] ति० टी०—द्विगुणं क्रुद्धः । मां दृष्ट्वेमे प्रणामं त्यक्त्वा प्रहरणं गृह्णन्तीति कोपद्वैगुण्यम् ॥ १९–२२ ॥

१ तदेति गो. पाठः । २ बहूनिति गो. पाठः । ३ भाषा इति गो. रा. पाठः । ४ हरीनिति गो. पाठः । ५ क्रुद्धमिति गो. पाठः । ६ मृत्यु समायान्तमिति रा. पाठः । ७ रह इति गो. पाठः । ८ वीराणामिति गो. पाठः ।

ततः सचिवसंदिष्टा हरयो रोमहर्षणाः । गिरिकुञ्जरमेघाभा नगरान्निर्ययुस्तदा ॥ २३ ॥
नखदंष्ट्रायुधाः सर्वे वीरा विकृतदर्शनाः । सर्वे शार्दूलदंष्ट्राश्च सर्वे विवृतदर्शनाः ॥ २४ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्यवर्चसः ॥ २५ ॥
ततस्तैः कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः । अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां तां दुरासदाम् ॥ २६ ॥
ततस्ते हरयः सर्वे प्राकारपरिखान्तरात् । निष्क्रम्योदग्रसत्त्वास्तु तस्थुराविष्कृतं तदा ॥ २७ ॥
सुग्रीवस्य प्रमादं च पूर्वजस्यार्थमात्मवान् । दृष्ट्वा क्रोधवशं वीरः पुनरेव जगाम सः ॥ २८ ॥
स दीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः । बभूव नरशार्दूलः सधूम इव पावकः ॥ २९ ॥
बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् । स्वतेजोविषसंभूतः पञ्चास्य इव पन्नगः ॥ ३० ॥
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् । समासाद्याङ्गदस्त्रासाद्विषादमगमत्परम् ॥ ३१ ॥

रा० टी०–तानिति । गृहीतप्रहरणान् स्वीकृतायुधान् तान् वानरान् दृष्ट्वा लक्ष्मणः वह्निरिन्धनाऽनल इव द्विगुणं क्रुद्धः क्रोधेन प्रज्वलितो बभूव ॥ १९ ॥

रा० टी०–तमिति । समायान्तं कालमृत्युं कालमृत्युमिव क्षुब्धं तं लक्ष्मणं दृष्ट्वा भयपरीताङ्गाः शतशो वानराः दिशो विद्रुताः । कालमृत्युशब्द आचारक्विबन्तः ॥ २० ॥

रा० टी०–तत इति । हरिपुङ्गवाः वानरश्रेष्ठाः सुग्रीवस्य भवनं प्रविश्य लक्ष्मणस्यागमनं क्रोधं च न्यवेदयन् ॥ २१ ॥

रा० टी०–तारयेति । कामी विषयभोगेच्छुः अत एव सक्तः तत्र प्रसक्तः तारया सहितः कपिश्रेष्ठः सुग्रीवः कपिसिंहानां वचनं न शुश्राव ॥ २२ ॥

२३ ] ति० टी०–ततः सचिवसंदिष्टाः सुग्रीवं बोधयित्वा तदनुमत्या लक्ष्मणोऽस्माभिर्यावत्प्रवेक्ष्यते तावद्वाह्यलक्ष्मणप्रवेशं निरुन्धानास्तिष्ठत इत्येवं सचिवैर्हनूमदादिभिः संदिष्टा हरयो नगरान्निर्ययुः ॥ २३ ॥

रा० टी०–तत इति । ततः वचनश्रवणाभावानन्तरं सचिवसंदिष्टाः सचिवैराज्ञप्ताः अत एव रोमहर्षणाः जातहर्षाः गिरिकुञ्जरमेघाभाः हरयः नगरात् निर्ययुः ॥ २३ ॥

२४ ] ति० टी०–विकृतदर्शना भीमदर्शनाः । विवृतदर्शनाः प्रकटदर्शनाः ॥ २४ ॥

रा० टी०–नखेति । सर्वे नखदंष्ट्रायुधाः अत एव घोराः भयंकराः सर्वे विकृतदर्शना विकृतनयनाश्च सर्वे शार्दूलदंष्ट्राः शार्दूलसदृशदंष्ट्रावन्तश्च सर्वे विकृताननाश्च ॥ २४ ॥

२५ ] ति० टी०–दशगुणोत्तराः शतनागबला इत्यर्थः । नागसहस्रस्य तुल्यवर्चसो नागसहस्रतेजस्तुल्यतेजसः ॥ २५ ॥

रा० टी०–दशेति । केचित् दशनागबलाः केचित् दशगुणोत्तराः नागबलाद्दशगुणमधिकबला इत्यर्थः, केचित् नागसहस्रस्य तुल्यविक्रमाः बभूवुः । 'तुल्यवर्चसः' इत्यपि पाठः॥२५॥

२६ ] ति० टी०–दुरासदामपश्यदित्यन्वयः ॥ २६ ॥

रा० टी०–तत इति । द्रुमहस्तैः कपिभिर्व्याप्तामत एव दुरासदां किष्किन्धां क्रुद्धो लक्ष्मणः अपश्यत् ॥ २६ ॥

२७ ] ति० टी०–प्राकाराद्बहिर्वर्तिनी परिखा तदन्तरालदेशादपि बहिर्निष्क्रम्याविष्कृतं प्रकटितं यथा तथा तस्थुः ॥ २७ ॥

रा० टी०–तत इति । उदग्रसत्त्वाः महाबलाः सर्वे हरयः प्राकारपरिखान्तरात् निष्क्रम्य आविष्कृतं यथा भवति तथा तस्थुः ॥ २७ ॥

गो० टी०–ततस्त इति । प्राकारपरिघान्तरान्निष्क्रम्य आविष्कृतं प्रकाशं यथा भवति तथा तस्थुः ॥ २७ ॥

२८ ] ति० टी०–प्रमादं च चाह्वानप्रतिरोधं च । पूर्वजस्य रामस्यार्थं च दृष्ट्वा विचार्य ॥ २८ ॥

रा० टी०–सुग्रीवस्येति । आत्मवान् धैर्यवान् लक्ष्मणः सुग्रीवस्य प्रमादं समीपानागमनानुमितानवधानतां पूर्वजस्य ज्येष्ठभ्रातुः अर्थं च दृष्ट्वा ज्ञात्वा पुनः क्रोधवशं कोपकान्तिं जगाम ॥ २८ ॥

गो० टी०–सुग्रीवस्येति । आर्तं कामपीडितम् ॥ २८ ॥

२९ ] ति० टी०–दीर्घ उष्णो महानुच्छ्वासो यस्य ॥ २९ ॥

रा० टी०–स इति । दीर्घोष्णः अत्युष्णः महोच्छ्वासो यस्य स नरशार्दूलः स लक्ष्मणः सधूमः पावक इव बभूव॥२९॥

गो० टी०–स इत्यादि ॥ २९ ॥

३० ] ति० टी०–बाणस्य शल्यमेव स्फुरन्ती जिह्वा यस्य सः सायकासनं धनुरेव भोगो यस्य स्वतेजोरूपविषेण संभृतो व्याप्तः ॥ ३० ॥

रा० टी०–बाणेति । बाणशल्यं बाणाग्रभाग एव स्फुरन्ती जिह्वा यस्य सः सायकासनं धनुरेव भोगः तद्वान् स्वतेजोविषसंभृतः स्वतेजोरूपविषेण व्याप्तः पञ्चास्यः पन्नग इव लक्ष्मणो दृश्यत इति शेषः ॥ ३० ॥

गो० टी०–बाणेति । बाणशल्यं बाणाग्रमेव स्फुरन्ती जिह्वा यस्य स तथा सायकासनं धनुः तदेव भोगः फणा तद्वान् बभूवेति पूर्वेण संबन्धः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०–विषादमगमत् । एतावत्पर्यन्तं रामकार्यं न चिन्तितमिति विषादः ॥ ३१ ॥

---

१ नगर्या इति गो. पाठः । २ घोराः सर्वे इति गो. पाठः । ३ दर्पा इति गो. पाठः । ४ च विकृताननाः इति गो. रा. पाठः । ५ विक्रमा इति गो. रा. पाठः । ६ कृत्स्नां इति गो. पाठः । ७ परिघेति गो. पाठः । ८ पूर्वजं चार्तमिति गो.पाठः । ९ संघात इति गो. पाठः । १० भृशमिति गो. पाठः । ११ वश कान्ताविति धातुगणपाठादयमर्थो लभ्यते ।

सोऽङ्गदं रोषताम्राक्षः संदिदेश महायशाः । सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ॥ ३२ ॥
एष रामानुजः प्राप्तस्त्वत्सकाशमरिन्दम । भ्रातुर्व्यसनसंतप्तो द्वारि तिष्ठति लक्ष्मणः ॥ ३३ ॥
तस्य वाक्यं यदि रुचिः क्रियतां साधु वानरः । इत्युक्त्वा शीघ्रमागच्छ वत्स वाक्यमरिन्दम ॥ ३४ ॥
लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् । पितुः समीपमागम्य सौमित्रिरयमागतः ॥ ३५ ॥
अथाङ्गदस्तस्य सुतीव्रवाचा संभ्रान्तभावः परदीनवक्त्रः ।
निर्गत्य पूर्वं नृपतेस्तरस्वी ततो रुमायाश्चरणौ ववन्दे ॥ ३६ ॥
संगृह्य पादौ पितुरुग्रतेजा जग्राह मातुः पुनरेव पादौ ।
पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तदर्थम् ॥ ॥ ३७ ॥
स निद्राक्लान्तसंवीतो वानरो न विबुद्धवान् । बभूव मदमत्तश्च मदनेन च मोहितः ॥ ३८ ॥
ततः किलकिलां चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः । प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ॥ ३९ ॥

रा० टी०–तमिति । दीप्तं कालाग्निमिव कोपितं नागेन्द्रमिव तं लक्ष्मणं समासाद्य प्राप्य त्रासात् लक्ष्मणकोपदर्शनजनितोद्वेगात् परं विषादमगमत् ॥ ३१ ॥

३२ ] ति० टी०–इत्युत एवंप्रकारेणेत्यर्थः ॥ ३२ ॥

रा० टी०–स इति । दोषताम्राक्षः स लक्ष्मणः अङ्गदं संदिदेश संदेशं कथयामास । तदाकारमाह–हे वत्स ! इति एवं ममागमनं सुग्रीवः कथ्यताम् ॥ ३२ ॥

गो० टी०–सोऽङ्गदमित्यादि । वत्स ! अरिन्दमः एष रामानुजः त्वत्सकाशं प्राप्त इति ममागमनं सुग्रीवः कथ्यताम् । भ्रातृव्यसनसंतप्तः स लक्ष्मणः द्वारि तिष्ठति । तस्य वाक्ये तव यदि रुचिः तर्हि साधु युक्तं तत्र तव गमनं वा अत्रैव तस्यानयनं वा क्रियताम् इत्येतद्वाक्यमुक्त्वा शीघ्रमागच्छ इति सोऽङ्गदं संदिदेशेति संबन्धः ॥ ३२–३४ ॥

३३ ] ति० टी०–तं प्रकारं दर्शयति—एष इति ॥३३॥

रा० टी०–कथनप्रकारमाह–एष इति । भ्रातुर्व्यसनसंतप्तः एष रामानुजः त्वत्सकाशं त्वत्समीपं प्राप्तः सन् द्वारि तिष्ठति ३३

३४–३५ ] ति० टी०–इदमुक्तं मम वाक्यं तस्मै इत्युक्तप्रकारेणोक्त्वा स वानरः सुग्रीवः साधु साधुकारी यथा भवति तथा क्रियताम् । अनन्तरं तस्यास्माकु यदि रुचिर्भवति तदा तस्य वाक्यं श्रुत्वा शीघ्रमागच्छ ॥ ३४ ॥ ३५ ॥

रा० टी०–तस्येति । तस्य लक्ष्मणस्य वाक्ये यदि रुचिः तर्हि साधु क्रियताम् इतीदं मम वाक्यमुक्त्वा शीघ्रमागच्छ३४

रा० टी०–लक्ष्मणस्येति । लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टः व्याप्तशोकोऽङ्गदः पितुः समीपमागम्य अयं सौमित्रिरागत इत्यब्रवीत् ॥ ३५ ॥

गो० टी०–लक्ष्मणस्येति । अयमागतमित्यनन्तरमितिकरणं बोध्यम् ॥ ३५ ॥

३६ ] ति० टी०–'लक्ष्मणस्य' इति श्लोकेन संक्षिप्योक्तस्यार्थस्य विस्तरः—अथेति । संभ्रान्तभावः संभ्रान्तचित्तः । परदीनवक्त्रः परमतिशयेन दीनं वक्त्रं यस्य सः । 'परिदीन—' इति पाठान्तरम् । निर्गत्य लक्ष्मणसंनिहितदेशात्परावृत्त्येत्यर्थः । पूर्वं नृपतेस्ततो रुमायाः । इदमुपलक्षणम् ताराचरणावित्यन्वयः ॥ ३६ ॥

रा० टी०–गमनप्रकारं बोधयन्नाह–अथेति । अथ लक्ष्मणवचनश्रवणानन्तरं तस्य लक्ष्मणस्य सुतीव्रवाचा उग्रवचनेन संभ्रान्तभावः संभ्रान्तचित्तः अत एव परदीनवक्त्रः म्लानमुखोऽङ्गदः निर्गत्य लक्ष्मणसमीपदेशादागत्य पूर्वं नृपतेः सुग्रीवस्य चरणौ ववन्दे ततो रुमायास्तदुपलक्षितताराया्श्च चरणौ ववन्दे ॥ ३६ ॥

गो० टी०–उक्तं विस्तृणाति–अथेति ॥ ३६ ॥

३७ ] ति० टी०–तदेव विस्तारयति—संगृह्येति । मातुस्तारायाः ॥ ३७ ॥

रा० टी०–संगृह्येति । उग्रतेजा अङ्गदः पितुः पादौ संगृह्य पुनर्मातुस्तारायाः पादौ जग्राह रुमायाश्च पादौ निपीडयित्वा निपीड्य ततः तम् अयं सौमित्रिरागतःइत्येतद्रूपमर्थं निवेदयामास ॥ ३७ ॥

गो० टी०–संगृह्येति । मातुः पुनरेवेत्यनेन मातुः पृथग्वन्दनमुच्यते ॥ ३७ ॥

३८ ] ति० टी०–निद्रया क्लान्तः संवीतः व्याप्तश्चेत्यर्थः । न विबुद्धवान् तदर्तिं तद्वचनं चेत्यर्थः । यतो मदनेन मोहितो मदमत्तश्च बभूवासीत् ॥ ३८ ॥

रा० टी०–स इति । यः मदनेन कामेन मोहितः अत एव मदमत्तः मादकद्रव्यादिनोन्मत्तः अत एव निद्राक्लान्तसंवीतः निद्राक्लान्तेन निद्राजनितग्लान्या संवीतो व्याप्तो बभूव स सुग्रीवो न विबुद्धवान् प्रबोधं प्राप ॥ ३८ ॥

गो० टी०–स इति । मदमत्तः पानकृतमदमत्तः ॥ ३८ ॥

३९ ] ति० टी०–ततोऽङ्गदस्य सुग्रीवसमीपगमनानन्तरं

१ अरिन्दमः इति गो. पाठः । २ वाक्ये इति गो. रा. पाठः । ३ वानरेति गो. पाठः । ४ वचो निशम्येति गो. पाठः । ५ निपत्य तूर्णमिति गो. पाठः । ६ कुमार इति गो. पाठः । ७ अग्र्येति गो. पाठः । ८ तमिति रा. पाठः । ९ मंदेति गो. पाठः ।

ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् । सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ॥ ४० ॥
तेन शब्देन महता प्रत्यबुध्यत वानरः । मदविह्वलताम्राक्षो व्याकुलः स्रग्विभूषणः ॥ ४१ ॥
अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ । मन्त्रिणौ वानरेन्द्रस्य संमतोदारदर्शनौ[1] ॥ ४२ ॥
प्लक्षश्चैव प्रभावश्च[2] मन्त्रिणावर्थधर्मयोः । वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ॥ ४३ ॥
प्रसादयित्वा सुग्रीवं वचनैः सार्थनिश्चितैः[3] । आसीनं पर्युपासीनौ यथा शक्रं मरुत्पतिम् ॥ ४४ ॥
सत्यसंधौ महाभागौ भ्रातरौ रामलक्ष्मणौ । मनुष्यभावं[4] संप्राप्तौ राज्यार्हौ राज्यदायिनौ ॥ ४५ ॥
तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः । यस्य भीताः प्रवेपन्तो नादान्मुञ्चन्ति वानराः ॥ ४६ ॥
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः । व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात् ॥ ४७ ॥
अयं च तनयो राजंस्ताराया दयितोऽङ्गदः । लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयाऽनघ ॥ ४८ ॥
सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्यवान् । वानरान्वानरपते चक्षुषा निर्दहन्निव ॥ ४९ ॥
तस्य मूर्ध्ना प्रणामं[5] त्वं सपुत्रः सहबान्धवः[6] । गच्छ शीघ्रं महाराज रोषो ह्यद्योपशाम्यताम्[7] ॥ ५० ॥

वानराणां भयक्रोधादिजः शब्दसमूहः किलकिला । तं लक्ष्मणम् ॥ ३९ ॥

रा० टी०–तत इति । ततः सुग्रीवप्रबोधाभावानन्तरं क्रुद्धं लक्ष्मणं प्रेक्ष्य भयमोहितचेतसः वानराः अङ्गदप्रभृतयस्तं प्रसादयन्तः सन्तः किलकिलां दीनतासूचकस्वजातीयशब्दं चक्रुः ॥ ३९ ॥

गो० टी०–तत इति । किलकिलेति वानराणां शब्द उच्यते ॥ ३९ ॥

४०–४१ ] ति० टी०–ते लक्ष्मणं दृष्ट्वा महौघनिभं तच्छब्दसदृशशब्दं वज्रादिसदृशशब्दं च समं सह सिंहनादं चक्रुः सुग्रीवोद्बोधनायेति शेषः ॥ ४० ॥ ४१ ॥

रा० टी०––ते इति । ते बुद्धिमन्तो वानराः लक्ष्मणस्य लक्ष्मणं दृष्ट्वा महौघनिभं महाप्रवाहस्वनसदृशस्वनं वज्राशनिसमस्वनं च सिंहनादं च सममेककालावच्छेदेन समीपतः सुग्रीवसंनिधौ चक्रुः सुग्रीवप्रबोधायेति शेषः ॥ ४० ॥

रा० टी०–तेनेति । मदविह्वलताम्राक्षः मदेन विह्वलः ताम्रे अक्षिणी यस्य स एव स इति कर्मधारयः अत एव व्याकुलः अस्वस्थचित्तः स्रग्विभूषणः मालया शोभितः वानरः सुग्रीवः तेन महता शब्देन प्रत्यबुध्यत गतनिद्रोऽभवत् ॥ ४१ ॥

गो० टी०–त इति । महौघनिभं महाप्रवाहतुल्यं लक्ष्मणम् । समं युगपत् ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०–अथेति । वानरशब्देन प्रबुद्धस्य वानरेन्द्रस्य सुग्रीवस्य समीपमङ्गदवचः श्रुत्वा तेनाङ्गदेनैव सह मन्त्रिणौ वानरेन्द्रस्य समीपमागतौ संमतौ च तावुदारदर्शनौ च संमतोदारदर्शनौ ॥ ४२ ॥

रा० टी०–अथेति । अथ प्रबोधानन्तरमङ्गदवचः लक्ष्मणसंदेशकथनाय राजा भवद्भ्यां गन्तव्य इत्याकारिकामङ्गदोक्तिं श्रुत्वा वानरेन्द्रस्य संमतौ प्रीतिविषयीभूतौ उदारं दर्शनं ययोस्तावेव ताविति कर्मधारयः वानरेन्द्रस्य मन्त्रिणौ तेनाङ्गदेन सह समागतौ । वानरेन्द्रस्येत्युभयान्वयि ॥ ४२ ॥

गो० टी०–अथेति । तेनैव समागतौ तदाह्वानेन समागतौ मन्त्रिणौ प्रशस्तमन्त्रौ अर्थधर्मयोर्विषये उच्चावचं वक्तु प्राप्तं लक्ष्मणं शशंसतुः ॥ ४२ ॥ ४३ ॥

४३ ] ति० टी०—कौ तौ तत्राह–प्लक्ष इत्यादि । अर्थधर्मयोर्विषय उच्चावचं स्वयं वक्तुं प्राप्तं लक्ष्मणं शशंसतुः॥ ४३॥

रा० टी०–मन्त्रिणोर्नाम निर्दिशन्नाह–प्लक्ष इति । अर्थधर्मयोः उच्चावचं वक्तुं बोधयितुं यौ मन्त्रिणौ आसातामिति शेषः, तौ प्लक्षः प्रभावश्च प्राप्तं लक्ष्मणं शशंसतुः सुग्रीवसमीपे इति शेषः ॥ ४३ ॥

४४ ] ति० टी०–सार्थनिष्ठितैरर्थनिश्चयसहितैर्वचनैः प्रसादयित्वा शशंसतुरित्यन्वयः ॥ ४४ ॥

४५ ] ति० टी०–राज्यार्हौ त्रिलोकीराज्यार्हौ । राज्यदायिनौ तवेति शेषः । मनुष्यभावं प्राप्तावित्यनेन वस्तुतो न मनुष्याविति सूचितम् ॥ ४५ ॥

४६ ] ति० टी०—यस्य भीता यस्माद्भीताः ॥ ४६ ॥

४७–५० ] ति० टी०–वाक्यं रामवाक्यं सारथिर्यस्य व्यवसायः कर्तव्यार्थनिश्चयः स रथो यस्य ॥ ४७–५० ॥

रा० टी०–शंसनप्रकारमाह–प्रसादयित्वेति । मरुत्पतिं देवेशमिवासीनं सुग्रीवं पर्युपासीनौ समीपे स्थितौ मन्त्रिणौ सार्थनिश्चयैः अर्थनिश्चयसहितैर्वचनैः प्रसादयित्वा मनुष्यभावं मनुष्याकृतिं संप्राप्तौ नित्यं स्वीकृतवन्तौ राज्यदायिनौ तुभ्यमिति शेषः, यौ रामलक्ष्मणौ तयोर्मध्ये एकः यस्य भीता वानराः प्रवेपन्तः सन्तो महानादान् मुञ्चन्ति स धनुष्पाणिर्लक्ष्मणो द्वारि तिष्ठति अर्धषट्कमेकान्वयि॥४४–४६॥

१ दर्शिनाविति गो. पाठः । २ प्रभासश्चेति लि. पु. पाठः । ३ सामेति गो. पाठः । ४ वयस्येति गो. पाठः । ५ प्रणम्येति गो.पाठः । ६ बन्धुभिरिति गो. पाठः । ७ ह्यस्य निवर्त्यतामिति गो. पाठः ।

यथा हि रामो धर्मात्मा तत्कुरुष्व समाहितः । राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

अङ्गदादितः श्रुतलक्ष्मणक्रोधाटोपमतः सुभीतं सुग्रीव सेवासमयविज्ञो हनुमान्स्वसंकेतितकालातिक्रमएव रामकोपकारणं प्रतिभात्यतः प्रसाद्य लक्ष्मणं भवेः प्रयाणसंनद्ध इति प्रवर्तयति ।

अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह । लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १ ॥

स च तानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् । मन्त्रज्ञान्मन्त्रकुशलो मन्त्रेषु परिनिष्ठितः ॥ २ ॥

न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् । लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३ ॥

असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः । मम दोषानसंभूताञ्श्रावितो राघवानुजः ॥ ४ ॥

---

रा० टी०—स इति । वाक्यं रामवचनं सारथिर्यस्य व्यवसायः करणीयार्थविषयकनिश्चयः रथो यस्य स लक्ष्मणः रामशासनादेव प्राप्तः ॥ ४७ ॥

रा० टी०—अयमिति । ताराया दयितः प्रियस्तनयोऽयमङ्गदस्ते तव सकाशं समीपं लक्ष्मणेन त्वरया प्रेषितः ॥४८॥

रा० टी०—स इति । रोषपरीताक्षः सोऽयं लक्ष्मणः वानरान् चक्षुषा निर्दहन्निव द्वारि तिष्ठति ॥ ४९ ॥

रा० टी०—तस्येति । तस्य समीपमयैव शीघ्रं गच्छ । तत्प्रयोजनमाह—रोषः लक्ष्मणकोपः प्रशाम्यताम् तत्र न श्रम इत्याह—मूर्ध्ना प्रणामं त्वं कुरुष्वेति शेषः हिरेवार्थकः ॥ ५० ॥

गो० टी०—प्रसादयित्वेत्यादि । सामनिश्चितैः सान्त्वविषये निश्चितैः ऊचतुरिति शेषः । यस्येति । यस्य भीताः यस्मात् भीताः वाक्यसारथिः रामवाक्यप्रेरित इत्यर्थः कथमिदं दुर्गमेकः प्रविष्टवानित्यत्राह—व्यवसायरथ इति । प्रतिपक्षनिरासाध्यवसायरथः तस्य तस्मै स्वसमये स्वमर्यादायाम् सत्यप्रतिश्रवाः सत्यप्रतिज्ञो भव ॥ ४४–६१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

५१ ] ति० टी०—धर्मात्मा वदतीति शेषः । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०—यथेति । धर्मात्मा रामः यथा येन प्रकारेण यदुपदिशतीति शेषः तेन प्रकारेण तत् कुरुष्व रामो यथा समाहितः स्वस्थचित्तो भवेत् तत्कुरुष्व अत एव समये स्वकृतान्वेषणसंकेते तिष्ठ अन्वेषणं कुरुष्वेत्यर्थः, अत एव सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥ ६१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किधाकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

१ ] ति० टी०—अङ्गदस्येति ॥ १ ॥

रा० टी०—मन्त्रिप्रार्थनानन्तरकालिकं सुग्रीववृत्तान्तमुपक्रमते—अङ्गदस्येत्यादिभिः । अङ्गदस्य अङ्गदप्रेरितमन्त्रिणोर्वचः श्रुत्वा आत्मवान् धैर्यवान्सुग्रीवः आसनं मुमोच शयनासनाद्बहिस्तस्थौ ॥ १ ॥

गो० टी०—अथ हनुमता हितोपदेशो द्वात्रिंशे—अङ्गदस्येत्यादि । अङ्गदस्य प्राधान्यादङ्गदस्य वचः श्रुत्वेत्युक्तम् आसनं मुमोच भयेनासनादुदतिष्ठदित्यर्थः ॥ १ ॥

२ ] ति० टी०—गुरुलाघवं गुरुत्वलघुत्वे इत्यर्थः ॥ २ ॥

रा० टी०—स इति । गुरुलाघवं गुरुत्वलघुत्वे रामे गुरुत्वं स्वस्मिन् लघुत्वं चेत्यर्थः, निश्चित्य मन्त्रेषु परिनिष्ठितः तद्विषयकातीवज्ञानवान् अत एव मन्त्रकुशलः मन्त्रप्रयोगे निपुणः स सुग्रीवः मन्त्रज्ञान् तान् मन्त्रिणः वाक्यमब्रवीत्॥२॥

गो० टी०—सचिवानिति । मन्त्रकुशलः मन्त्रप्रयोगकुशलः ॥ २ ॥

३ ] ति० टी०—दुर्व्याहृतमनुचितवचनमुक्तम् । दुरनुष्ठितमनुचितं कृत्यं कृतमिति शेषः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—नेति । मे मया किंचिन्न दुर्व्याहृतं दुरुक्तं रामायेति शेषः, नापि किंचिन्मे दुरनुष्ठितमनिष्टं कृतं रामस्येति शेषः, अतः लक्ष्मणः किं किमर्थं क्रुद्धः इत्यहं चिन्तये विचारयामि ॥ ३ ॥

गो० टी०—न म इति । दुर्व्याहृतं परुषभाषणम्, दुरनुष्ठितम् अपकारः किं किमर्थम् ॥ ३ ॥

४ ] ति० टी०—कोपकारणमूहयति—असुहृद्भिरिति । असुहृदः शत्रवः अमित्रा अपकारिणः अन्तरं छिद्रम् असंभूताननुत्पन्नान् श्रावितः नूनमिति शेषः ॥ ४ ॥

रा० टी०—स्वनिश्चितमाह—असुहृद्भिः मलिनान्तः करणैः अत एव नित्यमन्तरदर्शिभिः स्वबुद्धिप्रकल्पितछिद्रबोधनशीलैः ममामित्रैः रिपुभिः असंभूतान् मया अनिष्पादितान् मम

---

१ यदाहेति गो. पाठः । २ श्रवा इति गो. पाठः । ३ परिनिष्ठितानिति गो. पाठः ।

अत्र तावद्यथाबुद्धिः सर्वैरेव यथाविधि । भावस्य निश्चयस्तावद्विज्ञेयो निपुणं शनैः ॥ ५ ॥
न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् । मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६ ॥
सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम् । अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७ ॥
अतोनिमित्तं त्रस्तोऽहं रामेण तु महात्मना । यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥
सुग्रीवेणैवमुक्ते तु हनूमान्हरिपुंगवः । उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९ ॥
सर्वथा नैतदाश्चर्यं यत्त्वं हरिगणेश्वर । न विस्मरस्यविस्रब्धमुपकारं कृतं शुभम् ॥ १० ॥
राघवेण तु वीरेण भयमुत्सृज्य दूरतः । त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११ ॥
सर्वथा प्रणयात्क्रुद्धो राघवो नात्र संशयः । भ्रातरं संप्रहितवाँल्लक्ष्मणं लक्ष्मिवर्धनम् ॥ १२ ॥

---

दोषान् राघवानुजः श्रावितः कारणमन्तरा लक्ष्मणकोपो न संभवतीति तात्पर्यम् ॥ ४ ॥

गो०टी०—असुहृद्भिरिति । असुहृद्भिः अशोभनहृदयैः॥४॥

५ ] ति० टी०—अत्र लक्ष्मणकोपविषये । तावत्प्रथमतः । यथा तत्त्वात्मिका बुद्धिर्ज्ञानं यस्मिन्निश्चये स भावस्य कोपस्य निश्चयस्तात्त्विककोपनिमित्तस्य निश्चयो विज्ञेयः कर्तव्यः ॥ ५ ॥

रा० टी०—अत्रेति । अत्र अस्मिन् समये भावस्य मच्चित्तान्तकस्य लक्ष्मणस्य निश्चयोऽभिप्रायः यथाबुद्धि स्वस्वबुद्ध्यनुरूपं यथाविधि विधिमनतिक्रम्य निपुणं यथा भवति तथा सर्वैः भवद्भिः तावन्मत्सङ्गमात्पूर्वमेव शनैर्विज्ञेयः ॥ ५ ॥

गो० टी०—अत्रेति । तावत् प्रथमम् यथाविधि यथाक्रमम् । भावस्य चेष्टायाः निश्चयः अध्यवसायः ॥ ५ ॥

६ ] ति० टी०—त्रासः । मदपराधमूल इति शेषः । कुतस्तर्हि त्रासोऽत आह—मित्रमिति । अस्थानेऽकाण्डे वास्तवापराधाभावेऽपि रिपुकृतमिथ्योपजापेन कुपितं संजातकोपं मित्रं संभ्रमं भयं जनयत्येव ॥ ६ ॥

रा० टी०—नेति । राघवात् रामान्न मम त्रासः अत एव लक्ष्मणादपि न त्रासः अस्थानकुपितमपराधाभावेन अनवसरकोपविशिष्टं तु संभ्रमं भयं जनयत्येव । एतेन अयं मित्रद्रोहीति लोकोक्तेर्बिभेमीति सूचितम् । न त्रास इत्यनेनापराधेऽपि राघवः शरणागतं न त्यजतीति सुग्रीवनिश्चयः सूचितः । 'कथंचिदुपकारेण कृतेनैकेन तुष्यति ॥ न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ इत्यादिवचनमत्रानुसंधेयम् ॥ ६ ॥

गो० टी०—निजभयकृतमासनचलनमपह्नुते—न खल्विति६

७ ] ति० टी०—रिपुजोपजापपरिहारेण सख्यपालनं दुष्करमित्याह—सर्वथेति । अल्पेऽपि उपजापे इति शेषः॥७॥

रा० टी०—सर्वथेति । मित्रं सर्वथा सर्वप्रकारेण सुकरममायासेन मित्रं लभ्यते इत्यर्थः, प्रतिपालनं मित्रस्य रक्षणं तु दुष्करं तत्र हेतुः—चित्तानामनित्यत्वात्प्रतिक्षणं विषयान्तरवर्तित्वाद्धेतोः अल्पे जने प्रीतिर्भिद्यते ॥ ७ ॥

गो० टी०—मित्रस्यास्थानकोपसंभावनायां लोकन्यायमाह—सर्वथेति । अल्पे वैषम्य इति शेषः ॥ ७ ॥

८ ] ति० टी०—अतोनिमित्तमस्मान्निमित्तात् । अथ स्वदोषशङ्कानिवृत्तये कृतज्ञतां मन्त्रिभ्यो दर्शयति—रामेण त्विति॥८॥

रा० टी०—अत इति । महात्मना रामेण यत् ममोपकृतं तत्प्रतिकर्तुं मया न शक्यमतः इदं निमित्तं त्रस्तोऽहम् ॥ ८ ॥

गो० टी०—तत इति । महात्मना रामेण मम यदुपकृतं तन्मया प्रतिकर्तुं न शक्यम् । अतो निमित्तम् अस्मान्निमित्तात् त्रस्तोऽहमिति संबन्धः ॥ ८ ॥

९ ] ति० टी०—अथ मुख्यमन्त्री हनुमान्कोपनिमित्तं निश्चित्याह—सुग्रीवेणेति । तर्को युक्तिः ॥ ९ ॥

रा० टी०—सुग्रीवेणेति । सुग्रीवेण एवमुक्ते सति हरिपुङ्गवो हनुमान् वानरमन्त्रिणां मध्ये स्वेन स्वकीयेन तर्केण अनुमानेन उवाच ॥ ९ ॥

गो० टी०—सुग्रीवेणेति । तर्केण ऊहेन ॥ ९ ॥

१० ] ति० टी०—अथ निश्चयं विवक्षुः स्वस्य गुणग्राहित्वरूपं मान्त्रिलक्षणं प्रकटयति—सर्वथेति ॥ १० ॥

रा० टी०—सर्वथेति । हे हरिगणेश्वर ! अविस्रब्धमतिविश्वस्तं यथा भवति तथा कृतमुपकारं यत् सर्वथा त्वं न विस्मरसि तदेतत् आश्चर्यं न, महात्मनां स्वभाव एवायमिति तात्पर्यम् ॥ १० ॥

गो० टी०—सर्वथेति । उपकारकृतम् उपकारकारिणम् ॥ १०–१९ ॥

११ ] ति० टी०—उपकारमेवाह—राघवेणेति । भयं वालिपराक्रमजं वालिनश्छलेन वधकृतं लोकापवादजं वा ॥११॥

रा० टी०—राघवेणेति । राघवेण भयं दूरतः उत्सृज्य वाली हतः, एतेन राघवस्य त्वय्यतीव कृपेति सूचितम् ॥११॥

१२ ] ति० टी०—प्रणयात्क्रुद्धः । न तु त्वत्कृतोपजापत इत्यर्थः ॥ १२ ॥

रा० टी०—सर्वथेति । सर्वथा सर्वप्रकारेण प्रणयात् त्वद्विषयकस्नेहादेव राघवः क्रुद्धः त्वद्विघातकापराधजनितदोषं निवर्तयितुं क्रोधाभासमाश्रितवानित्यर्थः, तत्र संशयो न अत एव भ्रातरं संप्रहितवान् प्रेषितवान् ॥ १२ ॥

---

१ यथाबुद्धीति गो. रा. पाठः । २ न्नेति गो. पाठः । ३ उक्त इति गो. पाठः । ४ हनुमानिति गो. पाठः । ५ सुस्निग्धमुपकारकृतमिति गो. पाठः ।

त्वं प्रमत्तो न जानीषे कालं कालविदां वर । फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छुभा ॥ १३ ॥
निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका । प्रसन्नाश्च दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥
प्राप्तमुद्योगकालं तु नावैषि हरिपुंगव । त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥
आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् । वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥
कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ १७ ॥
नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् । इत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥ १८ ॥
अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः । सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९ ॥
न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् । पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः ससुहृज्जनः । राजंस्तिष्ठ स्वसमये भर्तुर्भार्येव तद्वशे ॥ २१ ॥

---

१३-१४] ति० टी०-प्रणयकोपस्यापि निमित्ताभासं दर्शयति—त्वमिति । कालं प्रतिज्ञातं सीतान्वेषणकालम् । प्रवृत्ता प्रकर्षेण वृत्ता गतप्रायेति यावत् ॥ १३ ॥ १४ ॥

रा० टी०-अपराधमेव बोधयति-त्वमिति । हे कालविदांवर ! प्रमत्तः असावधानचित्तस्त्वं कालं स्वप्रतिज्ञातान्वेषणसमयं न जानीषे स्मरसि । ननु कः स काल इत्यत आह-फुल्लसप्तच्छदश्यामा पुष्पितसप्तच्छदहेतुकश्यामत्वविशिष्टा शुभा गमनयोग्या शरत् प्रवृत्ता ॥ १३ ॥

रा० टी०-तल्लक्षणमाह-निर्मलेति । प्रनष्टाः बलाहकाः मेघाः यस्यां सा अत एव निर्मलग्रहनक्षत्रा द्यौः प्रकाशते इति शेषः, अत एव दिक्प्रभृतयः प्रसन्नाः ॥ १४ ॥

१५ ] ति० टी०-व्यक्तं ज्ञात्वेति शेषः ॥ १५ ॥

रा० टी०-प्राप्तमिति । हे हरिपुङ्गव ! प्राप्तमुद्योगकालं यतो नावैषि अतस्त्वं प्रमत्तः इति व्यक्तम् अत एव अयं लक्ष्मण इहागतः ॥ १५ ॥

१६-१७ ] ति० टी०-पुरुषान्तराल्लक्ष्मणाच्छ्रुतं परुषं वचनं ते त्वया मर्षणीयम् । तत्संभावनमालक्ष्यायमुपदेशः ॥ १६ ॥ १७ ॥

रा० टी०-आर्तस्येति । पुरुषान्तरात् लक्ष्मणात् श्रुतमिति शेषः हृतदारस्य राघवस्य परुषं परुषाभासं वचनं ते त्वया मर्षणीयं क्षन्तव्यम् ॥ १६ ॥

गो० टी०-आर्तस्येति । पुरुषान्तरात् लक्ष्मणात् आगतमिति शेषः । अत्र मर्षणीयत्वे बहवो हेतव उपन्यस्यन्ते । हृतदारस्य परुषवचनं मर्षणीयम् । एवमार्तस्येत्यादौ राघवस्य महात्मनः परमात्मनः सर्वस्वामिन इत्यर्थः ॥ १६ ॥

रा० टी०-कृतेति । अञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् अन्तरेण विना कृतापराधस्य ते अन्यत् क्षमं योग्यं न पश्यामि ॥ १७ ॥

गो० टी०-अथापराधप्रायश्चित्तं विदधाति-कृतेति । कृतापराधस्य न त्वारब्धापराधस्य । अपराधारम्भकाले सानुतापो यदि लघुप्रायश्चित्तेन तदा तस्य परिहारः स्यात् न तथाभूः किंतु निश्चयेन कृतापराधोऽसि तेन अञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनादन्तरेण प्रसादनं विना अन्यत् क्षमम् अपराधपरिहारक्षमं साधनं न पश्यामि 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इति शास्त्रात् । लक्ष्मणस्येत्यनेन तदीयं प्रत्यञ्जलिरेव भगवदपचारपरिहारक इत्युक्तम् । त्वदङ्घ्रिमुद्दिश्येतिवत् । ते इत्यनेनात्राधिकारिनियमो नास्तीत्युच्यते । अञ्जलिमित्येकवचनेन सकृत्करणमेवालमित्युक्तम् । बद्ध्वेत्यनेन देशकालनियमाभावः सूचितः । बद्ध्वा लक्ष्मणस्य प्रसादनादित्यनेन क्षिप्रं देवप्रसादिनीत्यस्यार्थ उक्तः ॥ १७ ॥

१८-१९ ] ति० टी०-नियुक्तैः हितोपदेशे इति शेषः । भयं त्यक्त्वा ब्रवीमि राजानमपि कार्यवशात्परस्मा अञ्जलिं कुर्विति वचोऽवधृतं निश्चितं वदामि ॥ १८ ॥ १९ ॥

रा० टी०-ननु मद्भयरहित इव त्वं कथं ब्रवीषीत्यत आह-नियुक्तैरिति । नियुक्तैः युक्तार्थबोधने नियोजितैः पार्थिवोऽवश्यं हितं वाच्यः इत एव भयं त्यक्त्वा अवधृतं हितत्वेन निश्चितं वचो ब्रवीमि ॥ १८ ॥

गो० टी०-किमेवं मां प्रति हीनवृत्तमुपदिष्टवानसीत्यत्राह-नियुक्तैरिति ॥ १८ ॥

रा०टी०-राघवस्य प्रसादने तवैव हितं तत्कार्यं त्वन्यथापि सेत्स्यतीत्याह-अभीति । अभिक्रुद्धो राघवः चापमुद्यम्य सदेवासुरगन्धर्वं देवादिसहितं जगत् स्ववशे स्थापयितुं समर्थः । एतेन रावणमपि स्ववशे स्थापयितुं समर्थ एवेति बोधितम्॥१९॥

गो० टी०-कथमिदं हितं तत्राह-अभिक्रुद्ध इति ॥१९॥

२०-२१ ] ति० टी०-यः पुनः प्रसाद्यो भवेत्स कोपयितुं न क्षमो न युक्तः ॥ २० ॥ २१ ॥

रा० टी०-नेति । यो रामः पुनः निरन्तरं प्रसाद्यः सर्वैरिति शेषः, सः कृतज्ञेन अत एव पूर्वोपकारं स्मरता त्वया विशेषतः प्रसाद्यः अत एव कोपयितुं न क्षमः ॥ २० ॥

गो० टी०-हेत्वन्तरमाह-न स इति ॥ २० ॥

१ शिवेति गो. पाठः । २ अत इति गो. पाठः

**न रामरामानुजशासनं त्वया कपीन्द्र युक्तं मनसाऽप्यपोहितुम् ।**
**मनो हि ते ज्ञास्यति मानुषं बलं सराघवस्यास्य सुरेन्द्रवर्चसः ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ।

अङ्गदादिभिः किष्किन्धा प्रवेशितो लक्ष्मणो राजमार्गोभयतोऽद्भुततमान्युच्चराजभवनायाश्चर्याणि विलोकयन्यावत्सुग्रीवगृह प्रविष्टस्तावदनेकविलासोपस्करैरापूर्णेऽन्तर्भवनेऽनेकातोद्यमधुरध्वनिमिश्रितगीतध्वनिं मञ्जुमञ्जीरशिञ्जितादि च श्रुत्वैकान्तेऽवकाशं ददद्धनुष्टङ्कारं विधाय तस्थौ । श्रुतज्याघोषेण सुग्रीवेण प्रेषिता तारा सकलसेनासमानयनाय सुग्रीवकृतनीलप्रेषणादि प्रस्तूय लक्ष्मणसान्त्वे प्रयतते । किंचिच्छान्तरोषो लक्ष्मणस्तारयाऽन्तःपुरं प्रापितः सुग्रीव ददर्श ।

**अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा । प्रविवेश गुहां रम्यां[1] किष्किन्धां रामशासनात् ॥ १ ॥**
**द्वारस्था हरयस्तत्र महाकाया महाबलाः । बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २ ॥**
**निःश्वसन्तं[2] तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम् । बभूवुर्हरयस्त्रस्ता न चैनं पर्यवारयन् ॥ ३ ॥**
**स तां रत्नमयीं दिव्यां श्रीमान्पुष्पितकाननाम् । रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४ ॥**

रा० टी०–प्रसादनोपायमाह–तस्येति । तस्य राघवस्य पादौ मूर्ध्ना प्रणम्य समये प्राप्तकाले भ्रातुर्भार्येव तद्वशे तिष्ठस्व तिष्ठ ॥ २१ ॥

गो० टी०–अञ्जलिं बद्ध्वेत्युक्तं विवृणोति–तस्येति । स्वसमये तिष्ठ तद्वशे च तिष्ठ ॥ २१ ॥

२२ ] ति० टी०–अपोहितुमुपेक्षितुम् । सराघवस्य सलक्ष्मणस्यास्य रामस्य मानुषं मनुष्यमतिक्रान्तं बलं ते मनो ज्ञास्यति जानात्येव वालिवधादिनेति भावः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०–उपसंहरन्नाह–नेति । रामरामानुजयोः शासनं मनसाऽपि अपोहितुं त्यक्तुं त्वया न शक्यम् । तत्र हेतुः–सराघवस्य रामसहितस्य अस्य लक्ष्मणस्य मानुषं मः इयत्ताया अनुषः विध्वंसो यस्मिन् तद्बलं ते मनो ज्ञास्यति जानाति ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०–न रामेति । सुरेन्द्रवर्चसः सराघवस्य सलक्ष्मणस्य अस्य रामस्य मानुषं बलं दिव्यास्त्रादिबलमन्तरेण केवलं स्वाभाविकं बलं ते मनो ज्ञास्यति हि जानात्येव । सालगिरिभेदनादौ दृष्टचरत्वादिति भावः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

१ ] ति० टी०–अथैवं हनुमद्वचनानन्तरम् । प्रतिसमादिष्टोऽङ्गदात्प्रतिसंदेशं प्राप्तः ॥ १ ॥

रा० टी०–हनुमत्प्रार्थनानन्तरकालिकं लक्ष्मणवृत्तान्तमाह–अथेति । अथ सुग्रीवकर्मकहनुमत्प्रार्थनानन्तरं प्रतिसमादिष्टः गुहाप्रवेशाय अङ्गदेन प्रार्थितः रामशासनादागतो लक्ष्मणः किष्किन्धां प्रविवेश ॥ १ ॥

गो० टी०–अथान्तःपुरं प्रविष्टस्य लक्ष्मणस्य तारया प्रसादनं त्रयस्त्रिंशे–अथेत्यादि । प्रतिसमादिष्टः प्रत्याहूतः अङ्गदेनेति शेषः ॥ १ ॥ २ ॥

२ ] ति० टी०–स्थिता हरयः प्राञ्जलयो बभूवुरित्यन्वयः ॥ २

रा० टी०–द्वारस्था इति । सर्वे द्वारस्थाः हरयः लक्ष्मणं दृष्ट्वा प्राञ्जलयः सन्तः स्थिताः बभूवुः ॥ २ ॥

३ ] ति० टी०–पर्यवारयन् भयेन लक्ष्मणं परिवार्य गन्तुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥

रा० टी०–निःश्वसन्तमिति । क्रुद्धं दशरथात्मजं दृष्ट्वा हरयः त्रस्ताः बभूवुः अत एव एनं लक्ष्मणं न पर्यवारयन् प्राहत्य सह नागच्छन् ॥ ३ ॥

गो० टी०–निश्वसन्तमिति । न चैनं पर्यवारयन् भयेन लक्ष्मणमुपगन्तुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥

४ ] ति० टी०–पुष्पितानि काननानि यस्यां सा ताम् रत्नसमाकीर्णामनेकोत्तमवस्त्वाक्रान्ताम् ॥ ४ ॥

रा०टी०–स इति । श्रीमान्स लक्ष्मणः रत्नमयीं रत्नप्रचुरां रत्नसमाकीर्णां रत्नैः अनेकविधोत्तमपदार्थैर्व्याप्ताम् ॥ ४ ॥

गो० टी०–स तामिति । रत्नमयीं रत्ननिर्मितां रत्नसमाकीर्णाम् आपणस्थरत्नैः समाकीर्णाम् । हर्म्याः धनिनां वासाः, प्रासादाः देवगृहाः, पद्मानाम् आलेपविशेषाणाम् । ददर्शेति । गिरिनद्यः गिरिनदीः व्यत्ययेन द्वितीया ॥ ४–७ ॥

१ घोरामिति गो. पाठः । २ निश्वसन्तमिति गो. पाठः ।

हर्म्यप्रासादसंबाधां नानारत्नोपशोभिताम् । सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५ ॥
देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः । दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ६ ॥
चन्दनागुरुपद्मानां गन्धैः सुरभिगन्धिताम् । मैरेयाणां मधूनां च संमोदितमहापथाम् ॥ ७ ॥
[4]विन्ध्यमेरुगिरिप्रख्यैः प्रासादैर्नैकभूमिभिः । ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ८ ॥
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च । गवयस्य गवाक्षस्य गजस्य शरभस्य च ॥ ९ ॥
विद्युन्मालेश्च संपातेः सूर्याक्षस्य हनूमतः । वीरबाहोः सुबाहोश्च नलस्य च महात्मनः ॥ १० ॥
कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा । दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ११ ॥
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् । ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ १२ ॥
पाण्डुराभ्रप्रकाशानि गन्धमाल्ययुतानि च । प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ॥ १३ ॥
पाण्डुरेण तु [6]शैलेन परिक्षिप्तं दुरासदम् । वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १४ ॥
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः । सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभितम् ॥ १५ ॥
महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसंनिभैः । दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोरमैः ॥ १६ ॥
हरिभिः संवृतद्वारं बलिभिः शस्त्रपाणिभिः । दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १७ ॥
सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः । अवार्यमाणः सौमित्रिर्महाभ्रमिव भास्करः ॥ १८ ॥

५–६ ] ति० टी०—तस्यैव प्रपञ्चः—हर्म्येति । सर्वकामफलैः सर्वदाऽपेक्षितफलयुक्तैः ॥ ५ ॥ ६ ॥

रा० टी०—हर्म्यैः प्रासादैश्च संबाधां निबिडां सर्वकामफलैः सकलकामनादातृफलविशिष्टैः वृक्षैः उपशोभिताम् ॥ ५ ॥

रा० टी०—देवादिभिश्च शोभिताम् ॥ ६ ॥

७–१३] ति० टी०—पाण्डुरेण पद्मं पद्मकाख्यं गन्धद्रव्यम् सुरभिगन्धितां सुगन्धिताम् । मधूनां च संघैरिति शेषः॥७–१३॥

रा० टी०—चन्दनागरुपद्मानां गन्धैः सुरभि यथा भवति तथा गन्धिता मैरेयाणां मधूनां च मैरेयादिभिः संमोदिताः महान्तः पन्थानो यस्या सा ता गुहां ददर्श । श्लोकचतुष्टयमेकान्वयि ॥ ७ ॥

रा० टी०—ददर्शेति । तत्र गुहासमीपे विमलाः गिरिनद्यः अङ्गदादेः रम्यं गृहं च राघवो ददर्श । विमला नद्य इति वाक्यस्य कर्मतयाऽन्वयान्न द्वितीया । सार्धश्लोकत्रयमेकान्वयि८-१०

रा० टी०—एतेषामिति । एतेषामङ्गदादीनां महासाराणि अतिपुष्टानि पाण्डुराभ्रवत्प्रकाशो येषां तानि स्त्रीरत्नैः उत्तमस्त्रीभिः शोभितानि गृहमुख्यानि उक्ततत्तद्गृहाणां मध्यवर्तिवेश्मानि पाण्डुरेण ईषद्रक्तेन शैलेन परिक्षिप्तं चतुर्दिक्षु प्रावृतमत एव दुरासदं रिपुभिर्गन्तुमशक्यं वानरेन्द्रगृहं सुग्रीवमुख्यभवनं च लक्ष्मणो ददर्श । अर्धषट्कमेकान्वयि ॥ ११–१३ ॥

गो० टी०—अङ्गदस्येत्यादि । महासाराणि अतिदृढानि ॥ ८–१२ ॥

१४–१५ ] ति० टी०—पाण्डुरेण शैलेन परिक्षिप्तं स्फाटिकशिलामयवप्रेण वेष्टितम् ॥ १४ ॥ १५ ॥

१६–१८] ति० टी०—महेन्द्रदत्तैर्वृक्षैः कल्पवृक्षैः॥१६-१८॥

रा० टी०—शुक्लैरिति । कैलासशिखरोपमैः कैलासशृङ्गतुल्यैः शुक्लैः प्रासादशिखरैः प्रासादैश्च सर्वे कामाः मनोरथाः येभ्यस्तानि फलानि येषां तैः, किं च सर्वान् कामान् फलन्ति निष्पादयन्ति तैर्वृक्षैश्च महेन्द्रदत्तैः इन्द्रेण समर्पितैः नीलजीमूतसंनिभैर्नीलमेघसदृशैः दिव्यानि पुष्पफलानि येषु शीता छाया येषां तैः अत एव मनोरमैः वृक्षैः कल्पतरुभिश्च संवृतानि द्वाराणि यैस्तैः हरिभिर्वानरैश्च उपशोभितं दिव्यमाल्यावृतं दिव्यपुष्पैराकीर्णं तप्तकाञ्चनं प्रतप्तस्वर्णमयं तोरणं बहिर्द्वारं यस्य तत्सुग्रीवस्य गृहमवार्यमाणः प्रतीहारैरिति शेषः, सौमित्रिः लक्ष्मणः महाभ्रं भास्कर इव प्रविवेश । सार्धश्लोकचतुष्टयमेकान्वयि ॥ १४–१८ ॥

गो० टी०—पाण्डुरेणेति । पाण्डुरेण सालेन सुधाधवलितप्राकारेण । दिव्यपुष्पफलैर्वृक्षैरित्यनेन इन्द्रदत्ताः स्वर्गीया वृक्षा उच्यन्ते पूर्वमुक्ता वृक्षा भौमा इत्यवगन्तव्यम् । पूर्वं वानरेन्द्रगृहं रम्यमित्युक्तस्यानेकविशेषणव्यवधानेन सुग्रीवस्य गृहं रम्यमिति पुनर्निर्गमनम् स्वरूपतो रम्यम् उक्तविशेषणैश्च रम्यमिति रम्यपदद्वयानिर्वाहः । यद्वा वानरेन्द्रगृहं वानरेन्द्रयोः ऋक्षरजोवालिनोः गृहभूतम् इदानीं सुग्रीवस्य गृहं प्रविवेशेति संबन्धः ॥ १३–१९ ॥

१ पण्येति गो. पाठः । २ अगर्वेति गो. रा. पाठः । ३ गन्धिनामिति गो. पाठः । ४ अर्धमेतत् गो. रा. नास्ति । ५ दिव्येति गो. पाठः । ६ सालेनेति गो. पाठः । ७ द्वारैरिति रा. पाठः ।

स सप्त कक्ष्या धर्मात्मा यानासनसमावृताः । [1]ददर्श सुमहद्गुप्तं द[2]दर्शान्तःपुरं महत् ॥ १९ ॥
हैमराजतपर्यङ्कैर्बहुभिश्च वरासनैः । महार्हास्तरणोपेतैस्तत्र तत्र [3]समावृतम् ॥ २० ॥
प्रविशन्नेव सततं शुश्राव मधुरस्वनम् । तन्त्रीगीतसमाकीर्णं समतालपदाक्षरम् ॥ २१ ॥
बह्वीश्च विविधाकारा रूपयौवनगर्विताः । स्त्रियः सुग्रीवभवने ददर्श स महाबलः ॥ २२ ॥
दृष्ट्वाऽभिजनसंपन्नास्तत्र माल्यकृतस्रजः । वरमाल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २३ ॥
ना[4]तृप्तान्नाति च व्यग्रान्नानुदात्तपरिच्छदान् । सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २४ ॥
कूजितं नूपुराणां च काञ्चीनां [5]निःस्वनं तथा । [6]सं निशम्य ततः श्रीमान्सौमित्रिर्लज्जितोऽभवत् ॥ २५ ॥
रोषवेगप्रकुपितः श्रुत्वा चाभरणस्वनम् । चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥ २६ ॥
चारित्रेण महाबाहुरपकृष्टः स लक्ष्मणः । तस्थावेकान्तमाश्रित्य राम[7]कोपसमन्वितः ॥ २७ ॥
तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः । विज्ञायागमनं त्रस्तः [8]स चचाल वरासनात् ॥ २८ ॥
अङ्गदेन यथा मह्यं पुरस्तात्प्रतिवेदितम् । सुव्यक्तमेष संप्राप्तः सौमित्रिर्भ्रातृवत्सलः ॥ २९ ॥

१९-२० ] ति० टी०—सप्तकक्ष्या इत्यस्यातिक्रम्येति शेषः ॥ १९ ॥ २० ॥

२१-२२ ] ति० टी०—तन्त्रीगीतेन वीणावाद्यघोषेण सहितं मधुरस्वनं मुरजादेः शुश्राव ॥ २१ ॥ २२ ॥

रा० टी०—स इति । यानासनसमावृताः यानैर्विमानादिभिः आसनैः चित्रकम्बलाद्यास्तरणविशिष्टपर्यङ्कादिभिः, किंच यानानां विमानादीनाम् आसनानि चित्रकम्बलादीनि तैः समावृताः पूर्णाः सप्त कक्ष्याः द्वारः प्रविश्य सुमहद्गुप्तं वानरैरत्यन्तं संरक्षितमन्तःपुरं धर्मात्मा लक्ष्मणो ददर्श ॥ १९ ॥

रा० टी०—हैमेति । तत्र तत्र उचिते स्थाने महार्हास्तरणोपेतैः अतिप्रशंसनीयास्तरणविशिष्टैः हैमराजतपर्यङ्कैः वरासनैश्च समावृतम् अन्तःपुरमिति शेषः, प्रविशन्नेव तन्त्रीगीतेन वीणास्वनेन समाकीर्णं व्याप्तं समतालपदानि अक्षराणि यस्मिन् तत् मधुरस्वनं सततं शुश्राव । लक्ष्मण इति शेषः । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

रा० टी०—बह्वीरिति । महाबलो लक्ष्मणः सुग्रीवभवने बह्वीः स्त्रियो ददर्श ॥ २२ ॥

गो० टी०—प्रविशन्नेवेति । सः लक्ष्मणः ततं वीणादिवाद्यजातम् । मधुरस्वरं मधुरश्रुतियुक्तम् । तन्त्रीशब्देन तन्त्रीध्वनिर्लक्ष्यते तद्रूपैर्गीतैः समाकीर्णं समगीतपदाक्षरं समतया तन्त्रीगीतसमतया गीतानि कण्ठैर्गीतानि पदान्यक्षराणि च यस्य । यद्वा समानि अन्यूनातिरिक्तानि गीतसंबन्धीनि पदान्यक्षराणि च यस्य ॥ २० ॥ २१ ॥

२३ ] ति० टी०—अभिजनसंपन्ना आभिजात्ययुक्ताः वरमाल्यकृतव्यग्रा वरमाल्यानामुत्तमस्रजां कृतं करणं तत्र व्यग्राः ॥ २३ ॥

२४ ] ति० टी०—अव्यग्रान्परिचर्यात्वरारहितान् अनुदात्तपरिच्छदान्प्रशस्तालंकाररहितान् ॥ २४ ॥

रा० टी०—दृष्ट्वेति । अभिजनैः संपन्ना युक्ता भूषणोत्तमैर्भूषिताः माल्यैः पुष्पैः कृता रचिताः स्रजो याभिः वरमाल्यकृताय उत्तमपुष्पसंपादनाय व्यग्राः कृतत्वराः स्त्रियो दृष्ट्वा सुग्रीवानुचरानपि अतृप्तान् तृप्तिरहितान् न लक्षयामास, अव्यग्रान् स्वामिकार्ये त्वरारहितानपि न लक्षयामास, अनुदात्तपरिच्छदान् महाभूषणादिरहितांश्च न लक्षयामास, तृप्तत्वादिविशिष्टानेव ददर्शेत्यर्थः । श्लोकद्वयमेकान्वयि ॥२३॥२४॥

गो० टी०—दृष्ट्वेति । फलमाल्यकृतव्यग्राः फलमाल्यार्थं व्यग्रा इत्यर्थः । नानुदात्तपरिच्छदान् उत्कृष्टवस्त्राभरणादिकान् ॥ २२ ॥ २३ ॥

२५ ] ति० टी०—लज्जितोऽभवत् । अयोध्यातोऽप्यधिकसौभाग्यदर्शनाल्लज्जा । परस्त्रीदर्शनकृता लज्जेत्यन्ये ॥ २६ ॥

रा० टी०—कूजितमिति । सौमित्रिः नूपुरादीनां स्वनं निशम्य श्रुत्वा लज्जितः बहुस्त्रीमात्रसांनिध्यप्राप्त्या व्रीडितोऽभवत् ॥ २५ ॥

गो० टी०—कूजितमिति । लज्जितोऽभवत् उपरिस्थरतप्रोतकत्वादिति भावः ॥ २४ ॥

२६ ] ति० टी०—रोषवेगेन प्रकुपितः नेदानीमपि कामभोगं त्यजतीति कोपवृद्धिः । 'रोषवेगप्रचलितः' इति पाठान्तरम् । अर्थस्तुल्यः । आभरणस्वनं श्रुत्वा स्त्रीणां ततो निवृत्तये ज्यास्वनं चकार ॥ २६ ॥

रा० टी०—रोषेति । आभरणस्वनं श्रुत्वा रोषवेगप्रचलितः रोषवेगः प्रचलितो निवृत्तो यस्य सः तिरोहितकोप इत्यर्थः, वीरो लक्ष्मणः शब्देन दिशः पूरयन् सन् ज्यास्वनं चकार । सुग्रीवानवधानतानिवृत्तये इति शेषः २६ ॥

गो० टी०—रोषेति । रोषवेगप्रकुपितः रोषप्रवृद्धः, प्रकोपशब्दो ह्यभिवृद्धवाची ॥ २५ ॥

२७-२९ ] ति० टी०—तदेवाह—चारित्रेणेति । चारि-

१ नानाजनसमाकुला इति गो. पाठः । २ प्रविश्येति गो. पाठः । ३ उपशोभितमिति गो. पाठः । ४ तृप्तान्नापि चात्यग्रानिति गो. रा. पाठः
५ निनदमिति गो. पाठः । ६ समिति गो. पाठः । ७ शोकेति गो. पाठः । ८ स इति रा. पाठः ।

अङ्गदेन समाख्यातो ज्यास्वनेन च वानरः । बुबुधे लक्ष्मणं प्राप्तं मुखं चास्योपैशुष्यत ॥ ३० ॥
ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम् । उवाच हितमव्यग्रस्त्राससंभ्रान्तमानसः ॥ ३१ ॥
किं नु रुद्कारणं सुभ्रु प्रकृत्या मृदुमानसः । सरोष इव संप्राप्तो येनायं राघवानुजः ॥ ३२ ॥
किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते । न खल्वकारणे कोपमाहरेन्नरपुङ्गवः ॥ ३३ ॥
यँद्यस्य कृतमस्माभिर्बुध्यसे किंचिदप्रियम् । तद्बुद्ध्या संप्रधार्याशु क्षिप्रमेवाभिधीयताम् ॥ ३४ ॥
अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि । वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३५ ॥
त्वद्दर्शने विशुद्धात्मा न स्म कोपं करिष्यति । नहि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥ ३६ ॥
त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् । ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ ३७ ॥

त्रेण स्त्रीगोष्ठ्यां प्रवेष्टुं नोचितमित्याचारपर्यालोचनयाऽपकृष्टो निवर्तितान्तःपुरप्रवेशः सन्नेकान्तमाश्रित्य रामकोपसमन्वितो रामकार्याप्रवृत्तिदर्शनजकोपेन समन्वितस्तस्थौ ॥ २७–२९ ॥

रा० टी०–चारित्रेणेति । रामकोपसमन्वितः कोपविरामविशिष्टः चारित्रेण स्त्रीसमूहप्रवेशनरूपस्वसदाचारेण हेतुना अपकृष्टः निवृत्तोत्तरदेशगमनः लक्ष्मण एकान्तमाश्रित्य तस्थौ ॥२७॥

गो० टी०–चारित्रेणेति । रामशोकसमन्वितः रामविषयशोकसमन्वितः एकान्तं स्त्रीप्रसङ्गरहितप्रदेशम् ॥ २६ ॥

रा० टी०–तेनेति । सुग्रीवः चापस्वनेन आगमनं लक्ष्मणस्येति शेषः, विज्ञाय त्रस्तः सन् वरासनात् चचाल ॥ २८॥

रा० टी०–विज्ञानसूचकं तद्विचारमाह–अङ्गदेनेति । पुरस्तात् पूर्वमङ्गदेन यथा येन प्रकारेण प्रतिवेदितं तेन प्रकारेणैव स एष सौमित्रिः संप्राप्तः इति व्यक्तं ज्यास्वनश्रवणेन स्फुटम् ॥ २९ ॥

गो० टी०–तेनेति । सौमित्रिः संप्राप्त इत्यागमनं विज्ञायेति संबन्धः । संचचाल वरासनात् लाङ्गूलचालनमाल्यच्छेदनादिकापेयव्यापारानकरोदित्यर्थः ॥ २७–२९ ॥

३०–३१] ति० टी०–समाख्यातो बोधितलक्ष्मणागमनः । उपशुष्यतेोपाशुष्यत ॥ ३० ॥ ३१ ॥

रा० टी०–शब्दश्रवणानन्तरकालिकं सुग्रीववृत्तान्तमाह–अङ्गदेनेति । अङ्गदेन ज्यास्वनेन च समाख्यातो वानरः सुग्रीवः प्राप्तं समीपमागतं लक्ष्मणं बुबुधे, अत एव अस्य सुग्रीवस्य मुखमुपशुष्यत उपाशुष्यत । एतेन तस्य भीतत्वं व्यक्तम् ॥ ३० ॥

रा० टी०–तत इति । त्रासेन उद्वेगेन संभ्रान्तं मानसं यस्य स सुग्रीवः अव्यग्रः सावधानो भूत्वेति शेषः, हितं वाक्यं तारामुवाच ॥ ३१ ॥

गो० टी०–तत इति । अव्यग्रः कार्यांश इति शेषः ३०–३६

३२ ] ति० टी०–सरोष इव सरोष एव ॥ ३२ ॥

रा० टी०–तद्वचनाकारमाह–किमिति । सुभ्रु हे सुभ्रूः! प्रकृत्या स्वभावेनैव मृदुमानसो राघवानुजः येन सरोष इव संप्राप्तः तत् रुट्कारणं किं, न जानामीत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०–रोषस्थानं रोषकारणं ममापराधमित्यर्थः ॥ ३३ ॥

रा० टी०–किमिति । कुमारस्य लक्ष्मणस्य रोषस्थानं रोषकारणं किं पश्यसि जानासि । ननु मास्तु कारणमित्यत आह–अकारणे कोपकारणाभावे कोपं नैवाहरेत् प्राप्नुयात् ॥ ३३ ॥

३४] ति० टी०–अस्माभिः कृतं यत्किंचिदित्यन्वयः ३४॥

रा० टी०–यदीति । यदि अस्य रामस्य किंचिदपि अप्रियमस्माभिः कृतं त्वं यदि बुध्यसे तर्हि बुद्ध्या मनसा आशु संप्रधार्य संचिन्त्य क्षिप्रमभिधीयतां कथ्यताम् ॥ ३४ ॥

३५ ] ति० टी०–निर्निमित्तकोपासंभवान्निमित्तं चानिर्णीय स्वस्य समीपगमनमनुचितमिति पक्षान्तरं गृह्णाति–अथवेति । स्वयमेव मां विहायेत्यर्थः ॥ ३५ ॥

रा० टी०–अपराधनिश्चयस्य सत्त्वे असत्त्वे वा स तु सर्वथा सान्त्वनीय एवेति पक्षान्तरमाह–अथवेति । हे भामिनि ! एनं लक्ष्मणं त्वं स्वयमेव द्रष्टुमर्हसि । तत्प्रयोजनमाह–सान्त्वयुक्तैः वचनैः प्रसादयितुमर्हसि ॥ ३५ ॥

३६ ] ति० टी०–विशुद्धात्मा गतक्रोधचित्तः ॥ ३६ ॥

रा० टी०–ननु त्वयैव कथं न प्रसाद्यते इत्यत आह–त्वदिति । त्वद्दर्शनेन त्वदवलोकनमात्रेण विशुद्धः विगतमदपराधशङ्कावान् आत्मा अन्तःकरणं यस्य सः लक्ष्मणः कोपं नैव करिष्यति निवर्तयिष्यतीत्यर्थः । ननु त्वदपराधशङ्कया मां दण्डयिष्यतीत्यत आह–महात्मानः स्त्रीषु क्वचित् कदाचिदपि दारुणं कर्म न कुर्वन्ति ॥ ३६ ॥

३७ ] ति० टी०–उपक्रान्तमुपक्रान्तक्षमापनम् ॥ ३७ ॥

रा० टी०–त्वयेति । सान्त्वैः सान्त्वनवचनैः त्वया उपक्रान्तं प्राप्तमत एव प्रसन्नेन्द्रियमानसम् अरिन्दमं लक्ष्मणमहं द्रक्ष्यामि ॥ ३७ ॥

१ ख्यातमिति गो. पाठः । २ व्यशुष्यतेति गो. पाठः । ३ तदिति गो. पाठः । ४ सत्तम इति गो. पाठः । ५ यदिति गो. पाठः । ६ अर्हसि भाषितुमिति गो. पाठः । ७ भाषितुमिति गो. पाठः । ८ दर्शनविशुद्धेति गो. रा. पाठः । ९ स इति गो. पाठः ।

सा प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुणहेमसूत्रा ।
सलक्षणा लक्ष्मणसंनिधानं जगाम तारा नमिताङ्गयष्टिः ॥ ३८ ॥
स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा ।
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसंनिकर्षाद्विनिवृत्तकोपः ॥ ३९ ॥
सा पानयोगाच्च निवृत्तलज्जा दृष्टिप्रसादाच्च नरेन्द्रसूनोः ।
उवाच तारा प्रणयप्रगल्भं वाक्यं महार्थं परिसान्त्वरूपम् ॥ ४० ॥
किं कोपमूलं मनुजेन्द्रपुत्र कस्ते न संतिष्ठति वाङ्निदेशे ।
कः शुष्कवृक्षं वनमापतन्तं दवाग्निमासीदति निर्विशङ्कः ॥ ४१ ॥
स तस्या वचनं श्रुत्वा सान्त्वपूर्वमशङ्कितः । भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४२ ॥

गो० टी०—त्वयेति । त्वया सान्त्वैः प्रसन्नेन्द्रियमानसमिति संबन्धः । उपक्रान्तम् उपागतम् ॥ ३६ ॥

३८ ] ति० टी०—प्रस्खलन्ती मदालसतया पदे पदे स्खलन्ती मदविह्वलाक्षी भोगार्थं कृतमधुपानमदेनालसचकितनेत्रा प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः काञ्चीगुणो रशना नमिताङ्गयष्टिः स्तनभारेणेति शेषः ॥ ३८ ॥

रा० टी०—सेति । प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः सा सलक्षणा सल्लक्षणयुक्ता मदेन विह्वले आघूर्णिते अक्षिणी यस्याः सा अत एव प्रस्खलन्ती पदे पदे निपतन्ती तारा लक्ष्मणसंनिधानं जगाम ॥ ३८ ॥

गो० टी०—सेति । सा कान्तसंश्लेषं विनाऽपि रमणीयगमनसौन्दर्या प्रस्खलन्ती संश्लेषकृतायासेन पदे पदं कृत्वा गच्छन्ती मदविह्वलाक्षी भोगसंवर्धकमधुपानमदेन विह्वलनेत्रा प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः सा प्रलम्बकाञ्चीगुणहेमसूत्रा ईषच्छिथिलदुकूलतया शयने यथा स्थिता तथैव समागतेत्यर्थः । सलक्षणा व्यक्तैः संभोगलक्षणैः समागता लक्ष्मणसन्निधानं जगाम । किं मातुरपि गोप्यमस्तीत्यागता नमिताङ्गयष्टिः द्रवीभावावस्थायां नमितं नार्जवमर्हति अतः नम्रतैव यथा निरूपकं भवति तथा स्थितेत्यर्थः ॥ ३७ ॥

३९ ] ति० टी०—हरीशपत्नीं सुग्रीवपत्नीं ताराम् ॥ ३९ ॥

रा० टी०—स इति । मनुजेन्द्रपुत्रो लक्ष्मणः हरीशपत्नीं तारां समीक्ष्यैव अवाङ्मुखः सन् उदासीनतया तस्थौ, स्त्रीसंनिकर्षात् निवृत्तकोपश्चाभूत् ॥ ३९ ॥

गो० टी०—स तामिति । उदासीनतया तत्कान्तिनिर्वर्णनानादरतया ॥ ३८ ॥

४० ] ति० टी०—प्रणयप्रगल्भं मैत्रीसमर्थनसमर्थम् । परिसान्त्वरूपं परितः सान्त्वरूपम् । 'पतिसान्त्व—' इति पाठः सुगमः ॥ ४० ॥

रा० टी०—सेति । पानयोगात् मादकपेयद्रव्यादिसंबन्धात् नरेन्द्रसूनोः दृष्टिप्रसादात् प्रसन्नतयाऽवलोकनाच्च निवृत्ता लज्जा यस्याः सा तारा प्रणयप्रगल्भं दृढस्नेहम् अत एव परिसान्त्वरूपम् अत एव महार्थं वाक्यमुवाच ॥ ४० ॥

गो० टी०—सेति । नरेन्द्रसूनोः धार्मिकस्य लक्ष्मणस्य दृष्टिप्रसादाद्धेतोः प्रणयप्रगल्भं स्नेहदृढम् ॥ ३९ ॥

४१ ] ति० टी०—वाङ्निदेशेऽनुशिष्टकार्यानुष्ठाने । आपतन्तं दग्ध्वा तिष्ठन्तम् ॥ ४१ ॥

रा० टी०—तद्वचनाकारमाह—किमिति । हे मनुजेन्द्रपुत्र! ते वाङ्निदेशे वचनेनादिष्टे को न संतिष्ठति अत एव को विशङ्कः शुष्कवृक्षं वनमापतन्तं दावाग्निमासीदति निपतति न कोऽपीत्यर्थः, अतः कोपमूलं तत्र कोपकारणं किं तद्वदेत्यर्थः ॥ ४१ ॥

गो० टी०—किमिति । चतुरो मासान् राजपुत्रौ विपुलस्तनितसात्कृत्य स्वयं भोगप्रवणा स्थिता तज्जानन्त्यपि किं कोपमूलमित्याह—तत्कृपारसविशेषवत्तया दृष्टिप्रसादादिति सुकरम् । मनुजेन्द्रपुत्र ! षष्टिवर्षसहस्राणि राज्यं परिपाल्य प्रजापराधं क्षान्तवतो दशरथस्य पुत्रस्त्वम् अपराधिजनानां शिरच्छेदनं करिष्यामीति संप्रति समागतोऽसि सम्यक्स्त्री भवतो गतिः । कस्ते न संतिष्ठति वाङ्निदेशे यस्ते वाङ्निदेशे न तिष्ठति सः कः । अशाश्वतस्य दृष्टे वस्तुनि सपदि चापलं कृत्वा निवर्तितुमक्षमस्य तिर्यग्जनस्य च्युतान् भोगान् स्वयमेव दत्त्वा स्वाज्ञां कुर्वन्तं हिंसितुमिच्छसि । क इत्यादि । दवाग्नौ पतन् चपलः शलभः किमिति भावः । तद्वच्चपलोऽयमित्येवं दृष्टान्तः । संतिष्ठतीत्यार्षं परस्मैपदम् ॥ ४० ॥

४२ ] ति० टी०—भूयोऽधिकं प्रणयप्रकाशपूर्वं दृष्टोऽर्थो यस्मिंस्तत् ॥ ४२ ॥

रा० टी०—स इति । स लक्ष्मणः तस्यास्तारायाः सान्त्वपूर्वमशङ्कितं सुग्रीवकापट्यशङ्कानिवर्तकं प्रणयेन स्नेहेन दृष्टो बोधितोऽर्थो येन तत् वचनं श्रुत्वा अब्रवीत् ॥ ४२ ॥

गो० टी०—स इति । अशङ्कितं निःसंशयम् अकुटिलमिति यावत् । प्रणयदृष्टार्थं स्नेहसंदर्शितप्रयोजनम् ॥ ४१ ॥

१ वीति गो. पाठः । २ समीचीति युक्तं भाति ।

किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः । भर्ता भर्तृहिते युक्ते न चैवमवबुध्यसे ॥ ४३ ॥
न चिन्तयति राज्यार्थं सोऽस्माञ्छोकपरायणान् । सामान्यपरिषत्तारे काममेवोपसेवते ॥ ४४ ॥
स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः । व्यतीतांस्तान्मदोदग्रो विहरन्नावबुध्यते ॥ ४५ ॥
नहि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते । पानादर्थश्च कामश्च धर्मश्च परिहीयते ॥ ४६ ॥
धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः । अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४७ ॥
मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् । तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४८ ॥
तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् । तत्कार्यं कार्यतत्त्वज्ञे त्वमुदाहर्तुमर्हसि ॥ ४९ ॥

४३ ] ति० टी०—अयं ते भर्ता लुप्तधर्मार्थसंग्रहो वर्तते । अर्थोऽत्र मित्ररूपः एवं किं न बुध्यसे ॥ ४३ ॥

रा० टी०—तद्वचनाकारमाह—किमिति । भर्तृहिते युक्ते नियुक्ते हे तारे ! कामवृत्तः कामे एव वृत्तः प्रवृत्तः अत एव लुप्तधर्मार्थसंग्रहः ते भर्ता अस्तीति शेषः । अतः एवं भर्तारं त्वं कथं न बुध्यसे बोधयसि ॥ ४३ ॥

गो० टी०—अतीवायुक्तं तव भर्तुर्विषयप्रावण्यमित्याह- किमयमित्यादिना । युक्ते सक्ते इति संबुद्धिः । अयं कामवृत्त इति एवं नावबुध्यसे किमिति संबन्धः ॥ ४२ ॥

४४ ] ति० टी०—लुप्तधर्मादित्वमेवाह—नेति । राज्यार्थं राज्यस्थैर्यार्थं सामान्या परिषद्यस्य तादृश भूत्वेति शेषः॥४४॥

रा० टी०—तल्लोपाकारमाह—नेति । राज्यार्थं स्वराज्यस्थित्यर्थं शोकपरायणान् अस्मान् सामात्यपरिषत्सुग्रीवः न चिन्तयति तत्र हेतु—सः सुग्रीवः काममेवोपसेवते ॥ ४४ ॥

गो० टी०—न चिन्तयतीति । राज्यार्थं राज्यरूपप्रयोजनम् ॥ ४३ ॥

४५-४६ ] ति० टी०—विहरंस्त्वया क्रीडन् ॥४५॥४६॥

रा० टी०—स्वकर्मचिन्तनाभावे गमकमाह—स इति । स सुग्रीवः चतुरो मासान् प्रमाणम् अन्वेषणमर्यादां कृत्वा मदोदग्रः मादकरसविशेषपानादिनोदग्रः प्रवृद्धमदः अत एव विहरन्सन् नावबुध्यते प्रमाणमित्यनुकृष्यते ॥ ४५ ॥

गो० टी०—स इति । प्रमाणं मर्यादाम् ॥ ४४ ॥

रा० टी०—मादकरसविशेषपाने दोषमाह—नहीति । धर्मार्थसिद्ध्यर्थं पानं नैव प्रशस्यते । तत्र हेतुः—पानात् अर्थादिः परिहीयते ॥ ४६ ॥

गो० टी०—न हीति । धर्मार्थसिद्ध्यर्थं यतमानस्येति शेषः ॥ ४५ ॥

४७ ] ति० टी०—पानादर्थादिनाशमुपपादयति—धर्मेति । महान्धर्मलोपः प्रतिज्ञाहानिरूपः । कृते उपकारेऽप्रतिकुर्वतः प्रत्युपकारमकुर्वतः । तावत्प्रथमम् ततो गुणवतो मित्रस्य मैत्रीनाशे महानर्थलोपो भवति ॥ ४७ ॥

रा० टी०—धर्मेति । गुणतः अनेकोपकृतिरूपगुणविशिष्टस्य मित्रस्य मित्रार्थं कृते शिष्टैराचरिते प्रत्युपकारे अप्रतिकुर्वतः प्रवृत्तिरहिततया वर्तमानस्य जनस्य नाशे विनाशाय महान्धर्मलोपः अर्थलोपश्च धर्मार्थयोर्लोपे कामलोपस्य अर्थसिद्धत्वात् कामलोपश्च भवतीति सिद्धम् । नाश इति क्विबन्तप्रकृतिकचतुर्थ्यन्तम् ॥ ४७ ॥

गो० टी०—धर्मेति । कृते उपकारविषये अप्रतिकुर्वतः महान् धर्मलोपो भवेत् । प्रत्युपकाराकरणाद्गुणवतो मित्रस्य नाशे सति महानर्थलोपो भवेत् चकारात्कामलोपश्च ॥ ४६ ॥

४८ ] ति० टी०—अर्थगुणश्रेष्ठं मित्रार्थसाधनलक्षणश्रेष्ठगुणवत् सत्यधर्मपरायणमेतद्गुणद्वयवन्मित्रं हि प्रसिद्धम् तद्द्वय गुणद्वयमपि तव भर्त्रा परित्यक्तम्, न तु धर्मे मैत्रीपालनरूपे धर्मे व्यवस्थितम् ॥ ४८ ॥

रा० टी०—मित्रमिति । अर्थगुणैः अर्थसाधनीभूतवात्सल्यादिभिः श्रेष्ठं सर्वोत्कृष्टं सत्यधर्मपरायणं सत्यस्य धर्माणां वेदविहितकर्मणां च परायणं परमाश्रयः तत्तत्फलादिदातेत्यर्थः, तत् मित्रं त्वद्भर्त्रा परित्यक्तम् अत एव धर्मे नैव व्यवस्थितं सनातनो धर्मस्त्यक्त इत्यर्थः, तत् तस्मात् हेतोः द्वयमुभयलोकसुखं परित्यक्तम् । परित्यक्तमित्युभयान्वयि ॥ ४८ ॥

गो० टी०—उक्तमर्थमुपपादयति—मित्रं हीति । सत्यधर्मपरायणम् मित्रं अर्थगुणश्रेष्ठं हि । अत्र गुणशब्दः कामवाची, अर्थकामयोर्मूलत्वान्मित्रं ताभ्यां श्रेष्ठं हि तादृशं मित्रं त्यजता सुग्रीवेण तद्द्वयम् अर्थकामद्वयम् परित्यक्तं तु परित्यक्तमेव । धर्मे तु न व्यवस्थितम् धर्मोऽपि परित्यक्त इत्यर्थः ॥ ४७ ॥

४९ ] ति० टी०—ततस्तस्मादेवं सति प्रस्तुते कार्ये प्रस्तुतकार्यसिद्धिनिमित्तमित उत्तरं यदस्माभिः कार्यं तत्कार्यमुदाहर्तुमर्हसि ॥ ४९ ॥

रा० टी०—तदिति । कार्ये सुग्रीवकर्तव्ये एवमनेन प्रकारेण प्रस्तुते मया कथिते सति यदस्माभिः कार्यं कर्तव्यं तत् कार्यमुत्तरं श्रेष्ठं यथा भवति तथा त्वमुदाहर्तुं वक्तुमर्हसि ॥४९॥

गो० टी०—तदिति । तत्तस्मात् कार्यतत्त्वज्ञे ! कार्ये धर्मार्थकामविलोपहेतुभूते मित्रपरित्यागलक्षणे कार्ये एवं प्रस्तुते सति यदुत्तरं कार्यमस्माभिः कार्यं कर्तव्यं तत् उदाहर्तुं वक्तुम् अर्हसि ॥ ४८ ॥

१ नेति गो. पाठः । २ सामात्येति गो. रा. पाठः । ३ मदव्यग्र इति गो. पाठः । ४ एवमिति गो. पाठः । ५ यदिति गो. पाठः । ६ तदिति गो. पाठः।

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् ।
तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ॥ ५० ॥
न कोपकालः क्षितिपालपुत्र न चापि कोपः स्वजने विधेयः ।
त्वदर्थकामस्य जनस्य तस्य प्रमादमप्यर्हसि वीर सोढुम् ॥ ५१ ॥
कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे ।
कस्त्वद्विधः कोपवशं हि गच्छेत्सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ ५२ ॥
जानामि कोपं हरिवीरबन्धोर्जानामि कार्यस्य च कालसङ्गम् ।
जानामि कार्यं त्वयि यत्कृतं नस्तच्चापि जानामि यदत्र कार्यम् ॥ ५३ ॥
तच्चापि जानामि तथाविषह्यं बलं नरश्रेष्ठ शरीरजस्य ।
जानामि यस्मिंश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य ॥ ५४ ॥

५० ] ति० टी०—धर्मार्थसमाधियुक्तं तत्संबन्धयुक्तम् । अगतार्थे भ्रष्टप्रयोजने मनुजेन्द्रकार्ये तद्विषये विश्वासयुक्तं यथा तथा भूयः पुनरुवाच ॥ ५० ॥

रा० टी०—सेति । सा तारा धर्मार्थसमाधियुक्तं धर्मार्थयोः समाधिर्निश्चयस्तेन युक्तं धर्मार्थयोर्निश्चायकमित्यर्थः, मधुरस्वभावं मधुरस्वभावबोधकं वाक्यं निशम्य आगतार्था आगतो ज्ञातोऽर्थो लक्ष्मणागमनप्रयोजनं यया सा तारा मनुजेन्द्रकार्ये तत्कार्यसिद्ध्यर्थं विश्वासयुक्तं वचनं भूय उवाच ॥ ५० ॥

गो० टी०—सेति । धर्मार्थयोः समाधिना संबन्धेन युक्तं गतार्थे प्रयोजनयुक्त नरेन्द्रकार्ये विषये विश्वासयुक्तम् ॥ ४९ ॥

५१ ] ति० टी०—न कोपकालः अर्थस्यानीतत्वादिति भावः । प्रमादमज्ञातभूतमपराधम् ॥ ५१ ॥

रा० टी०—नेति । हे क्षितिपालपुत्र ! कोपकालः क्रोधसमयो न क्रोधस्य कार्यविलम्बकारकत्वमस्तीति तात्पर्यम् । अपि अन्यदुच्यते स्वजने कोपो न विधेयः । ननु सत्यपराधे कथं न कोप इत्यत आह—त्वदर्थकामस्य त्वदर्थसाधनेच्छावतः जनस्य सुग्रीवस्य प्रमादमनवधानतामपि सोढुमर्हसि ॥ ५१ ॥

गो० टी०—नेति । न कोपकालः सुग्रीवस्य कामार्तत्वादिति भावः । त्वदर्थकामस्य त्वत्प्रयोजनपरस्य जनस्य सुग्रीवस्य॥५०॥

५२ ] ति० टी०—तस्य सोढव्यतां समर्थयति—कोपं कथं नामेति । अपकृष्टसत्त्वे हीने सत्त्वावरुद्धः सहजसत्त्वगुणावरुद्धविपरीतव्यापारः । 'सत्त्वाविरुद्धः' इति पाठे सहजगुणाविरुद्धव्यापारः । अत एव तपसः प्रसूतिः ॥ ५२ ॥

रा० टी०—अस्मादृशेषु तव कोपः सर्वदैवानुचित इति बोधयन्ती आह—कोपमिति । हे कुमार ! गुणप्रकृष्टः गुणैः श्रेष्ठः पुरुषः अपकृष्टसत्त्वे कोपं कथं कुर्यात् न कुर्यादित्यर्थः । ननु कोपो दुर्निवार एवेत्यत आह—सत्त्वावरुद्धः विशुद्धसत्त्वमयः अत एव तपसो विचारस्य प्रसूतिः कारणम् अतिविचारवानित्यर्थः, त्वद्विधः कः कोपवशं गच्छेत् प्राप्नुयात् न कोऽपीत्यर्थः ॥ ५२ ॥

गो० टी०—कोपमिति । गुणप्रकृष्टः उत्कृष्टवीर्यगुणः अपकृष्टसत्त्वे हीनबले सत्त्वावरुद्धः व्यवसाययुक्तः 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । तपसः शान्तिरूपस्य प्रसूतिः उत्पत्तिस्थानम् ॥ ५१ ॥

५३ ] ति० टी०—जानामि कोपमिति । हरिवीरबन्धो रामस्य कोपं कोपनिमित्तं कार्यस्य कालसङ्गं विलम्बं च जानामि । त्वयि यदायत्तं न कार्यं राज्यदानलक्षणं त्वया कृतं तदपि जानामि । यदत्र विषये कार्यं प्रतिकर्तव्यरूपं तदपि जानामि ॥ ५३ ॥

रा० टी०—जानामीति । कोपं त्वत्क्रोधहेतुमहं जानामि । कार्यस्य अन्वेषणस्य कालसङ्गं योग्यकालसंबन्धं च जानामि । त्वयि नोऽस्माकं यत्कार्यं कर्तव्यं तदपि जानामि । यत् विलम्बितं सुग्रीवेण कृतं तदपि जानामि । अत्र अस्मिन् समये यत् कार्यम् अनुष्ठेयं तदपि जानामि ॥ ५३ ॥

गो० टी०—मद्दोषमेव जानासि न तु तद्धेतुमित्यत्राह—जानामीति । हरिवीरबन्धोः रामस्य रोषं जानामि रोषममोघस्वरूपं जानामीत्यर्थः । कार्यस्य च कालसङ्गम् उद्योगरूपकार्यस्य कालविलम्बनं च जानामि । जानामि कार्यं त्वयि यत्कृतं न यत् वालिवधरूपं कार्यं नः अस्माकं कृतम् त्वयि विद्यमानं तदपि जानामि । यदत्र कार्यम् अस्मिन्नुपकारे अस्माभिर्यत्सीतान्वेषणादिकं कर्तव्यं तच्चापि जानामि ॥ ५२ ॥

५४ ] ति० टी०—तत्र कोपस्यायुक्तत्वे हेतुमपि जानामीत्याह—तच्चापीति । शरीरजस्य कामस्य तथाऽविषह्यं बलं तच्चापि जानामि । एवं सुग्रीवं यस्मिञ्जने स्त्रीजने कामेनावबद्धं संभावयसि तं च जानामि । तथाप्यन्यत्र कृत्येऽसक्तमव्यापारं च जानामि ॥ ५४ ॥

रा० टी०—जानामीति । शरीरजस्य कामस्य यदविषह्यं बलं तच्चापि जानामि । यस्मिन् जने स्त्रियामित्यर्थः, कामेन अवबद्धं सुग्रीवस्य अत्यासक्तिस्तमपि जानामि अद्य असक्तम् आसक्तिरहितं सुग्रीवं च जानामि ॥ ५४ ॥

१ ऽतीति गो. पाठः । २ रोषमिति गो. पाठः । ३ यथेति गो. पाठः ।

न कामतन्त्रे तव बुद्धिरस्ति त्वं वै यथा मन्युवशं प्रपन्नः ।
न देशकालौ हि यथार्थधर्माववेक्षते कामरतिर्मनुष्यः ॥ ५५ ॥
तं कामवृत्तं मम संनिकृष्टं कामाभियोगाच्च [3]विमुक्तलज्जम् ।
क्षमस्व तावत्परवीरहन्तस्त्वद्भ्रातरं वानरवंशनाथम् ॥ ५६ ॥
महर्षयो धर्मतपोभिरामाः कामानुकामाः प्रतिबद्धमोहाः ।
अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥ ५७ ॥
इत्येवमुक्त्वा वचनं महार्थं सा वानरी लक्ष्मणमप्रमेयम् ।
पुनः सखेदं मदविह्वलाक्षी भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५८ ॥
उद्योगस्तु चिराज्ञप्तः सुग्रीवेण नरोत्तम । कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५९ ॥
आगता हि महावीर्या हरयः कामरूपिणः । कोटीः शतसहस्राणि नानानगनिवासिनः ॥ ६० ॥

गो० टी०–तच्चेति । हे नरश्रेष्ठ ! शरीरजस्य कामस्य बलं यथा अविषह्यं तथापि जानामि । अथ सुग्रीवं यस्मिन् जने कामेन असक्तम् अनवरतम् अवबद्धं जानामि तं च स्त्रीजनं जानामीति योजना ॥ ५३ ॥

५५] ति० टी०–नन्वेवं सति मम कोपस्यायुक्तता कथमत आह–नेति । यथा त्वं वै निश्चयेन मन्युवशं प्रपन्नो दृश्यसे तथा जानामि । कामतन्त्रे कामस्वभावपरिज्ञाने तव बुद्धिर्नास्ति चिरकालं स्त्रीसङ्गाभावादिति भावः तमेव कामस्वभावमाह–नेति । हि प्रसिद्धम् । यथा देशकालौ भोगायोग्यौ न जानाति तथार्थधर्मावपि नावेक्षते । मनुष्य इति मनुष्योऽपि न जानाति किमुत तिर्यग्जन्तुरिति भावः ॥ ५५ ॥

रा० टी०–ननु किमन्ये न जानन्तीत्यत आह–नेति । कामतन्त्रे कामाधीने तव बुद्धिर्ज्ञानं यथा यथावन्नास्ति कामवशो न हन्तव्य इति न जानासीत्यर्थः, अत एव त्वं मन्युवशं प्रपन्नः प्राप्तः । कामतन्त्रत्वं बोधयन्ती आह—कामरतिर्मनुष्यः यथा अर्थधर्मौ न अवेक्षते तथा देशकालावपि नावेक्षते एतेन यदि मनुष्यो नावेक्षते तर्हि वानरो नावेक्षते इति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो व्यक्तः ॥ ५५ ॥

गो० टी०–लक्ष्मणसंरम्भोपशमनाय स्वप्रागल्भ्येन लोकस्थितिं दर्शयति–न कामतन्त्रे इत्यादिना । त्वं यथा येन प्रकारेण मन्युवशं प्रपन्नः तेन प्रकारेण कामतन्त्रे रतिक्रीडादौ तव बुद्धिर्नास्ति कामतन्त्राभिज्ञश्चेत्तादृशं न द्विष्या इति भावः । किं कामतन्त्रप्रवणः किमपि न जानातीत्यत्राह–न देशकालाविति ॥ ५४ ॥

५६ ] ति० टी०–मम संनिकृष्टं स्वभार्यायां मम समीपे कामवशाद्वर्तमानम् कामाभियोगः कामावेशः क्षमस्वेति । परवशप्रवृत्तापराधत्वात्स्वभावत्वाच्च क्षमैवात्र योग्या, न तु कोप इत्याशयः ॥ ५६ ॥

रा० टी०–तमिति । कामवृत्तं कामे एव प्रवृत्तम् अत एव कामाभियोगात् विमुक्तलज्जं मम संनिकृष्टं त्वद्विया स्त्रीसमुदाये स्थितमित्यर्थः, त्वद्भ्रातरं रामसखत्वेन त्वद्बन्धुं वानरवंशनाथं क्षमस्व तदपराधं सहस्वेत्यर्थः ॥ ५६ ॥

गो० टी०–तमिति । मम सन्निकृष्टं समीपस्थम् अत एव कामवृत्तं कामव्यापारमिति क्रमेण योजना ॥ ५५ ॥

५७ ] ति० टी०–कामवशत्वं नास्यैवेत्याह–महर्षय इति । कामे कामभोगेऽनुकामोऽभिलाषो येषां ते, अत एव स्त्रीषु प्रतिबद्धमोहाः । कपिस्तत्रापि राजा ॥ ५७ ॥

रा० टी०–महर्षय इति । धर्मतपोभ्यामभिरामाः प्राप्तशोभाः अत एव प्रतिबद्धमोहा निवृत्ताविवेकाः महर्षयोऽपि कामानुकामाः विषयाभिलषिणः सन्तः सज्जन्ते इति शेषः, तर्हि कपिः कथं न सज्जेत ॥ ५७ ॥

गो० टी०–महर्षयोऽपि कामवशाः किमुत पृथग्जन इत्याह–महर्षय इति । धर्मतपसी अभिकामयन्त इति धर्मतपोऽभिकामाः कामस्याभिलाषस्य अनु पश्चात् कामो येषां ते कामानुकामाः प्रतिबद्धमोहाः नियतस्त्रीव्यामोहाः ॥ ५६ ॥

५८ ] ति० टी०–भर्तुर्हितम् उद्दिश्येति शेषः ॥ ५८ ॥

रा० टी०–इतीति । वानरी सा तारा इति वचनं सखेदमुक्त्वा भर्तुर्हितमिदं वाक्यं पुनर्बभाषे ॥ ५८ ॥

गो० टी०–इतीति । सखेलं सलीलम् ॥ ५७–५९ ॥

५९] ति० टी०–चिराज्ञप्तः त्वदागमनात्पूर्वमेवेति शेषः ५९

रा० टी०–तद्वचनाकारमाह–उद्योग इति । कामस्य विधेयेन वशेनापि सुग्रीवेण तवार्थप्रतिसाधने उद्योगः यत्नः चिरपूर्वमाज्ञप्तः अत एव कोटीशतसहस्राणि कोटीयुक्तानि शतसहस्राणि नानानगनिवासिनो हरय आगताः । श्लोकद्वयमेकान्वयि ॥ ५९ ॥ ६० ॥

६० ] ति० टी०–कामविधेयस्योद्योगाज्ञाऽपि न विश्वसनीयेत्यत आह–आगता इति । कोटीः शतेत्यस्य बहुत्वे तात्पर्यम् ॥ ६० ॥

१ न चार्थौ इति गो. पाठः। २ अपेति गो. पाठः। ३ निवृत्तेति गो. पाठः। ४ कामा इति गो. पाठः। ५ सखेलमिति गो. पाठः। ६ विह्वलं चेति गो. पाठः।

तदागच्छ महाबाहो चारित्रं रक्षितं त्वया । अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ६१ ॥
तारया चाप्यनुज्ञातस्त्वरया वापि चोदितः । प्रविवेश महाबाहुरभ्यन्तरमरिन्दमः ॥ ६२ ॥
ततः सुग्रीवमासीनं काञ्चने परमासने । महार्हास्तरणोपेते ददर्शादित्यसंनिभम् ॥ ६३ ॥
दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् । दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६४ ॥
दिव्याभरणमालाभिः प्रमदाभिः समन्ततः । संरब्धतररक्ताक्षो बभूवान्तकसंनिभः ॥ ६५ ॥
रुमां तु वीरः परिरभ्य गाढं वरासनस्थो वरहेमवर्णः ।
ददर्श सौमित्रिमदीनसत्त्वं विशालनेत्रः स विशालनेत्रम् ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

सीतान्वेषणवैमुख्याज्ज्ञातकृतघ्नतादोषोऽपि त्वं जागृहि न वालिनमनुसरेति लक्ष्मणः सुग्रीव तर्जयते ।

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् । सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १ ॥
क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा । भ्रातुर्व्यसनसंतप्तं दृष्ट्वा दशरथात्मजम् ॥ २ ॥
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् । महान्महेन्द्रस्य यथा स्वलंकृत इव ध्वजः ॥ ३ ॥

६१ ] ति० टी०—चारित्रं रक्षितं अटिरयन्तःपुरागमनेन । अच्छलं छलमधर्मः, स नेत्यर्थः । मित्रभावेन, न तु विकारेण ६१

रा० टी०—तदिति । यतः चारित्रं सखा प्रबोधनीय इति मर्यादा त्वया रक्षितं तत् तस्मादागच्छ अन्तः प्रविश । ननु तत्र प्रवेशे अनुचितपरस्त्रीदर्शनं भविष्यतीत्यत आह—मित्रभावेन दारावलोकनं सताम् अच्छलं नाधर्मः ॥ ६१ ॥

गो० टी०—तदिति । चारित्रं रक्षितं त्वया अन्तःपुरस्त्र्यवलोकनमनुचितमिति बहिरेव तिष्ठता त्वया सदाचारः सम्यगनुष्ठित इत्यर्थः, शरणागतरक्षणाचारस्त्वया सम्यगनुष्ठित इति वा । अच्छलम् अदोषावहम् ॥ ६० ॥

६२–६४ ] ति० टी०—त्वरया रामाज्ञाकरणत्वरया ६२-६४

६५ ] ति० टी०—प्रमदाभिः समं ददर्शेत्यन्वयः । ततः संरब्धतररक्ताक्षो बभूवेत्यन्वयः ॥ ६५ ॥

रा० टी०—तारयेति । तारया अभ्यनुज्ञातः प्रार्थितः त्वरया अन्वेषणकारणकवेगेन च प्रचोदितो लक्ष्मणः अभ्यन्तरं प्रविवेश ॥ ६२ ॥

रा० टी०—तत इति । ततः प्रवेशानन्तरं महार्हास्तरणोपेते अतिप्रशंसनीयास्तरणविशिष्टे काञ्चने सुवर्णमये परमासने आसीनं दिव्याभरणचित्राङ्गदादिविशेषणविशिष्टं प्रमदाभिः समं सहितं सुग्रीवं ददर्श ततो दर्शनानन्तरम् अन्तकसंनिभो लक्ष्मणः संरब्धतररक्ताक्षः अत्याघूर्णितारुणनयनवान् बभूव । श्लोकत्रयमेकान्वयि ॥ ६३–६५ ॥

गो० टी०—तारयेत्यादि । श्लोकचतुष्टयमेकं वाक्यम् । समावृतं परिवृतम् । संरब्धतरः कुपिततरः अत एव रक्ताक्षश्च ॥ ६१—६५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

६६ ] ति० टी०—परिरभ्यावस्थित एव संददर्शेत्यन्वयः ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०—रुमामिति । रुमां गाढं परिरभ्य स्थितः वरासनस्थः सुग्रीवः सौमित्रिं ददर्श ॥ ६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

१–२ ] ति० टी०—तमिति । अप्रतिहतं केनाप्यप्रतिबद्धम् ॥ १ ॥ २ ॥

३ ] ति० टी०—महान्महेन्द्रध्वजो यथालंकृतः ॥ ३ ॥

रा० टी०—सुग्रीववृत्तान्तमाह—तमित्यादिभिः । क्रुद्धमत एव अप्रतिहतं केनाप्यनिवारितं लक्ष्मणं सुग्रीवो दृष्ट्वा व्यथितेन्द्रियो बभूव ॥ १ ॥

गो० टी०—अथ सुग्रीवं प्रति रामसंदेशकथनं चतुस्त्रिंशे—तमप्रतिहतमित्यादि ॥ १ ॥

रा० टी०—क्रुद्धमिति । तेजसा प्रदीप्तमिव दशरथात्मजं लक्ष्मणं दृष्ट्वा स्वलंकृतो महेन्द्रस्य ध्वज इव आसनं हित्वा हरिश्रेष्ठः उत्पपात भूमौ न्यपतत् । श्लोकद्वयमेकान्वयि ॥ २॥३॥

१ ऽभीति गो. पाठः । २ चेति गो. रा. पाठः । ३ माल्येति गो. पाठः । ४ समावृतमिति गो. पाठः । ५ रिवेति गो. पाठः ।

उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः। सुग्रीवं गगने पूर्णं चन्द्रं तारागणा इव ॥ ४ ॥
संरक्तनयनः श्रीमान्संचचार कृताञ्जलिः। बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५ ॥
रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम्। अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥ ६ ॥
सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः। कृतज्ञः सत्यवादी च राजा लोके महीयते॥ ७ ॥
यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम्। मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः॥ ८ ॥
शतमश्वानृते हन्ति सहस्रं तु गवानृते। आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते॥ ९ ॥
पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः। कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ १० ॥
गीतोऽयं ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः। दृष्ट्वा कृतघ्नं क्रुद्धेन तन्निबोध प्लवङ्गम ॥ ११ ॥

गो० टी०—क्रुद्धमित्यादि। महेन्द्रस्य ध्वज इव उत्पपात। स्वलंकृत इत्युभयत्रविशेषणम्॥ २ ॥ ३ ॥

४ ] ति० टी०—अनूत्पेतुः पश्चादुत्थितवत्यः॥ ४ ॥

रा० टी०—उत्पतन्तमिति। रुमाप्रभृतयः स्त्रियः उत्पतन्तं सुग्रीवमनूत्पेतुः। तत्र दृष्टान्तः—गगने उत्पतन्तं पूर्णं चन्द्रं तारागणा इव ॥ ४ ॥

गो० टी०—उत्पतन्तमिति। अनूत्पेतुः पश्चादुत्पेतुः॥४॥

५ ] ति० टी०—संचचार संमुखमाजगाम। अवस्थितो बभूवेत्यस्य लक्ष्मण इति शेषः। कल्पवृक्षोपमया सर्वहितत्वं व्यङ्ग्यम्॥ ५ ॥

रा० टी०—समिति। संरक्तनयनः श्रीमान् लक्ष्मणः संचचार इतस्ततोऽगच्छत् तत्र लक्ष्मणसंनिधौ महान् कल्पवृक्ष इव कृताञ्जलिः सुग्रीवोऽवस्थितो बभूव ॥ ५ ॥

गो० टी०—संरक्तेति। संरक्तनयनः मदेनेति शेषः॥५--७॥

६ ] ति० टी०—सतारं शशिनमिव स्थितम्॥ ६ ॥

रा० टी०—रुमेति। नारीमध्यगतं नारीणां मध्ये प्राप्तं रुमा द्वितीया यस्य तं सतारं शशिनमिव स्थितं सुग्रीवं लक्ष्मणोऽब्रवीत्॥ ६ ॥

७ ] ति० टी०—सत्त्वाभिजनाभ्यां संपन्नः। तल्लक्षणानि सानुक्रोशत्वादीनि॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—सत्त्वेति। सत्त्वाभिजनाभ्यां संपन्नः सानुक्रोशः सदयः सत्यवादी राजा लोके महीयते पूज्यते॥ ७ ॥

८ ] ति० टी०—अधर्मे स्थित इत्यन्वयः अधर्ममार्गस्थः। नृशंसतरः क्रूरतरः ॥ ८ ॥

रा० टी०—य इति। अधर्मे स्थितः यो राजा उपकारिणां मित्राणामग्रे प्रतिज्ञां स्वप्रतिश्रवं मिथ्या कुरुते ततस्तस्मादधिकः नृशंसतरः अतिघातुकः कः, स एव महाहिंसक इत्यर्थः॥८॥

गो० टी०—यस्त्विति। अधर्म इति च्छेदः॥ ८ ॥

९ ] ति० टी०—प्रकृतोपयुक्तमसत्यदोषमाह—शतमिति। एकाश्वनिमित्तकेऽनृते दानादिप्रतिज्ञाविघाते सति सोऽनृतवाक्। शतं हन्ति शताश्वहननदोषभाक्। गोविषयानृते गोसहस्रहननभाक्। एवं पुरुषानृते पुरुषविषयकिंचित्प्रतिज्ञाहानौ स पुरुषः प्रथममात्मानं हन्त्यात्मघातदोषभाक्। निजं पुण्यलोकं नाशयति वा। तथा स्वजनस्य पित्रादेः पुण्यलोकं च नाशयति॥ ९ ॥

रा० टी०—विषयभेदेन मिथ्याभेदमुपपादयति—शतमिति। अश्वानृते अश्वनिमित्तकमिथ्यावादे सति शतं हन्ति शताश्वहननजनितदोषं प्राप्नोति। गवानृते गोविषयकानृतवादे सहस्रं हन्ति सहस्रसंख्याकगवीहननजनितदोषं प्राप्नोति। पुरुषानृते पुरुषविषयकानृतवादे स्वजनमात्मानं च हन्ति स्वजनविघातजनितमात्मघातजनितं च दोषं प्राप्नोति। एतेन परमपुरुषविषयकानृतभाषिणः दोषस्य न इयत्तेति सूचितम्॥ ९ ॥

गो० टी०—शतमिति। पुरुषः अश्वानृते अश्वविषयानृते शतं हन्ति शताश्वहननदोषभाग् भवेदित्यर्थः। एवं गवानृते गोविषयानृते सहस्रं हन्ति सहस्रगोहननदोषभाग् भवेत्। पुरुषानृते आत्मानं स्वजनं हन्ति आत्मस्वजनहननदोषभाग् भवेदित्यर्थः। महापुरुषरामविषयानृते तु सर्वहननदोषभाग् भवेदिति भावः॥ ९ ॥

१० ] ति० टी०—अथ कृतघ्नदोषमाह—पूर्वमिति। कृतार्थः मित्रैरिति शेषः। सर्वभूतानां सर्वलोकानां वध्यः सर्वलोकबहिष्कार्य इत्यर्थः॥ १० ॥

रा० टी०—पूर्वमिति। पूर्वं कृतार्थो मित्रेण साधितस्वप्रयोजनो यो जनः मित्राणां तत्प्रयोजनं न करोति सः कृतघ्नः अत एव सर्वभूतानां वध्यः॥ १० ॥

गो० टी०—पूर्वमिति। तन्मित्रकार्यं न प्रतिकरोति पुनर्न करोति॥ १० ॥

११] ति० टी०—नायमर्थः स्वकल्पनामात्रकल्पित इत्याह—गीत इति। ब्रह्मणा हिरण्यगर्भेणायं श्लोकः पूर्वोक्तः सर्वलोकनमस्कृतः ब्रह्मवदेव सर्वसम्मतः इत्यर्थः। अथ रामवचनमाह—त्वां कृतघ्नं दृष्ट्वा क्रुद्धेन रामेण यदुक्तं तच्छृणु ॥ ११ ॥

रा० टी०—नन्विदं स्वयं प्रकल्प्योच्यते इत्यत आह—गीत इति। कृतघ्नं दृष्ट्वा क्रुद्धेन ब्रह्मणा सर्वलोकनमस्कृतः सर्वैर्मन्तव्य इत्यर्थः, अयमुक्तः श्लोको गीतः॥ ११ ॥

१ पूर्णचन्द्रमिति गो. पाठः।

गोघ्ने चैव सुरापे च चौरे भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥ १२ ॥
अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर । पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ १३ ॥
ननु नाम कृतार्थेन त्वया रामस्य वानर । सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४ ॥
स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः । न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥ १५ ॥
महाभागेन रामेण पापः करुणवेदिना । हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६ ॥
कृतं चेन्नातिजानीषे राघवस्य महात्मनः । सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७ ॥
न स संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगा ॥ १८ ॥
न नूनमिक्ष्वाकुवरस्य कार्मुकाच्छरांश्च तान्पश्यसि वज्रसंनिभान् ।
ततः सुखं नाम विषेवसे सुखी न रामकार्यं मनसाऽप्यवेक्षसे ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

गो० टी०–गीतोऽयमिति । ब्रह्मणा स्वायम्भुवमनुना॥ ११

१२ ] ति० टी०–किं तत्तत्राह–गोघ्न इति ॥ १२ ॥

रा० टी०–ननु प्रायश्चित्तमनुक्त्वा वध्यत्वमेव किमर्थमुक्तमित्यत आह—गोघ्न इति । गोघ्नादौ निष्कृतिः प्रायश्चित्तं सद्भिर्विहिता कृतघ्ने तु निष्कृतिर्नास्ति ॥ १२ ॥

गो० टी०–ब्रह्मघ्ने चेति । निष्कृतिः प्रायश्चित्तम्॥१२॥१३॥

१३ ] ति० टी०–कुतोऽहं कृतघ्नस्तत्राह–पूर्वमिति ॥१३॥

रा० टी०–ननु किमर्थमिदमुच्यते इत्यत आह—अनार्य इति । हे वानर ! पूर्वं कृतार्थः रामेण साधितस्वप्रयोजनस्त्वं यद्यस्माद्धेतोः रामस्य तत् स्वप्रतिज्ञातं प्रयोजनं न प्रतिकरोषि अतस्त्वं कृतघ्नः मिथ्यावादी च अत एव अनार्यः अधमः असीति शेषः ॥ १३ ॥

१४ ] ति० टी०–मिथ्यावादित्वं दर्शयति—नन्विति । यत्नः प्राक्प्रतिज्ञातः । कृतमिच्छता कृतस्य प्रतिकृतं कर्तुमिच्छता ॥ १४ ॥

रा० टी०–मिथ्यावादित्वमेव भङ्ग्यन्तरेणाह–नन्विति । कृतार्थेन अत एव कृतं प्रतिकरणमिच्छता येन त्वया सीताया मार्गणे अन्वेषणे यत्नः कर्तव्यः स त्वं ग्राम्येषु भोगेषु सक्तः अत एव मिथ्याप्रतिश्रवोऽसीति शेषः । त्वां रामो न विजानीते एतद्दोषविशिष्टत्वेन न जानाति । तत्र दृष्टान्तः--मण्डूकराविणं स्वयं गृहीतस्वमुखस्थापितदर्दुरशब्देन शब्दवन्तं सर्पं लोक इव यथा सर्पमुखस्थितदर्दुरशब्देन दर्दुरमेव जानाति न तु सर्पं तथा स्वम्मधुरभाषणादिना त्वां सज्जनमेव जानाति न तु स्वस्वरूपभूतदुर्जनत्वमित्यर्थः । श्लोकद्वयमेकान्वयि ॥१४॥१५॥

गो० टी०–नन्विति । कृतमिच्छता उपकारं स्मरता॥१४॥

१५ ] ति० टी०–मण्डूकराविणं स्वगृहीतमुखस्थमण्डूकशब्देन शब्दवन्तं सर्पं यथा जनोऽनवलोकनान्मण्डूकमेव जानीते, न तु सर्पम्, तथा तव स्वरूपं रामो नाज्ञासीदिति भावः। कश्चित्तु—मण्डूकग्रहणार्थं सर्पो मण्डूकवद्रौति तेन स्वरेण स्वगण इति विस्रब्धः स्वसमीपमागतो मण्डूकस्तेन गृह्यते । एवं वञ्चकं त्वां नाज्ञासीदित्यर्थ इत्याह । तत्तु तथालोकाप्रसिद्धयोपेक्ष्यम् ॥ १५ ॥

गो० टी०–स त्वमिति । मण्डूकराविणं मण्डूकवद्रौति तमिव वञ्चकं त्वां न जानातीत्यर्थः ॥ १५–१८ ॥

१६–१८ ] ति० टी०–पापस्त्वमित्यन्वयः ॥ १६–१८॥

रा० टी०–महाभागेनेति । करुणवेदिना रामेण दुरात्मा त्वं हरीणां राज्यं प्रापितोऽसि ॥ १६ ॥

रा० टी०–कृतमिति । राघवस्य कृतं चेद्यदि न जानीषे तर्हि बाणैर्हतस्त्वं वालिनं द्रक्ष्यसि ॥ १७ ॥

रा० टी०–न चेति । येन यथा वाली गतः स पन्थाः न संकुचितः आच्छन्नः अतः समये स्वकृतसंकेते तिष्ठ तं संस्मरेत्यर्थः । किंच समये सम्यक् शुभावहकार्ये तिष्ठ कुर्वित्यर्थः, वालिपथं मरणं मान्वगाः प्राप्नुहि ॥ १८ ॥

१९ ] ति० टी–शरान्नूनं न पश्यसि, यतो ग्राम्यसुखं निषेवसे तेन च सुखी सन्रामकार्यं मनसापि नावेक्षसे ॥१९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–नेति । रामकार्यं मनसाऽपि त्वं नावेक्षसे अतः इक्ष्वाकुवरस्य कार्मुकात् धनुषः च्युतान् वज्रसंनिभान् शरान् पश्यसि द्रक्ष्यस्येवेत्यर्थः, ततस्तद्बाणदर्शनानन्तरं सुखं न निषेवसे निर्वेक्ष्यसे ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–रामस्य संदिष्टं वाक्यमभिधाय प्रकृतकार्योचितं स्ववाक्यमाह–न नूनमिति । इक्ष्वाकुवरस्य कार्मुकच्युतान् बाणान् वज्रसंनिभान् न पश्यसि नाद्राक्षीः ननम् ततो

१ ब्रह्मघ्ने चेति गो.पाठः। २ नाभीति गो.पाठः। ३ रामस्याक्लिष्टकर्मण इति गो.पाठः। ४ चेति गो.रा.पाठः। ५ कार्मुकच्युतान् शरानिति गो.पाठः।

## पञ्चत्रिंशः सर्गः ।

कालविलम्बे हेतूनप्रदर्श्य सुग्रीवाय क्रुद्धं लक्ष्मणं सान्त्वयन्ती तारा स्थिरो भव सर्वं ते सेत्स्यतीति प्रार्थयते ।

तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा । अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १ ॥
नैवं लक्ष्मण वक्तव्यो नायं परुषमर्हति । हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥ २ ॥
नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः । नैवानृतकथो वीर न जिह्मश्च कपीश्वरः ॥ ३ ॥
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः । रामेण वीर सुग्रीवो यदन्यैर्दुष्करं रणे ॥ ४ ॥
रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम् । प्राप्तवानिह सुग्रीवो रुमां मां च परंतप ॥ ५ ॥
सुदुःखशयितः[1] पूर्वं प्राप्येदं सुखमुत्तमम् । प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६ ॥
घृताच्यां किल संसक्तो दश वर्षाणि लक्ष्मण । अहो मन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥ ७ ॥
स हि प्राप्तं न जानीते कालं कालविदां वरः[2] । विश्वामित्रो महातेजाः किं पुनर्यः पृथग्जनः ॥ ८ ॥
देहधर्मं[3]गतस्यास्य परिश्रान्तस्य लक्ष्मण । अवितृप्तस्य कामेषु[4] रामः क्षन्तुमिहार्हति ॥ ९ ॥

नाम तस्मात् खलु सुखं निषेवसे सुखी सन् रामकार्यं मनसापि नावेक्षस इति योजना ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१ ति० टी०—॥ १ ॥

रा० टी०—लक्ष्मणवचनश्रवणानन्तरकालिकं तारावचनमाह—तथेत्यादिभिः । ताराधिपनिभानना चन्द्रमुखसदृशमुखी तारा लक्ष्मणमब्रवीत् ॥ १ ॥

गो० टी०—अथ पुनस्तारया लक्ष्मणसान्त्वनं पञ्चत्रिंशे—तथा ब्रुवाणमित्यादि ॥ १ ॥

२ ] ति० टी०—तवेति । तव सुहृदो वक्त्रात् मुखाविरित्यर्थः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—नेति । हे लक्ष्मण ! हरीणामीश्वरोऽयं सुग्रीवः विशेषतो महतस्तव वक्त्रात् परुषं वचः श्रोतुं नार्हति अतः एवं वचो भवता हरीश्वरो न वक्तव्यः ॥२॥

गो० टी०—नैवमिति । वक्तव्यः परुषमिति शेषः ॥ २ ॥

३–५ ] ति० टी०—नार्हतीत्यत्र हेतुः—नैवेत्यादि । अनृतकथोऽनृतवाक् ॥ ३–५ ॥

रा० टी०—नन्वस्य गुणाः एव उच्यन्ते न किंचिदपूर्वमित्यत आह—नेति । सुग्रीवः अकृतज्ञत्वादिविशिष्टो न ॥ ३ ॥

गो० टी०—नैवेति । जिह्मः कुटिलः ॥ ३ ॥

रा० टी०—उपकारमिति । अन्यैर्दुष्करं रामेण कृतमुपकारं यत् प्रत्युपकारविषयकयत्नवान् सुग्रीवः न विस्मृतः कर्तरि निष्ठा ॥ ४ ॥

रा० टी०—रामेति । रामप्रसादात् रामानुग्रहात् सुग्रीवः कीर्त्यादि प्राप्तवान् ॥ ५ ॥

गो० टी०—उपकारमिति । विस्मृत इति कर्तरि निष्ठा । अन्यैर्दुष्करं तम् उपकारं न विस्मृत इति योजना ॥ ४–६ ॥

६ ] ति० टी०—यदि न कृतघ्नः, कथं तर्हि कालात्ययानभिज्ञस्तत्राह—सुदुःखेति । सततमनुभूतदुःखः । प्राप्तकालमवश्यं कर्तव्यम् ॥ ६ ॥

रा० टी०—ननु विस्मृत्यभावे कथं कालातिक्रम इत्यत आह—सुदुःखमिति । पूर्वं सुदुःखं शयितः सुग्रीवः इदमुत्तमं सुखं प्राप्य विश्वामित्रो मुनिरिव प्राप्तकालं न जानीते अजानात् ॥ ६ ॥

७–८ ] ति० टी०—घृताच्यामिति । अहो दिनम् । यद्यपि पूर्वं बालकाण्डे मेनकासंबन्ध उक्तस्तथाप्येतद्वचनाद्घृताचीसंबन्धोऽपि तस्य ज्ञेय इत्याहुः ॥ ७ ॥ ८ ॥

रा० टी०—विश्वामित्रस्य कालविस्मृतिमुपपादयति—घृताच्यामिति । घृताच्यां तदभिधाप्सरसि संसक्तो महामुनिर्विश्वामित्रः दशवर्षाणि अहः एकदिनममन्यत ॥ ७ ॥

रा० टी०—स इति । स प्रसिद्धो महातेजा विश्वामित्रः न जानीते पृथक् ततोऽन्यो यो जनः स न जानीते इति किम् ॥ ८ ॥

गो० टी०—घृताच्यामिति । विश्वामित्रो घृताच्यामासक्तो दश वर्षाणि अहो मन्यत दिनममन्यत । घृताचीशब्देनात्र मेनकैवोच्यते मेनकासंगस्य बालकाण्डेऽभिधानात् ॥ ७ ॥ ८ ॥

९ ] ति० टी०—देहधर्मो आहारनिद्रामैथुनानि । 'पशुधर्म' इति पाठेऽप्ययमेवार्थः ॥ ९ ॥

रा० टी०—देहेति । देहधर्मगतस्य देहित्वात् देहधर्मवतः अत एव परिश्रान्तस्य पूर्वं चिरं दुःखानुभवात् खिन्नस्य अत एव कामेषु रामप्रसादात् प्राप्तराजोचितविषयेषु अवितृप्तस्य

१ सुदुःखमिति गो. रा. पाठः । २ वरेति रा. पाठः । ३ धर्ममिति गो. पाठः । ४ काममिति गो. पाठः ।

न च रोषवशं तात गन्तुमर्हसि लक्ष्मण । निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १० ॥
सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ । अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥ ११ ॥
प्रसादये त्वां धर्मज्ञ सुग्रीवार्थे[1] समाहिता । महान्रोषसमुत्पन्नः संरम्भस्त्यज्यतामयम् ॥ १२ ॥
रुमां मां चाङ्गदं राज्यं[2] धनधान्यपशूनि[3] च । रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ॥ १३ ॥
समानेष्यति सुग्रीवः सीतया सह राघवम् । शशाङ्कमिव रोहिण्या हत्वा[4] तं राक्षसाधमम् ॥ १४ ॥
शतकोटिसहस्राणि लङ्कायां किल रक्षसाम्[5] । आयुतानि[6] च षट्त्रिंशत्सहस्राणि शतानि च ॥ १५ ॥
अहत्वा तांश्च दुर्धर्षान्राक्षसान्कामरूपिणः । अशक्यं रावणं हन्तुं येन सा मैथिली हृता ॥ १६ ॥
ते न शक्या[7] रणे हन्तुमसहायेन लक्ष्मण । रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७ ॥
एवमाख्यातवान्वाली स ह्यभिज्ञो हरीश्वरः । आगमस्तु न मे व्यक्तः श्रवात्तस्य[8] ब्रवीम्यहम् ॥ १८ ॥

अल्पकालेन तृप्तिरहितस्य अस्य सुग्रीवस्य इह अस्मिन्समये रामः क्षन्तुमर्हति ॥ ९ ॥

गो० टी०—देहेति । देहधर्मं गतस्य शरीरत्वभावं प्राप्तस्य कामं कामवर्तनम् ॥ ९ ॥

१०-११] ति० टी०—निश्चयार्थं कर्तव्यार्थनिश्चयम् १०-११॥

रा० टी०—नेति । निश्चयार्थं निश्चिततत्त्वमविज्ञाय अनिश्चित्य प्राकृत इव रोषवशं गन्तुं नार्हसि ॥ १० ॥

रा० टी०—तत्र शिष्टाचारं प्रमाणयति—सत्त्वेति । त्वद्विधास्त्वत्सदृशाः सत्त्वयुक्ताः पुरुषाः अविमृश्य अविचार्य रोषस्य वश्यतां सहसा न यान्ति ॥ ११ ॥

गो० टी०—अपराधमङ्गीकृत्य सान्त्वयित्वा इदानीं विचार्यमाणे अपराध एव नास्तीत्याह—न चेति । निश्चयार्थं निश्चयरूपमर्थं सुग्रीवाभिप्रायमिति यावत् ॥ १० ॥ ११ ॥

१२-१४ ] ति० टी०—रोषेण समुत्पन्नः संरम्भः क्षोभः ॥ १२-१४ ॥

रा० टी०—प्रसादय इति । सुग्रीवार्थं सुग्रीवकल्याणार्थं समाहिता एकाग्रचित्ताऽहं त्वां प्रसादये अतः रोषसमुत्पन्नः अयं संरम्भः संक्षोभः त्यज्यताम् ॥ १२ ॥

गो० टी०—प्रसाद इति । संरम्भः अभिनिवेशः ॥ १२ ॥

रा० टी०—ननु रामकार्यसिद्धिः कथं स्यादित्यत आह—रुमामिति । सुग्रीवः रामप्रियार्थं रामप्रीतये रुमादिकं त्यजेत् इति मम मतिर्निश्चयः एतेन रामसदृशः सुग्रीवप्रियः कश्चिन्नास्तीति ध्वनितम् ॥ १३ ॥

गो० टी०—रुमामिति । धनधान्येत्यत्र धनशब्दो हस्तिरथाश्वादिपरः वसुशब्दो रत्नपरः ॥ १३ ॥

रा० टी०—समिति । सुग्रीवः राक्षसाधमं हत्वा रोहिण्या शशाङ्कं चन्द्रमिव सीतया सह राघवं समानेष्यति ॥ १४ ॥

गो० टी०—समानेष्यतीति । समानेष्यति घटयिष्यति । निहत्वेत्यत्र ल्यबभाव आर्षः ॥ १४-१६ ॥

१५-१६ ] ति० टी०—कथमयं रावणं हनिष्यतीत्यत्र तत्साहाय्यकसाध्यत्वात्तद्वधस्येत्याह—शतेति । एषा संख्या विवक्षितैव । दशकोटिः समुद्रः शतकोटिमध्ये मध्यानां सहस्रं तथा षष्टिसहस्राधिकत्रिलक्षाणि तदुपरि षट्त्रिंशत्सहस्राणि तदुपरि तावन्ति शतानीत्यर्थः ॥ १५ ॥ १६ ॥

रा० टी०—नन्विदानीमेव गत्वा रावणं निहत्य मैथिलीं कुतो नानयतीत्यत आह—शतेति । रक्षसां शतकोटिसहस्राणि शतकोटिसहस्रसंख्याकरक्षांसीत्यर्थः, रक्षसामयुतादीनि च अयुतादिसंख्याकरक्षांसीत्यर्थः, लङ्कायां सन्तीति शेषः ॥ १५ ॥

रा० टी०—अहत्वेति । कामरूपिणस्तान् लङ्कास्थान् राक्षसान् अहत्वा येन मैथिली हृता तं रावणं हन्तुमशक्यमवेहीति शेषः । कामरूपिण इत्यनेन लङ्कायामुक्तसंख्याकराक्षसस्थित्यसंभवाभावः सूचितः तेन कार्यवशादेव तच्छरीराणां महत्त्वमिति व्यक्तम् ॥ १६ ॥

१७ ] ति० टी०—तावतां वधे परमशूरस्यापि सहायापेक्षास्तीत्याह—ते इति । यस्मादसहायेन रामेण ते हन्तुमशक्या यस्माद्रावणश्च क्रूरकर्मा क्रूरपराक्रमस्तस्माद्विशेषतः सुग्रीवेण सहायेन प्रयोजनमस्ति । तत्समप्रतिसेनाघटनस्य सुग्रीवाधीनत्वात्सर्वेषां मनुष्यावध्यत्वाच्चेति भावः । यत्तु तीर्थः सुग्रीवेण सहायेन ते राक्षसा हन्तुमशक्याः, रावणश्च हन्तुमशक्यः, इत्यन्वयं कृत्वा वाली किलोक्तवान्रावणवधाय सुग्रीवं वृथा प्रार्थयते रामस्तस्यासावशक्य इति कथां च कल्पयति-तदपार्थकम् रामस्य सहायापेक्षासमर्थनस्यैव प्रस्तुतत्वात् ॥ १७ ॥

रा० टी०—ननु पूर्वं राक्षसान् निहत्यानन्तरं रावणो हन्तव्य इत्यत आह—ते नेति । असहायेन विपुलवानररामोभयसाहाय्यरहितेन सुग्रीवेण ते राक्षसाः विशेषतः क्रूरकर्मा रावणश्च हन्तुं न शक्याः ॥ १७ ॥

गो० टी०—ते न शक्या इति । ते न शक्या इति छेदः

---

१ अर्थे इति गो. पाठः । २ कपिराज्यं चेति गो. पाठः । ३ वसूनीति गो. पाठः । ४ निहत्वा रावणं रणे इति गो. पाठः । ५ राक्षसा इति गो. पाठः । ६ अयुतानीति गो. पाठः । ७ न शक्य इति गो. पाठः । ८ तस्मादिति गो. पाठः ।

त्वत्सहायनिमित्तं [1]हि प्रेषिता हरिपुङ्गवाः । आनेतुं वानरान्युद्धे सुबहून्हरिपुङ्गवान् ॥ १९ ॥
तांश्च प्रतीक्षमाणोऽयं विक्रान्तान्सुमहाबलान् । राघवस्यार्थसिद्ध्यर्थं न निर्याति हरीश्वरः ॥ २० ॥
कृता सुसंस्था सौमित्रे सुग्रीवेण पुरा यथा । अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबलैः ॥ २१ ॥
ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च । अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम
कोट्योऽनेकास्तु काकुत्स्थ कपीनां दीप्ततेजसाम् ॥ २२ ॥
तव हि मुखमिदं निरीक्ष्य कोपात्क्षतजसमे नयने निरीक्षमाणाः ।
हरिवरवनिता न यान्ति शान्तिं प्रथमभयस्य हि शङ्किताः स्म सर्वाः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

ते राक्षसाः हन्तुं न शक्याः । रावणो विशेषेणासहायेन सुग्रीवेण हन्तुं न शक्यः ॥ १७ ॥

१८ ] ति० टी०—नन्वेषा रक्षःसंख्या त्वया कथं ज्ञाता तत्राह—एवमिति । आगमस्तु न मे व्यक्तः, रावणस्यैवं बलप्राप्तिप्रकारस्तु न मया ज्ञातः संख्यामात्रं प्रसङ्गात्पूर्वं श्रुतम् तस्य श्रवणात्तन्मुखतो वाक्यश्रवणात् ॥ १८ ॥

रा० टी०—ननु एवं रक्षसां संख्या त्वया कथं ज्ञातेत्यत आह—एवमिति । अभिज्ञः सर्ववेदवृत्तान्ताभिज्ञाता सः प्रसिद्धो वाली एवमाख्यातवान् कथितवान्, तस्य वालिवचनस्य श्रवात् श्रवणादेवाहं ब्रवीमि । नन्वेवं बलप्राप्तिः रावणस्य कथमित्यत आह—आगमः एवं बलप्राप्तिप्रकारस्तु मे मया न व्यक्तो ज्ञातः प्राप्तिप्रकारं वाली न कथितवानित्यर्थः ॥ १८ ॥

गो० टी०—तर्हि रावणवृत्तान्तः सर्वोऽप्याख्यायतामित्यत्राह—एवमिति । आगमः स्वयमवगमः श्रवात् श्रवणात् अत्र सुग्रीवेण युद्धाय निर्गमकाले तारयाऽङ्गदोक्तरामसुग्रीवसख्यकरणेऽभिहिते एतादृशो रावणः सुग्रीवो दुर्बलः तं कथं रामोऽवलम्बत इति वालिनोक्तमिति ज्ञेयम् ॥ १८–२० ॥

१९ ] ति० टी०—नतु सहायसंपत्तिप्रवृत्तेरस्मिन्नदर्शनात्कोपो नस्तत्राह—त्वदिति ॥ १९ ॥

रा० टी०—त्वदिति । त्वत्सहायनिमित्तं सुबहून् अतिबहुसंख्याकान् हरिपुङ्गवान् वानरश्रेष्ठान् वानरानानेतुं हरिपुंगवाः प्रेषिताः सुग्रीवेणेति शेषः ॥ १९ ॥

२० ] ति० टी०—राघवार्थं तान्प्रतीक्षमाणस्तिष्ठति, अत एवेदानीं न निर्याति ॥ २० ॥

रा० टी०—तानिति । अयं सुग्रीवः विक्रान्तान् अतिवेगवतः सुमहाबलान् तान् वानरान् राघवस्यार्थसिद्ध्यर्थं प्रतीक्षमाणः न निर्याति इदानीमेव न निर्गच्छति । एतेन तेषामागमने शीघ्रमेव निर्गमिष्यतीति ध्वनितम् ॥ २० ॥

२१ ] ति० टी०—ते तर्हि कदागमिष्यन्ति तत्राह—कृतेति । सुसंस्था शोभनागमनकालमर्यादा पुरा पूर्वं दूतप्रेषणसमये यथा कृता तथा तैः सर्वैरप्यागन्तव्यम् ॥ २१ ॥

रा० टी०—ननु तेषामागमने विलम्बः प्रतीयते इत्यत आह—कृतेति । पुरा प्रेषणसमये सुसंस्था तेषां त्वरितमागमनाय निश्चितमर्यादा यथा यथावत् कृता अतः सर्वैर्महाबलैर्वानरैः अद्यैवागन्तव्यम् इदमेव मर्यादादिनमिति तात्पर्यम् ॥ २१ ॥

गो० टी०—कृतेति । अत्र सीतान्वेषणकार्यविषये सुग्रीवेण पुरा त्वदागमनात्पूर्वमेव संस्था व्यवस्था त्रिपञ्चरात्रादूर्ध्वं नागन्तव्यमित्येवंरूपा यथा येन प्रकारेण कृता तथा अद्य अस्मिन् दिने तैरागन्तव्यम् ॥ २१ ॥ २२ ॥

२२ ] ति० टी०—रक्षःसेनापेक्षया स्वसेनाधिक्यमाह—ऋक्षेति । शतकोटिर्मध्यं तद्दशगुणात्मिका सहस्रकोटिस्तत्संख्या ऋक्षाः गोलाङ्गूलानां शतानि च शतकोटिः अन्ये कपयोऽनेकाः कोट्यः असंख्या इत्यर्थः ॥ २२ ॥

रा० टी०—आगन्तव्यवानरादिसंख्यां बोधयन्नाह—ऋक्षेति । ऋक्षकोटिसहस्राणि कोटिसहस्रसंख्याकऋक्षा इत्यर्थः, गोलाङ्गूलशतानि अनन्तसंख्याकगोलाङ्गूला दैर्घ्यसदृशदैर्घ्यविशिष्टलाङ्गूलविशिष्टवानरविशेषाश्चेत्यर्थः, कपीनामनेका कोट्यश्च अद्य अस्मिन् दिने त्वामुपयास्यन्ति प्राप्स्यन्ति अतः कोपं जहि अतिबहुसंख्याप्रयुक्तस्थित्यसंभवशङ्कानिरासस्तूक्तराक्षसन्यायेनावगन्तव्यः । सार्धश्लोक एकान्वयी ॥ २२ ॥

२३ ] ति० टी०—प्रथमभयस्य तत्सदृशभयस्य वालिवधवत्सुग्रीववधभयस्य । षष्ठ्यार्थी ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—तवेति । इदं तव मुखं निरीक्ष्य कोपात् क्षतजसमे रुधिरसदृशे तव नयने निरीक्षमाणाः अत एव प्रथमभयस्य पौर्वकालिकवालिवधसंबन्धिभयस्येव शङ्किताः सुग्रीववधविषयकशङ्कावत्य इत्यर्थः, सर्वाः हरिवरवनिताः शान्तिं न यान्ति । एतेन कोपचेष्टामुपसंहरेति सूचितम् । हिशब्द एवार्थे ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ वै इति गो. पाठः । २ यूथपानिति गो. पाठः । ३ ऽत्रेति गो. पाठः । ४ उद्यतैरिति रा. पाठः । ५ निभे इति गो. पाठः ।

## षट्त्रिंशः सर्गः ।

तारापरिसान्त्वनेन शान्तमनस्कं लक्ष्मणं सुग्रीवो राममहिमप्रशंसनपूर्वं ममापराधं क्षमस्वेति प्रार्थयते । प्रकृतिं प्राप्तो लक्ष्मणः क्रोधोक्तं परुषं क्षमस्वेति सुग्रीवं प्रार्थ्य संप्राप्य रामं क्षमयेति तं नियुङ्क्ते ।

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् । मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १ ॥
तस्मिन्प्रतिगृहीते तु वाक्ये हरिगणेश्वरः । लक्ष्मणात्सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २ ॥
ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् । चिच्छेद विमदश्चासीत्सुग्रीवो वानरेश्वरः ॥ ३ ॥
स लक्ष्मणं भीमबलं सर्ववानरसत्तमः । अब्रवीत्प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥ ४ ॥
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । रामप्रसादात्सौमित्रे पुनश्चाप्तमिदं[1] मया ॥ ५ ॥
कः शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा । तादृशं[2] प्रतिकुर्वीत अंशेनापि नृपात्मज ॥ ६ ॥
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् । सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७ ॥
सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः । [4]गिरिश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८ ॥
धनुर्विस्फारमाणस्य यस्य शब्देन लक्ष्मण । सशैला कम्पिता भूमिः सहायैः किं नु तस्य वै ॥ ९ ॥

गो० टी०–तव हीति । हिशब्दः पादपूरणे सर्वाः हरिवनिताः तवेदं मुखं निरीक्ष्य प्रथमभयस्य शङ्किताः वालिवधजनितभयशङ्किताः सत्यः रोषाद्धेतोः क्षतजसमे नयने निरीक्षमाणाः शान्तिं न यान्ति हि न यान्त्येव । प्रथमभयस्य शङ्किता इति कर्मणि षष्ठी "न लोकाव्यय-" इत्यादिना षष्ठीप्रतिषेधेऽपि तत्प्रयोग आर्षः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ ] ति० टी०–इतीति ॥ १ ॥

रा० टी०–ताराप्रार्थनानन्तरकालिकवृत्तान्तमाह—इतीत्यादिभिः । तारया इति वाक्यमुक्तः सौमित्रिः तद्वचः तारावचनं जग्राह कोपं त्यक्तवानित्यर्थः ॥ १ ॥

गो० टी०–अथ लक्ष्मणसुग्रीवसौहृदभाषणं षट्त्रिंशे–इत्युक्त इत्यादि ॥ १ ॥

२ ] ति० टी०–तस्मिंस्ताराऽनुनयवाक्ये ॥ २ ॥

रा० टी०–तस्मिन्निति । तस्मिन् लक्ष्मणे वाक्ये प्रतिगृहीते सति हरिगणेश्वरः सुग्रीवः लक्ष्मणात् प्रकुपितलक्ष्मणावलोकनात् जातं सुमहत्त्रासमत्यजत् ॥ २ ॥

गो० टी०–तस्मिन्निति । सुमहत्त्रासमिति "आन्महतः इत्याकाराभाव आर्षः । क्लिन्नम् आर्द्रम् ॥ २ ॥

३ ] ति० टी०–माल्यं मालाम् । बहुगुणं बहुविधकाममदकरम् अत एव तच्छेदफलं विमदश्चासीदिति ॥ ३ ॥

रा० टी०–तत इति । ततः त्रासत्यागानन्तरं सुग्रीवः बहुगुणं विपुलकाममदयोगकारकं कण्ठगतं माल्यं चिच्छेद ॥ ३ ॥

गो० टी०–तत इति । बहुगुणं बहुविधभोगप्रदम् । महत् दिव्यम् ॥ ३ ॥ ४ ॥

४–५ ] ति० टी०–लक्ष्मणं संप्रहर्षयन्नित्यन्वयः ॥ ४ ॥ ५ ॥

रा० टी०–स इति । सर्ववानरसत्तमः सुग्रीवः लक्ष्मणं प्रहर्षयन् सन् प्रश्रितं वाक्यमब्रवीत् ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह—प्रनष्टेति । श्रीप्रभृतिः पूर्वं प्रनष्टा इदं श्र्यादि रामप्रसादात् मया पुनः प्राप्तम् ॥ ५ ॥

गो० टी०–प्रणष्टेति । इदं पूर्वोक्तं सर्वम् ॥ ५ ॥

६ ] ति० टी०–शक्तः समर्थः । तस्य देवावतारस्य स्वेन कर्मणा धनुर्भङ्गवालिवधादिना ख्यातस्य । तादृशं तज्जनितोपकारसदृशम् ॥ ६ ॥

रा० टी०–क इति । स्वेन कर्मणा ख्यातस्य देवस्य नित्यप्रमोदवतस्तस्य रामस्य तादृशं तत्कर्मसदृशं कर्म अंशेन एककलयाऽपि कः शक्तः समर्थः प्रतिकुर्वीत न कोऽपीत्यर्थः ॥ ६ ॥

गो० टी०–क इति । तादृशं विक्रमं प्रतिकर्तुं तादृशस्य विक्रमस्य प्रतिकर्तुमित्यर्थः ॥ ६ ॥

७ ] ति० टी०–सहायमात्रेणोपलक्षितम् । स्वयमेवार्थनिर्वाहकः, अहं तु परिकरमात्रमित्यर्थः ॥ ७ ॥

रा० टी०–सीतामिति । राघवः स्वेन तेजसैव सहायमात्रेण मया रावणं वधिष्यति सीतां च प्राप्स्यति ॥ ७ ॥

गो० टी०–सीतामिति । सहायमात्रेण मयेत्युपलक्षणे तृतीया । स्वयमेवार्थसाधकः अहं तु तस्य परिकरमात्रमिति भावः ॥ ७–१० ॥

८–९ ] ति० टी०–सहायकृत्यं सहायसाध्यं कृत्यम् । येन पातालानि तत्स्थदैत्याश्च ॥ ८ ॥ ९ ॥

रा० टी०–सहायसंग्रहोऽपि तस्य क्रीडैवेति बोधयन्नाह—सहायेति । येन एकेन बाणेन द्रुमादयो दारिताः तस्य रामस्य सहायकृत्यं सहायैः साध्यं किम् ॥ ८ ॥

१ पुनः प्राप्तमिति गो. पाठः । २ सन्क इति रा. पाठः । ३ विक्रमं वीर प्रतिकर्तुमरिन्दमेति गो. पाठः । ४ शैल इति गो. पाठः ।

अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ । गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥ १० ॥
यदि किंचिदतिक्रान्तं विश्वासात्प्रणयेन वा । प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११ ॥
इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः । अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ॥ १२ ॥
सर्वथा हि मम भ्राता सनाथो वानरेश्वर । त्वया नाथेन सुग्रीव प्रश्रितेन विशेषतः ॥ १३ ॥
यस्ते प्रभावः सुग्रीव यच्च ते शौचमीदृशम् । अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४ ॥
सहायेन तु सुग्रीव त्वया रामः प्रतापवान् । वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५ ॥
धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः । उपपन्नं च युक्तं च सुग्रीव तव भाषितम् ॥ १६ ॥
दोषज्ञः प्रतिसामर्थ्ये कोऽन्यो भाषितुमर्हति । वर्जयित्वा मम ज्येष्ठं त्वां च वानरसत्तम ॥ १७ ॥
सदृशश्चासि रामेण विक्रमेण बलेन च । सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव ॥ १८ ॥
किं तु शीघ्रमितो वीर निष्क्रम त्वं मया सह । सान्त्वयस्व वयस्यं च भार्याहरणदुःखितम् ॥ १९ ॥
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् । मया त्वं परुषाण्युक्तस्तत्क्षमस्व सखे मम ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०–धनुरिति । धनुर्विस्फारमाणस्य यस्य शब्देन सशैला भूमिः कम्पिता तस्य सहायैः किम् ॥ ९ ॥

१० ] ति० टी०–अनुयात्रां पश्चाद्गमनम् । सपुरःसरं युद्धाये पुरःसरैः सहितं रावणम् ॥ १० ॥

रा० टी०–अन्विति । वैरिणं सपुरस्सरं पुरस्सरसहितं रावणं हन्तुं गच्छतो नरेन्द्रस्य रामस्य अनुयात्रां तेन सहानुगमनं करिष्ये ॥ १० ॥

११-१३ ] ति० टी०–विश्वासादयं न क्रूरोऽमित्र इति विश्वासात्प्रणयेन वा यदि किंचिदतिक्रान्तमपराद्धं तदुक्तहेतुभ्यां प्रेष्यस्य दासस्य क्षमितव्यं क्षन्तव्यम् । यस्माद्यो दासो नापराध्यति तादृशदासासंभवः । स्वामिचित्तानुवर्तनस्य सर्वथासंभवात् ॥ ११-१३ ॥

रा० टी०–यदीति । विश्वासात् विश्वासं प्राप्य यदि किंचिन्मया अतिक्रान्तं तत् प्रेष्यस्य भृत्यस्य मे प्रणयेन भृत्यविषयकस्वाभाविकस्नेहेन क्षमितव्यं कश्चिन्नापराध्यतीति न सर्वोऽपि यत्किंचिदपराध्यतीत्यर्थः, तेनापराधं दृष्ट्वा तव क्षमाया अभावे तव भृत्यस्नेहो निर्विषयो भविष्यतीति व्यञ्जितम् ॥ ११ ॥

रा० टी०–इतीति । इत्यनेन प्रकारेण ब्रुवाणस्य सुग्रीवस्य प्रेम्णा प्रीतोऽभवत् अत एव इदमुवाच ॥ १२ ॥

रा० टी०–तद्वचनाकारमाह—सर्वथेत्यादिभिः । विशेषतः प्रश्रितेन स्नेहयुक्तेन अत एव नाथेन अभिलाषप्रापकेण त्वया मम भ्राता सर्वथा सनाथोऽभिलाषप्रापकसहितोऽभवदिति शेषः ॥ १३ ॥

गो० टी०–यदीति । अतिक्रान्तम् अतिक्रमणं क्षमितव्यं क्षन्तव्यम् ॥ ११-१६ ॥

१२-१५ ] ति० टी०–शौचमिन्द्रियनिग्रहः ॥ १४ ॥ १५ ॥

रा० टी०–य इति । हे सुग्रीव ! यस्ते प्रभावः प्रतापः यच्च ते ईदृशं शौचं मनश्शुद्धिः ताभ्यां कपिराज्यस्य श्रियं भोक्तुं त्वमर्हः ॥ १४ ॥

रा० टी०–सहायेनेति । हे सुग्रीव ! त्वया सहायेन युक्तो रामः शत्रून् न चिरात् शीघ्रं वधिष्यति ॥ १५ ॥

१६ ] ति० टी०–उपपन्नं योग्यम् । युक्तं युक्तियुक्तम् ॥ १६ ॥

रा० टी०–धर्मज्ञस्येति । धर्मज्ञस्य तव भाषितमुपपन्नं युक्तिसहितमत एव युक्तमुचितम् ॥ १६ ॥

गो० टी०–धर्मज्ञस्येति । उपपन्नम् अर्हम् । युक्तं युक्तियुक्तम् ॥ १६ ॥

१७-१८ ] ति० टी०–दोषज्ञो विद्वान्को रामसुग्रीवाभ्यामन्यो भवद्वाक्यसदृशं वाक्यं वक्तुमर्हति ॥ १७ ॥ १८ ॥

रा० टी०–दोषज्ञ इति । सामर्थ्ये सति भाषितुम् एवं कथयितुं मम ज्येष्ठं रामं त्वां च वर्जयित्वा अन्यः को दोषज्ञोऽर्हति ॥ १७ ॥

रा० टी०–सदृश इति । यस्त्वं दैवतैर्देवैः सहायो दत्तः दैवयोगात्सहायत्वेन प्राप्त इत्यर्थः, स त्वं विक्रमेण बलेन च रामेण सदृशोऽसि ॥ १८ ॥

गो० टी०–दोषज्ञ इति । दोषज्ञः स्वदोषज्ञः, लोके हि समर्थः पुरुषः स्वदोषमपह्नुते न तु प्रकाशयति न तथा त्वमिति भावः ॥ १७-१९ ॥

१९ ] ति० टी०–वयस्यं रामम् ॥ १९ ॥

रा० टी०–किमिति । किंतु इदमिदानीं कर्तव्यमित्यर्थः । मया सह इतः अस्मात् पुरात् शीघ्रं निष्क्रम तत्प्रयोजनमाह–भार्याहरणदुःखितं वयस्यं सान्त्वयस्व ॥ १९ ॥

२० ] ति० टी०–स्वोक्तवाक्यानां रामोक्तस्वशङ्काव्या-

१ एवमिति गो. पाठः । २ आर्जवमिति गो. पाठः । ३ चेति गो. पाठः । ४ सतीति गो. पाठः । ५ निष्क्रामेति गो. पाठः । ६ त्वमिति गो. पाठः । ७ कर्शितमिति गो. पाठः । ८ श्रुत्वेति गो. पाठः । ९ तच्च त्वं क्षन्तुमर्हसीति गो. पाठः ।

## सप्तत्रिंशः सर्गः ।

सकलदिगन्ततः कपिसैन्यसमानयनार्थं दूतान्प्रेषयितुं सुग्रीवो हनुमन्तं नियुङ्क्ते । श्रुतसुग्रीवसंदेशाः कपयः सर्वतः सुग्रीवं समापतन् । नीलेनाग्रतः प्रेषिता दूताः सुग्रीवाय फलमूलाद्युपायनानि समर्पयन्तः सकलकपिसमागमनं न्यवेदयन् ।

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । हनुमन्तं स्थितं पार्श्वे वैचनं चेदमब्रवीत् ॥ १ ॥
महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च । मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २ ॥
तरुणादित्यवर्णेषु भ्राजमानेषु नित्यशः । पर्वतेषु समुद्रान्ते पश्चिमस्यां तु ये दिशि ॥ ३ ॥
आदित्यभवने चैव गिरौ संध्याभ्रसंनिभे । पद्मांचलवनं भीमाः संश्रिता हरिपुंगवाः ॥ ४ ॥
अञ्जनाम्बुदसंकाशाः कुंञ्जरेन्द्रमहौजसः । अञ्जने पर्वते चैव ये वसन्ति प्लवंगमाः ॥ ५ ॥
मैहाशैलगुहावासा वानराः कनकप्रभाः । मेरुपार्श्वगताश्चैव ये च धूम्रगिरिं श्रिताः ॥ ६ ॥
तरुणादित्यवर्णाश्च पर्वते ये महारुणे । पिबन्तो मधु मैरेयं भीमवेगाः प्लवंगमाः ॥ ७ ॥
वनेषु च सुरम्येषु सुगन्धिषु महत्सु च । तापसाश्रमरम्येषु वनान्तेषु समन्ततः ॥ ८ ॥
तांस्तांस्त्वंमानय क्षिप्रं पृथिव्यां सर्ववानरान् । सामदानादिभिः कंल्पैर्वानरैर्वेगवत्तरैः ॥ ९ ॥

वृत्तये स्वोक्तित्वमेव बोधयन्स्वापराधं क्षमापयति—यच्चेति । रामभाषितं सीतावियोगजविलापरूपम् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०—यदिति । शोकाभिभूतस्य रामस्य भाषितं विलापमित्यर्थः, श्रुत्वा मया परुषाणि त्वमुक्तस्तन्मे क्षमस्व॥२०॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

गो० टी०—स्वोक्तपरुषवाक्यानां रामोक्तत्वशङ्का मा भूदिति स्वेनैवोक्तत्वमुपपादयन् स्वापराधं शमयति—यच्चेति । भाषितं सीतोद्देशेन श्रवणासह्यं विलापम् ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

१-२] ति० टी०—अथ सुग्रीवेणापरिमितदूतप्रेषणमनेककोटिनिजसेनासंमेलनम्—एवमिति ॥ १ ॥ २ ॥

रा० टी०—लक्ष्मणाज्ञाश्रवणानन्तरकालिकं सुग्रीववृत्तान्तमाह—एवमित्यादिभिः । लक्ष्मणेन एवमुक्तः सुग्रीवः पार्श्वे स्थितं हनुमन्तमिदमब्रवीत् ॥ १ ॥

गो० टी०—अथ सर्ववानरसमानयनं सप्तत्रिंशे—एवमित्यादि ॥ १ ॥

रा० टी०—तद्वचनाकारमाह—महेन्द्रेत्यादिभिः । ये हरिपुङ्गवाः महेन्द्रादिपाण्डुशिखरविशिष्टमन्दरान्तेषु पञ्चशैलेषु स्थितास्तान् पश्चिमस्यां पश्चिमायां दिशि समुद्रान्ते समुद्रपरतीरे विद्यमानेषु नित्यशो भ्राजमानेषु तरुणादित्यवर्णेषु पर्वतेषु अस्ताचलावलम्बिषष्टिसहस्रसौवर्णगिरिषु ये स्थितास्ताश्च संध्याभ्रसंनिभे सायंकालिकमेघसदृशे आदित्यभवने गिरौ च उदयाचलास्ताचलयोरित्यर्थः, ये स्थिताः ये च पद्माचलवनं पद्माचलाभिधगिरिविशेषसंबन्धिकाननं संश्रिताः ये च प्लवङ्गमाः अञ्जने अञ्जननिभे पर्वते वसन्ति ये च वानराः महाशैलगुहावासाः महाशैलगुहासु आवासो येषां ते ये च मेरुपार्श्वगताः ये च धूम्रगिरिं श्रिताः मैरेयं मधु पिबन्तः महारुणे पर्वते वनादिषु च समन्ततो ये श्रितास्तान् सर्ववानरान् सामदानादिभिः कल्पैः आनेतुं समर्थैः वेगवत्तरैर्वानरैः क्षिप्रं त्वमानयस्व । श्लोकाष्टकमेकान्वयि ॥ २—९ ॥

गो० टी०—महेन्द्रादय एव पञ्च शैलाः ॥ २ ॥

३ ] ति० टी०—पर्वतेषूक्तातिरिक्तेषु । तथा पश्चिमस्यां तु ये दिशि पश्चिमस्यामित्यार्षम् ॥ ३ ॥

४-५ ] ति० टी०—आदित्यभवने गिरौ ये स्थिताः उदयाचलास्ताचलयोरित्यर्थः । पद्माचलो गिरिविशेषः ॥ ४ ॥ ५ ॥

६-७ ] ति० टी०—महाशैलस्तदाख्यपर्वतः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—तापसाश्रमरम्येषु रम्यतापसाश्रमेषु । यद्वा तै रम्येष्विति वनविशेषणम् ॥ ८ ॥

९ ] ति० टी०—क्षिप्रमानयेत्युक्ते मयैव गन्तव्यमित्याशङ्क्याह—' सामदानादिभिः कल्पैर्वानरैर्वेगवत्तरैः ' इत्यादिना दुष्टे दण्डः । कल्पैरुपायैः । आनयेत्यस्य आनाययेत्यर्थ इति कतकः ॥ ९ ॥

गो० टी०—तरुणेति । पश्चिमायां दिशि ये स्थिताः तेषु ये वानराः स्थिता इति योजना । अस्तगिरिपर्यन्तपर्वतेष्वि-

---

१ सचिवं स्विदमिति गो.पाठः। २ सर्वत इति गो. पाठः। ३ पश्चिमायामिति गो.पाठः। ४ पद्मतालवनं भीममिति गो.पाठः। ५ कुञ्जरप्रतिमौजस इति गो.पाठः। ६ मनःशिलेति गो.पाठः। ७ चेति गो.पाठः। ८ तापसानां चेति गो.पाठः। ९ समानयेति गो.पाठः।१० कल्पैराशु प्रेषय वानरानिति गो. पाठः।

प्रेषिताः प्रथमं ये च मयाज्ञाता महाजवाः । त्वरणार्थं तु भूयस्त्वं संप्रेषय हरीश्वरान् ॥ १० ॥
ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः । इहानयस्व ताञ्शीघ्रं सर्वानेव कपीश्वरान् ॥ ११ ॥
अहोभिर्दशभिर्ये च नागच्छन्ति ममाज्ञया । हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२ ॥
शतान्यथ सहस्राणि कोट्यश्च मम शासनात् । प्रयान्तु कपिसिंहानां निदेशे मम ये स्थिताः॥ १३ ॥
मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् । घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः॥ १४ ॥
ते गतिज्ञा गतिं गत्वा पृथिव्यां सर्ववानराः । आनयन्तु हरीन्सर्वांस्त्वरिताः शासनान्मम ॥ १५ ॥
तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः । दिक्षु सर्वासु विक्रान्तान्प्रेषयामास वानरान् ॥ १६ ॥
ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः । प्रयाताः प्रहिता राज्ञा हरयस्तु क्षणेन वै ॥ १७ ॥
ते समुद्रेषु गिरिषु वनेषु च सरःसु च । वानरा वानरान्सर्वान्रामहेतोरचोदयन् ॥ १८ ॥
मृत्युकालोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्यााययुः श्रुत्वा सुग्रीवभयशङ्किताः ॥ १९ ॥

स्यर्थः । आदित्यभवने उदयगिरौ पद्माः चन्दनविशेषाः मनःशिलागुहावासाः मनःशिलामयगुहावासाः । महारुणे महारुणाख्ये । यत्र यच्छब्दो नास्ति तत्राध्याहर्तव्यः । सामेति । कल्पैः उपायैः समानय तदर्थं प्रेषय ॥ ३–९ ॥

१० ] ति० टी०—ननु प्रेषिता एव पूर्वं दूता इत्यत्राह—प्रेषिता इति । प्रथमं पूर्वं ये महाजवा दूताः प्रेषितास्ते मया ज्ञाता एव, तथाऽपि तेषां त्वरणार्थमपरान्हरीश्वरान्प्रेषय ॥१०॥

रा० टी०—ननु तदानयनार्थं वानराः पूर्वमेव प्रेषिताः पुनः किमर्थमिदानीमुच्यते इत्यत आह—प्रेषिता इति । मया ज्ञाता परीक्षिताः ये पूर्वं प्रेषितास्तेषां त्वरणार्थं हरीश्वरान् भूयः संप्रेषय ॥ १० ॥

गो० टी०—प्रेषिता इति । प्रेषितदूतत्वरणार्थोक्तिः स्वस्य प्रकृतकार्ये पूर्वमेव सावधानतां लक्ष्मणाय द्योतयितुम् ॥ १० ॥

११ ] ति० टी०—कामेषु तद्भोगेषु प्रसक्ता ये च दीर्घसूत्रा विलम्बितव्यापाराः आनयस्वानायय ॥ ११ ॥

रा० टी०—ये इति । ये वानराः कामेषु प्रसक्ताः ये च दीर्घसूत्राः स्वभावतो विलम्बेन कार्यकारिणः तान् शीघ्रमिहानयस्व ॥ ११ ॥

गो० टी०—ये प्रसक्ता इति । दीर्घसूत्राः चिरक्रियाः उद्योगं कुर्वाणा इव कालयापका इत्यर्थः ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—ये दूताः ॥ १२ ॥

रा० टी०—अहोभिरिति । दशभिः अहोभिः दिनैः ये इह न आगच्छन्ति ते राजशासनदूषकाः ममाज्ञया हन्तव्याः ॥१२॥

१३ ] ति० टी०—प्रेषणीयदूतसंख्यामाह—शतानीति । एतेन दूतानन्त्यमुक्तम् ॥ १३ ॥

रा० टी०—शतानीति । ये मम निदेशे स्थितास्तेषां कपिसिंहानां शतादीनि प्रयान्तु ॥ १३ ॥

गो० टी०—शतानीति । बहुसंख्याभिधानं लक्ष्मणाय वानरासंख्येयत्वद्योतनार्थम् ॥ १३ ॥ १४ ॥

१४] ति०टी०—तदेव स्पष्टयति—छादयन्त इवाम्बरमिति १४

रा० टी०—मेघेति । अम्बरं छादयन्त इव मेघपर्वतसंकाशाः ये कपिश्रेष्ठास्ते मच्छासनादितः यान्तु त्वरणार्थमिति शेषः ॥ १४ ॥

१५–१६ ] ति० टी०—गतिं गत्वा वेगवत्तरां गतिं गत्वा ॥ १५ ॥ १६ ॥

रा० टी०—ते इति । गतिज्ञाः तत्तत्स्थानाभिज्ञाः सर्ववानराः गतिं तत्तन्निवासं गत्वा सर्वान् हरीन् आनयन्तु गतिशब्दः कर्मसाधनः ॥ १५ ॥

रा० टी०—तस्येति । वायुसुतो हनुमान् वानरराजस्य वचः श्रुत्वा विक्रान्तान् विक्रमवतो वानरान् सर्वासु दिक्षु प्रेषयामास ॥ १६ ॥

गो० टी०—त इति । गम्यत इति गतिः वासस्थानम् । पृथिव्यां सर्वान् हरीन् आनयन्तु इति संबन्धः ॥ १५ ॥ १६ ॥

१७–१८ ] ति० टी०—विष्णुविक्रान्तं पदमाकाशम् । पतत्रिज्योतिरध्वगाः पक्षिणां नक्षत्राणां च मार्गगाः॥१७॥१८॥

रा० टी०—ते इति । राज्ञा प्रहिताः प्रेषितास्ते हरयः पतत्रिज्योतिरध्वगाः पतत्रिज्योतिषां पक्षिणां तारागणानां च अध्वना गच्छन्ति ते सन्तः विष्णुविक्रान्तं विष्णुचरणेन समाक्रान्तं पदं गगनं क्षणेन प्रयाताः ॥ १७ ॥

रा० टी०—ते इति । ते वानराः समुद्रादिषु विद्यमानान् वानरान् रामहेतोः अचोदयन् ॥ १८ ॥

गो० टी०—ते पदमिति । पतत्रिज्योतिरध्वगाः पक्षिनक्षत्रमार्गगाः सन्तः विष्णुविक्रान्तं पदम् आकाशं प्रयाताः॥१७–१९

१९] ति०टी०—मृत्युकालोपमस्य निग्रहविषय इति शेषः१९

१ दूता इति गो. पाठः । २ हरीन् संप्रेषयापरानिति गो. पाठः । ३ सर्वाञ्शीघ्रं तु मम शासनादिति गो. पाठः । ४ हीति गो. पाठः । ५ सहस्राणामिति गो. पाठः । ६ दिशो मम मते इति गो. पाठः । ७ नदिति गो. पाठः ।

ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान्महाबलाः । तिस्रः कोट्यः प्लवंगानां निर्ययुर्यत्र राघवः ॥ २० ॥
अस्तं गच्छति यत्रार्कस्तस्मिन्गिरिवरे रताः । संतप्तहेमवर्णाभास्तस्मात्कोट्यो दश च्युताः ॥ २१ ॥
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणां समागमन् ॥ २२ ॥
फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥ २३ ॥
अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन्द्रुतम् ॥ २४ ॥
क्षीरोदवेलानिलयास्तमालवनवासिनः । नारिकेलाशनाश्चैव तेषां संख्या न विद्यते ॥ २५ ॥
वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाबलाः । आगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६ ॥
ये तु त्वरयितुं याता वानराः सर्ववानरान् । ते वीरा हिमवच्छैले ददृशुस्तं महाद्रुमम् ॥ २७ ॥
तस्मिन्गिरिवरे पुण्ये यज्ञो माहेश्वरः पुरा । सर्वदेवमनस्तोषो बभूव सुमनोरमः ॥ २८ ॥
अन्ननिस्यन्दजातानि मूलानि च फलानि च । अमृतस्वादुकल्पानि ददृशुस्तत्र वानराः ॥ २९ ॥
तदन्नसंभवं दिव्यं फलमूलं मनोहरम् । यः कश्चित्सकृदश्नाति मासं भवति तर्पितः ॥ ३० ॥

रा० टी०-मृत्युमिति । मृत्युकालोपमस्य अस्य सुग्रीवस्याज्ञां श्रुत्वा सुग्रीवभयशङ्किताः सन्तः वानरा आययुः ॥१९॥

२०-२४ ] ति० टी०-तस्माद्गिरेरञ्जनगिरेः ॥२०-२४॥

रा० टी०-तत इति । ततः आगमनानन्तरं तस्माद्वर्णिताद्गिरेः आगताः प्लवङ्गमानां तिस्रः कोट्यः यत्र राघवस्तत्र निर्ययुः ॥ २० ॥

रा० टी०-अस्तमिति । यत्र अर्कः अस्तं गच्छति तस्मिन् गिरिवरे रताः स्थिताः ये संतप्तहेमवर्णाभास्ते दशकोट्यस्तस्मात् गिरेः च्युताः ॥ २१ ॥

रा० टी०-कैलासेति । सिंहकेसरवर्चसां वानराणां कोटिसहस्राणि समागमन् ॥ २२ ॥

रा० टी०-फलेति । फलमूलेन जीवन्तः हिमवन्तमुपाश्रितास्तेषां कोटिसहस्राणां कोटिसहस्रसंख्याकानां सहस्रं समवर्तत प्राप्नोत् ॥ २३ ॥

रा० टी०-अङ्गारकेति । अङ्गारकसमानानां भौमसदृशानां भीमकर्मणां भयंकरकर्मकारिणामत एव भीमानां वानरकोटीनां कोटिसंख्याकवानराणां सहस्राणि विन्ध्यात् विन्ध्यगिरेः द्रुतमपतन् ॥ २४ ॥

गो० टी०-तत इति । यत्र येन हेतुना राघवो वर्तते ततः तस्माद्धेतोः तस्मात् गिरेः अञ्जनगिरेः निर्ययुः ॥ २०-२४ ॥

२५-२६ ] ति० टी०-असंख्यं बलमित्याह—तेषां संख्या न विद्यत इति ॥ २५ ॥ २६ ॥

रा० टी०-क्षीरेति । क्षीरोदवेलानिलयाः क्षीरसागरवप्रनिवासिनस्तमालवनवासिनश्च नारिकेलाशनाः ये वानराः आगता इति शेषः, तेषां संख्या न विद्यते बहुत्वात्ते न परिगणिता इति तात्पर्यम् ॥ २५ ॥

रा० टी०-वनेभ्य इति । वानरीसेना दिवाकरं पिबन्तीव वनादिभ्य आगच्छत् ॥ २६ ॥

गो० टी०-क्षीरोदेति अत्रापतन् द्रुतमित्यनुषज्यते । संख्या न विद्यत इति उत्तरत्र संख्याकीर्तनं प्रधानाभिप्रायेण ॥ २५ ॥ २६ ॥

२७ ] ति० टी०-ये च त्वरयितुं याता हनुमत्प्रेषिता महाद्रुमभतिप्रसिद्धभगवद्धामभूतं माहेश्वरयज्ञवाटस्थं ददृशुः । पूर्वं नीलप्रेषितान्दूताश्च ददृशुरिति शेषः । अतस्तेषां तत एव परावृत्तिः ॥ २७ ॥

रा० टी०-ये इति । सर्ववानरान् त्वरयितुं याता ये वानरास्ते तु तं शिवाश्रमत्वेन प्रसिद्धं महाद्रुमं ददृशुः ॥ २७ ॥

गो० टी०-ये त्विति । तुशब्दो हनुमत्प्रेरितवानरव्यावर्तकः । नीलेन पूर्वं प्रेरिता इत्यर्थः । तेषामेव लक्ष्मणसंनिधाने समागमनं सद्यो हनुमत्प्रेरितानां तदसंभवात् । तं प्रसिद्धम् ॥ २७-३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

२८ ] ति० टी०-माहेश्वरो यज्ञो महेश्वरदेवत्यो विश्वोऽश्वमेध इति कतकः । सर्वदेवानां मनस्तोषो यत्र सः ॥ २८ ॥

रा० टी०-तस्मिन्निति । पुण्ये तस्मिन् गिरिवरे सर्वदेवमनस्तोषः निखिलदेवतृप्तिकारकः माहेश्वरः महेश्वरदेवताकः सुमनोरमः यज्ञो बभूव ॥ २८ ॥

२९-३० ] ति० टी०-अन्ननिस्यन्दाद्धोमद्रव्याज्यादिस्रवणाज्जातानि ॥ २९ ॥ ३० ॥

रा० टी०-अन्नेति । तत्र तस्मिन् गिरिवरे अन्ननिष्यन्दात् पायसादिप्रस्रावणात् जातानि अमृतस्वादुकल्पानि मूलानि फलानि च वानराः ददृशुः ॥ २९ ॥

रा० टी०-तदिति । तदन्नसंभवं फलमूलं सकृदेकवारं योऽश्नाति स मासं तर्पितस्तृप्तो भवति ॥ ३० ॥

---

१ जवा इति गो. पाठः । २ स्थिता इति गो. पाठः । ३ तप्तहेमसमाभास इति गो. पाठः । ४ उपेति गो. पाठः । ५ अशना इति गो. रा. पाठः । ६ जवेति गो. बलेति रा. पाठः । ७ शैलमिति गो. पाठः । ८ बभौ दिव्यो मनोहर इति गो. पाठः । ९ निष्यन्देति गो.रा.पाठः । १० अमृतास्वादेति गो. पाठः । ११ फलमिनि गो. पाठः ।

तानि मूलानि दिव्यानि फलानि च फलाशनाः । औषधानि च दिव्यानि जगृहुर्हरिपुङ्गवाः ॥ ३१ ॥
तस्माच्च यज्ञायतनात्पुष्पाणि सुरभीणि च । आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२ ॥
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् । संचोदयित्वा त्वरितं यूथानां जग्मुरग्रतः ॥ ३३ ॥
ते तु तेन मुहूर्तेन कपयः शीघ्रचारिणः । किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४ ॥
ते गृहीत्वौषधीः सर्वाः फलमूलं च वानराः । तं प्रतिग्राहयामासुर्वचनं चेदमब्रुवन् ॥ ३५ ॥
सर्वे परिसृताः शैलाः सरितश्च वनानि च । पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥ ३६ ॥
एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः । प्रतिजग्राह च प्रीतस्तेषां सर्वमुपायनम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

## अष्टात्रिंशः सर्गः ।

शिबिकामधिरुह्य सौमित्रिणा सहागत्य पादयोः प्रणमन्तं सुग्रीवं परिष्वज्योपवेश्य रामः सग्रहेण राजतन्त्रं समुपदिशन्कार्यं स्मारयति । रामप्रसादं प्रशंसन्सुग्रीवः स्वोद्यमं निवेद्यासङ्ख्येयकपिबलप्रापणं ख्यापयन्परितोषयति ।

प्रतिगृह्य च तत्सर्वमुपायनमुपाहृतम् । वानरान्सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १ ॥
विसर्जयित्वा स हरीन्सहस्रान्कृतकर्मणः । मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २ ॥
स लक्ष्मणो भीमबलं सर्ववानरसत्तमम् । अब्रवीत्प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन् ॥ ३ ॥
किष्किन्धाया विनिष्क्राम[9] यदि ते सौम्य रोचते । तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ॥ ४ ॥

३१-३२] ति० टी०—औषधानि संजीवन्यादीनि॥३१॥३२॥

रा० टी०—तानीति । तानि मूलानि फलानि च दिव्यानि औषधानि च हरियूथपाः जगृहुः ॥ ३१ ॥

रा० टी०—तस्मादिति । तस्मात् गिरिस्थात् यज्ञायतनात् यज्ञभूमेः सुरभीणि पुष्पाणि वानराः गत्वा आनिन्युः ॥ ३२ ॥

३३-३४] ति० टी०—ते तु सर्वे दूतरूपा यूथानामग्रतः स्वप्रेरितबलानामागमनात्पूर्वमित्यर्थः ॥ ३३ ॥ ३४ ॥

रा० टी०—ते इति । ते सर्वे हरिवराः पृथिव्यां विद्यमानान् सर्ववानरान् अनागतनिखिलकपीन् संचोदयित्वा संचोद्य यूथानामग्रतः त्वरितं जग्मुः ॥ ३३ ॥

रा० टी०—ते इति । त्वरयोपलक्षितास्ते कपयस्तेन स्वस्वयूथपेन सह यत्र सुग्रीवो वानरस्तां किष्किन्धां मुहूर्तेन प्राप्ताः ॥ ३४ ॥

३५-३७ ] ति० टी०—ते हनुमत्प्रेष्यसहिता नीलप्रेषिता दूताः ॥ ३५-३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०—ते इति । ते वानराः सर्वाः गृहीतौषधीस्तं सुग्रीवं ग्राहयामासुः इदमब्रुवन् च ॥ ३५ ॥

रा० टी०—तद्वचनाकारमाह—सर्व इति । शैलादयः परिसृताः अस्माभिर्गताः अत एव सर्वे वानराः तव शासनात् उपयान्ति समीपमागच्छन्ति ॥ ३६ ॥

रा० टी०—एवमिति । एवं श्रुत्वा हृष्टः सुग्रीवस्तेषामुपायनं प्रतिजग्राह ॥ ३७ ॥

इति श्रीमद्रामीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

१ ] ति० टी०—प्रतिगृह्येति ॥ १ ॥

रा० टी०—उपायनग्रहणानन्तरकालिकं सुग्रीववृत्तान्तमाह—प्रतिगृह्येत्यादिभिः । उपाहृतं वानरैः प्रापितमुपायनं प्रतिगृह्य वानरान् सान्त्वयित्वा व्यसर्जयत् ॥ १ ॥

गो० टी०—अथ रामेण सुग्रीवसमागमोऽष्टात्रिंशे—प्रतिगृह्येत्यादि । उपायनम् उपदाम् ॥ १-६ ॥

२-३ ] ति० टी०—राघवं च कृतार्थमित्यनुषङ्गः ॥२॥३॥

रा० टी०—विसर्जयित्वेति । स सुग्रीवः कृतकर्मणः बहुवारं साधितकृत्यान् हरीन् विसर्जयित्वा विसर्ज्य राघवमात्मानं च कृतार्थं मेने ॥ २ ॥

रा० टी०—स इति । लक्ष्मणः सुग्रीवं संप्रहर्षयन् हे सौम्य ! यदि तव रोचते तर्हि किष्किन्धाया विनिष्कामः विनिष्क्रमणं भवेदिति शेषः, इति प्रश्रितं वाक्यमब्रवीत् । सार्धश्लोक एकान्वयी ॥ ३ ॥

४ ] ति० टी०—विनिष्कामेति । प्रार्थने लोट् ॥ ४ ॥

१ यूथपा इति गो. रा. पाठः । २ त्वरिता इति गो. पाठः । ३ यूथपा इति गो. पाठः । ४ गामिन इति गो. पाठः । ५ गता इति गो. पाठः । ६ समुद्रा इति गो. पाठः । ७ तदिति गो. पाठः । ८ शूरांस्तानिति गो. रा. पाठः । ९ विनिष्कामो इति रा. पाठः ।

परमप्रीतो वाक्यमेतदुवाच ह । एवं भवतु गच्छाम स्थेयं त्वच्छासने मया ॥ ५ ॥
तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् । विसर्जयामास तदा तौराद्याश्चैव योषितः ॥ ६ ॥
ऐहीत्युच्चैर्हरिवरान्सुग्रीवः समुदाहरत् । तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ ७ ॥
बद्धाञ्जलिपुटाः सर्वे ये स्युः स्त्रीदर्शनक्षमाः । तानुवाच ततः प्राप्तान्राजाऽर्कसदृशप्रभः ॥ ८ ॥
उपस्थापयत क्षिप्रं शिबिकां मम वानराः । श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः ॥ ९ ॥
समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् । तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ॥ १० ॥
लक्ष्मणारुह्यतां शीघ्रमिति सौमित्रिमब्रवीत् । इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसंनिभम् ॥ ११ ॥
बहुभिर्हरिभिर्युक्तमारुरोह सलक्ष्मणः । पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १२ ॥
शुक्लैश्च वालव्यजनैर्धूयमानैः समन्ततः । शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिनन्दितः ॥ १३ ॥
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् । स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ॥ १४ ॥
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः । स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ॥ १५ ॥
अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः । आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ॥ १६ ॥
कृताञ्जलौ स्थिते तस्मिन्वानराश्चाभवंस्तथा । तटाकमिव तं दृष्ट्वा रामः कुड्मलपङ्कजम् ॥ १७ ॥
वानराणां महत्सैन्यं सुग्रीवे प्रीतिमानभूत् । पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ॥ १८ ॥
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे । परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ॥ १९ ॥
निषण्णं तं ततो दृष्ट्वा क्षितौ रामोऽब्रवीत्ततः । धर्ममर्थं च कामं च काले यस्तु निषेवते ॥ २० ॥
विभज्य सततं वीर स राजा हरिसत्तम । हित्वा धर्मं तथाऽर्थं च कामं यस्तु निषेवते ॥ २१ ॥

रा० टी०—तस्येति । सुभाषितं लक्ष्मणस्य वचनं श्रुत्वा त्वच्छासने यतो मया स्थेयम् अतः एवं भवदुक्तं भवतु सिध्यतु वयं गच्छामः एतत् वाक्यं परमप्रीतः सुग्रीव उवाच । सार्धश्लोक एकान्वयी ॥ ४ ॥ ५ ॥

५–६ ] ति० टी०—स्थेयम् तत्र हातव्यमित्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०—तमिति । सुग्रीवो लक्ष्मणमेवमुक्त्वा ताराद्या योषितः विसर्जयामास तत्तत् गृहं प्रापयामास ॥ ६ ॥

७ ] ति० टी०—एहि एतेत्यर्थः ॥ ७ ॥

रा० टी०—एहीति । सुग्रीवो हरिवरान् एहीत्युच्चैः समुदाहरत । अर्धं पृथक् । तस्येति । ये स्त्रीदर्शने क्षमाः तारादिसमीपस्थ सुग्रीवदर्शनयोग्याः स्युः बद्धाञ्जलिपुटास्ते हरयः वचनं श्रुत्वा शीघ्रमाययुः । अर्धद्वयमेकान्वयि ॥ ७ ॥

गो० टी०—एतेति । एत आगच्छत ॥ ७–११ ॥

८–११ ] ति० टी०—स्त्रीदर्शनक्षमाः स्त्रीसमूहेऽपि राजदर्शनक्षमाः अत्याप्ता इति यावत् ॥ ८–११ ॥

रा०टी०—तानिति । अर्कसदृशप्रभो राजा हे वानराः! मम शिबिकां क्षिप्रमुपस्थापयत इति प्राप्तान् वानरान् उवाच ॥८॥

रा० टी०—श्रुत्वेति । हरयस्तस्य सुग्रीवस्य वचनं श्रुत्वा शिबिकां समुपस्थापयामासुः ॥ ९ ॥

रा० टी०—तामिति । वानराधिपः सुग्रीवः शिबिकां समुपस्थापितां दृष्ट्वा हे लक्ष्मण ! त्वया आरुह्यतामिति सौमित्रिमब्रवीत् ॥ १० ॥

रा० टी०—इतीति । इत्युक्त्वा बहुभिर्हरिभिर्वानरैः युक्तं विमानं सलक्ष्मणो लक्ष्मणसहितः समारुरोह ॥ ११ ॥

गो० टी०—इत्युक्त्वेति । हरिभिः वाहकहरिभिः १२–१६

१२–१६ ] ति० टी०—हरिभिर्वाहकैः । सलक्ष्मण इत्यनेनैकवाहनारोहणात्सख्यातिशयः सूचितः ॥ १२–१६ ॥

रा० टी०—पाण्डुरेणेति । मूर्धनि ध्रियमाणेन पाण्डुरेण पाण्डुरवर्णविशिष्टेन आतपत्रेण छत्रेण समन्ततो धूयमानैर्वालव्यजनैश्चामरैश्च शङ्खभेरीनिनादैश्च बन्दिभिश्च अभिनन्दितः प्राप्तानन्दः सुग्रीवः उत्तमां राज्यश्रियं प्राप्य निर्ययौ । अर्धचतुष्टयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०—स इति । तीक्ष्णैः बहुभिः परिकीर्णो युक्तः सः सुग्रीवः यत्र रामो व्यवस्थितः संस्थितस्तत्र ययौ ॥ १४ ॥

रा० टी०—स इति । सलक्ष्मणः सुग्रीवः रामनिषेवितं तं देशमनुप्राप्य शिबिकायाः अवातरत् । ततो राममासाद्य कृताञ्जलिपुटोऽभवत् । सार्धश्लोक एकान्वयी ॥ १५ ॥ १६ ॥

गो० टी०—आसाद्येति । तथाभवन् कृताञ्जलिपुटा अभवन् ॥ १७ ॥ १८ ॥

१७–२१ ] ति० टी०—वानराश्च तथाभवन् कृताञ्जलि-

१ तारामन्याश्चेति गो. पाठः । २ एतेत्युच्चैरिति गो. पाठः । ३ बहुद्भिरिति गो. पाठः । ४ प्रीयेति गो. पाठः । ५ हरिभिरिति गो. पाठः । ६ वच इति गो. पाठः ।

स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते । अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ॥ २२ ॥
त्रिवर्गफलभोक्ता च राजा धर्मेण युज्यते । उद्योगसमयस्त्वेष प्राप्तः शत्रुनिषूदन ॥ २३ ॥
संचिन्त्यतां हि पिङ्गेश हरिभिः सहमन्त्रिभिः । एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ॥ २४ ॥
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया ॥ २५ ॥
तव देव प्रसादाच्च भ्रातुश्च जयतां वर । कृतं न प्रतिकुर्याद्यः पुरुषाणां हि दूषकः ॥ २६ ॥
एते वानरमुख्याश्च शतशः शत्रुसूदन । प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ॥ २७ ॥
ऋक्षाश्च वानराः शूरा गोलाङ्गूलाश्च राघव । कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ॥ २८ ॥
देवगन्धर्वपुत्राश्च वानराः कामरूपिणः । स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव ॥ २९ ॥
शतैः शतसहस्रैश्च वर्तन्ते कोटिभिस्तथा । अयुतैश्चावृता वीर शङ्कुभिश्च परंतप ॥ ३० ॥
अर्बुदैरर्बुदशतैर्मध्यैश्चान्त्यैश्च वानराः । समुद्राश्च परार्धाश्च हरयो हरियूथपाः ॥ ३१ ॥
आगमिष्यन्ति ते राजन्महेन्द्रसमविक्रमाः । मेघपर्वतसंकाशा मेरुविन्ध्यकृतालयाः ॥ ३२ ॥

पुटा अभवन्नित्यर्थः । आह्लादकत्वात्तटाकोपमा तदुपमेयं वानराणां महत्सैन्यम् ॥ १७—२१ ॥

रा० टी०-कृतेति । स्थिते तस्मिन् सुग्रीवे कृताञ्जलौ सति वानराश्च तथा कृताञ्जलयोऽभवन् । अर्धं पृथक्—तटाकमिति । कुड्मलपङ्कजं मुकुलीभूतपङ्कजविशिष्टं तं प्रसिद्धं तटाकमिव वानराणां महत्सैन्यं रामो दृष्ट्वा सुग्रीवे प्रीतिमान्भूत् । अर्धद्वयमेकान्वयि ॥ १७ ॥

रा० टी०-पादयोरिति । मूर्ध्ना पादयोः पतितं हरीश्वरं प्रेम्णा बहुमानात् अतिसत्काराच्च धर्मात्मा राघवः परिषस्वजे परिष्वज्य निषीद तिष्ठ इत्यब्रवीच्च । सार्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

रा० टी०-निषण्णमिति । क्षितौ पृथिव्यां निषण्णं स्थितं तं सुग्रीवं दृष्ट्वा रामोऽब्रवीत् । अर्धं पृथक् । तद्वचनाकारमाह–धर्ममिति । यः पुरुषः धर्मादीन् विभज्य काले यथोचितसमये सततं सेवते स एव राजा । अर्धद्वयमेकान्वयि ॥ २० ॥

रा० टी०-हित्वेति । यः पुरुषः धर्ममर्थं च हित्वा काममेव सेवते सः पुरुषः पतितः अर्थादिभ्यः च्युतः सन् प्रतिबुध्यते पश्चात्तापं करोतीत्यर्थः । तत्र दृष्टान्तः–वृक्षाग्रे सुप्तः अत एव पतितः जनो यथा ॥ २१ ॥

गो० टी०-पादयोरिति । पूर्वं दूरादञ्जलिः कृतः संप्रति समीपे पादयोः पतनम् ॥ १९–२३ ॥

२२] ति० टी०-वृक्षाग्रे सुप्तः पतितः सन्यथा प्रतिबुध्यते, तथा कामपरो राज्यभ्रष्टः सन्प्रतिबुध्यत इत्यर्थः ॥ २२ ॥

रा०टी०-अमित्राणामिति । अमित्राणां शत्रूणां वधे युक्तः नियतचित्तः मित्राणां संग्रहे संपादने रतो राजा धर्मेण युज्यते अत एव त्रिवर्गफलभोक्ता च भवतीति शेषः ॥ २२ ॥

गो० टी०-अमित्राणामिति । त्रिवर्गफलभोक्ता यथाकालं धर्मार्थकामरूपफलभोक्ता । अयथाकालानुष्ठानवैषम्यं द्योतयति तुशब्दः । धर्मेण राजधर्मेण ॥ २४–२६ ॥

२३ ] ति० टी०-त्रिवर्गो धर्मार्थकामलक्षणस्तस्य तत्फलस्य च यथाकालं भोक्ता ॥ २३ ॥

२४–२५ ] ति० टी०-संचिन्त्यताम् सीतान्वेषणादिप्रतिज्ञापरिपूर्त्युपायाश्चिन्त्यतामित्यर्थः ॥ २४ ॥ २५ ॥

रा० टी०-उद्योगेति । हे शत्रुनिषूदन ! एषः उद्योगसमयः उद्योगकालः प्राप्तः अतः मन्त्रिभिर्हरिभिर्वानरैः सह संचिन्त्य ताम् उद्योगः क्रियतामित्यर्थः, एवमुक्तः सुग्रीवः राममब्रवीत् । सार्धश्लोक एकान्वयी ॥ २३ ॥ २४ ॥

रा० टी०-तद्वचनाकारमाह–प्रनष्टेति । अयमित्थमेव पूर्वमपि पठितः अतो न व्याख्यायते ॥ २५ ॥

गो० टी०-प्रनष्टेत्यादिसार्धश्लोकमेकं वाक्यम् । देव ! त्वत्प्रसादात्तव भ्रातुः प्रसादाच्च कपिराज्यादिकं पुनश्च प्राप्तम् ॥ २७ ॥ २८ ॥

२६] ति०टी०-हे देव ! तव प्रसादात्तव भ्रातुः प्रसादाच्चेत्यर्थः । पुरुषाणां मध्ये स एव दूषकः धर्मनाशक इत्यर्थः॥२६॥

रा० टी०-तवेति । प्रसादात् प्रीतेः तव भ्रातुर्लक्ष्मणस्य च कृतमुपकारं यो न प्रतिकुर्यात् स पुरुषाणां महात्मनां दूषकः महात्मविघातदोषं लभते इत्यर्थः ॥ २६ ॥

२७–२९ ] ति० टी०-आदायाहूय ॥ २७–२९ ॥

रा० टी०-एते इति । शतशः एते वानरमुख्याः पृथिव्यां सर्ववानरानादाय प्राप्ताः ॥ २७ ॥

रा० टी०-ऋक्षा इति । कान्तारवनदुर्गाणामभिज्ञाः स्वैः स्वैः सैन्यैः परिवृताः ऋक्षादयः देवादिपुत्राश्च वानराः पथि वर्तन्ते । श्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

गो० टी०-एत इति । आदाय आहूय ॥ २९–३१ ॥

३० ] ति० टी०-शतैरित्यादौ 'केचित्' इत्यध्याहारः । परिवृता इत्यर्थकम् 'आवृताः' इति च सर्वत्र योज्यम् । शतसहस्रं लक्षम् । लक्षशतं कोटिः । दशसहस्रमयुतम् । कोटिलक्षं शङ्कुः ॥ ३० ॥

३१–३२ ] ति० टी०-शङ्कुसहस्रमर्बुदम् । अर्बुदाद्दशगुणं

१ स्थितिं गो. पाठः । २ विनाशनेति गो. पाठः । ३ स इति गो. पाठः । ४ ऽवाहृता इति गो. पाठः । ५ कोटिभिश्च प्लवङ्गमा इति गो. पाठः । ६ अन्त्यैरिति गो. पाठः । ७ समुद्रैश्च परार्धैश्चेति गो. रा. पाठः । ८ मेरुमन्दरसंकाशा विन्ध्यमेर्विति गो. पाठः ।

ते त्वामभिगमिष्यन्ति राक्षसं योद्धुमाहवे । निहत्य रावणं युद्धे ह्यानयिष्यन्ति मैथिलीम् ॥ ३३ ॥
ततः समुद्योगमवेक्ष्य वीर्यवान्हरिप्रवीरस्य निदेशवर्तिनः ।
बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ।

नानाजातीयासख्यातकपिबलोत्क्रामणोत्थितधूलिपटलेनाकाशं सवितानमारचयन्तः शतबलिप्रमुखाः कीशसैनिकाः समुपेत्य मिथः समन्त्रयतो रामसुग्रीवयोश्चरणौ प्रणेमुः ।

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः । बाहुभ्यां संपरिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १ ॥
यदिन्द्रो वर्षते वर्षं न तच्चित्रं भविष्यति । आदित्योऽसौ सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २ ॥
चन्द्रमा रजनीं कुर्यात्प्रभया सौम्य निर्मलाम् । त्वद्विधो वाऽपि मित्राणां प्रीतिं कुर्यात्परंतप ॥ ३ ॥

मध्यम् तस्माद्दशगुणोऽन्त्यः ततो विंशतिगुणः समुद्रः ततस्त्रिंशद्गुणः परार्धस्तेनासंख्येयत्वमुक्तम् ॥ ३१ ॥ ३२ ॥

रा० टी०-शतैरिति । हरियूथपाः हरयः शतादिभिर्वानरैरावृता वर्तन्ते, तत्र शतसहस्रे प्रसिद्धे । कोटिर्लक्षशतमयुतं दशसहस्रं, शङ्कुः कोटिलक्षम्, अर्बुदं शङ्कुसहस्रं, मध्यम् अर्बुदाद्दशगुणं, अन्त्यः मध्याद्दशगुणः, समुद्रः अन्त्याद्दशगुणः, परार्धः समुद्रात्त्रिंशद्गुण इति । श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

रा० टी०-आगमिष्यन्तीति । ते उक्तसंख्याकाः वानरा आगमिष्यन्ति शीघ्रं प्राप्स्यन्ति ॥ ३२ ॥

गो० टी०-शतैरित्यादि । अत्र केचित्पदमध्याहर्तव्यम् । केचित् प्लवङ्गमाः शतैः कपिशतैः आवृता आगमिष्यन्ति केचिच्छतसहस्रैरावृता आगमिष्यन्ति केचित्कोटिभिरावृता आगमिष्यन्ति । केचिदयुतैरावृता आगमिष्यन्ति । केचिच्छङ्कुभिः केचिदर्बुदैः केचिन्मध्यैः केचिदन्त्यैरावृता आगमिष्यन्ति केचिद्धरयः समुद्रैरावृता आगमिष्यन्ति केचित्परार्धैरावृता आगमिष्यन्तीति योजना । संख्यालक्षणमुक्तं ज्योतिःशास्त्रे–' एकं दशशतमस्मात्सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदवृन्दे खर्वं निखर्वं च ॥ तस्मान्महासरोजं शङ्कुं सरितां पतिं त्वन्तम् । मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तथा ज्ञेयम्' इति । हरियूथपा इत्येतत्प्रथमान्तविशेषणत्वेन सर्वत्र संबध्यते ॥ ३२-३४ ॥

३३ ] ति० टी०-ये आनयिष्यन्ति ते त्वामभिगमिष्यन्तीत्यन्वयः ॥ ३३ ॥

रा० टी०-ते इति । ये वानरास्त्वामभिगमिष्यन्ति ते सबान्धवं रावणं निहत्य मैथिलीमानयिष्यन्ति आनेष्यन्ति॥३३॥

३४ ] ति० टी०-प्रबुद्धनीलोत्पलतुल्यदर्शनो विकसितनीलोत्पलसदृशनेत्रः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०-तत इति । वीर्यवान् वसुधाधिपात्मजः रामः हरिप्रवीरस्य समुद्योगमवेक्ष्य हर्षात् प्रबुद्धनीलोत्पलतुल्यदर्शनो बभूव ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०-तत इति । प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पलदर्शनीयवर्णः ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

१ ] ति० टी०-इतीति ॥ १ ॥

रा० टी०-सुग्रीवप्रार्थनानन्तरकालिकं रामवृत्तान्तमाह–इतीत्यादिभिः । धर्मभृतां वरो रामः इति ब्रुवाणं सुग्रीवं बाहुभ्यां संपरिष्वज्य प्रत्युवाच ॥ १ ॥

गो० टी०-अथ सर्ववानरसेनासमागम एकोनचत्वारिंशे–इति ब्रुवाणमित्यादि ॥ १ ॥

२ ] ति० टी०-उपकर्तृत्वं तव सहजधर्म एवेति भगवान्सुग्रीवं स्तौति–यदिति । वर्षत इति यत्तन्न चित्रम् स्वाभाविकत्वादिति शेषः ॥ २ ॥

३ ] ति० टी०-निर्मलां रविकिरणजतापरहिताम् । त्वद्विधः सात्त्विको मित्राणां प्रत्युपकारेण प्रीतिं कुर्यादिति यत्तदपि न चित्रम् ॥ ३ ॥

१ ये सबान्धवमिति गो. रा. पाठः । २ संख्ये इति गो. पाठः । ३ तमिति गो. पाठः । ४ बुद्धिमानिति गो. पाठः । ५ भवेत्कचिदिति गो. पाठः । ६ वेति गो. पाठः । ७ रश्मिभिरिति गो. पाठः । ८ पृथिवीमिति गो. पाठः ।

एवं त्वयि न तच्चित्रं भवेद्यत्सौम्य शोभनम् । जानाम्यहं त्वां सुग्रीव सततं प्रियवादिनम् ॥ ४ ॥
त्वत्सनाथः सखे संख्ये[2] जेतास्मि सकलानरीन् । त्वमेव मे सुहृन्मित्रं साहाय्यं[10] कर्तुमर्हसि ॥ ५ ॥
जहारात्मविनाशाय [1]मैथिलीं राक्षसाधमः । वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् ॥ ६ ॥
न चिरात्तं वधिष्यामि रावणं निशितैः शरैः । पौलोम्याः पितरं दृप्तं शतक्रतुरिवारिहा ॥ ७ ॥
एतस्मिन्नन्तरे चैव रजः समभिवर्तत । [3]उष्णतीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८ ॥
दिशः पर्याकुलाश्चासंस्त[4]मसा तेन [5]दूषिताः । चचाल च मही सर्वा सशैलवनकानना ॥ ९ ॥
ततो [6]नरेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः । कृत्स्ना संछादिता भूमिरसंख्येयैः प्लवङ्गमैः ॥ १० ॥
निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः । कोटीशतपरीवारै[7]र्वानरैर्हरियूथपैः ॥ ११ ॥
नादेयैः पा[8]र्वतेयैश्च सामुद्रैश्च महाबलैः । हरिभिर्मेघनिर्ह्रादैरन्यैश्च वन[9]वासिभिः ॥ १२ ॥

रा० टी०—तद्वचनाकारमाह—यदिति । वर्षं जलं यदिन्द्रो वर्षते, आदित्यः नभ आकाशं यत् वितिमिरं कुर्यात्, चन्द्रमाः प्रभया रजनीं रात्रिं निर्मलां कुर्यात्, त्वद्विधः त्वत्सदृशो धर्मात्मा मित्राणां प्रीतिं कुर्यात्, तच्चित्रं न वर्षणादेस्तत्तत्स्वभावसिद्धत्वान्नाश्चर्यमित्यर्थः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—यदिन्द्र इत्यादि । त्वद्विधः त्वादृशः सत्पुरुषः मित्राणां प्रतिकुर्यात् प्रत्युपकारं कुर्यात् न तच्चित्रमिति संबन्धः । शोभनं प्रत्युपकाररूपम् । सुहृत् शोभनहृदयः ॥ २—५ ॥

४ ] ति० टी०—एवं त्वयि मित्रप्रत्युपकारार्थं सेनामेलनं यत्तन्न चित्रम् । हे सौम्य ! शोभनं भद्रं जातम् ॥ ४ ॥

रा० टी०—एवमिति । एवम् इन्द्रादिवर्षणादेरिव शोभनं कर्म त्वयि भवेत् त्वया निष्पाद्येत तच्चित्रं न शोभनकर्तृत्वस्य त्वयि स्वभावसिद्धत्वादित्यर्थः, प्रियवादिनं त्वामहं जानामि ॥४॥

५ ] ति० टी०—संख्ये युद्धे ॥ ५ ॥

रा० टी०—त्वदिति । त्वत्सनाथः त्वयैवाभीष्टप्रापकसहितोऽहं संख्ये संग्रामे अरीन् जेतास्मि अतः मे सुहृन्मित्रं त्वं सहायं कर्तुमर्हसि ॥ ५ ॥

६-७ ] ति० टी०—यथा पौलोमीपितरं वञ्चयित्वा कृताभ्रमतिकं कृत्वा शचीं योऽनुह्लादो जहारात्मविनाशाय । इन्द्रस्तत्पितरमनुमन्तारं हर्तारं चानुह्लादं हत्वा शचीं प्रत्यानीतवानिति पुराणगाथा । एवं य आत्मविनाशाय मैथिलीं जहार मारीचेन मां वञ्चयित्वा तं न चिराच्छीघ्रमरिहेन्द्र इव वधिष्यामि । पौलोम्याः पितरमिवेत्यनेन रावणकृतो जानक्यतिक्रमाभावः सूचितः ॥ ६ ॥ ७ ॥

रा० टी०—जहारेति । राक्षसाधमो रावणः मैथिलीं वञ्चयित्वा आत्मविनाशाय जहार । तत्र दृष्टान्तः—पौलोमीं पुलोमदुहितरं शचीं तदभिधामिन्द्राणीम् अनुह्लादो यथा, शचीपितरं स्वानुमते कृत्वा शचीमनुह्लादो जहार इन्द्रस्तदज्ञात्वा अनुह्लादं शचीपितरं च निहत्य शचीं निनायेति पौराणिकी प्रसिद्धिः ॥ ६ ॥

रा० टी०—नेति । रावणं निशितैः शरैः पौलोम्याः पितरं शतक्रतुरिवाहं न चिरात् शीघ्रं वधिष्यामि ॥ ७ ॥

गो० टी०—जहारेति । इन्द्रेण ईप्सितां पौलोमीं तत्पितुः पुलोमस्यानुमत्याऽनुह्लादो जहार । इन्द्रस्त्वनुमन्तारं पुलोमं हत्वा तां पुनरानीयोदवहदिति पौराणिकी कथा ज्ञेया ॥ ६ ॥ ७ ॥

८-१० ] ति० टी०—अभिवर्तताभ्यवर्तत ॥ ८-१० ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे रामसुग्रीवसंवादसमये उष्णं तीव्रमसहमानं सहस्रांशोः सूर्यस्य प्रभां छादयत् रजः वानरसेनोत्थधूलिः समभिवर्तत समभ्यवर्तत ॥ ८ ॥

रा० टी०—दिश इति । तेन रजोजनितेन तमसा अन्धकारेण पर्याकुलाः व्याप्ता दिश आसन् अत एव सशैलवनकानना मही चचाल ॥ ९ ॥

गो० टी०—एतस्मिन्निति । समभिवर्तत समभ्यवर्तत । मूर्छता व्याप्नुवता ॥ ८ ॥ ९ ॥

रा० टी०—तत इति । ततः रजोजनितान्धकारव्याप्त्यनन्तरं नगेन्द्रसंकाशैः महापर्वतसदृशैः नादेयैः नदीभवैः प्लवङ्गमैः पार्वतेयैश्च हरियूथपैः सामुद्रैश्च हरियूथपैर्वानरैः वनवासिभिश्च हरिभिः हेमकृतालयैर्हेमाचलवासिभिश्च वानरैर्निमेषान्तरमात्रेण कृत्स्ना भूमिः संछादिताऽभवत् । श्लोकचतुष्टयमेकान्वयि १०-१३

रा० टी०—तदेव विशदयन्नाह—कोटीति । दशभिः कोटीसहस्रैः परिवृतः शतवलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥

गो० टी०—अथ सेनासमुदायव्याप्तिमाह—तत इति । ततः रजोव्याप्त्यनन्तरम् ॥ १० ॥

११ ] ति० टी०—उक्तमेव प्रपञ्चयति—निमेषेति ॥ ११ ॥

१२ ] ति० टी०—वनवासिभिः उक्तालादिवनवासिभिः ॥ १२ ॥

१ वैदेहीमिति गो. पाठः । २ आहवे इति गो. पाठः । ३ उष्णामिति गो. उष्णं तीव्रमिति रा. पाठः । ४ रजसेति गो. पाठः । ५ मूर्छतेति गो. पाठः । ६ नगेन्द्रेति गो. पाठः । ७ कामरूपिभिरावृता इति गो. पाठः । ८ पार्वतीयैरिति गो. पाठः । ९ चारिभिरिति गो. पाठः । १० साहाय्यमिति युक्तं भाति ।

तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः । पद्मकेसरवर्णैश्च श्वेतैर्हे[1]मैकृतालयैः ॥ १३ ॥
कोटीसहस्रै[2]र्दशभिः श्रीमान्परिवृतस्तदा । वीरः शतबलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥
ततः काञ्चनशैलाभस्ताराया वीर्यवान्पिता । अनेकै[3]र्बहुसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५ ॥
तथाऽपरेण कोटीनां सहस्रेण समन्वितः । पिता रुमायाः संप्राप्तः सुग्रीवश्वशुरो विभुः ॥ १६ ॥
पद्मकेसरसंकाशस्तरुणार्कनिभाननः । बुद्धिमान्वानरश्रेष्ठः सर्व[4]वानरसत्तमः ॥ १७ ॥
अनेकैर्बहुसाहस्रैर्वानराणां समन्वितः । पिता हनुमतः श्रीमान्केसरी प्रत्यदृश्यत ॥ १८ ॥
गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः । वृतः कोटिसहस्रेण वानराणामदृश्यत ॥ १९ ॥
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः । वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २० ॥
महाबलनिभैर्घोरैः पनसो नाम यूथपः आजगाम महावीर्यस्तिसृभिः कोटिभिर्वृतः ॥ २१ ॥
नीलाञ्जनचयाकारो नीलो नाम[5] यूथपः अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२ ॥
ततः काञ्चनशैलाभो गवयो नाम यूथपः आजगाम महावीर्यः कोटिभिः पञ्चभिर्वृतः ॥ २३ ॥
दरीमुखश्च बलवान्यूथपोऽभ्याययौ तदा वृतः कोटिसहस्रेण सुग्रीवं समवस्थितः ॥ २४ ॥
मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५ ॥
गजश्च बलवान्वीरस्तिसृभिः कोटिभिर्वृतः [ [6]आजगाम महातेजाः सुग्रीवस्य समीपतः । ]
ऋक्षराजो महातेजा जाम्बवान्नाम नामतः ॥ २६ ॥
कोटिभिर्दशभिर्व्याप्तः[7] सुग्रीवस्य वशे स्थितः । [8]रुमणो नाम तेजस्वी विक्रान्तैर्वानरैर्वृतः ॥ २७ ॥
[9]आगतो बलवांस्तूर्णं कोटीशतसमावृतः । ततः कोटिसहस्राणां सहस्रेण शतेन च ॥ २८ ॥
पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः । ततः पद्मसहस्रेण वृतः शङ्कुशतेन च ॥ २९ ॥

गो० टी०—निमेषेति । ततः सेनासमुदायव्याप्त्यनन्तरम् । नादेयैः नदीतीरवनभवैः पार्वतीयैः पर्वतोत्पन्नैः वनचारिभिः आवृतेति पूर्वेणान्वयः ॥ ११—१४ ॥

१३-१४ ] ति० टी०—हेमा हेमाचलः ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—तारापिता सुषेणः ॥ १५ ॥

रा० टी०—तत इति । अनेकैः बहुसाहस्रैः कोटिभिश्च वानरैः सह तारायाः पिता सुषेणः प्रत्यदृश्यत ॥ १५ ॥

गो० टी०—तत इति । तारायाः पिता सुषेणः ॥ १५ ॥

१६-१८ ] ति० टी०—रुमापिता तारः ॥ १६-१८ ॥

रा० टी०—तथेति । परेणान्येन उत्कृष्टेन वा कोटीनां सहस्रेण समन्वितः रुमायाः पिता संप्राप्तः ॥ १६ ॥

रा० टी०—पद्मेति । वानराणामनेकैर्बहुसाहस्रैः समन्वितः पद्मकेसरसंकाशः हनूमतः पिता केसरी प्रत्यदृश्यत । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—तथेति । रुमायाः पिता तारः ॥ १६—२० ॥

१९-२९ ] ति० टी०—गोलाङ्गूलो वानरावान्तरजातिः ॥ १९—२९ ॥

रा० टी०—गोलाङ्गूलेति । वानराणां कोटिसहस्रेण वृतः गोलाङ्गूलमहाराजः गोलाङ्गूलाधिपतिः गवाक्षः तदभिधवानरः अदृश्यत ॥ १९ ॥

रा० टी०—ऋक्षाणामिति । ऋक्षाणां द्वाभ्यां कोटिसहस्राभ्यां वृतः धूम्रस्तदभिधः समभिवर्तत समभ्यवर्तत ॥ २० ॥

रा० टी०—महाबलेति । महाबलनिभैः महाबलेन प्रकाशमानैः तिसृभिः कोटिभिर्वृतः पनसो नाम यूथपः आजगाम ॥ २१ ॥

रा० टी०—नीलेति । दशभिः कोटिभिर्वृतः नीलो नाम यूथपः अदृश्यत ॥ २२ ॥

रा० टी०—तत इति । पञ्चभिः कोटिभिर्वृतः गवयो नाम यूथपः आजगाम ॥ २३ ॥

गो०टी०—महाचलेति । कोटिभिः कोटिसंख्याकैः२१-२३

रा० टी०—दरीमुख इति । कोटिसहस्रेण वृतः दरीमुखो यूथपः सुग्रीवं समुपस्थितः सन् अभ्याययौ ॥ २४ ॥

गो० टी०—दरीमुखश्चेति । सुग्रीवं समुपस्थितः प्राप्तः२४

रा० टी०—मैन्द इति । वानराणां कोटिकोटिसहस्रेण मैन्दो द्विविदश्च उभौ अदृश्यताम् ॥ २५ ॥

रा० टी०—गज इति । तिसृभिः कोटिभिर्वृतः गजस्तद-

१ मेरिविति गो.पाठः। २ दशेति गो.पाठः। ३ चलेति गो.पाठः। ४ अथेति गो. पाठः। ५ उपेति गो. पाठः। ६ अर्धमेतदधिकं गो.पाठे। ७ प्राप्त- इति गो. पाठः। ८ रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरमिति गो. रुमण्वान्नाम तेजस्वी विक्रान्तो वानरेश्वरमिति रा. पाठः। ९ आययाविति गो.पाठः।

युवराजोऽङ्गदः प्राप्तः [१]पितुस्तुल्यपराक्रमः । ततस्ताराद्युतिस्तारो [२]हरिभिर्भीमविक्रमैः ॥ ३० ॥
पञ्चभिर्हरिकोटीभिर्दूरतः पर्यदृश्यत । इन्द्रजानुः [३]कपिर्वीरो यूथपः प्रत्यदृश्यत ॥ ३१ ॥
एकादशानां कोटीनामीश्वरस्तैश्च संवृतः । ततो रम्भस्त्वनुप्राप्तस्तरुणादित्यसंनिभः ॥ ३२ ॥
अयुतेन वृतश्चैव सहस्रेण शतेन च । ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः ॥ ३३ ॥
प्रत्यदृश्यत कोटीभ्यां द्वाभ्यां परिवृतो बली । कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ॥ ३४ ॥
वृतः कोटिसहस्रेण [४]हनुमान्प्रत्यदृश्यत । नलश्चापि महावीर्यः संवृतो द्रुमवासिभिः ॥ ३५ ॥
कोटीशतेन संप्राप्तः सहस्रेण शतेन च । ततो [५]दरीमुखः श्रीमान्कोटिभिर्दशभिर्वृतः ॥ ३६ ॥
संप्राप्तोऽभिनर्दंस्तस्य सुग्रीवस्य महात्मनः । शरभः कुमुदो वह्निर्वानरो [७]रंभ एव च ॥ ३७ ॥
एते चान्ये च बहवो वानराः कामरूपिणः । आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च ॥ ३८ ॥
यूथपाः समनुप्राप्ता [८]येषां संख्या न विद्यते । आगताश्च [९]निविष्टाश्च पृथिव्यां सर्ववानराः॥ ३९ ॥
आप्लुवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव ॥ ४० ॥
कुर्वाणा बहुशब्दांश्च [१०]प्रकृष्टा बाहुशालिनः । शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४१ ॥

भिधः दशभिः कोटिभिर्व्याप्तो जाम्बवान् नाम च सुग्रीवस्य वशे स्थितः । सार्धश्लोक एकान्वयी ॥ २६ ॥

रा० टी०–रुमण्वानिति । कोटीशतसमावृतः विक्रान्तोऽतिबलवान् रुमण्वान् नाम वानरः वानरेश्वरमागतः प्राप्तः॥२७॥

गो० टी०–मैन्दश्चेति । अदृश्यताम् अदृश्येताम् २६-२७

रा० टी०–तत इति । कोटिसहस्राणां वानराणां शतेन सहस्रेण लक्षेणेत्यर्थः । वृतः पृष्ठतोऽनुगतः पश्चाच्चलितः । किंच पृष्ठतोऽनुगता अनुचरा यस्य स गन्धमादनः प्राप्तः ॥ २८ ॥

रा० टी०–तत इति । पद्मसहस्रेण शङ्कुशतेन च वृतो युवराजोऽङ्गदः प्राप्तः ॥ २९ ॥

गो० टी०–रुमण्वानिति । रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरमाययौ ॥ २८—३० ॥

३०-४० ] ति० टी०–ताराद्युतिर्नक्षत्रप्रभः । अयं रुमापितुरन्यस्तारः ॥ ३०—४० ॥

रा० टी०–तत इति । पञ्चभिर्हरिकोटीभिर्हरिभिस्तारस्तदभिधः पर्यदृश्यत । नीलघटवान् घटवानितिवद्बोधः किं च पञ्चभिर्हरिभिः हरिकोटीभिश्च तारः पर्यदृश्यतेत्यर्थः ॥ ३० ॥

रा० टी०–इन्द्रभानुरिति । एकादशानां कोटीनामीश्वरः तैः संवृतश्च इन्द्रभानुर्यूथपः प्रत्यदृश्यत ॥ ३१ ॥

रा० टी०–तत इति । अयुतेन सहस्रेण च शतेन च वृतः रम्भस्तदभिधोऽनुप्राप्तः ॥ ३२ ॥

रा० टी०–तत इति । द्वाभ्यां कोटीभ्यां परिवृतो दुर्मुखो नाम यूथपतिः प्रत्यदृश्यत ॥ ३३ ॥

गो० टी०–तत इति । ताराद्युतिः नक्षत्रतुल्यप्रभः । तारः रुमायाः पितुरन्योऽयम् ॥ ३१—३४ ॥

रा० टी०–कैलासेति । कोटिसहस्रेण वानरैर्वृतः हनुमान् प्रत्यदृश्यत ॥ ३४ ॥

गो० टी०–कैलासेति । कोटिसहस्रेणोपलक्षितैर्वानरैर्वृत इति संबन्धः ॥ ३५ ॥

रा० टी०–नल इति । कोटीशतेन सहस्रेण च शतेन च संवृतो नलः संप्राप्तः ॥ ३५ ॥

गो० टी०–नल इति । कोटिशतेनेत्याद्युपलक्षणे तृतीया ॥ ३६—३९ ॥

रा० टी०–तत इति । दशभिः कोटिभिर्वृतः दधिमुखः सुग्रीवस्याग्रे अभिनन्दन् सन् संप्राप्तः ॥ ३६ ॥

रा० टी०–शरभ इति । येषां संख्या सैन्यपरिमाणं न विद्यते ते शरभादयो यूथपाः पृथिव्यादीनावृत्य संप्राप्ताः । अर्धचतुष्टयमेकान्वयि ॥ ३७ ॥ ३८ ॥

रा० टी०–आगता इति । आप्लवन्तो वृक्षादीन् समुल्लङ्घयन्तः प्लवन्तः शाखादीनुल्लङ्घयन्तः प्लवङ्गमाः अभ्रगणाः सूर्यमिव सुग्रीवमभ्यवर्तन्त, आगताः सर्ववानराः पृथिव्यां निविष्टाश्च । सार्धश्लोक एकान्वयी ॥ ३९ ॥ ४० ॥

गो० टी०–आगता इति । पृथिव्यां विशिष्टाश्च अप्राकृताः देवयोनय इत्यर्थः । सर्ववानराश्च प्राकृतवानराश्च आगता एव ॥ ४० ॥

गो० टी०–आप्लवन्त इति । आप्लवन्तः लङ्घयन्तः अभ्रगणाः मेघगणाः ॥ ४१ ॥

४१ ] ति० टी०–शिरोभिर्न्यवेदयन् बहुसंमर्दाद्दूरे स्थित्वा नमस्कारेणैवात्मानं न्यवेदयन्नित्यर्थः ॥ ४१ ॥

रा० टी०–आगतवानरान्तरवृत्तमाह—कुर्वाणा इति ।

---

१ पितुतुल्येति गो. पाठः । २ हरिर्भीमपराक्रम इति गो. पाठः । ३ भानुरिति रा. पाठः । ४ हनूमानिति रा. पाठः । ५ दधीति गो. रा. पाठः। ६ मत इति गो.पाठः । ७ रंह इति गो.पाठः । ८ तेषामिति गो.पाठः । ९ विशिष्टा इति गो.पाठः। १० प्रहृष्टा इति गो. प्रकृष्टबलशालिन इति रा.पाठः ।

अपरे वानरश्रेष्ठाः [1]संगम्य च यथोचितम् । सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥ ४२ ॥
सुग्रीवस्त्वरितो रामे सर्वांस्तान्[2]वानरर्षभान् । निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥ ४३ ॥
यथासुखं पर्वतनिर्झरेषु वनेषु सर्वेषु च वानरेन्द्राः ।
निवेशयित्वा विधिवद्बलानि बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

रामाज्ञामनुपालयन्सुग्रीवः प्राच्यां दिशि कपिसचाराहांस्तांस्तान्प्रदेशान् विशेषस्थलवर्णनपूर्वं विनतनामानं स्वसेनाध्यक्षं निर्दिशन्सीतान्वेषणे नियुञ्जानः प्रङ्मासात्सीताशुद्धिं विधायागन्तव्यं मासातिक्रमी दण्ड्यतेत्याज्ञापयति ।

अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः । उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १ ॥
आगता विनिविष्टाश्च बलिनः कामचा[3]रिणः । वा[4]नरेन्द्रा महेन्द्राभा ये मद्विषयवासिनः ॥ २ ॥

प्रकृष्टबलशालिनः केचन वानराः बहुशब्दान् कुर्वाणाः सन्तः शिरोभिः प्रकम्पितस्वमूर्धभिः सुग्रीवाय न्यवेदयन् स्वागमनमिति शेषः ॥ ४१ ॥

गो० टी०–कुर्वाणा इति । न्यवेदयन् आत्मानमिति शेषः ॥ ४२ ॥

४२ ] ति० टी०–अपरे संगम्य समीपदेशं प्राप्य यथोचित निवेश्य जग्मुः । अपरे हनूमदङ्गदादयः समागम्य निकटमागत्य स्थिताः ॥ ४२ ॥

रा० टी०–अपर इति । यथोदितं सुग्रीवोक्तिमनतिक्रम्य संयम्य वानरान् स्ववशे कृत्वा आगताः अपरे वानराः सुग्रीवेण समागम्य स्थिताः ॥ ४२ ॥

गो० टी०–अपर इति । संयम्य वस्त्रादिकं संकुचितं कृत्वा । 'संनम्य' इति च पाठः ॥ ४३ ॥

४३] ति० टी०–धर्मज्ञो राजधर्मज्ञः रामाभिमुखं प्राञ्जलिः स्थितो भूत्वा सर्वान्यूथपतीन्निवेदयित्वा यूथपानब्रवीत् ॥ ४३ ॥

रा० टी०–सुग्रीव इति । स्थितः सुग्रीवः वानरर्षभान् रामे निवेदयित्वा निवेश्य अब्रवीत् ॥ ४३ ॥

गो० टी०–सुग्रीव इति । सुग्रीवः प्राञ्जलिस्त्वरितः सन् सर्वान् रामे निवेदयित्वा स्थितः तानब्रवीत् । ॥ ४४ ॥

४४ ] ति० टी०–भो वानरेन्द्राः ! पर्वतादिषु यथासुखं स्वानि बलानि निवेशयित्वा तेषु यो बलज्ञो बलतत्त्वज्ञः प्रतिपत्तुं क आगतः को नागत इति ज्ञातुमीष्टे ईशो भवेत् । लिङर्थे लट् ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रा० टी०–तदाकारमाह—यथेति । वानरेन्द्राः पर्वतादिषु बलानि सैन्यानि निवेशयित्वा निवेश्य यथासुखं सन्तीति शेषः, अतः बलज्ञो भवान् बलं सैन्यं प्रतिपत्तुम् इयत्तया निश्चेतुमीष्टे समर्थोऽस्ति ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०–तदेवाह—यथेति । भो वानरेन्द्राः पर्वतादिषु स्वानि बलानि यथासुखं निवेशयित्वा बलज्ञो यूथपः स्वं बलं प्रतिपत्तुं ज्ञातुम् ईष्टे ईशो भवेत्, लिङर्थे लट् । यद्वा रामे निवेदयित्वा तदधीनं कृत्वा अब्रवीत् तत्तत्स्वरूपमब्रवीत् । यथेति । 'वानरेन्द्र' इति च पाठः । सुग्रीवः बलं प्रतिपत्तुमीष्टे स्म ॥ ४९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

१ ] ति० टी०–अथेति ॥ १ ॥

रा० टी०–सुग्रीवोक्तिं वर्णयन्नाह–अथेत्यादिभिः । अथ सैन्येयत्ताकरणप्रार्थनानन्तरं समृद्धार्थः प्रवृद्धसर्वसंपत्तिः सुग्रीवो राममुवाच ॥ १ ॥

गो० टी०–अथ सीतान्वेषणाय पूर्वस्यां दिशि सुग्रीवेण विनतप्रेषणं चत्वारिंशे—अथ राजेत्यादि ॥ १ ॥

२ ] ति० टी०–विनिविष्टाश्चेति स्वस्वसेनानिवेश इति शेषः, निवेशिता इत्यर्थः । मद्विषयवासिनो मम विषये वानरराज्ये वासिनः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह—आगता इत्यादिभिः । ये मद्विषयवासिनः बलिनो वानरेन्द्राः ते आगताः विनिविष्टाः उचितदेशे संस्थिताश्च ॥ २ ॥

गो० टी०–आगता इति । मद्विषयवासिनः मदवगतदेशवासिनः 'विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि' इत्यमरः । यद्वा मद्राज्यवासिनः ॥ २ ॥ ३ ॥

१ संयम्येति रा. पाठः । २ वानरर्षभानिति गो. रा पाठः । ३ रूपिण इति गो. पाठः । ४ वानरा वारणेन्द्राभा इति गो. पाठः ।

त इमे बहुविक्रान्तै[1]र्बलिभिर्भीमविक्रमैः । आगता वानरा घोरा दैत्यदानवसंनिभाः ॥ ३ ॥
ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः । पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ॥ ४ ॥
पृथिव्यम्बुचरा राम नानानगनिवासिनः । कोट्योघाश्च इमे प्राप्ता वानरास्तव किंकराः ॥ ५ ॥
निदेशवर्तिनः सर्वे सर्वे गुरुहिते [3]स्थिताः । अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिन्दम ॥ ६ ॥
त इमे बहुसाहस्रै[4]रनेकैर्बहुविक्रमैः । [5]आगता वानरा घोरा दैत्यदानवसंनिभाः ॥ ७ ॥
यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् । त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥ ८ ॥
काममेषा[6]मिदं कार्यं विदितं मम तत्त्वतः । तथाऽपि तु यथायुक्तमाज्ञापयितुमर्हसि ॥ ९ ॥
[7]तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः । बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥ १० ॥
ज्ञायतां [8]सौम्य वैदेही यदि जीवति वा न वा । स च देशो महाप्राज्ञ यस्मिन्वसति रावणः ॥ ११ ॥
अभिगम्य तु वैदेहीं निलयं रावणस्य च । प्राप्तकालं विधास्यामि तस्मिन्काले सह त्वया ॥ १२ ॥
नाहमस्मिन्प्रभुः कार्ये वानरेन्द्र[10] न लक्ष्मणः । त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥ १३ ॥

३ ] ति० टी०—बहुविक्रान्तैर्बहुषु स्थलेषु कृतपराक्रमैः अत एव भीमविक्रमैः स्वयूथैः सहेति शेषः ॥ ३ ॥

४ ] ति० टी०—ख्यातं कर्मणि युद्धेऽपदानं शौर्यं येषाम् ॥ ४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त इति । बहुविक्रान्तैरनेकदेशचारिभिर्बलिभिर्वानरैः सह ख्यातकर्मसु युद्धेषु अपदानं शौर्यं येषां ते बलवन्तः प्रशस्तबलविशिष्टाः अत एव जितक्लमाः अत एव पराक्रमेषु व्यवसायेषु च विख्याताः अत एव उत्तमाः पृथिव्यम्बुचराः पृथिवीषु अम्बुषु समुद्रादिजलेषु विचरणशीलाः दैत्यदानवसंनिभाः वानराः आगताः । सार्धश्लोक एकान्वयी ॥ ३ ॥ ४ ॥

गो० टी०—ख्यातेति । ख्यातकर्मापदानाः कर्म दूरलङ्घनादिक्रिया अपदानं पूर्ववृत्तम् विस्मयनीयशत्रुनिरसनं ख्याते कर्मापदाने येषां ते तथा । कोट्यग्रश इति बहुसंख्योपलक्षणम् ॥ ४ ॥ ५ ॥

५ ] ति० टी०—अम्बुचराः समुद्रमध्यद्वीपचराः । कोट्योघा इत्यसंख्यत्वोपलक्षणम् ॥ ५ ॥

६ ] ति० टी०—गुरुहिते स्वामिहिते तवाभिप्रेतमनुष्ठातुं शक्ष्यन्ति समर्था इत्यर्थः ॥ ६ ॥

रा० टी०—कोटीति । कोट्योघाः कोटिसमूहाः प्राप्ताः ये तव किङ्कराः वानरास्ते सर्वे अभिप्रेतं तवेप्सितमनुष्ठातुं शक्ष्यन्ति । सार्धश्लोक एकान्वयी ॥ ५ ॥ ६ ॥

गो० टी०—निदेशेति । गुरुहिते स्वामिहिते ॥ ६ ॥

७ ] ति० टी०—अनेकैः सहेति शेषः ॥ ७ ॥

रा० टी०—शक्तत्वमेव द्रढयन्नाह—त इति । अनेकैर्बहुविधैर्बहुसाहस्रैः सह ये इमे आगता वानरास्ते दैत्यदानवसंनिभाः सन्तीति शेषः ॥ ७ ॥

गो० टी०—त इम इति । बहुसाहस्रैर्भीमविक्रमैरनीकैः सहिताः त इम इत्यङ्गुल्या निर्देशः प्राप्तकालं कालोचितम् ॥७॥

८ ] ति० टी०—प्राप्तकालं कालोचितं तदुच्यताम् । मन्त्रियोगः कार्य इत्यर्थः । नन्विदं त्वत्सैन्यं न मन्त्रियोज्यतामर्हति तत्राह—त्वत्सैन्यमिति ॥ ८ ॥

रा० टी०—यदिति । हे नरव्याघ्र ! त्वद्वशे युक्तं प्राप्तं त्वत्सैन्यमाज्ञापयितुमर्हसि अतः यत् प्राप्तकालं मन्यसे तदुच्यताम् ॥ ८ ॥

९–११ ] ति० टी०—इदं कार्यं सीतान्वेषणरूपम् ॥९–११॥

१२ ] ति० टी०—तस्मिन्काले वृत्तान्तावगत्यनन्तरकाले १२

रा० टी०—काममिति । इदं सीतान्वेषणरूपं कार्यं यद्यप्येषां मम च तत्त्वतो विदितं तथाऽपि यथायुक्तं युक्तमनतिक्रम्यैव यथेच्छमाज्ञापयितुमर्हसि ॥ ९ ॥

रा० टी०—तथेति । तथा तेन प्रकारेण ब्रुवाणं सुग्रीवं रामो बाहुभ्यां संपरिष्वज्य इदमब्रवीत् ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—ज्ञायतामित्यादिभिः । यस्मिन्देशे रावणो वसति स देशः वैदेही जीवति न वा इति च यदि यस्मिन् काले ज्ञायतां तस्मिन् काले वैदेहीमभिगम्य प्राप्य रावणस्य निलयं प्राप्तकालं विध्वंसाश्रयमित्यर्थः, विधास्यामि करिष्यामि । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२॥

गो० टी०—काममिति । एषां कार्यम् एभिः कर्तव्यं मम विदितं मया विदितम् ॥ ८—१२ ॥

१३ ] ति० टी०—अस्मिन्कार्ये वानरप्रेषणरूपे । अस्य कार्यस्येति सिद्धेरिति शेषः ॥ १३ ॥

रा० टी०—नतु तर्हि वानरान् आज्ञापयेत्यत आह—नेति । अस्मिन् अन्वेषणाज्ञापने अहं प्रभुः नास्मि । न ल-

१ हरिभिरिति गो. पाठः । २ कोट्यग्रश इति गो. पाठः । ३ रता इति गो. पाठः । ४ अनीकैर्भीमेति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ एषामिति गो. रा. पाठः । ७ तत्रामिति गो. पाठः । ८ इतीति गो. पाठः । ९ ममेति गो. पाठः । १० ईशेति गो. पाठः ।

त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् । त्वं हि जानासि [1]मे कार्यं मम वीर न संशयः ॥ १४ ॥
सुहृद्द्वितीयो विक्रान्तः[2] प्राज्ञः कालविशेषवित् । भवानस्मद्धिते युक्तः सुहृदाप्तोऽर्थवित्तमः ॥ १५ ॥
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् । अब्रवीद्रामसांनिध्ये लक्ष्मणस्य च धीमतः ॥ १६ ॥
शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरम् । सोमसूर्यनिभैः सार्धं वानरैर्वानरोत्तम ॥ १७ ॥
देशकालनयैर्युक्तो [5]विज्ञः कार्यविनिश्चये । वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १८ ॥
अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् । तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥ १९ ॥
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च । नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ॥ २० ॥
कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् । सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ॥ २१ ॥
महीं कालमहीं चापि शैलकाननशोभिताम् । ब्रह्ममालान्विदेहांश्च मालवान्काशिकोसलान् ॥ २२ ॥
मागधांश्च महाग्रामान्पुण्ड्रांस्त्वङ्गांस्तथैव च । भूमिं च कोशकाराणां भूमिं च रजताकराम् ॥ २३ ॥
सर्वं च तद्विचेतव्यं मृगयद्भिस्ततस्ततः । रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ॥ २४ ॥

क्ष्मणः प्रभुरस्ति । अतः अस्य कार्यस्य हेतुः कारणं प्रभुः तत्र समर्थश्च त्वमेव ॥ १३ ॥

१४ ] ति० टी०—मम कार्यविनिश्चयं ज्ञात्वेति शेषः । हे वीर ! त्वं मम सुहृदित्यन्वयः ॥ १४ ॥

रा० टी०—त्वमिति । मम कार्यविनिश्चयं त्वमेव आज्ञापय हि यतः मम यत् कार्यं तत् त्वं जानासि ॥ १४ ॥

१५-१६] ति० टी०—द्वितीयः सुहृल्लक्ष्मणापेक्षया॥१५॥१६॥

रा० टी०—सुहृदिति । सुहृद्द्वितीयो विक्रान्तो बलम् अतः प्राज्ञः सर्वविषयकज्ञानवान् अत एव कालविशेषवित् अर्थवित्तमः याथार्थ्यविज्ञातृषु श्रेष्ठः भवान् यदि अस्मद्धिते युक्तः तर्हि सुकृतार्थः अर्थः सिद्धः ॥ १५ ॥

रा० टी०—एवमिति । एवमुक्तः सुग्रीवः शैलाभं प्लवगेश्वरं विनतं नाम यूथपं रामसांनिध्ये लक्ष्मणस्य च सांनिध्ये इति शेषः । अब्रवीत् । सार्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—'सुहृद्विनीत.' इति च पाठः ॥ १४—१६ ॥

१७ ] ति० टी०—सोमसूर्यनिभैस्तत्सदृशकान्तिभिः ॥१७॥

रा० टी०—तद्वचनाकारमाह—सोमेत्यादिभिः । देशकालनयैर्युक्तः कार्यविनिश्चये विज्ञः तरस्विनां वानराणां शतसहस्रेण वृतस्त्वं सोमसूर्यनिभैः वानरैः सार्धं पूर्वां दिशमभिगच्छ । अर्धचतुष्टयमेकान्वयि ॥ १७ ॥

गो० टी०—सोमेत्यादि । देशेति । कार्याकार्यविषये देशकालनयैः देशोचितनीतिभिः कालोचितनीतिभिश्चेत्यर्थः । देशकालानुगुणनयप्रवर्तनं कर्तव्यमित्यर्थः ॥ १७—१९ ॥

१८ ] ति० टी०—नयो नीतिः । विज्ञः तज्ज्ञस्त्वमिति शेषः १८

१९ ] ति० टी०—निलयं रावणस्य निलयस्थानम् । यद्वा चतुर्दिक्षु रावणवासस्थानमनेन सूचितम् ॥ १९ ॥

रा० टी०—तत्रेति । तत्र पूर्वस्यां दिशि गिर्यादिषु सीता रावणस्य निलयं च मार्गध्वम् ॥ १८ ॥

२० ] ति० टी०—मार्गध्वमिति सामान्यतो नियोगः । विशेषेणाह—नदीमित्यादि । द्वितीयान्तानां प्राप्येति शेषः ॥ २० ॥

२१ ] ति० टी०—कालिन्दीं यमुनाम् । यामुनो गिरिर्यमुनोत्पत्तिस्थानभूतः कलिन्दगिरिः ॥ २१ ॥

२२ ] ति० टी०—महीकालमह्यौ नद्यौ । अथ प्राच्यदेशानाह—ब्रह्ममालानिति । हिमवद्विन्ध्यमध्यवर्त्यार्यावर्तापेक्षया प्राच्यादिविभागोऽत्र विवक्षित इत्याहुः ॥ २२ ॥

२३ ] ति० टी०—कोशकाराणां भूमिं कौशेयकतन्तूत्पादकजन्तूत्पत्तिस्थानभूतां भूमिम् । रजताकरां रजतखनिम्॥२३॥

२४ ] ति० टी०—एतानि प्राप्य एतत्पूर्वोक्तं सर्वं सर्वावयवं विचेतव्यम् । तत्र किं विचेतव्यं तत्राह—रामस्य दयितामिति ॥ २४ ॥

रा० टी०—नदीमिति । भागीरथ्यादीन् पर्वतादींश्च ये केचिदालया मन्दरस्य कोटिं देशं संश्रिताः तांश्च प्राप्य रामस्य भार्यां दशरथस्य स्नुषां सीतां मृगयद्भिर्भवद्भिस्ततस्ततः सर्वं तत्स्थलं विचेतव्यम् । तत्र कालिन्दी यमुना यामुनः यमुनोत्पत्तिकारणीभूतगिरिः, महीकालमह्यौ नदीविशेषौ, कोशकाराः राजविशेषाः क्रिमिविशेषा वा अवगाढाः समुद्रसंबद्धाः । सार्धश्लोकपञ्चकमेकान्वयि ॥ १९—२४ ॥

गो० टी०—नदीमित्यादि । रजताकरामित्यन्तमेकं वाक्यम् । प्राप्येति शेषः । ततस्ततः सीतां मृगयद्भिर्भवद्भिः भागीरथ्यादिकं प्राप्य एतत्पूर्वोक्तं सर्वं विचेतव्यमिति संबन्धः । अत्रेदमवधेयम्—शरावती नाम काचिन्नदी हिमवद्विन्ध्यमध्यदेशे वलयाकारेण प्रवहति । तदपेक्षया प्राचीदिगिदानीं विचे-

१ यदिति गो. रा. पाठः । २ सुकृतार्थ इति गो. रा. पाठः । ३ ईश्वर इति गो. पाठः । ४ सुर्यात्मजैरिति गो. पाठः । ५ कार्याकार्येति गो.पाठः । ६ शृङ्गेष्विति गो. पाठः । ७ चैवेति गो. पाठः । ८ पत्तनमिति गो. पाठः । ९ एवदिति गो. पाठः । १० मार्गयद्भिरिति गो. पाठः ।

समुद्रमवगाढांश्च पर्वतान्पत्तनानि च । मन्दरस्य च ये कोटिं संश्रिताः केचिदालयाः ॥ २५ ॥
कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः । घोरलोहमुखाश्चैव [2]जवनाश्चैकपादकाः ॥ २६ ॥
अक्षया बलवन्तश्च [3]तथैव पुरुषादकाः । किरातास्तीक्ष्णचूडाश्च [5]हेमाभाः प्रियदर्शनाः ॥ २७ ॥
आममीनाशनाश्चापि किराता द्वीपवासिनः । अन्तर्जलचरा घोरा नरव्याघ्रा इति [7]स्मृताः ॥ २८ ॥
एतेषामाश्रयाः सर्वे विचेयाः काननौकसः । गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च ॥ २९ ॥
यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम् । सुवर्णरूप्यकद्वीपं [10]सुवर्णकरमण्डितम् ॥ ३० ॥
यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः । दिवं स्पृशति शृङ्गेण देवदानवसेवितः ॥ ३१ ॥

यत्वेनोच्यते न तु किष्किन्धापेक्षया नापि मेर्वपेक्षयेति । यामुनं महागिरिं यमुनासंबन्धिनं पर्वतं मत्स्यादयो देशविशेषाः । मागधान् मगधदेशान् , महाग्रामान् महाग्रामयुक्तान् । कोशकाराणां राजविशेषाणाम् ॥ २०—२३ ॥

२५ ] ति० टी०—समुद्रमवगाढान्समुद्रान्तर्गतान् । पत्तनानि समुद्रद्वीपवर्तीनि । आलया ग्रामाः ॥ २५ ॥

गो० टी०—समुद्रमित्यादि । समुद्रम् अवगाढान् प्रविष्टान् । पर्वतान् मन्दरस्य आयतां कोटिं च संश्रिताः ये कर्णप्रावरणादयः एतेषामालयाः सर्वे विचेया इति संबन्धः । काननौकस इति संबोधनम् । कर्णप्रावरणाः आच्छादितकर्णाः निष्कर्णा इत्यर्थः । ओष्ठे कर्णौ येषां ते ओष्ठकर्णकाः लोहमुखाः लोहतुल्यमुखाः कर्णेषु चूडा येषां ते कर्णचूडाः आममीनाशना इति पूर्वोक्तकिराता व्यावर्त्यन्ते । द्वीपवासिनः द्वीपान्तरेऽपि वसन्तो मन्दरेऽपि वसन्तीत्यर्थः । नरव्याघ्राः अर्धनररूपा व्याघ्ररूपाश्चेत्यर्थः ॥ २४—२८ ॥

२६ ] ति० टी०—कर्णप्रावरणाः प्रावरणं वस्त्रं तद्वद्विशालश्रवणपुटाः ओष्ठकर्णका ओष्ठपर्यन्तकर्णाः । लोहमुखाः लोहवत्कठिनकृष्णमुखाः । एकपादका एकपादकाः सन्तो जवना वेगगतयः ॥ २६ ॥

रा० टी०—कर्णेति । कर्णप्रावरणाः स्वकर्णकृतवस्त्राः विशालकर्णा इत्यर्थः । ओष्ठकर्णकाः ओष्ठपर्यन्तकर्णविशिष्टाः घोरलोहमुखाः घोरा एव लोहमुखाः नीलत्वादिना लोहसदृशमुखविशिष्टाः एकपादका यवनाश्च ॥ २६ ॥

२७ ] ति० टी०—अक्षया अक्षयसंतानाः एते उक्ताः पुरुषाः तथैव पुरुषादका रक्षोभेदाः तीक्ष्णसूच्यग्रसदृशतैक्ष्ण्यवती चूडा केशपाशो येषाम् ॥ २७ ॥

रा० टी०—अक्षयाः नाशरहिता गृहरहिता वा पुरुषादकाः राक्षसाश्च तीक्ष्णचूडाः तीक्ष्णकेशपाशविशिष्टाः हेमाभाः किराताश्च ॥ २६ ॥

२८ ] ति० टी०—आममीनाशना अपक्वमत्स्यभुजः नरव्याघ्रा अधःप्रदेशे नराकारा एव सन्त उपरिभागे व्याघ्राकाराः, अत एव घोराः ॥ २८ ॥

रा० टी०—आममीनाशनाः अपक्वमीनभोजिनः द्वीपवासिनः नद्यन्तर्गतजलाप्लावितदेशवसनशीलाः किराताश्च अन्तर्जलचराः नरव्याघ्राः इत्यनेन नाम्ना श्रुताः प्रसिद्धाश्च सन्तीति शेषः, तत्प्रसिद्धिस्तु अधोदेशे नराकारत्वेन ऊर्ध्वदेशे व्याघ्राकारत्वेन च बोध्या ॥ २७ ॥

२९ ] ति० टी०—काननौकस इति संबोधनम् । गिरिभिर्ये च गम्यन्ते गिरीनाक्रम्य ये देशा द्वीपाश्च गम्यन्ते, ये च प्लवनेन कूर्दनेन गम्यन्ते, ये च प्लवेनोडुपेन गम्यन्ते, ते च विचेया इत्यन्वयः ॥ २९ ॥

रा० टी०—एतेषामिति । एतेषां कर्णप्रावरणादीनामाश्रयाः स्थानानि ये देशाः गिरिभिः पर्वतैः प्लवनेन उत्प्लुत्या च प्लवेन उडुपेन च गम्यन्ते ते च । किंच गिरिप्रभृतिभिर्ये गम्यन्ते ते कर्णप्रावरणादीनामाश्रया विचेयाः अन्वेषणीयाः । काननौकस इति संबोधनम् ॥ २८ ॥

गो० टी०—एवं जम्बुद्वीपान्वेषणं विधाय द्वीपान्तरान्वेषणं विधत्ते—गिरिभिरित्यादि । रामपत्नीं यशस्विनीमित्यन्तमेकं वाक्यम् । ये द्वीपाः गिरिभिर्गम्यन्ते प्लवनेन लङ्घनेन च ये गम्यन्ते प्लवेन उडुपेन ये गम्यन्ते तान् द्वीपान् सप्तराज्योपशोभितं सप्तखण्डोपशोभितं यवद्वीपं च गच्छत । तं यवद्वीपमतिक्रम्य यः शिशिरो नाम पर्वतः शृङ्गेण दिवं स्पृशति तं गच्छत । एतेषां द्वीपादीनां गिरिदुर्गेषु वनेषु च प्रपातेषु निर्झरेषु च रामपत्नीं मार्गध्वमिति संबन्धः । यवद्वीपसुवर्णरूप्यकावपि लङ्काद्वीपवत् समुद्रान्तर्वर्तिनौ द्वीपविशेषौ ॥ २९—३१ ॥

३० ] ति० टी०—ततः परं यत्नवन्तो भूत्वा सप्तराज्योपशोभितं यवद्वीपम्, तथा सुवर्णद्वीपम्, रूप्यकद्वीपम् । निचेतव्यमिति शेषः । सुवर्णकरमण्डितमिति सुवर्णं कुर्वन्ति ये तैः शोभितम् ॥ ३० ॥

३१ ] ति० टी०—ततः परं यवाख्यद्वीपमतिक्रम्य शिशिरनामा पर्वतोऽस्ति ॥ ३१ ॥

---

१ आयतामिति गो. पाठः । २ यवना इति रा. पाठः । ३ पुरुषा इति गो. पाठः । ४ कर्णचूडा इति गो.पाठः । ५ हेमाक्षा इति गो. हेमाभा इति रा. पाठः । ६ तत्रेति गो.पाठः । ७ श्रुता इति गो. रा पाठः । ८ आलया इति गो. पाठः । ९ रूप्यकं चैवेति गो पाठः । १० सुवर्णाकरेति गो.पाठः ।

एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च । मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् ॥ ३२ ॥
ततो रक्तजलं प्राप्य शोणाख्यं शीघ्रवाहिनम् । गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३३ ॥
तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३४ ॥
पर्वतप्रभवा नद्यः सुभीमबहुनिष्कुटाः । मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥ ३५ ॥
ततः समुद्रद्वीपांश्च सुभीमान्द्रष्टुमर्हथ । ऊर्मिमन्तं महारौद्रं क्रोशन्तमनिलोद्धतम् ॥ ३६ ॥
तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः । ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३७ ॥
तं कालमेघप्रतिमं महोरगनिषेवितम् । अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥ ३८ ॥
ततो रक्तजलं भीमं लोहितं नाम सागरम् । गत्वा प्रेक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥ ३९ ॥

३२ ] ति० टी०—एतेषामुक्तद्वीपानाम् ॥ ३२ ॥

रा० टी०—यत्नवन्त इति । सप्तराज्योपशोभितं सप्तसंख्याकराज्ययुक्तं यवद्वीपं सुवर्णकरमण्डितं स्वर्णप्रकाशेन प्रकाशितं सुवर्णरूप्यकद्वीपं च यवद्वीपमतिक्रम्य देवदानवसेवितः यः शिशिरो नाम पर्वतः शृङ्गेण दिवं स्पृशति तं च प्राप्येति शेषः, एतेषां यवद्वीपादीनां गिरिदुर्गेषु पर्वतगुहासु प्रपातेषु निर्झरेषु च वनेषु च यत्नवन्तः कृतप्रयत्नाः सहिताः मिलिताः सर्वे यूयं रामपत्नीं मार्गध्वम् । श्लोकत्रयमेकान्वयि ॥२९-३१॥

३३ ] ति० टी०—ततः समुद्रस्य पारं गत्वा रक्तवर्णजलम्, अत एव शोणाख्यं नदं प्राप्य ॥ ३३ ॥

३४ ] ति० टी०—तस्य तीर्थेष्ववतारभेदेषु ॥ ३४ ॥

रा० टी०—तत इति । ततोऽनन्तरं सिद्धचारणसेवितं समुद्रस्य पारं गत्वा रक्तजलं शोणाख्यं प्राप्य तीर्थेषु पवित्रेषु तस्य शोणस्य वनेषु, किंच तस्य तीर्थेषु घट्टेषु वनेषु च वैदेह्या सह रावणो मार्गितव्यः । श्लोकद्वयमेकान्वयि ॥३२॥३३॥

गो० टी०—एवं जम्बूद्वीपं लवणसमुद्रं चोक्त्वा प्लक्षद्वीपप्रदेशानाह—तत इत्यादिना । समुद्रस्य पारं लवणसमुद्रापरपारस्थं रक्तजलम् अगाधं शीघ्रगामिनं सिद्धचारणसेवितम् शोणं शोणाख्यं नदं गत्वा तस्य तीर्थेषु अवतारेषु वनेषु च वैदेह्या सह रावणो मार्गितव्यः । केवलं रावणं केवलं सीतां च दृष्ट्वा नागन्तव्यं रावणहननाय सीतानयनाय च उभावपि दृष्ट्वा आगन्तव्यमिति भावः ॥ ३२ ॥ ३३ ॥

३५ ] ति० टी०—बहुनिष्कुटा बहूपवनप्रदेशाः । दरीमन्तो दरीयुक्ताः ॥ ३५ ॥

रा० टी०—पर्वतेति । सुभीमबहुनिष्कुटाः भयङ्करानेकवनप्रदेशयुक्ताः पर्वतप्रभवाः नद्यः दरीमन्तः दरीयुक्ताः पर्वताश्च वनानि च मार्गितव्याः ॥ ३४ ॥

गो० टी०—प्लक्षद्वीपपर्वतादीनाह—पर्वतेति । निष्कुटा उद्यानविशेषाः । अथेक्षुसमुद्रद्वीपानाह—तत इति ॥३५॥३६॥

३६ ] ति० टी०—समुद्रद्वीपान्नकदेशात्परिवर्तीक्षुसमुद्रद्वीपान् । ऊर्मिमन्तम्, अत एव क्रोशन्तं महाघोषम् ॥ ३६ ॥

रा० टी०—तत इति । ततोऽनन्तरम् ऊर्मिमन्तमत एव क्रोशन्तमनिलोद्धतमिक्षुसमुद्रमिति शेषः, समुद्रद्वीपांश्च द्रष्टुमन्वेषितुमर्हथ ॥ ३६ ॥

गो० टी०—इक्षुसमुद्रविशेषं वक्तुमाह—ऊर्मिमन्तमित्यर्धम् । ऊर्मिमन्तं समुद्रम् इक्षुसमुद्रमित्यर्थः । अभिगच्छतेति शेषः । 'लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम्' इति समुद्रक्रमः३६

३७ ] ति० टी०—तत्रेक्षुसमुद्रे समनुज्ञाताः समनुज्ञातच्छायाद्वारकग्रहणसामर्थ्या रिमन्तः, छायागृहीतप्राणिभक्षणात्तमतिकाश्च ॥ ३७ ॥

रा० टी०—तत्रेति । तत्र तस्मिन् इक्षुसमुद्रे दीर्घकालं बुभुक्षिताः अत एव ब्रह्मणा समनुज्ञाता गृहीतच्छायकभोजनाय आज्ञप्ताः महाकायाः असुराः छायां गृह्णन्ति छायाद्वारा जन्तूनाकर्षन्तीत्यर्थः ॥ ३६ ॥

गो० टी०—इक्षुसमुद्रस्य दुर्गमत्वं दर्शयति—तत्रेति । तत्र इक्षुसमुद्रे ॥ ३७ ॥

३८ ] ति० टी०—इक्षुरसस्यापि श्यामत्वात्तदुदधेः कालमेघप्रतिमत्वम् । तीर्थेनोपायेनाभिगम्य प्राप्य ॥ ३८ ॥

३९ ] ति० टी०—ततः इक्षुसागरात्परतः रक्तजलं रक्तवर्णजलम् अत एव लोहिताख्यम् । कूटशाल्मलीं शाल्मलीद्वीपत्वप्रयोजकवृक्षम् । जम्बूद्वीपं जम्बुवत् ॥ ३९ ॥

रा० टी०—तमिति । महोरगनिषेवितं कालमेघप्रतिमं महानादं तं पूर्ववर्णितं महोदधिं तीर्थेनोपायेन अभिगम्य प्राप्य ततस्तस्मान्महोदधेः रक्तजलमरुणजलविशिष्टं लोहितं नाम सागरं गत्वा बृहतीं विशालां कूटशाल्मलीं कूटाकारशाल्मलीतरुं यूयं द्रक्ष्यथ । श्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

गो० टी०—तमिति । तीर्थेनाभिगम्य उपायेनाभिगम्य 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतरणेषु' इति वैजयन्ती । छायाग्राहिपरिहारेण गन्तव्यमित्यर्थः । यद्वा तीर्थेनावतरणेन गन्तव्यं नान्येन तेन छायाग्राहिपरिहारो भविष्यतीति भावः । ततो गताः इक्षुसमुद्रान्निर्गताः

१ शोणमगाधमिति गो. पाठः । २ गामिनमिति गो. पाठः । ३ सुरम्या इति गो. पाठः । ४ समुद्रं चेति गो. पाठः । ५ गता इति गो. पाठः । ६ द्रक्ष्यथेति गो. पाठः ।

गृहं च वैनतेयस्य नानारत्नविभूषितम् । तत्र कैलाससंकाशं विहितं विश्वकर्मणा ॥ ४० ॥
तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः । शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ॥ ४१ ॥
ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति । अभितप्ताः स्म सूर्येण लम्बन्ते स्म पुनः पुनः ॥ ४२ ॥
निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः । ततः पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ॥ ४३ ॥
गत्वा द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः । तस्य मध्ये महाञ्श्वेतो ऋषभो नाम पर्वतः ॥ ४४ ॥
दिव्यगन्धैः कुसुमितैर्राचितैश्च नगैर्वृतः । सरश्च राजतैः पद्मैर्ज्वलितैर्हेमकेसरैः ॥ ४५ ॥
नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् । विबुधाश्चारणा यक्षाः किंनराश्चाप्सरोगणाः ॥ ४६ ॥
हृष्टाः समधिगच्छन्ति नलिनीं तां रिरंसवः । क्षीरोदं समतिक्रम्य तदा द्रक्ष्यथ वानराः ॥ ४७ ॥

तां कूटशाल्मलीं लोहितं नाम सागरं मधुसमुद्रं च द्रक्ष्यथ ॥ ३८ ॥ ३९ ॥

४० ] ति० टी०—तत्र कूटशाल्मलीसमीपे ॥ ४० ॥

रा० टी०—'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च' इति मेदिनी ।—गृहमिति । तत्र कूटशाल्मलीसंनिधौ विश्वकर्मणा निर्मितं वैनतेयस्य गरुडस्य गृहं द्रक्ष्यथेत्यनुकृष्यते ॥ ३९ ॥

गो० टी०—गृहं चेति । तत्र शाल्मलिद्वीपे ॥ ४० ॥

४१ ] ति० टी०—शैलशृङ्गेषु सुरासमुद्रान्तर्वर्तिशैलशृङ्गेषु लम्बन्ते अधोमुखा इति शेषः ॥ ४१ ॥

रा० टी०—तत्रेति । तत्र कूटशाल्मलीसंनिधिवर्तिपर्वते शैलनिभाः पर्वतसदृशाः मन्देहा नाम राक्षसाः शैलशृङ्गेषु लम्बन्ते अधोमुखेनेति शेषः ॥ ४० ॥

४२-४३ ] ति० टी०—सूर्यस्योदयनं प्रति सूर्योदयं प्राप्योर्ध्वमुखाः सूर्येण युध्यमानाः सूर्येणाभितप्तास्तन्मण्डलब्रह्मतेजोभितप्ताः ब्रह्मतेजोभिरहन्यहनि त्रैवर्णिकप्रवर्तितैर्ब्रह्मविद्यातेजोभिर्निहताः सन्तः सुरोदजले पतन्ति । ततः पुनरुज्जीविता लम्बन्ते स्म । शैलशृङ्गेष्विति शेषः । अत्र कतककृतः—'शैलशृङ्गेषु लम्बन्ते' इत्यादि श्लोकद्वयं प्रक्षिप्तम् । 'तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति श्रुतावरुणद्वीपे तत्प्रक्षेपोक्तेरत्रारुणद्वीपप्रसङ्गाभावात्प्राचीनपुस्तकेष्वदर्शनाच्चेत्याहुः । ततः—पाण्डुरेति । अत्र सुराक्षीरोदयोर्मध्ये सर्पिर्दधिसमुद्रयोर्विवेचनादुक्तिस्तत्र विचेतव्यदुर्गस्थलाभावादिति कतकः । अनुक्तमपि तदुभयविवेचनमर्थतोऽत्रगन्तव्यमिति तीर्थः ॥४२॥४३॥

रा० टी०—ते इति । मन्देहा नाम राक्षसाः सूर्यस्योदयनं प्रति उदयसमये सूर्येण योद्धुं गता इति शेषः, अत एव सूर्येण ब्रह्मतेजोभिर्व्यापकीभूतकिरणैः अभितप्ताः अत एव निहताः सन्तः जले निपतन्ति पुनः पुनर्लम्बन्ते च, शैलशृङ्गेषु इति शेषः । सार्धश्लोक एकान्वयी ॥ ४१ ॥

गो० टी०—तत्रेति । तत्र मधुसमुद्रे सूर्यस्योदयनं प्रतीत्यतः परं निहता इत्यर्धम् । ततः परम् अभितप्ताश्चेत्यर्धम् लम्बन्ते वर्तन्त इत्यर्थः, ब्रह्मतेजोभिः गायत्रीप्रभावैः ॥४१॥४२॥

रा० टी०—तत इति । ततः अनन्तरं पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ऊर्मिभिर्मुक्ताहारमिव दुर्धर्षा यूयं द्रक्ष्यथ । अर्धद्वयमेकान्वयि ॥ ४२ ॥

गो० टी०—ततः पाण्डुरेति । अत्र मधुसमुद्रानन्तरं सर्पिर्दधिसमुद्रयोः कुशक्रौञ्चद्वीपयोश्च वक्तव्यत्वेऽपि तान् विहाय क्षीरोदप्राप्त्यभिधानं तदुभयप्राप्तिमन्तरेण क्षीरोदप्राप्तेरसंभवात् । अतः अनुक्तावपि तावुक्तावेव समुद्रौ द्वीपौ चेति बोध्यम् । यद्वा लवणसमुद्रं तन्मध्यद्वीपांश्चोक्त्वा प्लक्षद्वीपशाल्मलिद्वीपकुशद्वीपक्रौञ्चद्वीपान् इक्षुसुरासर्पिर्दधिसमुद्रांश्च तन्त्रेण दर्शयति—ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथेति । ततः ऊर्मिमन्तमित्यादिना इक्षुसमुद्रस्य विशेषणमुक्त्वा ततो रक्तजलमित्यादिना सुरासमुद्रस्य स्वरूपमुक्त्वा ततः शाल्मलिद्वीपवृत्तान्तं प्रदर्श्य अन्यत्र विशेषाभावात् क्षीरसमुद्रगमनं निर्दिशति—ततः पाण्डुरमेघाभमित्यादिना । ऊर्मिभिर्मुक्ताहारं मुक्ताहारयुक्तमिव स्थितम् ॥ ४३ ॥

४४ ] ति० टी०—मुक्ताहारमिव ऊर्मिभिस्तद्वन्तमिवेत्यर्थः ॥ ४४ ॥

रा० टी०—तस्येति । तस्य क्षीरोदस्य मध्ये कुसुमितैः राजतैः रजतमयैर्नगैस्तरुभिर्वृतः ऋषभो नाम पर्वतोऽस्तीति शेषः ॥ ४३ ॥

गो० टी०—तस्येत्यादि ॥ ४४ ॥

४५ ] ति० टी०—सरश्च नाम्ना सुदर्शनमित्यन्वयः ॥४५॥

रा० टी०—सर इति । हेमकेसरैः स्वर्णमयकेसरविशिष्टैः राजतैः रजतमयैः ज्वलितैः पद्मैः राजहंसैश्च समाकुलं व्याप्तं नाम्ना सुदर्शनं सुदर्शननामेत्यर्थः, सरोऽस्तीति शेषः । नाम प्रसिद्धमतत् ॥ ४४ ॥

गो० टी०—सरश्चेति । नाम्ना सुदर्शनं सर इत्यन्वयः ॥ ४५ ॥ ४६ ॥

४६ ] ति० टी०—नामशब्दः प्रसिद्ध्यर्थः ॥ ४६ ॥

रा० टी०—विबुधा इति । रिरंसवो रन्तुमिच्छवो विबुधादयस्तां नलिनीं सरसीं समधिगच्छन्ति ॥ ४५ ॥

४७ ] ति० टी०—नलिनीयुक्तं सुदर्शनं सर इत्यर्थः ॥४७॥

१ एतद्श्लोकार्धद्वयं व्यत्यस्तं गो. पाठे । २ चेति गो. पाठः । ३ गता इति गो. पाठः । ४ राजतैरिति गो. रा.पाठः । ५ साप्सरो इति गो. पाठः । ६ अभीति गो. पाठः । ७ तत इति गो. पाठः ।

जलोदं [1]सागरं शीघ्रं सर्वभूतभया[2]पहम् । तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ॥ ४८ ॥
अस्या[3]द्भुतं महावेगमोदनं सचराचरम् । तत्र विक्रोशतां नादो भूतानां सागरौकसाम् ॥
श्रूयते [4]चासमर्थानां दृष्ट्वाऽ[5]भूद्वडवामुखम् ॥ ४९ ॥
स्वादूदस्योत्तरे [6]तीरे योजनानि त्रयोदश । जातरूपशिलो नाम [7]सुमहान्कनकप्रभः ॥ ५० ॥
तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् । पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ५१ ॥
आसीनं पर्वतस्याग्रे सर्वदेवनमस्कृतम् । सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५२ ॥
त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः । स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५३ ॥
पूर्वस्यां दिशि निर्माणं कृतं तत्त्रिदशेश्वरैः । ततः परं हेममयः श्रीमानुदयपर्वतः ॥ ५४ ॥
तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता । जातरूपमयी दिव्या विराजति सवेदिका ॥ ५५ ॥
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः । जातरूपमयैर्दिव्यैः शोभते सूर्यसंनिभैः ॥ ५६ ॥

रा० टी०—क्षीरोदमिति । क्षीरोदं समतिक्रम्य सर्वभूतभयावहं जलोदं प्रशस्तजलविशिष्टं सागरं द्रक्ष्यथ ॥ ४६ ॥

गो० टी०—क्षीरोदमिति । जलोदं शुद्धजलसमुद्रम् ॥ ४७ ॥

४८ ] ति० टी०—जलोदं शुद्धजलरूपोदकम् । तत्र जलसमुद्रे तत्कोपजमौर्वब्रह्मर्षिकोपजं हयमुखं वडवामुखं तेजो ब्रह्मणा कृतमस्ति ॥ ४८ ॥

रा० टी०—तत्रेति । तत्र जलोदसागरे तत्कोपजम् और्वऋषिकोपात् जातं तेजस्तेजोरूपं महत् हयमुखं कृतं निक्षिप्तं सचराचरं सागरवर्तिचराचरसहितं महावेगं महावेगविशिष्टं जलम् अस्य हयमुखस्य ओदनं भक्ष्यमासेति शेषः ॥ ४७ ॥

गो० टी०—तत्रेति । तत्र शुद्धोदके कृतं निक्षिप्तं कोपजम् और्वकोपजं हयमुखं तत्प्रसिद्धं महत्तेजः वर्तत इति शेषः । अस्य तेजसः सचराचरं महावेगं तत् जलमिति शेषः ओदनमाहुः संहारवेलायामिन्धनमाहुरित्यर्थः ॥ ४८ ॥

४९ ] ति० टी०—अस्याद्भुतं महावेगं सचराचरं सर्वं जगद्युगान्ते ओदनं वदन्ति अनेन तस्य ब्रह्मरूपता सूचिता । तद्वडवामुखं दृष्ट्वा तत्र पतनभीत्या विक्रोशतामसमर्थानाम्, चात्समर्थानामपि, सागरौकसां भूतानां यो नादोऽभूत्सः श्रूयते ॥ ४९ ॥

रा० टी०—तत्रेति । तत्र सागरे यद्वडवामुखमभूत् तद्वडवामुखं दृष्ट्वा विक्रोशतामसमर्थानां तत्पतनपरिहारकसामर्थ्यरहितानां सागरौकसां भूतानां नादो रोदनं श्रूयते ॥ ४८ ॥

गो० टी०—तत्रेति । समर्थानामपि वडवामुखं तत्तेजो दृष्ट्वा विक्रोशतां नादः श्रूयते ॥ ४९ ॥

५० ] ति० टी०—स्वादूदस्य शुद्धोदकस्य समुद्रस्य । 'उत्तरे तीरे' इति पाङ्क्तः पाठः ॥ ५० ॥

रा० टी०—स्वाद्विति । स्वादूदस्य सागरस्य उत्तरे तीरे त्रयोदश योजनानि जातरूपशिलः स्वर्णमयशिलावान् अत एव कनकप्रभः सुमहान् पर्वतोऽस्तीति शेषः । 'जलोदस्य' इति पाठान्तरम् ॥ ४९ ॥

गो० टी०—स्वादूदस्येति । स्वादूदस्य शुद्धजलसमुद्रस्य उत्तरे देशे अपरे पारे ॥ ५०—५३ ॥

५१-५२ ] ति० टी०—चन्द्रप्रतीकाशं श्वेतवर्णम् ॥ ५१ ॥ ५२ ॥

रा० टी०—तत्रेति । तत्र तस्मिन् पर्वतस्याग्रे आसीनं चन्द्रप्रतीकाशं श्वेतत्वेन चन्द्रतुल्यं पद्मपत्रविशालाक्षं सर्वदेवनमस्कृतं सहस्रशिरसं धरणीधरं नीलवाससं पन्नगमनन्तं द्रक्ष्यथ । अर्धचतुष्टयमेकान्वयि ॥ ५० ॥ ५१ ॥

५३ ] ति० टी०—त्रिशिराः शिरःप्रदेशवर्तित्रिस्कन्धवान् । सवेदिक आधारवेदिबन्धसहितः ॥ ५३ ॥

रा० टी०—त्रिशिरा इति । त्रिशिराः शाखात्रयविशिष्टः सवेदिकः आधारभूतवेदिकासहितः महात्मनोऽनन्तस्य स्थापितः काञ्चनः स्वर्णमयः केतुः केतुभूतस्तालः पर्वतस्याग्रे विराजति ५२

५४ ] ति० टी०—अयमेव तालः पूर्वस्यां दिशि पूर्वदिग्व्यवस्थाया निर्माणं कृतम् अभिज्ञाशङ्कुवत्प्रमाणनिर्माणं कृतमित्यर्थः ॥ ५४ ॥

रा० टी०—पूर्वस्यामिति । ततः तालात्परं त्रिदशेश्वरैर्यस्य निर्माणं कृतं तत् स हेममयः उदयपर्वतः पूर्वस्यां दिश्यस्तीति शेषः तदिति सामान्ये नपुंसकम् ॥ ५३ ॥

गो० टी०—पूर्वस्यामिति । पूर्वस्यां दिशि तन्निर्माणं कृतं पूर्वदिगवधित्वेन तालरूपः केतुः कल्पित इत्यर्थः ॥ ५४—५६ ॥

५५-५६ ] ति० टी०—कोटिः शिखरम् सवेदिका साधारपर्वता ॥ ५५—५६ ॥

रा० टी०—तस्येति । तस्य उदयपर्वतस्य शतयोजनमायता जातरूपमयी सवेदिका कोटिरग्रभागः दिवं स्पृष्ट्वा विराजति ॥ ५४ ॥

---

१ सागरश्रेष्ठमिति गो. पाठः । २ वहमिति गो. रा. पाठः । ३ आहुस्तन्महेति गो. पाठः । ४ च समर्थानामिति गो. पाठः । ५ तदिति गो. पाठः । ६ देशे इति गो. पाठः । ७ महान्कनकपर्वत इति गो. पाठः ।

तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् । शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७ ॥
तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे । द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८ ॥
उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः । दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५९ ॥
तत्र वैखानसा नाम वालखिल्या महर्षयः । प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ६० ॥
अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते । तस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ६१ ॥
शैलस्य तस्य पृष्ठेषु कन्दरेषु वनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२ ॥
काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः । आविष्टा तेजसा संध्या पूर्वा रक्ता प्रकाशते ॥ ६३ ॥

रा० टी०—सालैरिति । सर्यसंनिभैः तालादिभिः शोभते तस्य कोटिरिति शेषः ॥ ५९ ॥

५७ ] ति० टी०—तत्र शतयोजनदीर्घे उदयगिरिशिखरे॥५७॥

रा० टी०—तत्रेति । तत्रोदयपर्वते योजनविस्तारं योजनपरिमितविस्तारविशिष्टं दशयोजनमुच्छ्रितं दशयोजनपरिमितोच्छ्रायविशिष्टं जातरूपमयं सौमनसं नाम शृङ्गमस्तीति शेषः ५६

गो० टी०—तत्र योजनेति । तत्र उदयपर्वतकोटौ ॥५७॥

५८ ] ति० टी०—तत्र सौमनसे शृङ्गे । त्रिविक्रमे त्रिभिः पदैस्त्रिलोक्या आक्रमणप्रस्तावे प्रथमं पदं तत्र कृत्वा द्वितीयं पदं मेरोः शिखरे चकार ॥ ५८ ॥

रा० टी०—तत्रेति । पुरा पूर्वं त्रिविक्रमे त्रिलोकीयत्ताकरणसमये तत्र सौमनसशृङ्गे पूर्वं प्रथमं पदं चरणं कृत्वा धृत्वा द्वितीयचरणं मेरोः शिखरे चकार ॥ ५७ ॥

गो० टी०—तत्र पूर्वमिति । विष्णुः त्रिविक्रमे त्रिविक्रमप्रस्तावे तत्र सौमनसशृङ्गे पूर्वं पदं कृत्वा द्वितीयं पदं मेरोः पश्चिमदिगवधिभूतस्य सावर्णिमेरोः शिखरे चकार । पूर्वपश्चिमदिगवधिभूतयोरुदयाचलसावर्णिमेर्वोर्विष्णोः पदविन्यासः बलेः कृत्स्नराज्यग्रहणार्थः । भूमध्यस्थमेरौ पदविन्यासे कृत्स्नाक्रमणं न लभ्येत । वस्तुतस्तु मेरोरेव शिखरे द्वितीयं पदं न्यस्तं मेरुशिखरस्य स्वर्गत्वात् । भूमावेकं स्वर्गे द्वितीयं तृतीयं ब्रह्मलोक इति पौराणिकी गाथा ॥ ५८ ॥

५९-६० ] ति० टी०—अस्तानन्तरमुत्तरेण जम्बूद्वीपं परिक्रम्य तन्महोच्छ्रयं शिखरं सौमनसाख्यं प्राप्य स्थितो दिवाकरो जम्बूद्वीपवर्तिनां भूयिष्ठं दृश्यो भवति । सौमनसे शिखरे इत्यर्थः । इदं सत्ययुगाभिप्रायम् । त्रेतायां क्षीरसागरमध्यगस्य द्वापरे सुरोदमध्यगस्य कलौ लङ्कामध्यगस्य जम्बूद्वीपस्थमनुष्यदृश्यताया अन्यत्रोक्तत्वात् ॥ ५९ ॥ ६० ॥

रा० टी०—उत्तरेणेति । दिवाकरः अस्तं प्राप्येति शेषः, उत्तरेण पथा जम्बूद्वीपं परिक्रम्य महोच्छ्रयं तत् सौमनसाभिधं शिखरमागत्येति शेषः, भूयिष्ठमधिकं दृश्यो भवति जम्बूद्वीपनिवासिनामिति शेषः इदं सत्ययुगाभिप्रायं त्रेतायां क्षीरसागरमध्यगस्य द्वापरे सुरोदमध्यगस्य कलौ लङ्कामध्यगस्य मनुष्यलोकदृश्यताया अन्यत्रोक्तत्वादिति भट्टाः ॥ ५८ ॥

गो० टी०—उत्तरेणेति । दिवाकरः जम्बूद्वीपमुत्तरेण जम्बूद्वीपोत्तरभागे " एनपा द्वितीया " इति द्वितीया । परिक्रम्य महोच्छ्रयं तत् सौमनसं शिखरं प्राप्येति शेषः । दृश्यो भवति मेरोर्दक्षिणपार्श्ववर्तिनां दृश्यो भवतीत्यर्थः ॥ ५९ ॥

रा० टी०—तत्रेति । तत्र सौमनसशृङ्गे सूर्यवर्णाः वालखिल्याः दृश्यन्ते ॥ ५९ ॥

गो० टी०—तत्रेति । वैखानसाः ब्रह्मनखोत्पन्नाः, वालखिल्याः ब्रह्मरोमोत्पन्नाः " ये नखास्ते वैखानसाः । ये वालास्ते वालखिल्याः '' इति श्रुतेः ॥ ६० ॥

६१-६२ ] ति० टी०—यस्य पुरः पुरस्तात्समीपे एवायं प्रागुक्तसुदर्शनसरश्चिह्नो द्वीपः प्रकाशते, तस्मिन्सौमनसशिखरे भगवत्युदिते सर्वप्राणभृतां प्राणिनां तेजःसंबन्धो भवति, चक्षुश्च प्रकाशते ॥ ६१ ॥ ६२ ॥

रा० टी०—अयमिति । यस्य सौमनसशृङ्गस्य पुरोऽग्रे अयं सुदर्शनो द्वीपः प्रकाशते तस्मिन् सौमनसशृङ्गे सर्वप्राणभृतां तेजः चक्षुश्च तत्र सूर्ये गते सत्येव प्राणिनां तेजःसंबन्धः चक्षुषः कार्यकारित्वं च भवतीत्यर्थः ॥ ६० ॥

गो० टी०—अयमिति । अयम् उदयपर्वतपार्श्वस्थो द्वीपः सुदर्शनो नाम । सुदर्शनसंज्ञामन्वर्थयत्याह—यस्येति । यस्य तेजसः पुरः संनिधौ सर्वप्राणभृतामपि चक्षुः प्रकाशते विषयग्रहणशक्तं भवति तत्तेजः सूर्याख्यं यस्मिन् द्वीपे प्रकाशते अयं द्वीपः सुदर्शनो नामेति योजना ॥ ६१ ॥

रा० टी०—शैलस्येति । तस्य शैलस्य पृष्ठादिषु वैदेह्या सह रावणः मार्गितव्यः ॥ ६१ ॥

गो०टी०—शैलस्येति । शैलस्य उदयशैलस्येत्यर्थः ६२॥६३॥

६३ ] ति० टी०—काञ्चनशैलस्य सूर्यस्य च तेजसाऽऽविष्टा समाक्रान्ता पूर्वा संध्योदयावच्छिन्ना पूर्वा दिग्रक्ता सती प्रकाशते ॥ ६३ ॥

रा० टी०—काञ्चनस्येति । काञ्चनस्य शैलस्य सूर्यस्य च तेजसा आविष्टा पूर्वा संध्या रक्ता प्रकाशते तेजोद्वयाविष्टात्वं तु सूर्यस्य काञ्चनशैलाधिष्ठितत्वे एव भवतीति तात्पर्यम् ॥६२॥

१ यस्मिन्निति गो. पाठः । २ शृङ्गेष्विति गो. पाठः ।

पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च । सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४ ॥
तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६५ ॥
ततः परमगम्या स्यादिक्पूर्वा त्रिदशावृता । रहिता चन्द्रसूर्याभ्यामदृश्या तमसावृता ॥ ६६ ॥
शैलेषु तेषु सर्वेषु कन्दरेषु नदीषु च । ये च नोक्ता मयोद्देशा विचेया तेषु जानकी ॥ ६७ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८ ॥
अभिगम्य तु वैदेहीं निलयं रावणस्य च । मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥ ६९ ॥
ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम । सिद्धार्थाः संनिवर्तध्वमधिगम्य च मैथिलीम् ॥ ७० ॥
महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः ।
अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

६४ ] ति० टी०–तदेवाह–पूर्वमिति । चो हेतौ। यतो भुवनस्य प्रकाशनहेतोः सूर्यस्योदयनमवेक्ष्य पूर्वं प्रथमं पृथिव्या एतद्द्वारमूर्ध्वस्थानां पृथिवीप्रवेशस्य द्वारं पृथ्वीस्थानां भुवनस्य ब्रह्मभुवनस्य प्रवेशद्वारमेतदुदयगिरिरूपं कृतम्, अत एषा पूर्वा दिगुच्यते । अन्ये तु—एतद्द्वारमेतद्दिग्वर्ति महद्भू-विवरं सृष्टं ब्रह्मणा, तस्मादेषा पूर्वा दिगुच्यते ॥ ६४ ॥

रा० टी०–पूर्वमिति । एतत् सूर्यस्य उदयनं उदयस्थानं पूर्वं कृतं ब्रह्मणा विरचितमत एव पृथिव्याः भुवनस्य जनस्य द्वारं प्रवृत्तिमार्गः पूर्वं कृतमतः एषा दिक् पूर्वोच्यते ॥ ६३ ॥

गो० टी०–पूर्वमिति । हि यस्मादेतदुदयपर्वतः द्वारश-ब्दापेक्षया नपुंसकत्वम् । पृथिव्याः भुवनस्य च पूर्वं द्वारं कृतं प्रथमद्वारत्वेन ब्रह्मणा सृष्ट्यादौ कल्पितं सूर्यस्य परितो भ्रम-णाय प्रथमम् एतदुदयनं च कृतमुदयस्थानं कल्पितं तस्मादेषा पूर्वा दिगुच्यते ॥ ६४ ॥

६५ ] ति० टी०—तस्य शैलस्योदयशैलस्य ॥ ६९ ॥

रा० टी०–तस्येति । तस्य उदयभूमेः शैलस्य पृष्ठादिषु रावणः मार्गितव्यः ॥ ६४ ॥

गो० टी०–तस्येत्यादि । सम्यगन्वेषणाय पुनरुक्तिः॥६९॥

६६ ] ति० टी०–ततः परमुदयाद्रेः पुरस्तात्त्रिदशावृता तद्दिगधिष्ठात्रिन्द्रादित्रिदशाधिष्ठिता । उदयाचलात्परमगम्यत्वे हेतुमाह—रहितेति ॥ ६६ ॥

रा० टी०–तत इति । ततः उदयगिरेः परं पूर्वा दिक् चन्द्रसूर्याभ्यां रहिता अत एव तमसा वृता अत एव अदृश्या अत एव त्रिदशावृता दिग् देवतामात्राविष्टा अत एव अगम्या अस्माभिरिति शेषः । एतेन ततः परं न गन्तव्यमिति सूचि-तम् ॥ ६९ ॥

गो० टी०–तत इति । त्रिदशावृता त्रिदशाधिष्ठिता दिक् उदयाचलप्रदेशरूपा ततः परम् उदयाद्रेः परम् अगम्या ॥६६॥

६७–६९ ] ति० टी०—उक्तार्थोपसंहारः—शैले-ष्वित्यादि ॥ ६७–६९ ॥

रा० टी०–शैलेष्विति । ये उद्देशाः देशा मया नोक्ताः तेष्वपि शैलादिषु जानकी विचेया ॥ ६६ ॥

गो० टी०–उपसंहरति–शैलेष्विति । ये मया नोक्तास्तेषु शैलादिषु विचेया ॥ ६७ ॥

रा० टी०–एतावदिति । हे वानरपुङ्गवाः! एतावत् उदयगिरिपर्यन्तमेव वानरैर्गन्तुं शक्यम् अतः अभास्करं भास्करोपलक्षितसूर्यचन्द्रादिरहितमत एव अमर्यादं ततः उदय-गिरेः परं स्थलं वयं न जानीमः ॥ ६७ ॥

रा० टी०–अभिगम्येति । उदयं पर्वतं प्राप्य रावणस्य निलयं वैदेहीं च अभिगम्य निश्चित्य मासे पूर्णे मासाभ्यन्तरे इत्यर्थः, निवर्तध्वम् ॥ ६८ ॥

गो० टी०–एतावदिति । अमर्यादं ग्रामनगरादिमर्यादा-रहितं केवलान्धकारभूतमित्यर्थः ॥ ६८–७० ॥

७०–७१ ] ति० टी०–सिद्धार्थाः कृतान्वेषणकृत्याः ७०॥७१

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०–ऊर्ध्वमिति । मासादूर्ध्वं न वस्तव्यम् । तत्र हेतुः—मासादूर्ध्वं वसन् वानरः मम वध्यो भवेत् अतो मै-थिलीमधिगम्य मासाभ्यन्तरे निश्चित्य सिद्धार्था यूयं संनि-वर्तध्वम् ॥ ६९ ॥

रा० टी०–महेन्द्रेति । महेन्द्रकान्तां महेन्द्रस्वामिकां वनखण्डमण्डितां वनसमूहशोभितां दिशं प्राचीं निपुणेन नैपु-ण्येन चरित्वा सीतामवाप्य ततः प्राच्याः निवृत्ताः यूयं सुखिनो भविष्यथ ॥ ७० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

१ सेति रा. पाठः । २ वनेष्विति गो. पाठः । ३ खण्डेति रा. पाठ. । ४ समित्यधिकं भाति मूलेऽदृष्टत्वात् ।

# एकचत्वारिंशः सर्गः ।

दक्षिणदिक्स्थतत्तत्प्रदेशविशेषान्निर्दिशन्सुग्रीवः सीतान्वेषणाय हनुमन्नीलाङ्गदादीन्मासावधिं विधाय प्रेषयति ।

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् । दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥
नीलमग्निसुतं चैव हनूमन्तं च वानरम् । पितामहसुतं चैव जाम्बवन्तं महौजसम् ॥ २ ॥
सुहोत्रं च शरारिं च शरगुल्मं तथैव च । गजं गवाक्षं गवयं सुषेणं वृषभं तथा ॥ ३ ॥
मैन्दं च द्विविदं चैव सुषेणं गन्धमादनम् । उल्कामुखमनङ्गं च हुताशनसुतावुभौ ॥ ४ ॥
अङ्गदप्रमुखान्वीरान्वीरः कपिगणेश्वरः । वेगविक्रमसंपन्नान्संदिदेश विशेषवित् ॥ ५ ॥
तेषामग्रेसरं चैव बृहद्बलमथाङ्गदम् । विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६ ॥
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः । कपीशः कपिमुख्यानां स तेषां समुदाहरत् ॥ ७ ॥
सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् । नर्मदां च नदीं रम्यां महोरगनिषेविताम् ॥ ८ ॥
ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् । [ वरदां च महाभागां महोरगनिषेविताम् । ]
मेखलानुत्कलांश्चैव दशार्णनगराण्यपि ॥ ९ ॥
अब्रवन्तीमवन्तीं च सर्वमेवानुपश्यत । विदर्भानृष्टिकांश्चैव रम्यान्माहिषकानपि ॥ १० ॥

गो० टी०–महेन्द्रेति । महेन्द्रकान्ताम् इन्द्रप्रियाम् । निपुणेन नैपुण्येन ॥ ७१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

१–३ ] ति० टी०–तत इति । अभिलक्षितान्कार्यसमर्थत्वेन निर्णीतान् ॥ १–३ ॥

४ ] ति० टी०–अयं सुषेणस्तारापितुरन्यः । हुताशनसुताविति अग्नित्वव्याप्यं हुताशनत्वमित्यग्निहुताशनयोर्भेदः ॥ ४ ॥

५ ] ति० टी०–विशेषविदन्वेष्टव्यदेशविशेषवित् ॥ ५ ॥

रा० टी०–दक्षिणस्यां दिशि वानरप्रेषणमुपक्रमते–तत इति । ततः प्राचीप्रेषणानन्तरं सुग्रीवो महत् वानरं बलम् अभिलक्षितान् कार्यसाधकत्वेन परीक्षितान् वानरान् प्रस्थाप्य प्रस्थानविधिं कारयित्वेत्यर्थः, दक्षिणां दिशं प्रेषयामास ॥ १ ॥

गो० टी०–अथ दक्षिणदिशि वानरप्रेषणमेकचत्वारिंशे–ततः प्रस्थाप्येत्यादि । अभिलक्षितान् दृष्टापदानान् ॥ १ ॥

रा० टी०–प्रेषणप्रकारमाह—नीलमित्यादिभिः । देशविशेषवित् कपिगणेश्वरः सुग्रीवः नीलप्रभृतीन् अङ्गदप्रमुखांश्च संदिदेश । द्वितीयः सुषेणः तारापितुरन्य इति न पौनरुक्त्यम् । श्लोकचतुष्टयमेकान्वयि ॥ २—५ ॥

गो० टी०–नीलमित्यादि । अत्रोक्तः सुषेणस्तारापितुरन्यः । वेगविक्रमसंपन्नप्रेषणे हेतुमाह–विशेषविदिति ॥ २–५ ॥

६ ] ति० टी०–अग्रेसरं मुख्यम् । 'असंग्रहम्' इति पाठेऽसंकोचप्रभुमित्यर्थः । दक्षिणां दिशमादिशत् अन्वेष्टव्यत्वेनेति शेषः ॥ ६ ॥

रा० टी०–तेषामिति । तेषां प्रधानां हरिवीराणामग्रेसरं मुख्यमङ्गदं विधाय दक्षिणां दिशमादिशत् प्रेषयामास ॥ ६ ॥

गो० टी०–तेषामग्रेसरं चैव महद्बलमसंगगमिति । असङ्गगम् अविलम्बगामि वेगवदिति यावत् बलं सैन्यम् अग्रेसरम् अग्रचरं विधाय ॥ ६ ॥

७ ] ति० टी०–तस्यां दिशि ये दुर्गमास्तान्समुदाहरदुवाच ॥ ७ ॥

रा० टी०–ये इति । तस्यां दक्षिणस्यां दिशि ये केचन समुद्देशाः प्रदेशाः सुदुर्गमाः तान् कपीशः सुग्रीवः कपिमुख्यानां कपिमुख्यान् समुदाहरत् अबोधयत संबन्धसामान्यविवक्षया षष्ठी अग्रे इत्यस्याध्याहारो वा अत्र पक्षे समुदाहरदित्यस्य अकथयदित्यर्थः ॥ ७ ॥

गो० टी०–ये केचनेति । तान् समुद्देशान् ॥ ७ ॥

८ ] ति० टी०–अत्राप्यार्यावर्तापेक्षया दक्षिणत्वम् । तदाह–सहस्रशिरसं सहस्रशिखरम् ॥ ८ ॥

९ ] ति० टी०–गोदावरीं विन्ध्यपूर्वप्रदेशवर्तिगोदावरीं नदीम् । मेखलादयो देशभेदाः ॥ ९ ॥

१० ] ति० टी०–'ऋष्टिकान्' इति पाठः ॥ १० ॥

रा० टी०–तत्प्रकारमाह–सहस्रेत्यादिभिः । विन्ध्यादीन् अनुपश्यत अन्वेषयत । अत्रापि दिग्विभागः आर्या-

१ हनुमन्तमिति गो. पाठः । २ मतमिति रा. पाठः । ३ महाबलमिति गो. पाठः । ४ ऋषभमिति गो. पाठः । ५ विजयमिति गो. पाठः । ६ असङ्गमिति गो. पाठः । ७ महद्बलमसङ्गगमिति गो. पाठः । ८ तानिति गो. पाठ. । ९ दुर्गामिति गो. पाठः । १० अर्धमेतदधिकं गो. पाठे । ११ मेखलामुत्कलामिति गो. पाठः । १२ आब्रुवन्तीमिति रा. अश्ववन्तीमिति गो. पाठः । १३ ऋषिकामिति गो. पाठः ।

तथा मत्स्यकलिङ्गांश्च कौशिकांश्च समन्ततः । अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम्[1] ॥ ११ ॥
नदीं गोदावरीं चैव सर्वमेवानुपश्यत । तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान्पाण्ड्यांश्च केरलान् ॥ १२ ॥
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः । विचित्रशिखरः श्रीमांश्चित्रपुष्पितकाननः ॥ १३ ॥
सुचन्दनवनोद्देशो[2] मार्गितव्यो महागिरिः । ततस्तामापगां दिव्यां प्रसन्नसलिलाशयाम्[3] ॥ १४ ॥
तत्र द्रक्ष्यथ कावेरीं विहृतामप्सरोगणैः । तस्यासीनं नगस्याग्रे मलयस्य महौजसः ॥ १५ ॥
द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् । ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ॥ १६ ॥
ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् । सा चन्दनवनैश्चित्रैः[4] प्रच्छन्नद्वीपवारिणी ॥ १७ ॥
कान्तेव युवती[5] कान्तं समुद्रमवगाहते । ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ॥ १८ ॥
युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः । ततः समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् ॥ १९ ॥
अगस्त्येनान्तरे तत्र सागरे विनिवेशितः । [6]चित्रसानुनगः श्रीमान्महेन्द्रः पर्वतोत्तमः ॥ २० ॥
जातरूपमयः श्रीमानवगाढो महार्णवम् । नानाविधैर्नगैः फुल्लैर्लताभिश्चोपशोभितम् ॥ २१ ॥
देवर्षियक्षप्रवरैरप्सरोभिश्च[7] शोभितम्[8] । सिद्धचारणसङ्घैश्च प्रकीर्णं सुमनोरमम्[9] ॥ २२ ॥

वर्ताद्बोध्यः । अतो विन्ध्यस्य तदुत्तरत्वेऽपि न क्षतिः । श्लोकपञ्चकमेकान्वयि ॥ ८—१२ ॥

गो० टी०—सहस्रशिरसमित्यादि । पूर्ववन्मध्यदेशापेक्षया विन्ध्यस्य दक्षिणत्वव्यपदेशः ॥ ८–१० ॥

गो० टी०—तत्र सर्वमेवानुपश्यतेत्यन्तेन विन्ध्यस्य पश्चिमभागस्थांस्तद्दक्षिणपार्श्वस्थांश्च नदीनगरदेशाननुपदिशति । विदर्भानित्यादिना पूर्वभागस्थान्देशाननुपदिशति । नदीं गोदावरीमिति दण्डकारण्यवर्तिगोदावरीखण्डमित्यर्थः ॥ ११ ॥ १२ ॥

११ ] ति० टी०—मत्स्याश्च कलिङ्गाश्च तान् ॥ ११ ॥

१२ ] ति० टी०—नदीं गोदावरीं दण्डकारण्यवर्तिगोदावरीप्रदेशम् ॥ १२ ॥

१३-१४ ] ति० टी०—अयोमुख इति मलयस्य नामान्तरम् सुचन्दनवनत्वलिङ्गात् ॥ १३ ॥ १४ ॥

रा० टी०—अयोमुख इति । चित्रपुष्पितकाननः अयोमुखः पर्वतो गन्तव्यः ॥ १३ ॥

रा० टी०—सुचन्दनेति । सुचन्दनवना उद्देशाः प्रदेशा यस्मिन् यस्य वा स महागिरिर्मलयो मार्गितव्यः । अर्धं पृथक् । तत इति । ततो मार्गणसमये तत्र तस्मिन् मलये अप्सरोगणैर्विहृतां कावेरीं द्रक्ष्यथ अर्धद्वयमेकान्वयि ॥ १४ ॥

गो० टी०—अयोमुख इति । अयोमुखः सह्यः ॥ १३ ॥ १४ ॥

गो० टी०—तत इति । अप्सरोगणैः विहितां पूजितामित्यर्थः ॥ १५ ॥

१५ ] ति० टी०—तस्यायोमुखपर्यायस्य ॥ १५ ॥

रा० टी०—तस्येति । तस्य नगस्य मलयस्याग्रे आसीनम् आदित्यसंकाशमगस्त्यं द्रक्ष्यथ तत्राप्यगस्त्याश्रमस्य सत्त्वात् तन्नामकऋष्यन्तरकल्पनाद्वा न पञ्चवटीप्रकरणाद्विरोधः ॥ १५ ॥

गो० टी०—तस्येति । तस्य प्रसिद्धस्य ॥ १६–१८ ॥

१६ ] ति० टी०—अगस्त्यमिति यद्यपि पञ्चवटीत उदग्भागेऽगस्त्याश्रमः पूर्वमुक्तस्तथाप्यत्रापि बोध्यः । वाल्मीकेरनेकदेशेष्वाश्रमवत्समाननामान्य एवायमित्यन्ये ॥ १६ ॥

रा० टी०—तत इति । तेनागस्त्येन अनुज्ञाता यूयं ग्राहजुष्टां बहुग्राहैः सेवितां ताम्रपर्णीं महानदीं तरिष्यथ ॥ १६ ॥

१७ ] ति० टी०—ग्राहजुष्टामित्यादि ताम्रपर्णीविशेषणम् चन्दनैः प्रच्छन्नानि द्वीपानि वारि च यस्याः सा प्रच्छन्नद्वीपवारिणी प्रच्छन्नशरीरेति यावत् ॥ १७ ॥

रा० टी०—सेति । चित्रैः चन्दनवनैः प्रच्छन्नद्वीपमालिनी आच्छन्नद्वीपसमूहवती सा ताम्रपर्णी युवती कान्तेव कान्तं समुद्रमवगाहते प्रच्छन्नानि द्वीपानि वारीणि च यस्या इति भट्टव्याख्यया ' द्वीपवारिणी ' इति पाठः प्रतीयते तत्र नुमागम आर्षो बोध्यः ॥ १७ ॥

१८ ] ति० टी०—अत एव युवती कान्तेव ॥ १८ ॥

रा० टी०—तत इति । हे वानराः ! ततः ताम्रपर्ण्याः गताः यूयं हेममयं युक्तं पुरद्वारि निविष्टं पाण्ड्यानां राजविशेषाणां कवाटं द्रक्ष्यथ ॥ १८ ॥

गो० टी०—ततो हेममयमिति । पाण्ड्यानां पाण्ड्यराजानां युक्तं योग्यं कपाटम् अनेन नगरं लक्ष्यते । मुक्तारूपैर्मणिभिः रत्नैः भूषितं तदुत्पत्तिदेशत्वादिति भावः ॥ १९ ॥

१९ ] ति० टी०—युक्तं पुरप्राकारघटितम् । अर्थे समुद्रतरणरूपे निश्चयं शक्याशक्यनिश्चयं संप्रधार्य कृत्वा ॥ १९ ॥

२० ] ति० टी०—तत्र प्लवनसाधनभूतः पर्वत उपदिश्यते—अगस्त्येनेति । सागरेऽन्तरे सागरख्यातसंबन्धिन्यन्तरेऽवकाशेऽगस्त्येन विनिवेशितः प्रतिष्ठापितो महेन्द्रः पर्वतोत्तमोऽस्ति । श्रीमान्सुन्दरः ॥ २० ॥

२१-२२ ] ति० टी०—अवगाढः प्रविष्टैकपार्श्वः ॥ २१ ॥ २२ ॥

१ गुहामिति रा. पाठ. । २ सचन्दनेति गो. पाठः । ३ सलिलां शिवामिति गो. पाठः । ४ दिव्यैः प्रच्छन्ना द्वीपशालिनीति गो. मालिनीति रा. पाठः । ५ युवतिरिति गो. पाठः । ६ तत्र नानानग इति गो. पाठः । ७ सर्वैरिति गो. पाठः । ८ सेवितमिति गो. पाठः । ९ हरमिति गो. पाठः ।

तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु । द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः[1] ॥ २३ ॥
अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः । तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ॥ २४ ॥
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ २५ ॥
दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी । अङ्गारकेति विख्याता छायामाक्षिप्य भोजनी[2]॥ २६ ॥
एवं निःसंशयान्कृत्वा संशयान्नष्टसंशयाः । मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ॥ २७ ॥
तमतिक्रम्य लक्ष्मीवान्समुद्रे शतयोजने । गिरिः पुष्पितको नाम सिद्धचारणसेवितः ॥ २८ ॥
चन्द्रसूर्यांशुसंकाशः सागराम्बुसमाश्रयः[3] । भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥ २९ ॥

रा० टी०–तत इति । समुद्रमासाद्य प्राप्य अर्थनिश्चयम् अर्थस्य अन्वेष्यसीताया निश्चयं स्थितिनियमं संप्रधार्य तत्रत्यजन्तुभ्यः प्रश्नादिना निश्चित्य चित्रसानुगतः विचित्रानेकसानुमान् तत्र सागरे अन्तरे तटे अगस्त्येन विनिवेशितः अत एव फुल्लैः पुष्पितैर्नगैस्तरुभिर्लताभिश्चोपशोभितं देवर्ष्यादिभिः शोभितं सिद्धादिभिः प्रकीर्णं व्याप्तं महार्णवमवगाढः निमग्नैकपार्श्वः महेन्द्रः पर्वतोऽन्वेषणीय इति शेषः । सार्धश्लोकत्रयमेकान्वयि ॥ १९—२२ ॥

गो० टी०–अथ महेन्द्रं वर्णयति–तत इत्यादिना । मार्गितव्या विशेषत इत्यन्तमेकान्वयम् । ततः पाण्ड्यनगरात् समुद्रमासाद्य अर्थनिश्चयं कर्तव्यसमुद्रलङ्घनाद्यर्थनिश्चयं संप्रधार्य कृत्वा अगस्त्येन तत्र सागरे अन्तरे अवकाशे निवेशितः श्रीमान् पुष्पफलादिसमृद्धिमान् श्रीमान् कान्तिमान् महेन्द्रोऽस्ति । तं पर्वतं पर्वसु पर्वसु समुद्रस्नानायागच्छति । तस्यापरे पारे अन्तरालिकतीरे द्वीपोऽस्ति तं मार्गध्वं तत्र सर्वात्मना सर्वप्रयत्नेन विशेषतः सीता मार्गितव्या इत्यर्थः ॥ २०–२४ ॥

२३ ] ति० टी०–तदुक्तविशेषणविशिष्टम् । सहस्राक्ष उपैतीत्यनेन महेन्द्राधिष्ठितत्वादन्वर्थनामकत्वं महेन्द्रस्य सूचितम् । अपरे पारेऽपरे परतीरे । अपरशब्दो विशेषवाची परतीरविशेषे प्रतिष्ठित इति शेषः । द्वीप इति । उत्तरभागे दक्षिणे लवणसमुद्र इति तस्य द्वीपत्वम् । सगरखातोऽप्येकदेशेनोदग्भागे च समुद्रसंबद्धः ॥ २३ ॥

रा० टी०–तमिति । तं निमग्नमहेन्द्राचलकं समुद्रं पर्वसु पर्वसु सहस्राक्षः सदा उपैति तस्य समुद्रस्यापरे पारे शतयोजनविस्तृतः मानुषैरगम्यः दीप्तः प्रकाशितो यो द्वीपस्तं समन्ततो मार्गध्वं परतटस्य द्वीपत्वं तु दक्षिणत आगत्य समुद्रान्तरसंगमात् । सार्धश्लोक एकान्वयी ॥ २३ ॥

२४–२५ ] ति० टी०–दीप्तः स्वर्णभूयिष्ठत्वात्तत्र द्वीपे सर्वात्मना सर्वप्रकारेण । विशेषत एकदेशमप्यनुपेक्ष्य ॥२४॥२५॥

रा० टी०–तत्रेति । सहस्राक्षसमद्युतेः वध्यस्य रावणस्य वासः वासाश्रयः स एव देशः अतस्तत्र द्वीपे सर्वात्मना निखिलयत्नेन सीता विशेषतो मार्गितव्या । सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०–स हीति । एवं रावणालयावगमेऽपि इतरदिक्षु वानरप्रेषणं स्थानान्तरे सीतामादाय किं गच्छेदिति शङ्कयेति बोध्यम् ॥ २५ ॥ २६ ॥

२६ ] ति० टी०–समुद्रसंबद्धत्वात्सागरोऽपि समुद्रत्वेन समुद्रश्च सागरत्वेन व्यवह्रियत इत्यविरोधः । तस्य तु रावणस्य तु भोजनी भोक्तुशीला? ॥ २६ ॥

रा० टी०–दक्षिणस्येति । दक्षिणस्य समुद्रस्य मध्ये छायामाक्षिप्य संगृह्य भोजिनी छायावज्जन्तुभक्षणशीला अङ्गारकेति विख्याता राक्षसी अस्तीति शेषः, एतेन तदुल्लङ्घनं सावधानतया कर्तव्यमिति सूचितम् ॥ २६ ॥

२७ ] ति० टी०–संशयान्संशयविषयान्देशान्निःसंशयान्सम्यगन्वेषणेन कृत्वा, ततो नष्टसंशया आप्तसत्त्वासत्त्वनिश्चयास्तत्रासत्त्वे सति तं लङ्काद्वीपमतिक्रम्य मृगयध्वम्॥२७॥

रा० टी०–एवमिति । नष्टसंशयाः सीताप्राप्तिविषयकसंशयरहिता यूयं संशयान् तत्तदाकारविषयकसंशयसहितान् देशान् एवं मद्वचनेन निःसंशयान् कृत्वा नरेन्द्रस्य रामस्य पत्नीं मृगयध्वम् ॥ २७ ॥

गो० टी०–ननु पूर्वं न जाने निलयं तस्य सर्वथा पापरक्षस इत्युक्तं संप्रति स हि देशस्तु वध्यस्य रावणस्य दुरात्मन इत्युच्यते अतो विरुद्धमिदमित्याशङ्क्य परिहरति–एवमिति । एवं मदुक्तरीत्या संशयान् संशयविषयभूतान् देशान् निःसंशयान् संशयाविषयीभूतान् निश्चितसदसद्भावान् कृत्वा नष्टसंशयाः सन्तः अमिततेजसो नरेन्द्रस्य पत्नीं मृगयध्वम् । यदृच्छादर्शनापरिस्फुटज्ञातमर्थं कथं निश्चयेन कथयामीति न जान इति पूर्वमुक्तम् इदानीं तथाविधमप्यर्थमन्वेषणगौरवाय निश्चयेन ब्रवीमीति भावः ॥ २७ ॥

२८–२९ ] ति० टी०–क्व मार्गणीया तत्राह—लक्ष्मीवानिति ॥ २८ ॥ २९ ॥

रा० टी०–तमिति । तं लङ्काप्रदेशमतिक्रम्य विद्यमाने शतयोजनविस्तीर्णे समुद्रे लक्ष्मीवान् सर्वसंपत्तिविशिष्टः सागराम्बुसमाश्रयः उत्तरावयवेन सागरजले निमग्नः पुष्पितको नाम गिरिः विपुलैः शृङ्गैः अम्बरमाकाशं विलिखन्निव भ्राजते । श्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

---

१ योजनमायत इति गो. पाठः । २ भोजिनीति रा. पाठः । ३ वृत इति गो. पाठः ।

तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः। [ श्वेतं राजतमेकं च सेवते यन्निशाकरः। ]
न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ ३० ॥
प्रणम्य शिरसा शैलं तं विमार्गथ वानराः। तमतिक्रम्य दुर्धर्षं सूर्यवान्नाम पर्वतः ॥ ३१ ॥
अध्वना दुर्विगाहेन योजनानि चतुर्दश। ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ॥ ३२ ॥
सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः। तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च ॥ ३३ ॥
मधूनि पीत्वा जुष्टानि परं गच्छत वानराः। तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ॥ ३४ ॥
अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा। तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ ३५ ॥
शरणं काञ्चनं दिव्यं नानारत्नविभूषितम्। तत्र भोगवती नाम सर्पाणामालयः पुरी ॥ ३६ ॥
विशालरथ्या दुर्धर्षा सर्वतः परिरक्षिता। रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३७ ॥
सर्पराजो महाघोरो यस्यां वसति वासुकिः। निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३८ ॥
तत्र चानन्तरोद्देशा ये केचन समावृताः। तं च देशमतिक्रम्य महानृषभसंस्थितिः ॥ ३९ ॥

गो० टी०—तमतिक्रम्येति। परापरयोगे चेति क्त्वाप्रत्ययः एवं पूर्वत्रापरत्र च बोध्यम् ॥ २८ ॥ २९ ॥

३०-३१ ] ति० टी०—तस्य काञ्चनं शृङ्गमस्ति। यं भगवान्सूर्यः सेवते नित्यं संनिहितो भवति। शृङ्गशब्दोऽर्धर्चादिः। अतश्चन्द्रसूर्याधिष्ठितत्वात्तं कृतघ्ना न पश्यन्ति ॥ ३० ॥ ३१ ॥

रा० टी०—तस्येति। तस्य पुष्पितकगिरेः एकं काञ्चनं शृङ्गमयं दिवाकरः सूर्यः सेवते एकं राजतं शृङ्गमयं निशाकरः सेवते ॥ ३० ॥

रा० टी०—नेति। तत् शृङ्गं कृतघ्नादयो न पश्यन्ति। तं तादृशशृङ्गवन्तं शैलं शिरसा प्रणम्य विमार्गत ॥ ३१ ॥

गो० टी०—तस्यैकमिति। दक्षिणायन इति शेषः ॥ ३० ॥ ३१ ॥

३२-३४ ] ति० टी०—चतुर्दशेति तैरुपलक्षित इत्यर्थः ॥ ३२-३४ ॥

रा० टी०—तमिति। तं शैलमतिक्रम्य विद्यमानः दुर्विगाहेन अध्वना उपलक्षितः चतुर्दशयोजनानि सूर्यवान्नाम पर्वतोऽस्तीति शेषः ॥ ३२ ॥

गो० टी०—तमतिक्रम्य दुर्धर्षा इति। हे दुर्धर्षाः! सूर्यवान् नाम पर्वत इति शेषः। दुर्विगाहेनाध्वना उपलक्षितः। योजनानि चतुर्दश पुष्पितकसूर्यवतोरन्तराल इति शेषः ॥ ३२ ॥

रा० टी०—तत इति। तं सूर्यवत् शैलमयमतिक्रम्य विद्यमानः सर्वाणि कामफलानि येषु तैः सर्वकालमनोहरैः वृक्षैः उपलक्षितः वैद्युतो नाम पर्वतोऽस्तीति शेषः ॥ ३३ ॥

रा० टी०—तत्रेति। तत्र वैद्युतपर्वते वरार्हाणि अतिप्रशंसनीयानि मूलानि फलानि च भुक्त्वा जुष्टानि सेवनीयानि मधूनि पीत्वा परममग्रिमदेशं गच्छत ॥ ३४ ॥

रा० टी०—तत्रेति। यत्र विश्वकर्मणा निर्मितमगस्त्यभवनं तत्र वैद्युतनामपर्वतसमीपे नेत्रमनःकान्तः नेत्रमनसोरभिरामदाता कुञ्जरो नाम पर्वतोऽस्तीति शेषः ॥ ३५ ॥

गो० टी०—तत इति। वराणां श्रेष्ठानामर्हाणीति वरार्हाणि परं ततः परं देशम् ॥ ३३-३५ ॥

गो० टी०—अगस्त्यभवनं विशेषयति—तत्र योजनेति। शरणं गृहम् ॥ ३६ ॥

३५ ] ति० टी०—तत्र कुञ्जरपर्वते। अगस्त्यभवनवर्णनम्—योजनेत्यादि। इदं तृतीयमगस्त्यस्थानम् ॥ ३५ ॥

रा० टी०—अगस्त्यभवनमेव वर्णयन्नाह—तत्रेति। तत्र कुञ्जरनामपर्वते योजनं विस्तारो यस्य तत् दशयोजनं दशयोजनपर्यन्तमुच्छ्रितं काञ्चनं स्वर्णमयं नानारत्नविभूषितं शरणमगस्त्यगृहमस्तीति शेषः ॥ ३६ ॥

गो० टी०—तत्रेत्यादि। निर्याय अगस्त्यभवनान्निर्गत्य ॥ ३७ ॥ ३८ ॥

३६-३७ ] ति० टी०—शरणं गृहम् अगस्त्यस्येति शेषः। तत्र कुञ्जरपर्वत एव। आलयशब्दो नित्यं पुंलिङ्गः। यद्यपि भोगवती रसातले प्रसिद्धा, तथापि रावणस्य जनस्थानवत्सर्पाणामपि भोगवत्याख्यपुरं भूमावप्यस्तीति वासुकेर्भुव उपर्यपि योगवैभवात्स्थितिरिति चेत एवावगन्तव्यम्। यथाऽगस्त्यस्य कुञ्जरपर्वतावच्छिन्ने विश्वकर्मनिर्मितभवने नक्षत्रपदे मलये पञ्चवटी दक्षिणभागे च वासस्तथेति ध्येयम् ॥ ३६ ॥ ३७ ॥

रा० टी०—तत्रेति। तत्र कुञ्जरनामपर्वते सर्पाणामालयः विशाला विस्तीर्णा रथ्या मार्गा यस्यां सर्वतः परिरक्षिता दृढा घोरैः पन्नगैः रक्षिता भोगवती नाम पुरी अस्तीति शेषः। सार्धश्लोक एकान्वयी ॥ ३७ ॥

३८ ] ति० टी०—निर्याय विशेषतो गत्वा ॥ ३८ ॥

रा० टी०—सर्पेति। सर्पराजो वासुकिः यस्यां वसति सा भोगवती पुरी निर्याय गत्वा मार्गितव्या। तत्र पुरीसमीपे समावृताः अप्रकटाः अनन्तराः अव्यवहिताः ये केचन देशाः ते च मार्गितव्याः। भोगवत्याः पाताले प्रसिद्धत्वेऽपि अत्र भोगवत्यन्तरकल्पनया न दोषः। सार्धश्लोक एकान्वयी ॥ ३८ ॥ ३९ ॥

३९ ] ति० टी०—समावृता गुप्तास्ते च मार्गितव्याः। ऋषभसंस्थितिर्ऋषभाकारसंस्थानवान् ॥ ३९ ॥

१ अर्धमेतदधिकं गो. रा. पाठे। २ तदिति रा. पाठः। ३ दुर्धर्षा इति गो. दुर्धर्षेति रा. पाठः। ४ मुख्यानीति गो. पाठः। ५ कक्ष्येति गो. पाठः। ६ प्रांशु इति गो. पाठः। ७ चानन्तरा देशा इति गो. रा. पाठः। ८ संस्थित इति गो. पाठः।

श्रीमानृषभो
दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् । न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं तु कदाचन ॥ ४१ ॥
रोहिता नाम गन्धर्वा घोरं रक्षन्ति तद्वनम् । तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ॥ ४२ ॥
शैलूषो ग्रामणीः शिक्षः[1] शुको बभ्रुस्तथैव च । रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ॥ ४३ ॥
अन्ते पृथिव्या दुर्धर्षास्ततः स्वर्गजितः स्थिताः । ततः परं न वः सेव्यः पितृलोकः सुदारुणः ॥ ४४ ॥
राजधानी यमस्यैषा कष्टेन तमसाऽऽवृता । एतावदेव युष्माभिर्वीरैः[2] वानरपुङ्गवाः ॥
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥ ४५ ॥
सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते । गतिं[3] विदित्वा वैदेह्याः संनिवर्तितुमर्हथ ॥ ४६ ॥
यश्च मासान्निवृत्तोऽग्रे दृष्ट्वा[4] सीतेति वक्ष्यति । मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ४७ ॥
ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः । कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥ ४८ ॥
अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

रा० टी०–तमिति । तं भोगवतीसमीपवर्तिनं देशमतिक्रम्य यत्र अग्निसमप्रभं दिव्यं तत्प्रसिद्धं गोशीर्षकादिचन्दनविशेषजातिमत् उत्पद्यते सः ऋषभसंस्थितिः वृषभाकृतिः ऋषभो नाम पर्वतः अस्तीति शेषः । श्लोकद्वयमेकान्वयि ॥ ४० ॥ ४१ ॥

गो० टी०–तत्रेति । ये अनन्तराः अव्यवहिता देशाः ते मार्गितव्या इति शेषः ॥ ३९ ॥

गो० टी०–तं चेति । तं च देशमतिक्रम्य तस्माद्देशात्परत इत्यर्थः । ऋषभसंस्थितः ऋषभतुल्यसंस्थानः ॥ ४० ॥

४०-४१ ] ति० टी०–गोशीर्षकादयश्चन्दनभेदाः॥४०॥४१॥

४२-४३ ] ति० टी०–तच्चन्दनास्प्रष्टृत्वे हेतुः—रोहिता इति ॥ ४२ ॥ ४३ ॥

गो० टी०–गोशीर्षकमिति । गोशीर्षकं गोरोचनासदृशवर्णं पद्मकं पद्मदलसवर्णं हरिश्यामं तमालदलवर्णम् अग्निसमप्रभम् अग्निसदृशवर्णम् एवंविधं दिव्यं चन्दनम् यत्रोत्पद्यते स ऋषभः पर्वतो वर्तत इति पूर्वेणान्वयः ॥ ४१–४८ ॥

रा० टी०–नेति । तत् चन्दनं दृष्ट्वा कदाचन भवद्भिर्न स्प्रष्टव्यम् । तत्र हेतुः—रोहिता नाम गन्धर्वास्तद्वनं रक्षन्ति । तत्र हेतुः—सूर्यसमप्रभाः शैलूषादयः पञ्च गन्धर्वपतयः तत्र तस्मिन् वने निवसन्तीति शेषः । श्लोकद्वयमेकान्वयि ॥ ४२ ॥ ४३ ॥

रा० टी०–रवीति । ततः ऋषभात्परतः पृथिव्याः अन्ते पुण्यकर्मणां रविसोमाग्निवपुषां निवासः अत एव ततस्तत्र दुर्धर्षाः स्वर्गजित एव स्थिताः ॥ ४४ ॥

४४-४७ ] ति० टी०–ततः ऋषभात्परतः पृथिव्या अन्ते पुण्यकर्मणां निवासस्तत्र स्वर्गजित एव स्थिता भवन्ति, अतो हेतोस्ततः परं पितृलोको न सेव्योऽगम्यः ॥ ४४–४७ ॥

रा० टी०–तत इति । ततः परं परदेशवर्ती सुदारुणः पितृलोकः वो युष्माकं सेव्यो न । सुदारुणत्वे हेतुः—कष्टेन दुःखेन तमसा आवृता एषा यमस्य राजधानी ॥ ४५ ॥

रा० टी०–एतावदिति । एतावत् पितृलोकात् पूर्वमेव गन्तुं विचेतुं वा शक्यम् अतः परं गतिमतां जीवन्मनुष्यादीनामित्यर्थः, गतिर्न ॥ ४६ ॥

रा० टी०–सर्वमिति । एतत् मद्बोधितं सर्वमन्यदपि यद्दृश्यते तदपि समालोक्य वैदेह्या गतिं स्थितिं विदित्वा संनिवर्तितुमर्हथ ॥ ४७ ॥

रा० टी०–य इति । मासात् मासान्तदिनात् अग्रे पूर्वं निवृत्तो यो वानरः सीता मया दृष्टेति वक्ष्यति स मत्तुल्यविभवः सन् भोगैः भोग्यपदार्थैः सुखं विहरिष्यति । किंच यो मासादेव निवृत्तः सन् दृष्टेति अग्रे प्रथमं वक्ष्यति सः अग्रे मत्संनिधौ वक्ष्यतीति वा मदग्रे विहरिष्यतीति वार्थः ॥ ४८ ॥

४८ ] ति० टी०–बहुशः कृतापराधोऽपीत्यर्थः ॥ ४८ ॥

रा० टी०–तत इति । ततः दृष्टा सीतेत्युक्तवतोऽन्यो मम प्राणाद्विशेषतो विशेषः प्रियतरो नास्ति स एव विशेषतः प्रियतर इत्यर्थः, अत एव सः कृतापराधोऽपि मम बन्धुः प्रीतिविषयीभूत एव भविष्यति तदपराधं न गणयिष्यामीत्यर्थः ॥ ४९ ॥

गो० टी०–तत इति । ततः तस्मात् पुरुषात् प्रियतरो नास्ति मम प्राणात् विशेषतः सः प्रियतर इति शेषः ॥ ४९ ॥

४९ ] ति० टी०–लभध्वं लप्स्यध्वम् । तथा तत्कार्यमुद्दिश्याधिगुणमधिकगुणोपेतं पुरुषार्थं पुरुषयत्नमारभध्वम्॥४९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१ शिग्रुः शुभ्रो इति गो. पाठः । २ वीरा इति गो. पाठः । ३ स्थिति गो. पाठः । ४ दृष्टेति गो. रा. पाठः ।

## द्विचत्वारिंशः सर्गः ।

मासमवधीकृत्य पश्चिमायां दिशि सीतान्वेषणाय सुग्रीवः सुषेणादीन्प्रहिणोति ।

अथ प्रस्थाप्य स हरीन्सुग्रीवो दक्षिणां दिशम् । अब्रवीन्मेघसंकाशं सुषेणं नाम वानरम् ॥ १ ॥
तारायाः पितरं राजा श्वशुरं भीमविक्रमम् । अब्रवीत्प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २ ॥
महर्षिपुत्रं मारीचमर्चिष्मन्तं महाकपिम् । वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३ ॥
बुद्धिविक्रमसंपन्नं वैनतेयसमद्युतिम् । मरीचिपुत्रान्मारीचानर्चिर्मील्यान्महाबलान् ॥ ४ ॥
ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् । द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ॥ ५ ॥
सुषेणप्रमुखा यूयं वैदेहीं परिमार्गथ । सौराष्ट्रान्सहबाह्लीकांश्चन्द्रचित्रांस्तथैव च ॥ ६ ॥
स्फीताञ्जनपदान्रम्यान्विपुलानि पुराणि च । पुंनागगहनं कुक्षिं बकुलोद्दालकाकुलम् ॥ ७ ॥
तथा केतकखण्डांश्च मार्गध्वं हरिपुङ्गवाः । प्रत्यक्स्रोतोवहाश्चैव नद्यः शीतजलाः शिवाः ॥ ८ ॥

रा० टी०—अमितेति । विपुलगुणेषु बहुगुणवत्सु कुलेषु प्रसूता अत एव अमितबलपराक्रमाः अत एव भवन्तो दीप्तिमन्तो यूयं मनुजपतिसुतां जानकीं यथा येन प्रकारेण लभध्वं तदनुगुणं तदनुसारिणं पुरुषार्थमारभध्वम् ॥ ६० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०—अमितेति । तदधिगुणं तदनुगुणं पुरुषार्थं पुरुषव्यापारम् अत्र संयमिनीपर्यन्तमभिधानात् सप्तद्वीपसागरगमनमर्थसिद्धम् एवमुत्तरसर्गयोरपि बोध्यम् ॥ ६० ॥

अत्र सार्धपञ्चाशत् श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१ ] ति० टी०—अथेति ॥ १ ॥

रा० टी०—पश्चिमदिक्प्रेषणमुपक्रमते—अथेति । कपिसत्तमः सुग्रीवः हरीन् दक्षिणां दिशं प्रस्थाप्य मेघसंकाशं तारायाः पितरं सुषेणं प्रणम्य अब्रवीत् महर्षेः मरीचेः पुत्रमर्चिष्मन्तमर्चिष्मन्नामानमित्यर्थः, किंच महर्षेर्भृगोः पुत्रं वैनतेयसमद्युतिमर्चिष्मन्तं चाब्रवीत् । अर्चिर्माल्यान् अर्चिर्युक्तमाल्यविशिष्टान् मारीचान् तदभिधान् तान्प्रसिद्धान् ऋषिपुत्रान् अन्यानपीत्यर्थः आदिशत् अब्रवीत् । तदाकारमाह—कपीनां द्वाभ्यां शतसहस्राभ्यां युक्ता यूयं प्रतीचीदिशं गत्वेति शेषः, वैदेहीं परिमार्गथ अन्वेषयध्वम् । सार्धश्लोकपञ्चकं संमिलितान्वयि ॥ १—६ ॥

गो० टी०—अथ पश्चिमदिशि वानरयोजनं द्विचत्वारिंशे—अथेत्यादि ॥ १ ॥

२ ] ति० टी०—श्वशुरत्वात्प्राञ्जलिः प्रणम्याब्रवीत् । एतद्विशेषकथनायैव पुनरब्रवीदित्युक्तिः ॥ २ ॥

गो० टी०—ताराया इति । प्राञ्जलित्वादिकथनार्थमब्रवीदिति अतो न पौनरुक्त्यम् ॥ २ ॥

३ ] ति० टी०—महर्षिपुत्रं मारीचं महर्षेर्मरीचेः पुत्रम् अर्चिष्मन्तमर्चिष्मदाख्यम् अयं तेषु प्रधानः अर्चिर्माल्याख्या अन्येऽपि मरीचिपुत्राः ॥ ३ ॥

४—५ ] ति० टी०—मारीचशब्दस्य व्युत्पत्त्यन्तरसंभवान्मरीचिपुत्रानित्युक्तम् ॥ ४ ॥ ५ ॥

गो० टी०—मरीचिपुत्रमिति । मारीचपदमन्वर्थसंज्ञेति द्योतयितुं मरीचिपुत्रमित्युक्तिः । मरीचिपुत्रान् मारीचानित्यत्रापि तथा । मारीचमिति ज्येष्ठ उक्तः मारीचा इति तदनुजा उच्यन्ते । अर्चिर्मालान् अर्चिष्मतः ॥ ३—५ ॥

६ ] ति० टी०—परिमार्गथ मार्गध्वम् । चन्द्रचित्रानिति शूरान् । 'भीमान्' इति पाठान्तरम् । देशविशेषा इमे ॥ ६ ॥

७ ] ति० टी०—विपुलानि विशालानि । कुक्षिर्देशविशेषः॥७॥

रा० टी०—तत्प्रकारमाह—सौराष्ट्रानिति । सौराष्ट्रादीन् मार्गध्वम् । अर्धचतुष्टयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—सुराष्ट्रानित्यादि । पुन्नागेति । पुन्नागगहनं पुन्नागवनम् कुक्षिः मध्यदेशविशेषः उद्दालकाः वृक्षविशेषाः केतकषण्डान् केतकवनानि प्रत्यक् स्रोतो गच्छन्तीति प्रत्यक्स्रोतोगमाः शिवाः पावनाः कान्ताराः दुर्गममार्गाः । तान् मार्गध्वमिति पूर्वेण संबन्धः ॥ ६—८ ॥

८ ] ति० टी०—प्रत्यक्स्रोतोवहाः पश्चिमाभिमुखप्रवाहाः ॥ ८ ॥

रा० टी०—प्रत्यगिति । प्रत्यक्स्रोतोवहनद्यादयः अन्वेषणीया इति शेषः ॥ ८ ॥

१ सुग्रीवस्तान्हरीनिति गो. पाठः । २ यूथपमिति गो. पाठः । ३ मरीचिपुत्रमिति गो. पाठः । ४ मालानिति गो. पाठः । ५ मार्गनेति गो. पाठः । ६ सुराष्ट्रानिति गो. पाठः । ७ शूरान्भीमानिति गो. पाठः । ८ षण्डानिति गो. पाठः । ९ यूथपा इति गो. पाठः । १० गमा इति गो. पाठः ।

तापसानामरण्यानि कान्तारगिरयश्च ये । तत्र स्थलीर्मरुप्राया अत्युच्चशिशिराः शिलाः ॥ ९ ॥
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् । ततः पश्चिममागम्य समुद्रं द्रष्टुमर्हथ ॥ १० ॥
तिमिनक्राकुलजलं गत्वा द्रक्ष्यथ वानराः । ततः केतकखण्डेषु तमालगहनेषु च ॥ ११ ॥
कपयो विहरिष्यन्ति नारिकेलवनेषु च । तत्र सीतां च मार्गध्वं निलयं रावणस्य च ॥ १२ ॥
वेलातलनिविष्टेषु पर्वतेषु वनेषु च । मुरचीपत्तनं चैव रम्यं चैव जटापुरम् ॥ १३ ॥
अवन्तीमङ्गलेपां[10] च तथा चालक्षितं वनम् । राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १४ ॥
सिन्धुसागरयोश्चैव संगमे तत्र पर्वतः । महान्[11]सोमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १५ ॥
तत्र प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः । तिमिमत्स्यगजांश्चैव नीडान्यारोपयन्ति ते ॥ १६ ॥
तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये । दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिःस्वनाः ॥ १७ ॥
विचरन्ति विशालेऽस्मिंस्तोयपूर्णे समन्ततः । तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ॥ १८ ॥

९ ] ति० टी०—कान्तारगिरयः कान्तारयुक्ता गिरयः। स्थल्यकृत्रिमा भूः । शिशिराः शीतलाः ॥ ९ ॥

रा० टी०—तत्रेति । तत्र नद्यादिषु मरुप्रायाः स्थलीः अत्युच्चाः शिशिराः शीतलाः कर्मधारयः शिलाश्च मार्गध्वमिति शेषः, स्थली अकृतिमा भूमिः । सार्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०—ततः स्थलीमित्यादि श्लोकद्वयमेकान्वयम् । स्थल्यादिकं मार्गित्वा ततः तस्माद्देशात् पश्चिमं समुद्रमागम्य तिमिनक्रायुतमक्षोभ्यं तं द्रष्टुमर्हथ ॥ ९ ॥ १० ॥

१०-११] ति० टी०—तत्रादर्शने ततः किंचित्पश्चिमं गत्वा समुद्रं द्रष्टुमर्हथ । तत्र समुद्रं द्रक्ष्यथेति निश्चय एव॥१०॥११॥

१२-१३ ] ति० टी०—कपयो भवत्सैनिकाः ॥ १२॥१३॥

१४ ] ति० टी०—अवन्त्यङ्गलेपे पुर्यौ । आलक्षिताख्यं वनम् ॥ १४ ॥

रा० टी०—गिरीति । गिरिजालावृतां गिरिसमूहैर्निबिडां पश्चिमां दिशं मार्गित्वा तत आगम्य गत्वा तिमिनक्राकुलजलमत एव अक्षोभ्यं पश्चिमं समुद्रं द्रष्टुमर्हथ अत एव गत्वा द्रक्ष्यथ । सार्धश्लोक एकान्वयी ॥ १० ॥

रा० टी०—तत इति । ततः समुद्रदर्शनानन्तरं वेलातटनिविष्टेषु केतकखण्डादिषु कपयो विहरिष्यन्ति तत्र केतकखण्डादिषु सीतां रावणस्य निलयं च मार्गध्वम् । अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—तत इति । कपयो भवदीयाः ॥ ११ ॥

गो० टी०—तत्रेति । वेलातटनिविष्टेषु वेलायाम् अम्बुविकृतौ तटे च स्थितेषु 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ' इत्यमरः ॥ १२ ॥

रा० टी०—मुरवीति । मुरवीपत्तनादीनि मार्गध्वमिति शेषः । सार्धश्लोक एकान्वयी ॥ १३ ॥ १४ ॥

गो० टी०—मुरचीति । पूर्वस्यां दिश्यवन्त्यन्या इयं चान्या यत्र प्रविष्टा वननैरन्तर्येण न लक्ष्यन्ते तदलक्षितं नाम मार्गध्वमित्यनुषङ्गः ॥ १३ ॥

१५ ] ति० टी०—महाद्रुमो महान्तो द्रुमा यस्मिन् सः१५

रा० टी०—सिन्ध्विति । तत्र प्रसिद्धे सिन्धुसागरयोः संगमे शतशृङ्गः महाद्रुमः महाद्रुमविशिष्टः सोमगिरिर्नाम पर्वतोऽस्तीति शेषः, सिन्धुर्नदविशेषः ॥ १५ ॥

गो० टी०—सिन्ध्विति । सिन्धुर्नदविशेषः । तत्र पश्चिमदिशि पक्षैर्गच्छन्तीति पक्षगमाः सपक्षा इति विशेषणम् । नीडानि वृक्षाग्रस्थस्वावासस्थानानि अत एव महाद्रुम इति पूर्वमुक्तम् ॥ १४ ॥ १५ ॥

१६-१७ ] ति० टी०—सिंहास्तदाख्याः पक्षगमाः पक्षिणः स्थिताः ते पक्षिणस्तिमिमत्स्यगजान्नीडानि स्ववासस्थानान्यारोपयन्ति प्रापयन्ति ॥ १६ ॥ १७ ॥

रा० टी०—तत्रेति । तत्र सोमगिरिसंबन्धिषु प्रस्थेषु शृङ्गेषु पक्षगमाः पक्षाभ्यां गमनशीलाः सिंहाः स्थितास्ते सिंहाः तिमिमत्स्यगजान् नीडानि स्ववासस्थानानि अरोपयन्ति लालनार्थं नीडेषु स्थापयन्तीत्यर्थः ॥ १६ ॥

रा० टी०—तानीति । गिरिशृङ्गगताः ये मातङ्गाः तदुपलक्षिततिम्यादयस्ते दृप्ताः सपक्षसिंहाहृतत्वेन प्राप्तगर्वास्तृप्ताः प्राप्तसंतोषाः अत एव तोयदस्वननिःस्वनाः सन्तः तोयपूर्णे अस्मिन् शृङ्गे विद्यमानानि सिंहानां तानि नीडानि समन्ततो विचरन्ति । सार्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी०—तानीत्याद्यर्धत्रयम् । समन्ततस्तोयपूर्णेऽस्मिन् स्थले ये गजाः सन्ति गिरिशृङ्गगताश्च ये ते गजास्तानि नीडानि विचरन्ति सिंहनीडाश्रयसानुषु विचरन्तीत्यर्थः । बाधकस्थानगमने हेतुमाह—दृप्ता इति ॥ १६ ॥

१८ ] ति० टी०—तोयपूर्णे प्रस्थे ॥ १८ ॥

रा० टी०—तस्येति । दिवस्पर्शं चित्रपादपं तस्य सर्वं शृङ्गं कामरूपिभिः कपिभिः आशु विचेतव्यम् ॥ १८ ॥

१ कान्तारा इति गो. पाठः । २ ततः स्थलीं मरुप्रायामिति गो.पाठ. । ३ शिरस इति गो.पाठः । ४ आसाद्येति गो.पाठः । ५ अयुतेति गो. पाठः । ६ षण्डेष्विति गो. पाठः । ७ तटेति गो. पाठः । ८ मुरवीतिरा. पाठः । ९ जटीपुरमिति गो. पाठः । १० लोपामिति गो. पाठः । ११ हेमेति गो. पाठः ।

सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः। कोटिं तत्र समुद्रस्य काञ्चनीं शतयोजनाम् ॥ १९ ॥
दुर्दर्शां पारियात्रस्य गत्वा द्रक्ष्यथ वानराः। कोट्यस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ॥ २० ॥
वसन्त्यग्निनिकाशानां घोराणां पापकर्मणाम्। पावकार्चिःप्रतीकाशाः समवेताः समन्ततः ॥ २१ ॥
नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः। नादेयं च फलं तस्माद्देशात्किंचित्प्लवङ्गमैः ॥ २२ ॥
दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः। फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः ॥ २३ ॥
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी। नहि तेभ्यो भयं किंचित्कपित्वमनुवर्तताम् ॥ २४ ॥
तत्र वैदूर्यवर्णाभो वज्रसंस्थानसंस्थितः। नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥ २५ ॥
श्रीमान्समुदितस्तत्र योजनानां शतं समम्। गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः ॥ २६ ॥
चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः। तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २७ ॥

गो० टी०—तस्येति। कपिभिः भवद्भिरिति शेषः॥ १७॥

१९-२० ] ति० टी०—कोटिं शृङ्गम्। समुद्रस्य मध्ये इति शेषः॥ १९॥ २०॥

रा० टी०—कोटिमिति। हे वानराः! तत्र प्रसिद्धे समुद्रे समुद्रस्य मध्ये शतयोजनां काञ्चनीं दुर्दर्शाम् अन्यैर्द्रष्टुमशक्यां पारियात्रस्य गिरेः कोटिं शृङ्गं द्रक्ष्यथ॥ १९॥

रा० टी०—कोट्य इति। तत्र पारियात्रशृङ्गे कामरूपिणां घोराणां भयंकराणाम् अग्निनिकाशानां वह्निसदृशानां तरस्विनां गन्धर्वाणां चतुर्विंशत् कोट्यो वसन्ति॥ २०॥

गो० टी०—कोटिमिति। तत्र समुद्रे गतां पारियात्रस्य कोटिं शृङ्गम्॥ १८॥ १९॥

२१ ] ति० टी०—घोराणाम्, अत एव पापकर्मणां संहर्तॄणाम्। पावकार्चिःप्रतीकाशाः कोट्यः समवेता इत्यन्वयः॥ २१॥

रा० टी०—पावकेति। पावकार्चिःप्रतीकाशाः वह्निज्योतिःसदृशाः समन्ततः समवेताः पूर्णास्ते गन्धर्वाः भीमविक्रमैर्वानरैर्न अत्यासादयितव्याः पीडयितव्याः॥ २१॥

गो० टी०—पावकार्चिःप्रतीकाशा इत्यादि। नात्यासादयितव्याः नातिसमीपं प्रापव्याः नादेयं न स्वीकार्यम्। तर्हि ते गन्धर्वा अस्मान् हनिष्यन्तीत्यत्राह—तत्रेति। यत्नः फलचापलनिवृत्तौ यत्नः कर्तव्यः विशालत्वादन्वेषणे यत्नो वा। न किंचिद्भयं कपिसंचारस्य वनमात्रधर्मत्वादिति भावः। अनुवर्ततामु अनुवर्तमानानाम् मार्गितव्या चेति संबन्धः॥२०-२२॥

२२-२३ ] ति० टी०—नात्यासादयितव्या न द्रष्टव्या नापराद्धव्या वा। नादेयं न ग्राह्यम्॥ २२॥ २३॥

रा० टी०—नेति। हि यतः दुरासदाः भीमविक्रमा अतिवेगाः महाबलास्ते गन्धर्वाः तत्र शृङ्गे फलमूलानि रक्षन्ते अतस्तस्मात् देशात् किंचित्फलं प्लवङ्गमैर्नादेयम्। सार्धश्लोक एकान्वयी॥ २२॥ २३॥

२४ ] ति० टी०—यत्नः कर्तव्यः मार्गण इति शेषः। ननु पापकारित्वात्तदनासादने कथं तत्र मार्गणसंभवः अत आह—नहि तेभ्य इति। तद्देशे मृगपक्ष्यादिवत्प्राकृतमृगस्वभावे तिष्ठतामित्यर्थः, अत एव नापराद्धव्या इति पूर्वं व्याख्यातम्॥ २४॥

रा० टी०—तत्रेति। तत्र शृङ्गे जानकी मार्गितव्या अतयत्नः अन्वेषणप्रयत्नः कर्तव्यः। ननु गन्धर्वाणामतिप्राबल्यात् कथमन्वेषणसिद्धिरित्यत आह—कपित्वं स्वाभाविकः चाञ्चल्यमनुवर्ततां युष्माकं तेभ्यो गन्धर्वेभ्यः किञ्चिद्भयं न एतेन स्वाभाविकगमनव्याजेनैव अन्वेषणं कर्तव्यमिति व्यञ्जितम्॥ २४॥

२५ ] ति० टी०—वैदूर्यवर्ण आभा च यस्य सः। वज्रवत्कठिनसंस्थानेन संस्थितः॥ २५॥

२६ ] ति० टी०—समुदितः प्रतिष्ठितः। समम् आयामतो विस्तारतश्च शतयोजन इत्यर्थः॥ २६॥

रा० टी०—तत्रेति। तत्र पारियात्रगिरिसंनिधौ तत्र समुद्रे वैदूर्यवर्णस्येवाभा यस्य सः वज्रसंस्थानसंस्थितः वज्रवत् संस्थानमवयवसंनिवेशस्तेन संस्थितो युक्तः योजनानां शतं समम् उन्नतानुन्नतरहितम् यथा भवति तथा समुदितः प्रकाशितः वज्रो नाम गिरिरस्तीति शेषः, तत्र विद्यमाना गुहाः प्रयत्नेन विचेतव्याः। श्लोकद्वयमेकान्वयि॥ २५॥२६॥

गो० टी०—तत्र वैदूर्येत्यादि सार्धश्लोक एकान्वयः। श्रीमानिति। योजनानां शतं समं यथा भवति तथा समुदितः समुन्नतः॥ २३॥ २४॥

२७ ] ति० टी०—चतुर्भागे चतुर्थभागे गत इति शेषः॥२७॥

रा० टी०—चतुरिति। समुद्रस्य चतुर्भागे चतुर्थांशे चक्रवान्नाम पर्वतोऽस्तीति शेषः। तत्र तस्मिन् पर्वते विश्वकर्मणा निर्मितं सहस्रारं चक्रमतिष्ठदिति शेषः। तत्र चक्रनिर्माणोत्तरकाले पुरुषोत्तमो नारायणः पञ्चजनं तदभिधं हयग्रीवं तदभिधं च दानवं हत्वा ततस्तस्मात्पर्वतात् चक्रमाजहार शङ्खं च आजहार पञ्चजनास्थितो विश्वकर्मणा निर्मापय्य आनया-

१ समुद्रे स्थिति गो. पाठः। २ गता इति गो. पाठः। ३ कामरूपिणामिति गो रा. पाठः। ४ सहस्रश इति गो. पाठः।

तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् । आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २८ ॥
तत्रै सानुषु रैम्येषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २९ ॥
यैोजनानि चतुःषष्टिर्वराहो नाम पर्वतः । सुवर्णशृङ्गः सुमहानगाधे वरुणालये ॥ ३० ॥
तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् । तैस्मिन्वसति दुष्टात्मा नरको नाम दानवः ॥ ३१ ॥
तत्र सानुषु रैम्येषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३२ ॥
तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरदैर्शनम् । पर्वतः सर्वसौवर्णो धाराप्रस्रवणायुतः ॥ ३३ ॥
तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्वतः । अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३४ ॥
यस्मिन्हरिहयः श्रीमान्महेन्द्रः पाकशासनः । अभिषिक्तः सुरै राजा [६]मेघो नाम स पर्वतः ॥ ३५ ॥
तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् । षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६ ॥
तरुणादित्यवर्णानि भ्राजमानानि सैर्वशः । जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३७ ॥
तेषां मध्ये स्थितो राजा मेर्रुरुत्तमपर्वतः । आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८ ॥

मासेत्यर्थः । हत्वा चक्रमाजहारेत्यनेन चक्राहरणप्रतिबन्धकौ तौ गाताविति सूचितम् । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—चतुर्भाग इति । चतुर्भागे चतुर्थभागे समुद्रस्य लवणसमुद्रस्य ॥ २९ ॥

२८–३० ] ति० टी०—तत्र चक्रवत्पर्वते । पञ्चजनं तदाख्यम्, हयस्येव ग्रीवा यस्य तं च ॥ २८–३० ॥

रा० टी०—तत्रेति । तत्र चक्रवत्पर्वतीयेषु सानुषु गुहासु च वदेह्या सह रावणः भागतव्यः ॥ २९ ॥

रा० टी०—योजनानीति । अगाधे वरुणालये चतुःषष्टियोजनानि सुवर्णशृङ्गः वराहो नाम पर्वतोऽस्तीति शेषः ॥ ३० ॥

गो० टी०—तत्र पञ्चजनमिति । तत्र चक्रवत्पर्वते पुरुषोत्तमो विष्णुः 'श्रीपतिः पुरुषोत्तमः' इत्यमरः । चक्रश्चक्रं हयग्रीवाख्यं दानवं हत्वा चक्रं पञ्चजनाख्यं दानवं हत्वा तदस्थिभूत पाञ्चजन्याख्यं शङ्खं च जग्राह । कृष्णः पञ्चजनं हत्वा पाञ्चजन्यं जग्राहेत्युच्यते तद्विष्णववतारेऽप्यस्तीति ज्ञेयम् ॥ २६-२८ ॥

३१–३२ ] ति० टी०—तत्र वराहपर्वते । जातरूपं स्वर्णम् ॥ ३१ ॥ ३२ ॥

रा० टी०—तत्रेति । तत्र वराहपर्वते जातरूपमयं प्राग्ज्योतिषं नाम पुरमस्तीति शेषः । तस्मिन् परे नरको नाम दानवो वसति ॥ ३१ ॥

रा० टी०—तत्रेति । तत्र वराहपर्वतीयेषु सानुषु गुहासु च रावणो मार्गितव्यः ॥ ३२ ॥

गो० टी०—तत्र प्रागिति । तत्र वराहपर्वते ॥ २९ ॥ ३० ॥

३३ ] ति० टी०—काञ्चनान्तरदर्शनं काञ्चनगर्भा अन्तरा निर्दरा यस्मिंस्तस्य दर्शनं भविष्यतीति शेषः ॥ ३३ ॥

रा० टी०—तमिति । काञ्चनाः स्वर्णमयाः अन्तरा गर्भा दृश्यन्ते यत्र किंच काञ्चनान्तराणि विलक्षणवर्णानि दृश्यन्ते यत्र तं शैलेन्द्रं वराहमतिक्रम्य सर्वसौवर्णः धाराप्रस्रवणानां निर्झराणामयुतानि यस्मिन् स पर्वतोऽस्तीति शेषः ॥ ३३ ॥

गो० टी०—तमतिक्रम्येति । तमतिक्रम्य तस्मात्परत इत्यर्थः । काञ्चनान्तरनिर्दरः सौवर्णमयान्तरप्रदेशवत्कन्दरः । अन्तर्बहिश्च सौवर्णकन्दर इत्यर्थः ॥ ३१ ॥

३४ ] ति० टी०—तं प्राप्य स्थिता गजादयस्तेन शब्देन स्वध्वनिजप्रतिध्वनिशब्देन दर्पिताः सर्वतोऽभिगर्जन्ति ॥ ३४ ॥

रा० टी०—तमिति । तं सर्वसौवर्णं पर्वतं सर्वतः गजादयः सततमभिगर्जन्ति तेन स्वगर्जितेन दर्पिताः भवन्तीति शेषः ३४

गो० टी०—तं गजाश्चेति । तेन शब्देन स्वशब्देन दर्पिता गजादयस्तं पर्वतमभिगर्जन्ति ॥ ३२ ॥

३५–३७ ] ति० टी०—सः सौवर्ण इत्युक्तः ॥ ३५–३७ ॥

रा० टी०—यस्मिन्निति । यस्मिन् सौवर्णपर्वते हरिहयः हरितवर्णविशिष्टाश्वस्वामी पाकशासनः महेन्द्रो राजा सुरैरभिषिक्तः स पर्वतो मेघो नाम मेघनामा ॥ ३५ ॥

रा० टी०—तमिति । महेन्द्रपरिपालितं तं शैलेन्द्रमतिक्रम्य काञ्चनानि अत एव तरुणादित्यवर्णानि जातरूपमयैः वृक्षैः शोभितानि अत एव भ्राजमानानि दीप्तिमन्ति षष्टिं गिरिसहस्राणि गमिष्यथ । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

गो० टी०—यस्मिन्निति । हरिहयः श्यामवर्णाश्वयुक्तः । राजाभिषिक्तः राजत्वेनाभिषिक्तः ॥ ३३–३६ ॥

३८ ] ति० टी०—तेषां षष्टिसहस्रपर्वतानां मध्ये राजेव मेरुवत्काञ्चनः पर्वतोऽस्ति एनं सावर्णिमेरुरिति वदन्ति ॥ ३८ ॥

रा० टी०—तेषामिति । तेषां षष्टिसहस्रसंख्याककाञ्चनगिरीणां मध्ये पुरा पूर्वं प्रसन्नेन आदित्येन दत्तवरः उत्तमपर्वतः पर्वतोत्तमः राजा सर्वपर्वताधीशः मेरुस्तदभिधः शैलः स्थितः ॥ ३८ ॥

१ तस्येति गो. पाठ । २ चित्रेष्विति गो. पाठः । ३ योजनानां तत इति गो. पाठः । ४ यस्मिन्निति गो. पाठः । ५ निर्दर इति गो. पाठः । ६ मेघवान्नामेति गो. पाठः । ७ सर्वत इति गो. पाठः । ८ उत्तरेति गो. पाठः ।

तेनैवमुक्तः शैलेन्द्रः सर्व एव त्वदाश्रयाः । मत्प्रसादाद्भविष्यन्ति दिवा रात्रौ च काञ्चनाः॥ ३९ ॥
त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः । ते भविष्यन्ति भक्ताश्च प्रभया काञ्चनप्रभाः ॥ ४० ॥
विश्वेदेवाश्च वसवो मरुतश्च दिवौकसः । आगत्य पश्चिमां संध्यां मेरुमुत्तमपर्वतम् ॥ ४१ ॥
आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः । अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतम् ॥ ४२ ॥
योजनानां सहस्राणि दश तानि दिवाकरः । मुहूर्तार्धेन तं शीघ्रमभियाति शिलोच्चयम् ॥ ४३ ॥
शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसंनिभम् । प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥ ४४ ॥
शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः । निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५ ॥
अन्तरा मेरुमस्तं च तालो दशशिरा महान् । जातरूपमयः श्रीमान्भ्राजते चित्रवेदिकः ॥ ४६ ॥
तेषु सर्वेषु दुर्गेषु सरःसु च सरित्सु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७ ॥
यत्र तिष्ठति धर्मज्ञस्तपसा स्वेन भावितः । मेरुसावर्णिरित्येष ख्यातो वै ब्रह्मणा समः ॥ ४८ ॥
प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्यसंनिभः । प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९ ॥

३९ ] ति० टी०—कीदृशो वरस्तत्राह—तेनैवमिति । आदिश्येनैवमुक्त इत्येवंशब्दार्थः सर्व एवेति ॥ ३९ ॥

रा० टी०—वरप्रकारमाह—तेनेति । दिवा रात्रौ ये त्वदाश्रयाः भविष्यन्ति ते सर्वे काञ्चनाः सुवर्णमयाः भविष्यन्ति एवं तेन रविणा शैलेन्द्र उक्तः ॥ ३९ ॥

गो० टी०—वरमेवाह—तेनैवमिति । प्रभया रक्ता भविष्यन्तीत्यन्वयः ॥ ३७ ॥ ३८ ॥

४० ] ति० टी०—ते भक्ताः मयीति शेषः । काञ्चनप्रभाश्च भविष्यन्ति ॥ ४० ॥

रा० टी०—त्वयीति । ये देवादयस्त्वयि वत्स्यन्ति ते प्रभया काञ्चनप्रभाः सन्तः भक्ताः मयि प्रीतिमन्तो भविष्यन्ति ॥ ४० ॥

४१ ] ति० टी०—विश्वेदेवादयस्तमुत्तमपर्वतं मेरुं सावर्णिमेरुमागत्य तत्र स्थित्वा पश्चिमां संध्यां प्राप्यादित्यमुपतिष्ठन्तीत्यग्रिमेणान्वयः ॥ ४१ ॥

४२ ] ति० टी०—इतः पूर्वभागस्था अनुक्ता अपि द्वीपा विचेतव्या इत्यर्थतः सिद्धम् ॥ ४२ ॥

रा० टी०—विश्व इति । विश्वेदेवादयः पश्चिमां संध्यां पश्चिमसंध्यासंबन्धिकालमागत्य ज्ञात्वा उत्तमपर्वतं मेरुमागत्य प्राप्य आदित्यमुपतिष्ठन्ति पूजयन्ति तैरभिपूजितः सूर्योऽस्तं पर्वतं गच्छति अत एव सर्वभूतानामदृश्यो भवतीति शेषः । श्लोकद्वयमेकान्वयि ॥ ४१ ॥ ४२ ॥

गो० टी०—विश्वेदेवा इति । पश्चिमां सन्ध्याम् अत्यन्तसंयोगे द्वितीया । मेरुसदृशत्वान्मेरुम् । मेरुमागम्य आदित्यमुपतिष्ठन्ति पूजयन्ति । मन्त्रकरणाभावात्परस्मैपदम् । अस्तगिरिसमीपस्थसावर्णिमेरोरभिधानात्सर्वेऽपि समुद्रद्वीपादयोऽपि मार्गितव्यत्वेनोक्ताः ॥ ३९–४७ ॥

४३ ] ति० टी०—ततः परं दशयोजनसहस्रेऽस्ताचल इत्याह—योजनानामिति । तान्युक्तसंख्यायोजनानि अतीत्येति शेषः । मुहूर्तार्धमेका घटी तथा तं शिलोच्चयमस्तमभियाति ॥ ४३ ॥

रा० टी०—योजनानामिति । दिवाकरः शिलोच्चयं तमस्ताचलं तानि प्रसिद्धानि योजनानां दशसहस्राणि मुहूर्तार्धेन एकघटिकयोल्लङ्घ्येति शेषः, अभियाति मेरुतोऽभिगच्छति॥४३॥

४४–४५ ] ति० टी०—अथ वरुणपुरवर्णनम्—शृङ्ग इति ॥ ४४ ॥ ४५ ॥

रा० टी०—शृङ्ग इति । तस्य अस्ताचलस्य शृङ्गे महद्विशालं प्रासादगणसंबाधं प्रासादसमूहैर्निबिडं विश्वकर्मणा विहितं निर्मितं नानापक्षिसमाकुलैश्चित्रैस्तरुभिः शोभितं भवनं चिन्तनीयं पाशहस्तस्य वरुणस्य निकेतमस्तीति शेषः । श्लोकद्वयमेकान्वयि ॥ ४४ ॥ ४५ ॥

४६–४७ ] ति० टी०—दशशिरा दशस्कन्धः ॥४६॥४७॥

रा० टी०—अन्तरेति । मेरुमस्तं च अन्तरा मध्ये दशशिराः दशमहाशाखावान् जातरूपमयः चित्रवेदिकस्तालस्तरुर्भ्राजते ॥ ४६ ॥

रा० टी०—तेष्विति । तेषु प्रसिद्धेषु दुर्गेषु दुर्गमेषु सरःसु सरित्सु च रावणो मार्गितव्यः ॥ ४७ ॥

४८] ति० टी०—यत्र मेरौ ब्रह्मणा समो महामेरुवर्तिप्रजापतिसमः ॥ ४८ ॥

४९ ] ति० टी०—मैथिलीं प्रति प्रवृत्तिं मैथिलीसंबन्धिप्रवृत्तिं प्रष्टव्य इत्यन्वयः ॥ ४९ ॥

रा० टी०—यत्रेति । यत्र मेरौ स्वेन तपसा भावितः प्रकाशितः मेरुसावर्णिरिति नाम्ना ख्यातः प्रसिद्धः ब्रह्मणा समः एष महर्षिः तिष्ठति तत्र मेरुसावर्णिर्महर्षिः मैथिलीं प्रति प्रवृत्तिं मैथिल्याः स्थितिं प्रष्टव्यः । श्लोकद्वयमेकान्वयि ॥ ४८ ॥ ४९ ॥

१ रक्ता इति गो. पाठः । २ आगम्येति गो. पाठः । ३ उत्तरेति गो. पाठः । ४ पदेति गो. पाठः ।

एतावज्जीवलोकस्य भास्करो रजनीक्षये । कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥ ५० ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ५१ ॥
अवगम्य[1] तु वैदेहीं निलयं रावणस्य च । अस्तं[2] पर्वतमासाद्य पूर्णे मासे निवर्तत ॥ ५२ ॥
ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम । सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ॥ ५३ ॥
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः । गुरुरेष महाबाहुः श्वशुरो मे महाबलः ॥ ५४ ॥
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्व एव[3] हि । प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशम् ॥ ५५ ॥
[ दृष्टायां[4] तु नरेन्द्रस्य पत्न्याममिततेजसः । ] कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥
अतोऽन्यदपि यत्कार्यं कार्यस्यास्य प्रियं[5] भवेत् । संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५६ ॥

ततः सुषेणप्रमुखाः प्लवङ्गमाः[6] सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपास्ते[7] जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

५०-५१ ] ति० टी०—एतावदुदयाचलमारभ्य मेरुसावर्णिपर्यन्तम् ॥ ५० ॥ ५१ ॥

रा० टी०—एतावदिति । रजनीक्षये रात्रिनिवृत्त्यर्थं जीवलोकस्य एतावत्सर्वं स्थानं वितिमिरं कृत्वा भास्करोऽस्तं पर्वतं गच्छति ॥ ५० ॥

रा० टी०—एतावदिति । हे वानरपुङ्गवाः! एतावदेव वानरैर्गन्तुं शक्यम् एतेनातः परं मया न गतमिति सूचितम् अत एव ततः परं न जानीमः ॥ ५१ ॥

गो० टी०—एतावदिति । भास्करः रजनीक्षये जीवलोकस्य एतावत् उदयास्तादिमध्यं वितिमिरं कृत्वा अस्तं गच्छतीति योजना ॥ ४८–५० ॥

५२–५३ ] ति० टी०—निवर्तत निवर्तध्वम् ॥५२॥५३॥

रा० टी०—अवगम्येति । अस्तं पर्वतमासाद्य प्राप्य वैदेहीमवगम्य ज्ञात्वा पूर्णे मासे निवर्तत मासपूर्त्यभ्यन्तरसमये इह प्राप्नुतेत्यर्थः ॥ ५२ ॥

रा० टी०—उर्ध्वमिति । मासादूर्ध्वं वसन् वानरः मम वध्यो भवेत् अतः ऊर्ध्वं न वस्तव्यम् युष्माभिः सहैव मे श्वशुरः सुषेणो गमिष्यति ॥ ५३ ॥

गो०टी०-सहैवेति । दिष्टकारिभिः आदिष्टकारिभिः५१॥५२

५४ ] ति० टी०—दिष्टं संदिष्टम् ॥ ५४ ॥

रा०टी०—श्रोतव्यमिति । एष सुषेणः यतो गुरुर्महान् अतः दिष्टकारिभिः आज्ञावर्तिभिः भवद्भिः एतस्य सुषेणस्य सर्वं वचनं श्रोतव्यं श्रुत्वा कर्तव्यम् ॥ ५४ ॥

५५ ] ति० टी०—प्रमाणं कर्तव्याकर्तव्यनिश्चायकाः । अथाप्येनं सुषेणं विशिष्य प्रमाणं संस्थाप्य ॥ ५५ ॥

रा० टी०—भवन्त इति । सर्वकर्मसु निखिलक्रियासु भवन्तो यद्यपि प्रमाणं व्यवस्थापकास्तथाप्येनं सुषेणं प्रमाणं संस्थाप्य व्यवस्थापकत्वेन निश्चित्य पश्चिमां दिशं पश्यध्वम् । बहूनां स्वातन्त्र्येण कार्यव्यवस्थापकत्वे कार्यं न सिध्यतीति तात्पर्यम् ॥ ५५ ॥

गो० टी०—प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशमिति पाठः । प्रमाणं व्यवस्थापकं पश्यध्वं पश्यत आत्मनेपदमार्षम् ॥ ५३ ॥

५६-५७] ति० टी०—कृतस्य प्रतिकर्मणोपकारप्रत्युपकारेण अस्य कार्यस्येति । रावणवधान्तरामकार्यस्येत्यर्थः ॥५६॥५७॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः ॥४२॥

रा० टी०—कृतेति । कृतस्य रामकर्तृकोपकारस्य प्रतिकर्मणा प्रत्युपकारेणैव यतः कृतकृत्या भविष्यामः तस्मात् अतो मदुपदिष्टात् अन्यत् कार्यस्यान्वेषणस्य प्रियं सानुकूलं भवेत् तदपि देशकालार्थसंहितं देशकालार्थानुकूलं संप्रधार्य निश्चित्य भवद्भिः कार्यम् । सार्धश्लोक एकान्वयी ॥ ५६ ॥

रा० टी०—तत इति । ततः अवश्यं कर्तव्यत्वाद्धेतोः निपुणं न्याययुक्तं सुग्रीववाक्यं निशम्य श्रुत्वा सुषेणप्रमुखाः प्लवगाधिपाः प्लवङ्गमाः आमन्त्र्य परस्परं निश्चित्य वरुणाभिगुप्तां दिशं तां पश्चिमां जग्मुः ॥ ५७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

गो० टी०—अतोऽन्यदिति । अस्य कार्यस्य सीतान्वेष-

१ अथेति गो. पाठः । २ अस्तपर्वतमिति गो. पाठः । ३ कर्मस्विति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे । ५ हितमिति गो. पाठः । ६ प्लवङ्गा इति गो. पाठः । ७ अधिपमिति गो. पाठः ।

# त्रिचत्वारिंशः सर्गः ।

उत्तरस्यां दिशि सीतापरिमार्गणाय सुग्रीवः शतबलीप्रमुखकपिबलं प्रेषयति ।

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् । वीरं शतबलं नाम वानरं वानरेश्वरः ॥ १ ॥
उवाच राजा सर्वज्ञः सर्ववानरसत्तमः । वाक्यमात्महितं चैव रामस्य च हितं तदा ॥ २ ॥
वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् । वैवस्वतसुतैः सार्धं प्रविष्टः सर्वमन्त्रिभिः ॥ ३ ॥
दिशं ह्युदीचीं विक्रान्तहिमशैलावतंसिकाम् । सर्वतः परिमार्गध्वं रामपत्नीं यशस्विनीम् ॥ ४ ॥
अस्मिन्कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये । ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वरं ॥ ५ ॥
कृतं हि प्रियमस्माकं राघवेण महात्मना । तस्य चेत्प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६ ॥
अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् । तस्य स्यात्सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७ ॥
एतां बुद्धिं समास्थाय दृश्यते जानकी यथा । तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८ ॥
अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः । अस्मासु च गतः प्रीतिं रामः परपुरञ्जयः ॥ ९ ॥

णरूपस्य अन्यदपि यद्धितं भवेत् देशकालार्थसंहितं तत्संप्रधार्य भवद्भिः कार्यमित्यन्वयः ॥ ५४ ॥ ५९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

२ ] ति० टी०—सर्वज्ञो देशवृत्ताभिज्ञः ॥ २ ॥

रा० टी०—उत्तरादिक्प्रेषणमुपक्रमते—तत इति । सर्वज्ञः निखिलकार्यविज्ञाता अत एव सर्ववानरसत्तमः अत एव वानरेश्वरः निखिलवानरप्रवर्तकः राजा सुग्रीवः श्वशुरं पश्चिमां दिशं संदिश्य आत्महितं स्वहितकारकं रामस्य हितं प्रियं वाक्यं शतवलिं नाम वीरमुवाच । श्लोकद्वयमेकान्वयि ॥१॥२॥

गो० टी०—अथोत्तरदिशि शतवलिप्रेषणं त्रिचत्वारिंशे—ततः संदिश्येत्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०—वैवस्वतसुतैर्यमसुतैः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—वृत इति । त्वद्विधानां वनौकसां शतसहस्रेण वृतस्त्वं सुमन्त्रिभिः शोभनमन्त्रिविशिष्टैः सार्धं प्रतिष्ठस्व समानकार्यकारित्वेनैकीभव ॥ ३ ॥

गो० टी०—वृत इत्यादि । हिमशैलावतंसकां हिमशैलालङ्काराम् ॥ ३ ॥ ४ ॥

४ ] ति० टी०—विक्रान्तेति शतबलस्य संबुद्धिः । सर्वत इति सामान्यतो नियोगः ॥ ४ ॥

रा० टी०—तत्कार्यमेवाह—दिशामिति । हिमशैलावतंसिकां हिमपर्वतैः शोभिताम् उदीचीं दिशं विक्रान्ताः प्राप्ताः यूयं रामपत्नीं सर्वतः परिमार्गध्वम् ॥ ४ ॥

५ ] ति० टी०—विनिर्वृत्ते विशेषेणानुष्ठिते । कृतार्थाः कृतकृत्याः । अर्थविदां लब्धाभीष्टानाम् । संधिरार्षः ॥ ५ ॥

रा० टी०—अस्मिन्निति । हे अर्थविदांवराः ! दाशरथे प्रिये अस्मिन् सीतास्थितिनिश्चयरूपे कार्ये विनिर्वृत्ते सिद्धे सति अत एव दाशरथेः प्रिये कृते सति वयम् ऋणान्मुक्ताः अत एव कृतार्थाः कृतकृत्याः भविष्यामः । संधिस्तु न मुमेत्यत्र नेतियोगं विभज्य सपादसप्ताध्यायीस्थं प्रति त्रिपादी क्वचिदसिद्धा नेति ज्ञापनात् । किंच कृतोऽर्थो यैस्ते एवार्थविद इति कर्मधारयः तेषाम् ॥ ५ ॥

गो० टी०—अस्मिनिति । कृतार्थाश्चार्थविदश्च कृतार्थार्थविदः तेषां वराः ॥ ५–९ ॥

६ ] ति० टी०—अस्ति क्रियेत ॥ ६ ॥

रा० टी०—कृतमिति । राघवेण महात्मना यदस्माकं प्रियं कृतं तस्य प्रतिकारः प्रत्युपकृतिश्चेद्यद्यस्ति तर्हि मे जीवितं सफलं भवेत् ॥ ६ ॥

७–९ ] ति० टी०—अर्थिनः स्वस्मात्प्रयोजनार्थिनः । कार्यनिर्वृत्तिं तत्प्रयोजनानुष्ठानम् । अकर्तुः पूर्वमुपकाराकर्तुरपि यश्चरेत्कुर्यात् ॥ ७–९ ॥

रा० टी०—सफलत्वे निश्चयमाह—अर्थिन इति । अकर्तुः उपकारकर्तृत्वाभाववतोऽप्यर्थिनः कार्यनिर्वृत्तिं यश्चरेत् कुर्यात् तस्य जन्म सफलं स्यात् । पूर्वकारिणः कृतोपकारस्य कार्यनिर्वृत्तिं यश्चरेत् तस्य चेत्किं वक्तव्यम् ॥ ७ ॥

रा० टी०—एतामिति । एतामुक्तविषयकां बुद्धिं निश्चयं समास्थाय कृत्वा जानकी यथा दृश्यते तथा भवद्भिः कर्तव्यम् ॥ ८ ॥

१ बलिमिति गो. पाठः । २ ऋषभ इति गो. पाठः । ३ धर्मज्ञ इति गो. पाठः । ४ सत्तममिति गो. पाठः । ५ तथेति गो. पाठः । ६ प्रतिष्ठस्वेति गो. पाठः । ७ विक्रान्तामिति गो. विक्रान्ता इति रा. पाठः । ८ अवतंसकामिति गो. पाठः । ९ अनिन्दितामिति गो. पाठः । १० वरा इति गो. रा. पाठः । ११ अवस्थायेति गो. पाठः । १२ आगतप्रीतिरिति गो. पाठः ।

इमानि [1]बहुदुर्गाणि नद्यः शैलान्तराणि च । भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १० ॥
तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च । प्रस्थलान्भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११ ॥
[2]काम्बोजयवनांश्चैव [3]शकानां पत्तनानि च । [ [4]बाह्लीकानृषिकांश्चैव पौरवानथ टङ्कणान् ॥
चीनान्परमचीनांश्च नीहारांश्च पुनः पुनः ] अन्वीक्ष्य [5]वरदांश्चैव हिमवन्तं [6]विचिन्वथ ॥ १२ ॥
लोध्रपद्मक[7]खण्डेषु देवदारुवनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १३ ॥
ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् । कालं नाम महासानुं पर्वतं [8]तं गमिष्यथ ॥ १४ ॥
महत्सु तस्य [9]शैलेषु पर्वतेषु गुहासु च । [10]विचिन्वत महाभागां [11]रामपत्नीमनिन्दिताम् ॥ १५ ॥
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् । ततः सुदर्शनं नाम पर्वतं गन्तुमर्हथ ॥ १६ ॥
ततो [12]देवसखा नाम पर्वतः पतगालयः । नानापक्षि[13]समाकीर्णो विविधद्रुमभूषितः ॥ १७ ॥
तस्य [14]काञ्चनखण्डेषु [15]निर्दरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १८ ॥
तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् । अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ १९ ॥

रा० टी०—अयमिति । सर्वभूतानां मान्यः नरसत्तमोऽयं रामः अस्मासु प्रीतिं गतः, एतेन स्वस्य भाग्यातिशयः सूचितः ॥ ९ ॥

१० ] ति० टी०—इमानि वक्ष्यमाणानि ॥ १० ॥

रा० टी०—इमानीति । बुद्धिविक्रमसंपदा बुद्धिविक्रमरूपसंपत्त्या नवदुर्गादीनि भवन्तः परिमार्गन्तु ॥ १० ॥

गो० टी०—इमानीत्यादि । इमानि वक्ष्यमाणानि । नद्यः नदीः ॥ १० ॥

११-१२ ] ति० टी०—प्रस्थला भरताश्च देशविशेषाः । कुरून् दक्षिणकुरून् ॥ ११ ॥ १२ ॥

रा० टी०—तत्रेति । तत्र वनदुर्गादिषु अन्वीक्ष्य म्लेच्छादीन् देशविशेषान् हिमवन्तं च विचिन्वथ । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—तत्रेति । भरतान् इन्द्रप्रस्थादिप्रदेशान् कुरून् दक्षिणकुरून् हिमवदन्तान् पुनः पुनरन्विष्य परिमार्गन्त्विति पूर्वेण संबन्धः ॥ ११—१३ ॥

१३ ] ति० टी०—लोध्रपद्मकखण्डेषु हैमवतेष्विति शेषः १३

रा० टी०—लोध्रेति । लोध्रादिषण्डादिषु वैदेह्या सह रावणो मार्गितव्यः ॥ १३ ॥

गो० टी०—लोध्रेति । पद्मकाश्चन्दनविशेषाः साहचर्यात् ॥ १४-१६ ॥

१४ ] ति० टी०—तं कालाख्यं पर्वतम् ॥ १४ ॥

रा० टी०—तत इति । ततः लोध्रषण्डादेः देवगन्धर्वसेवितं सोमाश्रमं गत्वा महासानुं कालं नाम पर्वतं गमिष्यथ ॥ १४ ॥

१५ ] ति० टी०—तस्य शैलेषु गण्डपर्वतेषु पर्वतेषु ततो महत्सु तेषु ॥ १५ ॥

रा० टी०—महत्स्विति । तस्य कालाभिधगिरेः महत्सु शैलेषु अवयवेषु पर्वतेषु ततोऽवरावयवेषु गुहासु विचिन्वत 'तस्य शैलस्य कन्दरेषु गुहासु च' इति भूषणाङ्कितपुस्तकपाठः ॥ १५ ॥

१६ ] ति० टी०—तं कालपर्वतम् ॥ १६ ॥

रा० टी०—तमिति । शैलेन्द्रं तं कालपर्वतमभिक्रम्य हेमगर्भं महागिरिं सुदर्शनं नाम पर्वतं गन्तुमर्हथ ॥ १६ ॥

गो० टी०—तमतिक्रम्येति । तं कालं नाम महागिरिमतिक्रम्य ततः तस्मात् सुदर्शनं पर्वतं गन्तुमर्हथ ॥ १७ ॥

१७-१८ ] ति० टी०—ततः सुदर्शनात्परतः । पतगाः पक्षिणः ॥ १७ ॥ १८ ॥

रा० टी०—तत इति । ततोऽनन्तरं विविधद्रुमभूषितः देवसखो नाम पर्वतोऽस्तीति शेषः ॥ १७ ॥

रा० टी०—तस्येति । तस्य देवसखस्य काञ्चनखण्डादिषु मार्गितव्यः ॥ १८ ॥

गो० टी०—तत इति । पतगालयः पक्षिणामावासभूतः । पक्षिणां वैविध्यमाह—नानापक्षिसमाकीर्ण इति ॥ १८॥१९॥

१९ ] ति० टी०—तं देवसखपर्वतमतिक्रम्याकाशं शून्यदेशम् । शून्यत्वोपपादकम्—पर्वतेत्यादि ॥ १९ ॥

रा० टी०—तमिति । तं देवसखमतिक्रम्य अपर्वतनदीवृक्षं पर्वतनदीवृक्षरहितमत एव सर्वसत्त्वविवर्जितं सर्वतः शतयोजनम् आकाशं शून्यमस्तीति शेषः ॥ १९ ॥

गो० टी०—तमिति । तमतिक्रम्य तस्माद्देवसखाख्यपर्वतात्परम् अपर्वतनदीवृक्षं शून्यारण्यस्थलं वर्तत इति शेषः॥२०॥

१ वनेति गो. पाठः । २ काम्बोजानिति गो. पाठः । ३ शकानारट्टकानपीति गो. पाठः । ४ श्लोकोऽयमधिकः गो. पाठे । ५ दरदानिति गो. पाठः । ६ तथैव चेति गो. पाठः । ७ षण्डेष्विति गो. रा. पाठः । ८ स्विति गो. पाठः । ९ शैलस्य निर्दरेष्विति गो. पाठः । १० विचिनुध्वमिति गो. पाठः । ११ पत्नीं ततस्तत इति गो. पाठः । १२ देवसख इति गो. रा. पाठः । १३ गणेति गो. पाठः । १४ काननषण्डेष्विति गो. पाठः । १५ निर्झरेष्विति गो. पाठः ।

तं[1]तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् । कैलासं पाण्डुरं प्राप्य[2] हृष्टा यूयं भविष्यथ ॥ २० ॥
तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् । कुबेरभवनं रम्यं[3] निर्मितं विश्वकर्मणा ॥ २१ ॥
विशाला नलिनी यत्र प्रभूतकमलोत्पला । हंसकारण्डवाकीर्णा अप्सरो[4]गणसेविता ॥ २२ ॥
तत्र वैश्रवणो राजा सर्व[5]लोकनमस्कृतः । धनदो रमते श्रीमान्गुह्यकैः सह यक्षराट् ॥ २३ ॥
तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २४ ॥
क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् । अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ॥ २५ ॥
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः । देवै[6]रभ्यर्थिताः सम्यग्देवरूपा महर्षयः ॥ २६ ॥
क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च । दर्दरा[7]श्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २७ ॥
[[8]क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः]
अवृक्षं कामशैलं च मानसं विहगालयम् । न गतिस्तत्र भूतानां देवानां[9] न च रक्षसाम् ॥ २८ ॥

२०-२१ ] ति० टी०-कान्तारमपर्वतवनत्वादिना । रोमहर्षणं भयंकरत्वात् ॥ २० ॥ २१ ॥

रा० टी०-तमिति । कान्तारं भयङ्करम् अत एव रोमहर्षणं तमाकाशमतिक्रम्य पाण्डुरं कैलासं प्राप्य यूयं हृष्टा भविष्यथ ॥ २० ॥

गो० टी०-तं त्विति । कैलासमिति । यद्यपि कैलासो हिमवदेकदेश इति पुराणान्तरोक्तं तथापि तदविरुद्धं ज्ञेयम् । मध्ये शून्यप्रदेशेऽपि तावत्पर्यन्तं हिमवानिति ॥ २१ ॥

रा० टी०-तत्रेति । तत्र कैलासे पाण्डुरमेघाभं पाण्डुरमेघसदृशं जाम्बूनदपरिष्कृतं सुवर्णेनालंकृतं विश्वकर्मणा निर्मितं रम्यं कुबेरभवनमस्तीति शेषः ॥ २१ ॥

गो० टी०-तत्रेत्यादि । तत्र कैलासे नलिनी मानसाख्यसरसी ॥ २२ ॥ २३ ॥

२२-२३ ] ति० टी-नलिनी सरसी ॥ २२ ॥ २३ ॥

रा० टी०-विशालेति । यत्र भवने प्रभूतकमलोत्पला बहुकमलोत्पलविशिष्टा अत एव हंसकारण्डवाकीर्णा विशाला नलिनी सरसी अस्ति तत्र यक्षराट् यक्षप्रकाशकः धनदो धनदाता वैश्रवणः कुबेरो राजा गुह्यकैः सह रमते । श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०-तत्रेति । तत्र कैलासे ॥ २४ ॥

२४] ति० टी०-तस्य कैलासस्य । पर्वतेषु गण्डपर्वतेषु २४

रा० टी०-तस्येति । तस्य कैलासस्य चन्द्रनिकाशेषु चन्द्रवत्प्रकाशमानेषु पर्वतेषु गुहासु च मार्गितव्यः ॥ २४ ॥

गो० टी०-तस्येति । तस्य कैलासस्य पर्वतेषु पर्यन्तपर्वतेषु ॥ २५ ॥

२५ ] ति० टी०-तस्य क्रौञ्चस्य । बिलं स्कन्दशक्तिकृतं विवरम् ॥ २५ ॥

रा० टी०-क्रौञ्चमिति । सुदुर्गमं क्रौञ्चगिरिमासाद्य प्राप्य तस्य यद्दुष्प्रवेशं स्मृतं तत् बिलमप्रमत्तैः भवद्भिः प्रवेष्टव्यम् ॥ २५ ॥

गो०टी०-क्रौञ्चं त्विति । बिलं स्कन्दशक्तिकृतम् २६-२८

२६-२७ ] ति० टी०-तत्र क्रौञ्चगुहायाम् ॥ २६ ॥ २७॥

रा० टी०-वसन्तीति । देवैः अभ्यर्थिताः महर्षयस्तत्र बिले वसन्ति ॥ २६ ॥

रा० टी०-क्रौञ्चस्येति । क्रौञ्चस्य अन्याः उक्तबिलात् भिन्नाः गुहाः सान्वादयश्च विचेतव्याः ॥ २७ ॥

गो० टी०-क्रौञ्चस्येत्यादि । शिखरं च प्रधानभूतं शिखरं च । अवृक्षम् अवृक्षाख्यं प्रत्यन्तपर्वतं विहगालयं मानसं मानसाख्यं गिरिं च निरीक्ष्य ते विचेतव्या इति पूर्वेण संबन्धः ॥ २९ ॥

२८ ] ति० टी०-कामशैलं कामतपःस्थानशैलम् तद्विशेषणमवृक्षम् । मानसं तदाख्यम् तत्र मानसपर्वते ॥ २८ ॥

रा० टी०-अवृक्षमिति । अवृक्षं वृक्षरहितं कामशैलं दर्शनमात्रेण कामनापूरकक्रौञ्चशैलशिखरं विहगालयं विहगानां पक्षिगतीनामासमन्तात् भावेन लयोऽभावो यस्मिन् तत् मानसं च शिखरमस्तीति शेषः, तत्र मानसे भूतादीनां गतिर्न शून्यत्वेन प्रयोजनाभावाद्भूतादयस्तत्र न गच्छन्तीत्यर्थः । स इति । ससानुप्रस्थः सानुप्रस्थसहितः भूधरः क्रौञ्चावयवकामशैलमानस इत्यर्थः, सर्वैर्भवद्भिः विचेतव्यः सानुप्रस्थयोर्बृहत्त्वाल्पत्वाभ्यां भेदात् न पौनरुक्त्यम् । सार्धश्लोक एकान्वयी २८॥२९

गो० टी०-न गतिरिति । तत्र. मानसाख्ये पर्वते । ससानुप्रस्थभूधरः सानवः उपत्यकाः, प्रस्था मध्यतटाः, भूधरा अधित्यकाः ॥ ३० ॥

१ तमिति गो. रा. पाठः । २ शैलं प्राप्य हृष्टा इति गो. पाठः । ३ दिव्यमिति गो. पाठः । ४ ह्यप्सर इति गो. पाठः । ५ भूतेति गो. पाठः । ६ अपीति गो. पाठः । ७ निर्दरा इति गो. दर्दुरा इति रा. पाठः । ८ अर्धमेतदधिकं गो. पाठे । ९ देवदानवेति गो. न देवानां नेति रा. पाठः ।

स च सर्वैर्विचेतव्यः ससानुप्रस्थभूधरः । क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ॥ २९ ॥
मयस्य भवनं तत्र[1] दानवस्य [2] स्वयंकृतम् । मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः ॥ ३० ॥
स्त्रीणामश्वमुखीनां तु निकेतस्तत्र तत्र तु । तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ॥ ३१ ॥
सिद्धा वैखानसा तत्र वालखिल्याश्च तापसाः । [3]वन्दितव्यास्ततः सिद्धास्तपसा वीतकल्मषाः ॥ ३२ ॥
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः । [4]हिमपुष्करसंछन्नं तत्र वैखानसं सरः ॥ ३३ ॥
तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः । औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः ॥ ३४ ॥
गजः पर्येति तं देशं सदा सह करेणुभिः । तत्सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ॥
अनक्षत्रगणं व्योम निष्पयोदमनादितम् ॥ ३५ ॥
गभस्तिभिरिवार्कस्य स तु देशः [6]प्रकाश्यते । विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३६ ॥

२९-३२ ] ति० टी०—स चेति क्रौञ्चपर्वत इत्यर्थः । सानवि प्रस्थाः, भूधराः पर्यन्तपर्वताः, तैः सहितः मैनाक इति मैनाकोऽयं समुद्रमग्नादन्यः ॥ २९-३२ ॥

रा० टी०—क्रौञ्चमिति । क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम यः पर्वतः तत्र पर्वते मयस्य दानवस्य स्वयंकृतं भवनमस्तीति शेषः, ससानुप्रस्थकन्दरः मैनाकोऽपि विचेतव्यः । सार्धश्लोक एकान्वयी । तुरप्यर्थकः ॥ ३० ॥

गो० टी०—क्रौञ्चमिति । क्रौञ्चं गिरिमतिक्रम्य क्रौञ्चगिरेः परतः मैनाको नाम पर्वतः वर्तत इति शेषः ॥ ३१ ॥

रा० टी०—स्त्रीणामिति । तत्र तत्र मैनाकस्य प्रदेशे प्रदेशे अश्वमुखीनां स्त्रीणां निकेतो निलयमस्तीति शेषः, तं देशं समतिक्रम्य यत्र वैखानसाः वालखिल्याः सन्तीति शेषः, तं सिद्धसेवितमाश्रमम् अवलोकयध्वामिति शेषः । सार्धश्लोकः संमिलितान्वयी ॥ ३१ ॥

गो० टी०—मैनाकस्त्विति । अश्वमुखीनां किंपुरुषस्त्रीणाम् ॥ ३२ ॥

गो० टी०—तं देशमिति । आश्रमं सिद्धसेवितम् अस्तीति शेषः ॥ ३३ ॥

रा० टी०—वन्दितव्य इति । ततस्तत्र वीतकल्मषाः निवृत्तपापाः सिद्धाः विनयान्वितैः भवद्भिर्वन्दितव्याः सीतायाः प्रवृत्तिर्वृत्तान्तश्च प्रष्टव्या ॥ ३२ ॥

गो० टी०—वन्द्या इति । तपःसिद्धाः अणिमाद्यष्टैश्वर्यसिद्धियुक्ताः ॥ ३४ ॥ ३५ ॥

३३ ] ति० टी०—वैखानसं वैखानसानामिदम् ॥ ३३ ॥

रा० टी०—हेमेति । तरुणादित्यसंकाशैः हंसैः विचरितं हेमपुष्करसंच्छन्नं सुवर्णाकृतिकमलैर्निबिडं वैखानसं सरस्तत्राश्रमेऽस्तीति शेषः ॥ ३३ ॥

३४ ] ति० टी०—विचरितं सेवितम् । औपवाह्यो वाहनम् ॥ ३४ ॥

रा० टी०—औपवाह्य इति । सार्वभौम इति स्मृतः ख्यातः कुबेरस्यौपवाह्यो वाहनं गजस्तं देशं करेणुभिः सह सदा पर्येति विचरति ॥ ३४ ॥

गो० टी०—औपवाह्य इति । औपवाह्यः राजार्हं वाहनम् 'राजवाहस्त्वौपवाह्यः' इत्यमरः ॥ ३६ ॥

३५ ] ति० टी०—तत्सरोऽतिक्रम्य वर्तमानं व्योम । कियानवकाशश्चन्द्रादिसर्वज्योतिर्गणप्रकाशरहितः ॥ ३५ ॥

रा० टी०—तदिति । तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरं चन्द्रदिवाकराभ्यां रहितमनक्षत्रगणं नक्षत्रगणरहितं निष्पयोदं पयोदरहितम् अनादिमत् आदिरहितं नित्यमित्यर्थः, व्योमाकाशमस्तीति शेषः ॥ ३५ ॥

गो० टी०—अथ महामेरुपर्यन्तेलावृतप्रदेशानुपदिशति—तत्सर इति । उत्तरत्र हिमवन्तं च मेरुं च समुद्रं च तथोत्तरमिति वक्ष्यमाणत्वादत्र मेरुकीर्तनप्रसक्तिरेव नास्तीति न भ्रमितव्यं व्योम वर्तत इति शेषः । व्योम्नो नष्टचन्द्रदिवाकरादित्वं नियतमार्गवर्तिनां चन्द्रमःप्रभृतीनां मेरुनिकटे किरणसंचाराभावात् । तदुक्तं विष्णुपुराणे—'यावत्पुरस्तात्तपति तावत्पृष्ठे च पार्श्वयोः । ऋते हेमगिरेर्मेरोरुपरि ब्रह्मणः सभाम् ॥' इति ॥ ३७ ॥

३६ ] ति० टी०—नापि सान्धकार इत्याह—गभस्तिभिरिवेति । चन्द्रादिज्योतींष्यभिभूयार्कगभस्तिसदृशैः स्वीयैर्गभस्तिभिः प्रकाश्यते । के ते यैः स्वगभस्तिभिः प्रकाश्यते तत्राह—विश्राम्यद्भिरिति । सुखोपविष्टैः स्वतपःसिद्धैः, अत एव देवकल्पैः सूर्यादिदेवतुल्यैःस्वयंप्रभैश्च सूर्यादिवत्स देशः प्रकाश्यते । यत्तु तत्र चन्द्रादीनां संचाराभाव एवोक्तिः, तन्न अग्रे सुप्रसिद्धचन्द्रादिसंचारवदुत्तरकुरूणां तदूर्ध्वस्थप्रदेशाद्युपपत्तेः ॥ ३६ ॥

रा० टी०—गभस्तिभिरिति । सः चन्द्रादिरहितो देशः स्वयंप्रभैः तपस्सिद्धैः अर्कस्य गभस्तिभिरिव प्रकाश्यते ॥ ३६ ॥

गो० टी०—गभस्तिभिरिति । स देशः अर्कस्य गभ-

१ यत्रेति गो. पाठः । २ च निकेता इति गो. पाठः । ३ वन्द्यास्ते तु तपःसिद्धा इति गो. पाठः । ४ हेमेति गो. पाठः । ५ तस्मिन्निति गो. पाठः । ६ प्रकाशत इति गो. पाठः ।

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा । उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ ३७ ॥
ते नयन्ति परं तीरं सिद्धान्प्रत्यानयन्ति च । उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥
ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः । ॥ ३८ ॥
नीलवैदूर्यपत्राढ्या नद्यस्तत्र सहस्रशः । रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयैः ॥ ३९ ॥
तरुणादित्यसंकाशा भान्ति तत्र जलाशयाः । महार्हमणिरत्नैश्च काञ्चनप्रभकेसरैः ॥ ४० ॥
नीलोत्पलवनैश्चित्रैः स देशः सर्वतो वृतः । निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ॥ ४१ ॥
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः । सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ॥ ४२ ॥
जातरूपमयैश्चापि हुताशनसमप्रभैः । नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ॥ ४३ ॥
दिव्यगन्धरसस्पर्शाः सर्वकामान्स्रवन्ति च । नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ४४ ॥

स्तिभिरिव स्थितैः स्वयंप्रभैः स्वतःसिद्धज्ञानैः तपःसिद्धैः प्रकाशते ॥ ३८ ॥

३७ ] ति० टी०–निम्नगा अस्तीति शेषः । अन्तःसुषिरो वेणुः कीचकः ॥ ३७ ॥

रा० टी०–तमिति । तं देशमतिक्रम्य शैलोदा नाम निम्नगा नद्यस्तीति शेषः, तस्याः उभयोस्तीरयोः कीचकाः सस्वना वेणवः सन्तीति शेषः, नाम प्रसिद्धमेतत् ॥ ३७ ॥

गो० टी०–तं त्विति । निम्नगा वर्तत इति शेषः ॥ ३९ ॥

गो० टी०–उभयोरिति । तस्याः शैलोदायाः उभयोस्तीरयोः कीचका नाम वेणवः सन्ति । ते उभयतीरजाः कीचकाः अन्योन्यसंग्रथिततया गमनसाधनभूताः सन्तः सिद्धान् परं तीरं नयन्ति प्रत्यानयन्ति च ॥ ४० ॥

३८ ] ति० टी०–परं तीरम् शैलोदाया इति शेषः । कृतपुण्यानां प्रतिश्रया निवासभूताः । पद्मिनीभिः सरसीभिः कृतोदकाः कृतोदककार्याः ॥ ३८ ॥

रा० टी०–ते इति । ते वेणवः सिद्धान् परं तीरं शैलोदाया इति शेषः, नयन्ति प्रत्यानयन्ति पूर्वतीरं प्रापयन्ति च । कृतपुण्यप्रतिश्रयाः कृतपुण्यैराश्रिताः उत्तराः कुरवस्तत्र शैलोदायास्तीरे सन्तीति शेषः ॥ ३८ ॥

गो० टी०–उत्तरा इति । उत्तराः कुरवः उत्तरकुरुसंज्ञिकाः देशाः वर्तन्त इति शेषः । कृतपुण्यानां प्रतिश्रया आश्रयभूताः आवासभूताः ॥ ४१ ॥

रा० टी०–तत इति । काञ्चनवत्पद्मानि यासु ताभिः पद्मिनीभिः सरसीभिः कृतोदकाः संमिश्रसलिलाः नीलवैदूर्यपत्राढ्याः सहस्रशो नद्यस्तत्र कुरुषु भान्तीत्यपकृष्यते ॥ ३९ ॥

गो० टी०–तत इत्यादि । ततः कृतपुण्यप्रतिश्रयत्वाद्धेतोः कृतपुण्यभोग्यभूमित्वात् उक्तविशेषा नद्यः सन्तीति भावः । पद्मिनीभिः पद्मलताभिः कृतोदकाः पर्याप्तोदकाः 'युगपर्याप्तयोः कृतम्' इत्यमरः ॥ ४२ ॥

३९ ] ति० टी०–तत आरभ्योत्तरकुरुदेशस्य भोगभूमित्वकथनम् । दिव्यनद्योऽपि तत्र सन्तीत्याह—नीलेत्यादि ॥३९॥

रा० टी०–रक्तेति । हिरण्मयैः रक्तोत्पलवनैर्मण्डिताः शोभिताः तरुणादित्यसंकाशा जलाशयास्तत्र भान्ति॥४०॥४१॥

गो० टी०–रक्तेति । रक्तेत्यविभक्तिकनिर्देशः रक्तैरुत्पलवनैर्हिरण्मयैरुत्पलवनैः. तरुणादित्यसदृशैरुत्पलवनैश्चेत्यर्थः । तत्रात्र तेष्वेतेषु कुरुष्वित्यन्वयः ॥ ४३ ॥

४० ] ति० टी०–जलाशयास्तटाकादयः ॥ ४० ॥

गो० टी०–महार्हेति । महार्हमणयो नीलरत्नानि तत्तुल्यपत्रैः ॥ ४४ ॥

४१ ] ति० टी०–निस्तुलाभिर्वर्तुलाभिः । 'निस्तुलं वृत्तम्' इत्यमरः ॥ ४१ ॥

रा० टी०–नीलेति । स देशः चित्रैर्नीलोत्पलवनैः सर्वतो वृतः । अर्धं पृथक् । निरिति । निस्तुलाभिः वर्तुलाभिः मुक्ताभिः महाधनैर्बहुमूल्यैर्जातरूपैश्च उद्धूतानि युक्तानि पुलिनानि यासां ताः सर्वरत्नमयैः अत एव चित्रैः नगोत्तमैः पर्वतश्रेष्ठैः जातरूपमयैः अत एव हुताशनसमप्रभैश्च नगोत्तमैः अवगाढाः व्याप्ताः निम्नगाः सन्तीति शेषः । श्लोकद्वयमेकान्वयि ॥ ४२ ॥

गो० टी०–निस्तुलाभिरिति । निस्तुलाभिः वर्तुलाभि- 'वर्तुलं निस्तुलं वृत्तम्' इत्यमरः । महाधनैः बहुमूल्यैः उद्धूतः पुलिनाः उन्नतपुलिनाः निम्नगा भान्तीति शेषः ॥ ४५ ॥

४२ ] ति० टी०–जातरूपैः स्वर्णैरुद्धूतपुलिना युक्तपुलिनाः । नगोत्तमैः पर्वतैरवगाढा व्याप्ताः ॥ ४२ ॥

गो० टी०–सर्वेति । नगोत्तमैः पर्वतश्रेष्ठैः अवगाढाः प्रविष्टा इति निम्नगाविशेषणम् ॥ ४६ ॥

४३-४४] ति० टी०–नगा वृक्षाः। पत्ररथैः पक्षिभिराकुला व्याप्ताः ॥ ४३ ॥ ४४ ॥

रा० टी०–नित्येति । नित्यं पुष्पाणि फलानि च येषु पत्ररथैः पक्षिभिराकुलाः व्याप्ताः दिव्या गन्धरसस्पर्शा येषां ते नगाः वृक्षाः सर्वकामान् स्रवन्ति ददति ॥ ४३ ॥

गो० टी०–नित्यपुष्पफला इति । पत्ररथाकुलाः पक्षिभिराकुलाः सर्वकामान् सर्वाभीष्टान् ॥ ४७ ॥

---

१ पत्राभिरिति गो. पाठः । २ सदृशैरिति गो. पाठः । ३ पत्रैरिति गो. पाठः । ४ उद्धृतेति गो. पाठः ।

मुक्तावैदूर्यचित्राणि भूषणानि तथैव च । स्त्रीणां यान्यनुरूपाणि पुरुषाणां तथैव च ॥ ४५ ॥
सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः । महार्हमणिचित्राणि फलन्त्यन्ये नगोत्तमाः ॥ ४६ ॥
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च । मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः ४७ ॥
पानानि च महार्हाणि भक्ष्याणि विविधानि च । स्त्रियश्च गुणसंपन्ना रूपयौवनलक्षिताः ॥ ४८ ॥
गन्धर्वाः किंनराः सिद्धा नागा विद्याधरास्तथा । रमन्ते सततं तत्र नारीभिर्भास्वरप्रभाः ॥ ४९ ॥
सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः । सर्वे कामार्थसहिता वसन्ति सह योषितः ॥ ५० ॥
गीतवादित्रनिर्घोषः सोत्कृष्टहसितस्वरैः । श्रूयते सततं तत्र सर्वभूतमनोरमः ॥ ५१ ॥
तत्र नामुदितः कश्चिन्नात्र कश्चिदसत्प्रियः । अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥ ५२ ॥
तमतिक्रम्य शैलेन्द्रमुत्तरः पयसां निधिः । तत्र सोमगिरिर्नाम मध्ये हेममयो महान् ॥ ५३ ॥
[ इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये । देवास्तं समवेक्षन्ते गिरिराजं दिवं गताः ॥ ]
स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते । सूर्यलक्ष्याभिविज्ञेयस्तपतेव विवस्वता ॥ ५४ ॥

रा० टी०–नानेति । अन्ये नगोत्तमाः स्त्रीणां पुरुषाणां च यान्यनुरूपाणि योग्यानि तानि नानाकाराणि अनेकविधाकारविशिष्टानि वासांसि मुक्तावैदूर्यैः चित्राणि भूषणानि च फलन्ति । सार्धश्लोक एकान्वयी ॥ ४४ ॥ ४५ ॥

गो० टी०–नानाकाराणीति ॥ ४८ ॥

४५–५१ ] ति० टी०–इत उत्तरं केचिच्छ्लोकाः 'रमन्ते सततं तत्र नारीभिर्भास्वरप्रभाः' इत्यन्ताः प्रक्षिप्ताः, प्राचीनपुस्तकेष्वनुपलम्भादिति कतकः ॥ ४५—५१ ॥

रा० टी०–सर्वेति । अन्ये नगोत्तमाः सर्वर्तुसुखसेव्यानि सर्वर्तुषु सुखेन सेव्यानि फलानि फलन्ति । अन्ये नगोत्तमाः महार्हमणिवत् चित्राणि फलानि फलन्ति ॥ ४६ ॥

रा० टी०–शयनानीति । चित्रास्तरणवन्ति विचित्रास्तरणविशिष्टानि शयनानि शय्याः मनःकान्तानि मनोहराणि माल्यानि मालाश्च महार्हाणि बहुमूल्यानि पानानि च विविधानि भक्ष्याणि च रूपयौवनलक्षिताः रूपयौवनैः प्रकाशिताः गुणसंपन्नाः स्त्रियश्च अपरे द्रुमाः फलन्ति । श्लोकद्वयमेकान्वयि ॥ ४७ ॥ ४८ ॥

रा० टी०–गन्धर्वा इति । भास्वरप्रभाः गन्धर्वादयः नारीभिस्तत्र रमन्ते ॥ ४९ ॥

गो० टी०–मुक्तेति । सर्वर्तुसुखसेव्यानि हेमन्ताद्यृतुष्वपि सुखेन सेवितुं योग्यानि ॥ ४९–६२ ॥

रा० टी०–सर्व इति । ये सर्वे सुकृतकर्माणस्तत्र वसन्ति ते सर्वे सहयोषितः योषित्सहिताः कामार्थसहिताः इच्छाविषयीभूतार्थैर्वर्धमानाः सन्तः रतिपरायणा भवन्तीति शेषः॥५०॥

गो० टी०–सर्व इति । सहयोषितः योषित्सहिताः ॥६३॥

रा० टी०–गीतेति । सोत्कृष्टहसितस्वनः उत्कृष्टहसितस्वनसहितः सर्वभूतमनोरमः गीतवादित्रनिर्घोषः सततं श्रूयते॥५१॥

गो० टी०–गीतेति । सोत्कृष्टहसितस्वनः उत्कृष्टहासशब्दसहितः ॥ ६४ ॥

५२] ति० टी०–असदविद्यमानं प्रियं यस्य तादृशः ॥५२॥

रा० टी०–तत्रेति । अमुदितः प्रमोदरहितः तत्र कश्चिन्न, असत्प्रियः असत्कर्मविषयकप्रीतिविशिष्टः अत्र उत्तरकुरुषु कश्चित् न । अहन्यहनि प्रतिदिनं मनोरमाः गुणास्तत्र वर्धन्ते ॥ ५२ ॥

गो० टी०–तत्रेति । असत्प्रियः अविद्यमानाङ्गनः । गुणाः सुखादयः ॥ ६९ ॥

५३ ] ति० टी०–अत्र सुमेर्वन्वेषणं नोक्तम्, तत्र रक्षसां वासासंभवादित्याहुः । मध्ये उत्तरसमुद्रमध्ये ॥ ५३ ॥

रा० टी०–तमिति । तं देशमतिक्रम्य उत्तरः परदिग्वर्ती पयसां निधिः क्षीराब्धिरस्तीति शेषः, तत्र क्षीराब्धौ हेममयो महान् सोमगिरिरस्ति ॥ ५३ ॥

रा० टी०–इन्द्रेति । इन्द्रादिलोकगताः ये देवास्ते दिवं गतं गिरिराजं समवेक्षन्ते ॥ ५४ ॥

गो० टी०–समतिक्रम्येति । पयसां निधिः लवणसमुद्रः अस्तीति शेषः ॥ ६६ ॥

गो० टी०–तत्रेति । तत्र लवणसमुद्रे मध्ये मध्ये देशे ये दिवं गता इत्यनुषज्यते ॥ ६७ ॥

५४ ] ति० टी०–स तु देशो विसूर्योऽपि सूर्यसंचाररहितोऽपि तस्य भासा सोमगिरिप्रभया तपता विवस्वता युक्तदेश इव सूर्यलक्ष्म्या सूर्योपेतदेशश्रिया युक्तः प्रकाशते ॥ ५४ ॥

रा० टी०–स इति । तपता विवस्वता सूर्येणेव तस्य सोमगिरेः भासा प्रकाशेन विसूर्यः सूर्यचन्द्रादिरहितोऽपि

१ चापीति गो. पाठः । २ महार्हाणि चेति गो. पाठः । ३ हैमानीति गो. पाठः । ४ नागविद्येति रा. पाठः । ५ स्वन इति गो. रा. पाठः । ६ हर इति गो. पाठः । ७ श्लोकोऽयमधिकः गो. रा. पाठे । ८ गतमिति रा. पाठः ।

भगवांस्तत्र विश्वात्मा शंभुरेकादशात्मकः । ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥ ५५ ॥
न कथंचन गन्तव्यं कुरूणामुत्तरेण वः । अन्येषामपि भूतानां नानुक्रामति वै गतिः ॥ ५६ ॥
स हि सोमगिरिर्नाम देवानामपि दुर्गमः । तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ ॥ ५७ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ५८ ॥
सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् । यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥ ५९ ॥
ततः कृतं दाशरथेर्महत्प्रियं महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥ ॥ ६० ॥

स देशः सूर्यलक्ष्म्याभिविज्ञेयो देश इव प्रकाशते । इव उभयान्वयी ॥ ६९ ॥

गो० टी०–स त्विति । स देशः विसूर्यः ऽपि रात्रौ विगतसूर्योऽपि तस्य सोमगिरेर्भासा प्रकाशते । कथमिव सूर्यलक्ष्म्या अभिविज्ञेयः ज्ञातव्यपदार्थको देशः तपता विवस्वतेव ॥ ५८ ॥

५५ ] ति० टी०–विश्वमतति व्याप्नोतीति विश्वात्मा व्यापकस्तेन विष्णुरूपः । 'विष्लृ व्याप्तौ' इत्यनुसारात् । स एव शंभुः शं भवत्यस्मात्स एवैकादशात्मक एकादशानुवाकार्थैकादशरुद्रात्मकः । एवं ब्रह्मा बृंहणत्वाज्जगत्स्रष्टृत्वात् । एवं रूपत्रयात्मा भगवांस्तत्र सोमगिरौ कार्यब्रह्मलोकत्वाद्वसतीत्यर्थः ॥ ६९ ॥

रा० टी०–भगवानिति । ब्रह्मर्षिपरिवारितस्तत्र सोमगिरौ विश्वात्मा सकलजगन्नियन्ता एकादशात्मकः भगवान् शम्भुः देवेशः ब्रह्मा च वसति ॥ ६६ ॥

गो० टी०–भगवानिति । विश्वात्मा विश्वशरीरकः भगवान् षाड्गुण्यपरिपूर्णो वासुदेवः 'एवमेव महान् शब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥' इत्युक्तेः नचेदमपि शम्भुविशेषणम् एकादशात्मकत्वविरोधात् । न हि विश्वात्मकत्वमेकादशकत्वं चैकत्र संभवति । एकादशात्मकः एकादशमूर्तिः शम्भुः रुद्रः देवेशो ब्रह्मा ब्रह्मर्षिपरिवारितः तत्र वसति । इयं च क्रिया सर्वत्रापि संबध्यते । यत्र कश्चित् प्रकरणाभावात् विष्णुरत्र नोच्यत इति कथयेत् तर्हि रुद्रोऽपि नोच्यते । कथमिति चेत् शं भावयतीति शम्भुरिति व्युत्पत्त्या 'शम्भू ब्रह्मत्रिलोचनौ' इति कोशकारवचनाच्च सर्वाण्यपि विशेषणानि ब्रह्मपराणि भवेयुरिति ॥ ६९ ॥

५६ ] ति० टी०–नानुक्रामति वै गतिः । तस्य कार्यब्रह्मलोकत्वेन ब्रह्मर्षिव्यतिरिक्तस्य तत्रागतेः । ब्रह्मर्षिपदेन दहरादिमार्गेण ब्रह्मोपासका ऋषय उच्यन्ते ॥ ५६ ॥

रा० टी०–नेति । कुरूणामुत्तरेण पथा वो युष्माकमन्येषामपि भूतानां गतिः न अनुक्रामति अस्ति, अतः वो युष्माभिः कथञ्चन न गन्तव्यम् । व इत्युभयान्वयि ॥ ६७ ॥

गो० टी०–न कथंचनेति । कुरूणामुत्तरेण 'एनपपीष्यते' इत्यनेनैनपायोगे षष्ठी । अन्येषामपि शक्तिविशेषविशिष्टदैत्यादीनामपि वः युष्माभिः न गन्तव्यम् ॥ ६० ॥ ६१ ॥

५७–५८ ] ति० टी०–तदाह—देवानामपि दुर्गम इति ॥ ५७ ॥ ५८ ॥

रा० टी०–स इति । स सोमगिरिः देवानामपि दुर्गमः अतस्तमालोक्य क्षिप्रमुपावर्तितुमर्हथ ॥ ६८ ॥

रा० टी०–एतावदिति । हे वानरपुङ्गवाः ! एतावदेव वानरैर्गन्तुं शक्यम्, अतस्ततः परं न जानीमः ॥ ६९ ॥

गो० टी०–एतावदिति । एतावत् उत्तरकुरुदेशपर्यन्तं ततः परम् उत्तरकुरुदेशात् परं समुद्रद्वीपादिकम् अभास्करममर्यादं च प्रदेशं न जानीमः । ततः परस्य देशस्य सर्वैर्गन्तुमशक्यत्वेन मयाऽपि अनवगतत्वादिति भावः ॥ ६२ ॥

५९ ] ति० टी०–तत्रापि मतिः क्रियतामिति अन्वेषणायेति भावः ॥ ५९ ॥

रा० टी०–सर्वमिति । यन्मया परिकीर्तितं तत्सर्वं विचेतव्यं यत् अन्यत् उक्तदेशसमीपस्थं नोक्तं तत्रापि मतिः अन्वेषणनिश्चयः क्रियताम् ॥ ६० ॥

गो० टी०–सर्वमेतदिति । यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः गम्यत्वेनोक्तप्रदेशानां यत्पार्श्वादिकमनुक्तं तत्रापि अन्वेषणे मतिः कर्तव्येत्यर्थः ॥ ६३ ॥

६० ] ति० टी०–प्रियमित्यस्य स्वस्येत्यादिः । विदेहजादर्शनजेन कर्मणा विदेहजादर्शनमुद्दिश्य जातेन कर्मणा । अन्वेषणकर्मणेति यावत् ॥ ६० ॥

रा० टी०–तत इति । हे अनिलानलोपमाः ! विदेहजादर्शनजेन सीतादर्शनजनकेन कर्मणा दाशरथेः महत्प्रियं यदि कृतं भवद्भिः संपादितं भविष्यति ततस्तस्मात् रामप्रियात् ममापि महत्तरं प्रियं प्रीतिर्भविष्यति ॥ ६१ ॥

गो० टी०–तत इति । ततः अन्वेषणानन्तरं विदेहजादर्शनजेन कर्मणा दाशरथेर्महत्प्रियं कृतं भविष्यति मम चापि ततः दाशरथिप्रियात् महत्तरं प्रियं कृतं भविष्यतीति योजना ॥ ६४ ॥

१ अपीति गो. पाठः । २ नातीति गो. पाठः । ३ तरमिति गो. रा. पाठः

ततः कृतार्थाः सहिताः सबान्धवा मयार्चिताः सर्वगुणैर्मनोरमैः ।
चरिष्यथोर्वीं प्रति शान्तशात्रवाः सहप्रिया भूतधराः प्लवङ्गमाः ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः ।

सुग्रीवेण पूर्वपराक्रमं प्रशस्य सीतान्वेषणस्य विशेषनिर्वहणे हनुमति समुद्दिष्टे तद्व्यापारेणान्वेषणस्य विशेषभर तस्मिन्मन्वानो रामः स्वनामाङ्कितमङ्गुलीयकमभिज्ञानत्वेन सीताप्रत्यायनार्थं हनुमते दिदेश । गृहीतनियोगो मारुतिः श्रीरामचरणावभिवन्द्य कपिवाहिन्या समं प्रतस्थे ।

विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् । स हि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥
अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् । सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥ २ ॥
न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये । नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ॥ ३ ॥
सासुराः सहगन्धर्वाः सनागनरदेवताः । विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४ ॥
गतिर्वेगश्च तेजश्च लाघवं च महाकपे । पितुस्ते सदृशं वीर मारुतस्य महौजसः ॥ ५ ॥

६१ ] ति० टी०–भूतधरा भूतैः प्राणिभिर्ध्रियन्ते ते भूतधराः । प्राणिभिरुपजीव्या इत्यर्थः ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०–तत इति । हे प्लवङ्गमाः ! ततः रामप्रियाचरणात् हेतोः सर्वगुणैः सर्वसद्गुणविशिष्टैः मनोरमैः पदार्थैः मयार्चिताः सत्कृताः अत एव शान्तशात्रवाः सहिता हितसहिताः सबान्धवाः बान्धवसहिताः सहप्रियाः स्त्रीसहिताः यूयं भूतधराः भूतैर्ध्रियन्ते यास्तद्वन्तः मत्तः प्राप्तजीविका इत्यर्थः, अत एव कृतार्थाः सन्तः उर्वीं प्रति चरिष्यथ ॥ ६२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०–तत इति । भूतधराः प्राणिभृतः प्राणिभिरुपजीव्या इति यावत् ॥ ६१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

१ ] ति० टी०–हनूमत्यर्थस्य सविशेषमुक्तौ हेतुः—स हीति । अर्थसाधने तद्विषये निश्चितार्थः तादृशार्थतद्विषयकनिश्चयवान् ॥ १ ॥

रा० टी०–हनूमन्तं प्रति सुग्रीवोक्तिं वर्णयितुमुपक्रमते–विशेषेणेति । हि यतः स सुग्रीवः अर्थसाधने अर्थानां साधके हरिश्रेष्ठे तस्मिन् हनुमति निश्चितो दृढीकृतः अर्थः सीतादर्शनसिद्धिर्येन सः अतः विशेषेण उक्तवान् हनुमन्तमित्यर्थः ॥ १ ॥

गो० टी०–अथ निश्चितकार्यसाधनसामर्थ्याय हनुमते अङ्गुलीयकदानं चतुश्चत्वारिंशे–विशेषेण त्वित्यादि । हनुमति विषये अर्थं वक्ष्यमाणार्थम् उक्तवान् । विशेषार्थकथने हेतुमाह–स हीति । अर्थसाधने विषये निश्चितार्थः ॥ १ ॥

२ ] ति० टी०–उक्तिप्रकारं दर्शयति––अब्रवीच्चेति । सर्ववनौकसाम् मध्य इति शेषः ॥ २ ॥

रा० टी०–विशेषं प्रकटयितुमाह—अब्रवीदिति । विक्रान्तमतिबलवन्तम् अनिलात्मजं हनूमन्तं परमप्रीतः अयमर्थं साधयितेति बुद्ध्या अतिप्रीतिमान् सर्ववनौकसां प्रभुः सुग्रीवः अब्रवीत् ॥ २ ॥

गो०टी०–संग्रहेणोक्तमर्थं विस्तरेण दर्शयति–अब्रवीच्चेत्यादिना । न भूमाविति । भूमौ सजातीयप्रतिपक्षबहुलायाम् । अन्तरिक्षे निरालम्बे मेघादिसंचारमार्गे अम्बरे वातचक्रान्तप्रदेशे अमरालये प्रबलाधिष्ठिते स्वर्गे अप्सु तिर्यक्संचारानर्हासु वा गतिसङ्गं गतिविलम्बं न पश्यामि ॥ २–४ ॥

३ ] ति० टी०–अन्तरिक्षं पृथिव्यासन्नपक्षिमार्गः । अम्बरं मेघमार्गः । अमरालयः स्वर्गः गतिसङ्गं गतिप्रतिबन्धम् ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह—नेत्यादिभिः । भूम्यादिषु ते अगतिसङ्गं गतिसंबन्धनिवर्तकं न पश्यामि । अन्तरिक्षं पक्षिगतिदेशमात्रमिति नाम्बरेण पौनरुक्त्यम् ॥ ३ ॥

४] ति०टी०–सर्वलोकविशेषणम्–सासुरा इत्यादि॥४॥

रा० टी०–सेति । सासुराः असुरसहिताः सनागनरदेवताः नागनरदेवतासहिताः ससागरधराधराः सागरशैलसहिताः सर्वलोकास्ते विदिताः ज्ञाताः सन्तीति शेषः ॥ ४ ॥

५ ] ति० टी०–लाघवं क्षिप्रकारित्वम् ॥ ५ ॥

---

१ हनुमतीति गो. रा. पाठः ।

तेजसा वाऽपि ते भूतं न समं भुवि विद्यते । तद्यथा लभ्यते सीता तत्त्वमेवानुचिन्तय ॥ ६ ॥
त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः । देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥ ७ ॥
ततः कार्यसमासङ्गमवगम्य हनूमति । विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८ ॥
सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः । निश्चितार्थतरश्चापि हनूमान्कार्यसाधने ॥ ९ ॥
तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः । भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥
तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् । कृतार्थ इव संहृष्टः प्रहृष्टेन्द्रियमानसः ॥ ११ ॥
ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् । अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥
अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा । मत्सकाशादनुप्राप्तमनुद्विग्नाऽनुपश्यति ॥ १३ ॥

रा० टी०–गतिरिति । हे महाकपे ! हे वीर ! ते गत्यादि महौजसो मारुतस्य पितुः सदृशमस्तीति शेषः ॥ ५ ॥

गो० टी०–गतिः अप्रतिहतगतिः ॥ ॥ ५ ॥

६ ] ति० टी०–भूतं प्राणी । तत्तस्माद्यथा सीता लभ्यते तदर्थजातं त्वमेवानुचिन्तय ॥ ६ ॥

रा० टी०–तेजसेति । ते तेजसा समं तेजः भुवि न भूतम् अभवत् न विद्यते तत् तस्मात् हेतोः सीता यथा लभतां तथा तत् सीतालाभं त्वमेवानुचिन्तय ॥ ६ ॥

गो० टी०–तेजसेति । भूतं जन्तुः तत् तस्मात्कारणात् तत्सीतान्वेषणम् उपपादय संपादय ॥ ६ ॥

७ ] ति० टी०–बलं शारीरम् पराक्रम उत्साहः देशकालानुवृत्तिस्तदुचितकर्मानुष्ठानम् नये नीतिशास्त्रे पण्डितेति संबुद्धिः ॥ ७ ॥

रा० टी०–त्वयीति । नयपण्डित ! हे नीति शास्त्राभिज्ञ ! हे हनुमन् ! बुद्ध्यादित्रयं देशकालानुवृत्तिः देशकालानुसरणं च त्वय्येवास्ति ॥ ७ ॥

गो० टी०–त्वयीति । नयपण्डितेत्यनन्तरमितिकरणं बोध्यम् इत्यब्रवीदिति पूर्वेणान्वयः ॥ ७ ॥

८ ] ति० टी०–तत एवं सुग्रीववचनात्कार्यसमासङ्गं कार्यसिद्धिसंबन्धमवगम्य स्वयं च तत्सामर्थ्याद्यनुभवेन तस्मिन्कार्यसाधकत्वं विदित्वा, चात्तद्रम्यदेश एव सीतां विदित्वा चिन्तयामास अस्मिन्स्वकर्तव्यसमर्पणं युक्तमिति विचारयामास ॥ ८ ॥

रा० टी०–तत इति । ततः सुग्रीवोक्त्यनन्तरं कार्यसमासङ्गं स्वकार्यसिद्धिम् अवगम्य हनूमति अवगम्यः सर्वकार्यसाधकत्वेन सर्वज्ञातव्यः स एव हनुमानिति कर्मधारयः तस्मिन् विदित्वा ज्ञात्वा राघवो हनुमन्तं चिन्तयामास तद्गुणान् सस्मारेत्यर्थः ॥ ८ ॥

गो० टी०–तत इति । ततः सुग्रीववचनात् हनूमति कार्यसमासङ्गं कार्यविषयासक्तिमवगम्य अस्मिन् सुग्रीवेण स्वकार्यभारो निक्षिप्त इति ज्ञात्वेत्यर्थः, स्वयमपि हनुमन्तं कार्यसाधकं विदित्वा चिन्तयामास ॥ ८ ॥

९ ] ति० टी०–चिन्ताप्रकारमाह—सर्वथेति । निश्चितार्थं एतदर्थविषयकनिश्चयवान् । स्वतोऽप्ययमतिशयेन कार्यसाधने निश्चितार्थः ॥ ९ ॥

रा० टी०–चिन्ताजनितनिश्चयमाह—सर्वथेति । कार्यसाधने निश्चितः अर्थतरः अत्युपायो येन स यो हनूमान् तस्मिन् हनूमति सर्वथा सर्वप्रकारेण निश्चितः अर्थो जानकीदर्शनं येन सः हरीश्वरः सुग्रीवोऽस्तीति शेषः । एतेन सुग्रीवस्य याथार्थ्यवेदितृत्वं व्यञ्जितम् । किंच हरीश्वरो हनूमति निश्चितार्थोऽस्ति हनूमांस्तु निश्चितार्थतरः एतेन हनुमतो ज्ञानाधिकत्वं सूचितम् । पूर्वकल्पेतरार्थस्याविवक्षया नेयं व्यञ्जनेति बोध्यम् ॥ ९ ॥

गो० टी०–चिन्ताप्रकारमाह–सर्वथेत्यादिना श्लोकद्वयेन । अन्ते इतिकरणं बोध्यम् । कार्यसाधने विषये निश्चितार्थः निश्चितकार्यसाधकः हनुमानपि निश्चितार्थकरः ॥ ९ ॥

१० ] ति० टी०–प्रस्थितस्य भर्त्रा प्रस्थापितस्य । परिज्ञातस्य परीक्षितस्य परिगृहीतस्य श्रेष्ठतयेति शेषः । कार्यस्य फलोदयः सीतादर्शनप्राप्तिरूपः स ध्रुवो निश्चितार्थः ॥ १० ॥

रा० टी०–तदिति । कर्मभिः पूर्वं तत्कृतानेककार्यैः भर्त्रा परिज्ञातस्य अत एव परिगृहीतस्य मत्कार्यसाधकत्वेन स्वीकृतस्य प्रस्थितस्यास्य हनूमतस्तत् मदीप्सितः उत्तमः कार्यफलोदयः क्रियाफलप्रकाशः ध्रुवो भवितेति शेषः । तदिति सामान्ये नपुंसकम् ॥ १० ॥

गो० टी०–तदेवमिति । अस्य कार्यफलोदयः अस्य संबन्धिनी कार्यसिद्धिः ध्रुवः निश्चितः ॥ १० ॥

११ ] ति० टी०–व्यवसायोत्तरं कार्यसाधने श्रेष्ठं तं हरिं हनूमन्तं समीक्ष्य प्रहृष्टेन्द्रियमानसो बभूव ॥ ११ ॥

रा० टी०–तमिति । महातेजा रामः हरिं हनूमन्तं व्यवसायोत्तरं कार्यनिष्पादने श्रेष्ठं वीक्ष्य ज्ञात्वा कृतार्थः सिद्धप्रयोजन इव संहृष्टः अत एव प्रहृष्टानि प्रहर्षितानि इन्द्रियमानसानि सुग्रीवादीनामिन्द्रियादीनि येन सोऽभवदिति शेषः ॥ ११ ॥

गो० टी०–तमिति । व्यवसायोत्तरं व्यवसायेन उत्तरं श्रेष्ठं कृतार्थः संवृत्त इव अमन्यतेति शेषः ॥ ११ ॥

१२-१३ ] ति० टी०–ततो निश्चितकार्यसाधकत्वादेव हेतो राजपुत्र्या अभिज्ञानं प्रत्यभिज्ञासाधनं ददौ ॥ १२ ॥ १३ ॥

१ लभते इति रा. पाठः । २ उपपादयेति गो. पाठः । ३ स्वस्तीति गो. पाठः । ४ कर इति गो. पाठः । ५ हनुमानिति गो. पाठः । ६ पत्रमिति गो. पाठः । ७ संवृत्त इति गो. पाठः ।

व्यवसायश्च ते वीर सत्त्वयुक्तश्च विक्रमः । सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४ ॥
स तद्गृह्य हरिश्रेष्ठः कृत्वा मूर्ध्नि कृताञ्जलिः । वन्दित्वा चरणौ चैव प्रस्थितः प्लवगर्षभः ॥ १५ ॥
स तत्प्रकर्षन्हरिणां महद्बलं बभूव वीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः ॥ १६ ॥
अतिबल बलमाश्रितस्तवाहं हरिवर विक्रम विक्रमैरनल्पैः ।
पवनसुत यथाधिगम्यते सा जनकसुता हनुमंस्तथा कुरुष्व ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ।

गृहीतसुग्रीवनिदेशा विनतादयः कीशाधिपाः सवीरवाद गर्जन्तः स्वस्ववाहिनीमनुकर्षन्तः सुग्रीवोद्दिष्टां स्वस्वदिशमभिप्रतस्थिरे ।

सर्वांश्चाहूय सुग्रीवः प्लवगान्प्लवगर्षभः । समस्तांश्चाब्रवीद्राजा रामकार्यार्थसिद्धये ॥ १ ॥

रा० टी०—ददाविति । राजपुत्र्याः सीतायाः अभिज्ञानं रामप्रेषितोऽयमिति ज्ञापकं स्वनामाङ्केन उपशोभितम् अङ्गुलीयं तस्य तस्मै हनुमते परन्तपो रामो ददौ ॥ १२ ॥

गो० टी०—ददाविति । राजपुत्र्या अभिज्ञानं अभिज्ञायतेनेनेत्यभिज्ञानम् । ननु त्यक्तसकलधनस्य वन्यवृत्त्या वर्तमानस्य कुतोऽङ्गुलीयकमिति चेत् इदमेकमेतत्कार्यार्थं रक्षितवान् अत एवाङ्गुलीयमुन्मुच्येति नोक्तम् । यद्वा रामनामाङ्कितमङ्गुलीयकं सीतायाः कदाचिद्रावणागमनात् पूर्वं प्रणयपरत्वेन रामेण स्वीकृतमिति बोध्यम् । यद्वा भार्यास्नेहेन कनिष्ठिकायां सदा मुद्रिका धार्यत इति देशाचारः । यद्वा विवाहकाले जनकेन दत्तमिदं वरालङ्कारत्वेन गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणमित्युक्तेः ॥ १२ ॥

रा० टी०—ननु किमर्थमिदं दीयते इत्यत आह—अनेनेति । हरिश्रेष्ठ हे हनुमन् ! चिह्नेन ज्ञापकेन अनेन अङ्गुलीयेन अनुद्विग्ना उद्वेगरहिता सती मत्सकाशादनुप्राप्तं त्वां जनकात्मजा अनुपश्यति अनुद्रष्टा ॥ १३ ॥

गो० टी०—भवद्वचनमेवालं किमर्थमेतद्दीयते तत्राह—अनेनेति । पश्यति द्रक्ष्यति ॥ १३ ॥

१४ ] ति० टी०—तावत्पर्यन्तं मद्गमननिश्चयः कथमत आह—व्यवसायश्चेति ॥ १४ ॥

रा० टी०—व्यवसाय इति । सुग्रीवस्य संदेशः सम्यगुपदेशः ते व्यवसायः निश्चितकार्यसाधनं च सत्त्वयुक्तः महाबलविशिष्टस्ते विक्रमो वेगश्च मे सिद्धिं कार्यनिष्पत्तिं कथयतीव ॥ १४ ॥

गो० टी०—हनुमन्तं प्रशंसति—व्यवसाय इति । सत्त्वयुक्तो विक्रमः बलं च विक्रमश्चेत्यर्थः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—तदभिज्ञानपदार्थम् ॥ १५ ॥

रा० टी०—स इति । कृतौ अञ्जली येन स हनुमान् तत् अङ्गुलीयं गृह्य गृहीत्वा च मूर्ध्नि कृत्वा चरणौ वन्दित्वा च प्रस्थितः अभवदिति शेषः ॥ १५ ॥

१६ ] ति० टी०—स तद्धरिणाम् । दीर्घाभाव आर्षः । महद्बलं प्रकर्षन् ॥ १६ ॥

रा० टी०—स इति । हरिणां हरीणां तत् महत् बलं प्रकर्षन् आकर्षन् सन् पवनात्मजो हनुमान् गताम्बुदे निवृत्तमेघे व्योम्नि विशुद्धमण्डलः घनाद्यावरणरहितमण्डलवान् शशीव बभूव ॥ १६ ॥

गो० टी०—स तदिति । प्रकर्षन् नयन् । हरिणामित्यत्र दीर्घाभाव आर्षः ॥ १६ ॥

१७ ] ति० टी०—हरिवरविक्रम श्रेष्ठसिंहविक्रम ! अतिबलपवनसुत हनुमन् ! तवैव बलमाश्रितोऽहमस्मि, अतोऽनल्पैर्विक्रमैर्जनकसुता यथाऽधिगम्यते तथा कुरुष्व । इत्यब्रवीदिति शेषः । रामसुग्रीवयोः साधारणमिदं वचः ॥ १७ ॥

कतकेन तु चतुर्विंशत्संख्यश्लोकः सर्गोऽयमुक्तः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रा० टी०—हनुमन्तं प्रति रामोक्तिमाह—अतीति । हे हरिवर ! तवातिबलमहमाश्रितः अतः सा हृता जनकसुता यथा अधिगम्यते तथा अनल्पैः विक्रमैरुपलक्षितस्त्वं कुरुष्व अत एव विक्रम गच्छ ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०—पुनरपि गच्छन्तं प्रति रामवचनम्—अतिबलेति । अतिबलेति संबुद्धिः । हरिवरविक्रम सिंहश्रेष्ठविक्रम ! सुग्रीवतुल्यविक्रमेति वा । श्लोकान्ते इति रामोऽब्रवीदित्यध्याहार्यम् ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

१ ] ति० टी०—सर्वानिति ॥ १ ॥

१ तमिति गो. पाठः । २ स्थाप्येति गो. पाठः । ३ प्लवगोत्तम इति गो. पाठः । ४ समस्तानब्रवीद्धृय इति गो. पाठः ।

एवमेतद्विचेतव्यं [1]भवद्भिर्वानरोत्तमैः । तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ॥ २ ॥
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे । रामः प्रस्रवणे तस्मिन्न्यवसत्सहलक्ष्मणः ॥ ३ ॥
प्रतीक्षमाणस्तं मासं [2]सीताधिगमने कृतः । उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ॥ ४ ॥
प्रतस्थे सहसा वीरो हरिः शत[3]बलिस्तदा । पूर्वां दिशं प्रतिययौ विनतो हरियूथपः ॥ ५ ॥
ताराङ्गदादिसहितः प्लवगः [4]पवनात्मजः । [5]अगस्त्याचरितामाशां दक्षिणां हरियूथपः ॥ ६ ॥
पश्चिमां [6]च दिशं घोरां सुषेणः प्लवगेश्वरः । प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ७ ॥
ततः सर्वा दिशो राजा चोदयित्वा यथातथम् । कपिसेना[7]पतिर्वीरो मुमोद सुखितः सुखम् ॥ ८ ॥
एवं [8]संचोदिताः सर्वे राज्ञा वानरयूथपाः । स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ९ ॥
[ [9]आनयिष्यामहे सीतां हनिष्यामश्च रावणम् । ]
नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः । [10]क्ष्वेडन्तो धावमानाश्च विनदन्तो महाबलाः ॥ १० ॥
[11]एवं संचोदिताः सर्वे राज्ञा वानरयूथपाः । आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ॥ ११ ॥
अहमेको [12]वधिष्यामि प्राप्तं रावणमाहवे । ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ॥ १२ ॥

रा० टी०–प्रेष्यवानरान् प्रति सुग्रीवोक्तिमाह–सर्वानिति । समस्तान् संघीभूतान् सर्वान् प्लवगान् राजा सुग्रीवः आहूय संबोध्य भवद्भिर्वानरोत्तमैः एतदुपदिष्टदेशजातं विचेतव्यम्, एवं वचः रामकार्यार्थसिद्धये अब्रवीत् । सार्धश्लोक एकान्वयी ॥१॥

गो० टी०–अथ प्रेषितानां वानराणां सन्नाह उच्यते पञ्चचत्वारिंशे–सर्वांश्चेत्यादि । सर्वानाहूय ततः समस्तान् संघीभूतान् प्लवगान् अब्रवीत् । यद्वा सम इति छेदः समः सर्वत्र पक्षपातरहितः एतत्पूर्वोक्तं स्वां स्वां दिशं स्वांशभूमण्डलम् एवम् अस्मदुक्तप्रकारेण इत्यब्रवीदिति संबन्धः ॥ १ ॥

२ ] ति० टी०–उक्तिप्रकारः—एवमिति ॥ २ ॥

रा० टी०–तदिति । हरिपुङ्गवाः भर्तुरुग्रशासनं विज्ञाय मेदिनीं शलभा इव संछाद्य संप्रतस्थिरे । अर्धद्वयमेकान्वयि ॥२॥

गो० टी०–तदिति । शलभा इति बहुत्वमात्रे दृष्टान्तः॥२॥

३] ति० टी०–प्राप्तनियोगानामुद्योगः—शलभा इवेति ३

रा० टी०–राम इति । सीताधिगमने सीतावृत्तान्तबोधने यो मासः कृतः अवधित्वेन निश्चितः तं मासं प्रतीक्षमाणः सहलक्ष्मणो रामः प्रस्रवणे गिरौ न्यवसत् ॥ ३ ॥

गो० टी०–राम इति । सीताधिगमे सीताधिगमनिमित्तं कृतः कृतसंकेतः ॥ ३ ॥

४–७] ति०टी०–यः सीताभ्यधिगमे तद्वृत्तान्तज्ञानेऽवधिभूतः कृतस्तं मासमित्यन्वयः । गिरिराजो हिमालयः ॥ ४–७ ॥

रा० टी०–उत्तरामिति । गिरिराजेन हिमवता समावृताम् उत्तरां दिशं शतवलिर्हरिर्वानरः प्रतस्थे ॥ ४ ॥

रा० टी०–पूर्वामिति । विनीतो हरियूथपः पूर्वां दिशं प्रति ययौ । ताराङ्गदादिसहितः पवनात्मजो हनुमान् याम्याख्यां दिशं प्रति ययौ । सार्धश्लोक एकान्वयी ॥ ५ ॥ ६ ॥

रा० टी०–पश्चिमामिति । सुषेणः वरुणपालितां पश्चिमां दिशं प्रतस्थे ॥ ७ ॥

गो० टी०–उत्तरामिति । प्रतस्थे प्रस्थातुमुद्युक्तः सर्गान्ते सुग्रीवसन्निधौ संनाहकथनात् ॥ ४–६ ॥

८ ] ति० टी०–यथातथं यथायोग्यमित्यर्थः । मुमोद चिक्रीड ॥ ८ ॥

रा० टी०–तत इति । ततः वानराणां सानुकूलत्वेन सुखितो राजा सुग्रीवः कपिसेनापतीन् यथातथं यथायोग्यं सर्वाः दिशः चोदयित्वा मुमोद दानसत्कारादिना प्रमोदयामास ॥ ८ ॥

गो० टी०–तत इति । मुमोद सुखितः सुखमिति पूर्वम् राज्यलाभेन सुखितो राजा सुखं यथा भवति तथा मुमोद उत्तरोत्तरं सुखं प्रापेत्यर्थः ॥ ७ ॥

९ ] ति० टी०–अभिप्रेत्योद्दिश्य ॥ ९ ॥

१० ] ति० टी०–नादादयः शब्दावान्तरभेदाः ॥ १० ॥

रा० टी०–एवमिति । राज्ञा एवं संचोदिताः सर्वे वानरयूथपाः प्लवङ्गमाः नादादि कुर्वन्तः सन्तः स्वां स्वां दिशमभिप्रेत्य उद्दिश्य संप्रतस्थिरे । नादादीनामधिकन्यूनादिना अवान्तरभेदान्न पौनरुक्त्यम् । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०–एवं संबोधिता इत्यादि । आनयिष्यामह इत्यत्र इतिकरणं द्रष्टव्यम् । आनयिष्यामह इति नदन्त इत्यन्वयः । नदन्तः शब्दं कुर्वन्तः, उन्नदन्तः पुनः संतोषातिशयेन उच्चैर्नदन्तः, गर्जन्तः आत्मश्लाघां कुर्वन्तः, क्ष्वेलन्तः सिंहनादं कुर्वन्तः, विनदन्तः विविधान् विकृतान्वा नादान्कुर्वन्तः संप्रतस्थिर इति पूर्वेणान्वयः ॥ ८ ॥ ९ ॥

११–१२ ] ति० टी०–आनयिष्याम इत्यादेरूचुरित्यनेनान्वयः ॥ ११ ॥ १२ ॥

---

१ यन्मया परिकीर्तितमिति गो. पाठः । २ यः सीताधिगमे इति गो. पाठः । ३ वलिरिति गो. रा. पाठः । ४ मारुतेति गो. पाठः । ५ अगस्त्यचरितामिति गो.पाठः । ६ तु भृशमिति गो. पाठः । ७ पतीन्मुख्यानिति गो. पाठः । ८ संबोधिता इति गो. पाठः । ९ अर्धमेतदधिकं गो. पाठे । १० क्ष्वेलन्त इति गो. पाठः । ११ श्लोकोऽयं गो. प्रथमश्लोके विकृतो नवमाङ्के दृश्यते । १२ हनिष्यामीति गो. पाठः ।

वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिति । एक एवाहरिष्यामि पातालादपि जानकीम् ॥ १३ ॥
विधमिष्याम्यहं वृक्षान्दारयिष्याम्यहं गिरीन् । धरणीं दारयिष्यामि क्षोभयिष्यामि सागरान् ॥ १४ ॥
अहं योजनसंख्यायाः प्लवेयं नात्र संशयः । शतयोजनसंख्यायाः शतं समधिकं ह्यहम् ॥ १५ ॥
भूतले सागरे वापि शैलेषु च वनेषु च । पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ॥ १६ ॥
इत्येकैकस्तदा तत्र वानरा बलदर्पिताः । ऊचुश्च वचनं तस्य हरिराजस्य संनिधौ ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ।

सीतान्वेषणाय कापेय सदिशतः सुग्रीवस्याखिलभूमण्डलवेदितृत्वमनुभूतवता राघवेण कुतस्तेऽखिलभुवनविज्ञानमिति पृष्टः सुग्रीवो वालिदुन्दुभियुद्धमुपक्रम्य तन्मूलमात्मनो वालिविद्वेषमुल्लिख्य तेनानुद्रुतोऽहमखिलमहीमण्डलपर्यावर्तनमन्वभवमिति समाधत्ते ।

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् । कथं भवान्विजानीते सर्वं वै मण्डलं भुवः ॥ १ ॥
सुग्रीवश्च ततो राममुवाच प्रणतात्मवान् । श्रूयतां सर्वमाख्यास्ये विस्तरेण वचो मम ॥ २ ॥

रा० टी०–एवमिति । एवं संचोदिताः सर्वे वानरयूथपाः वयमेव सीतामानयिष्यामहे आनेष्यामहे रावणं हनिष्यामश्च इत्यूचुरिति शेषः ॥ ११ ॥

रा० टी०–अहमिति । अहमेव एकः आहवे संग्रामे प्राप्तं रावणं वधिष्यामि ततोऽनन्तरमुन्मथ्य राक्षसान्तराण्यपि निहत्य जनकात्मजामाहरिष्ये इति कश्चिदाहेति शेषः ॥ १२ ॥

गो० टी०–अहमित्यादि । सागरानित्यन्तमेकान्वयम् ॥ १०—१२ ॥

१३-१४ ] ति० टी०–श्रमेण वेपमानामिति जनकजाविशेषणम् ॥ १३ ॥ १४ ॥

रा० टी०–वेपमानामिति । एक एवाहं पातालादपि जानकीमाहरिष्यामि इति कश्चिदाहेति शेषः ॥ १३ ॥

रा० टी०–विधमिष्यामीति । वृक्षान् विधमिष्यामि गिरीन् दारयिष्यामि धरणीं च दारयिष्यामि सागरान् क्षोभयिष्यामि इति कश्चिदाहेति शेषः ॥ १४ ॥

१५-१६ ] ति० टी०–अहं योजनेत्येकस्य वाक्यम् । शतयोजनेत्यन्यस्य ॥ १५ ॥ १६ ॥

रा० टी०–अहमिति । अहं योजनसंख्यायाः शतं शतयोजनजलमित्यर्थः, अहं प्लवेयं शतयोजनसंख्यायाः समधिकमधिकमपि अहं प्लवेयमिति कश्चिदाहेति शेषः ॥ १५ ॥

रा० टी०–भूतल इति । भूतलादौ मम गतिर्नोच्छिद्यते कैश्चिन्न प्रतिबध्यते इति कश्चिदाहेति शेषः ॥ १६ ॥

गो० टी०–अहं योजनसंख्यायाः शतं प्लवितेत्येकस्य वचनम् । योजनसंख्यायाः शतं समधिकमित्यन्यस्य । हिः प्रसिद्धौ ॥ १३—१६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

१७ ] ति० टी०–एकैकः एकश इत्यर्थः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥४५॥

रा० टी०–उपसंहरन्नाह—इतीति । वानराः एकैकः एकैकशः हरिराजसंनिधौ वचनमूचुः ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

१ ] ति० टी०–गतेष्विति ॥ १ ॥

रा० टी०–सुग्रीववृत्तान्तं श्रोतुकामस्य रामस्योक्तिमाह—गतेष्विति । सर्वं भुवो मण्डलं भवान्कथं विजानीते इति वचः वानरेन्द्रेषु गतेषु सत्सु रामः सुग्रीवमब्रवीत् ॥ १ ॥

गो० टी०–अथ रामाय सुग्रीवेण स्वस्य सर्वभूमण्डलज्ञानमूलकथनं षट्चत्वारिंशे—गतेष्वित्यादि ॥ १ ॥

२ ] ति० टी०–प्रणत आत्मा देहो यस्यास्तीति ॥ २ ॥

रा० टी०–सुग्रीव इति । ततः रामप्रश्नश्रवणानन्तरं सुग्रीवो राममुवाच । तद्वचनाकारमाह—सर्वमहमाख्यास्ये मम वचः श्रूयताम् ॥ २ ॥

गो० टी०–सुग्रीवस्त्विति । प्रणतात्मवान् प्रणतदेहवान् ॥ २ ॥

---

१ विमथिष्याम्यहं वृक्षान्पातयिष्यामीति गो. पाठः । २ धारयिष्यामीति गो. पाठः । ३ प्लवितेति गो. पाठः । ४ एकमिति गो. पाठः । ५ तत्रेति गो. पाठः । ६ नरर्षभेति गो. पाठः ।

यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् । प्रतिकालयते वाली मलयं प्रति पर्वतम् ॥ ३ ॥
तदा विवेश महिषो मलयस्य गुहां प्रति । विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४ ॥
ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् । न च निष्क्रामते वाली तदा संवत्सरे गते ॥ ५ ॥
ततः क्षतजवेगेन आपुपूरे तदा बिलम् । तदहं विस्मितो दृष्ट्वा भ्रातुः शोकविषार्दितः॥ ६ ॥
अथाहं गतबुद्धिस्तु सुव्यक्तं निहतो गुरुः । शिला पर्वतसंकाशा बिलद्वारि मया कृता ॥ ७ ॥
अशक्नुवन्निष्क्रमितुं महिषो [1]विनशिष्यति । ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते॥ ८ ॥
राज्यं च सुमहत्[2]प्राप्य तारां च रुमया सह । मित्रैश्च सहितस्त[3]त्रैव वसामि विगतज्वरः ॥ ९ ॥
आजगाम ततो वाली हत्वा तं [4]वानरर्षभः । ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ॥ १० ॥
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः । परिकालयते [5]वाली धावन्तं सचिवैः सह ॥ ११ ॥

३ ] ति० टी०—दुन्दुभिं नामेति । अत्र दुन्दुभिशब्देन महिषशब्देन च तत्पुत्रो मायाविनामा दानव उच्यते तद्वृत्तान्तस्यैवाग्रे वक्ष्यमाणत्वात् । 'मायावी नाम तेजस्वी दुन्दुभेः पूर्वजः सुतः' इति प्रागुक्तेस्तस्य तत्पुत्रत्वम्, पितुर्माहिषाकाकारत्वात्तत्पुत्रस्य च तदाकारत्वमिति च बोध्यम् ॥ ३ ॥

४–५ ] ति० टी०—मलयं मलयगुहाम् ॥ ४ ॥ ५ ॥

रा० टी०—तदभिधानप्रकारमाह—यदेत्यादिभिः । यदा माहिषाकृतिं दुन्दुभिं लक्षणया दुन्दुभिपुत्रं मायाविनं तन्नामदानवं मलयं पर्वतं प्रति प्रतिकालयते प्राद्रावयत् तदा महिषो मायावी मलयस्य गुहामाविवेश वाली अपि तज्जिघांसया मलयं मलयगुहामाविवेश । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—यदेति । केचिदत्र दुन्दुभिशब्देन उपचारान्मायाव्येवोच्यते मायाविनो वृत्तान्तस्यानुवादादित्याहुः, तन्न महिषाकृतिमित्यस्य विरोधात् । तदा विवेश महिषः, महिषो विनशेदिति पुनः पुनरुक्तेश्च रामेण विदितवृत्तान्तश्च न वचनमर्हति । तर्हि कथमुपपत्तिरिति चेत् उच्यते—पूर्वं मायाविवृत्तान्ताभिधानादत्र महिषवृत्तान्ताभिधानाच्च तदानीमुभावप्यागताविति वेदितव्यम् । तत्र महिषः कथंचित् स्वात्मानं गोपयित्वा वालिनि विनिर्गते पुनः मत्तः कदाचिदागत्य वालिना हत इत्यविरोधः । वक्ष्यत्येवमन्यत्रापि विषये । रावणेन सीतोपप्लवे प्रयुक्ते मन्दोदरीधान्यमालिन्यौ निवारिण्यौ तत्रैका पूर्वमुक्ता अन्याः वानरसंनिधावनुवादे । तस्मादयमृषेः स्वभाव इति बोध्यम् । परिकालयते पलाययति कलतेर्मितो वृद्धिरार्षी । तत्रापि गुहायामपि तज्जिघांसया मलयं विवेश ॥ ३ ॥ ४ ॥

रा० टी०—तत इति । ततोऽनन्तरं विनीतवत् विशेषनीतियुक्तं यथा भवति तथाऽहं निक्षिप्तः गुहाद्वारि संस्थापितः संवत्सरे गतेऽपि वाली न निष्क्रमते निरक्रमत ॥ ५ ॥

गो० टी०—ततोऽहमिति । विनीतवत् विनययुक्तमिति क्रियाविशेषणम् ॥ ५ ॥

६ ] ति० टी०—आपुपूरे पूर्णम् ॥ ६ ॥

रा० टी०—तत इति । ततः क्षतजवेगेन वेगवद्रुधिरेण बिलम् आपुपूरे तद्रुधिरं दृष्ट्वा विस्मितोऽहं भ्रातुः शोकविषार्दितः भ्रातृमरणसंशयजनितशोकविषादयुक्तोऽभवमिति शेषः ॥ ६ ॥

गो० टी०—तत इति । भ्रातृशोक एव विषं तेन अर्दितः अभवमिति शेषः ॥ ६ ॥

७ ] ति० टी०—निहत इति । गतबुद्धिः प्राप्तबुद्धिः जात इति शेषः । ततः—मयेत्यादि ॥ ७ ॥

रा० टी०—अथेति । अथानन्तरं गुरुर्भ्राता सुव्यक्तं निहतः इति गतबुद्धिः प्राप्तनिश्चयोऽहमासमिति शेषः अतः महिषो निष्क्रामितुमशक्नुवन् सन् विनशिष्यति इति बुद्ध्या पर्वतसंकाशा शिला गुहाद्वारि मया कृता । सार्धश्लोक एकान्वयी॥७॥

गो० टी०—अथेति । अहं गुरुर्निहत इति कृतबुद्धिः अभवमिति शेषः । विनशेत् विनश्येदित्यर्थः ॥ ७ ॥ ८ ॥

८ ] ति० टी०—विनशिष्यतीत्यस्येति बुद्ध्येति शेषः । तस्य वालिनः ॥ ८ ॥

रा० टी०—तत इति । तस्य वालिनो जीविते जीवने निराशोऽहं सुमहत् राज्यं रुमया सह तारां च प्राप्य मित्रैः सह तत्र किष्किन्धायां वसामि अवसम् । सार्धश्लोक एकान्वयी ॥ ८ ॥ ९ ॥

९–१० ] ति० टी०—तारां च प्राप्येति संबन्धः । वसाम्यवसम् ॥ ९ ॥ १० ॥

गो० टी०—मित्रैश्चेति । वसामि अवसं दानवर्षभं मायाविनम् ॥ ९ ॥

रा० टी०—आजगामेति । ततोऽनन्तरं तं मायाविनं हत्वा वाली आजगाम । ततस्तदागमनानन्तरं गौरवाद्वालिनो गुरुत्वात् हेतोः भययन्त्रितः भयेन संकुचितः सन् राज्यमददाम् ॥ १० ॥

गो० टी०—ततोऽहमिति । भययन्त्रितः भयपरवशः १०

११ ] ति० टी०—परिकालयते सचिवैः सह धावन्तमनुधावति स्म ॥ ११ ॥

१ विनशेदितीति गो. पाठः । २ प्राप्तमिति गो. पाठः । ३ तत्रेति गो. पाठः । ४ दानवर्षभमिति गो. पाठः । ५ क्रोधादिति गो. पाठः

ततोऽहं वालिना तेन सोऽनुबद्धः प्रधावितः । नदीश्च विविधाः पश्यन्वनानि नगराणि च ॥ १२ ॥
आदर्शतलसंकाशा ततो वै पृथिवी मया । अलातचक्रप्रतिमा दृष्टा गोष्पदवत्कृता ॥ १३ ॥
पूर्वां दिशं ततो गत्वा पश्यामि विविधान्द्रुमान् । पर्वतान्सदरीन्रम्यान्सरांसि विविधानि च ॥ १४ ॥
उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् । क्षीरोदं सागरं चैव नित्यमप्सरसालयम् ॥ १५ ॥
परिकाल्यमानस्तु तदा वालिनाऽभिद्रुतो ह्ययम् । पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ॥ १६ ॥
[ पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम् । ]
दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् । विन्ध्यपादपसंकीर्णां चन्दनद्रुमशोभिताम् ॥ १७ ॥
द्रुमशैलान्तरे पश्यन्भूयो दक्षिणतोऽपराम् । अपरां च दिशं प्राप्तो वालिना समभिद्रुतः ॥ १८ ॥
स पश्यन्विविधान्देशानस्तं च गिरिसत्तमम् । प्राप्य चास्तं गिरिश्रेष्ठमुत्तरं संप्रधावितः ॥ १९ ॥
हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् । यदा न विन्दे[11] शरणं वालिना समभिद्रुतः ॥ २० ॥

रा० टी०—स इति । प्रव्यथितेन्द्रियः गुहामुखपिधानपूर्वकमदागमनेन दुःखितचित्तः अत एव दुष्टात्मा चञ्चलचित्तो वाली मां जिघांसुः सन् सचिवैः सह धावन्तं पलायन्तं मां परिकालयते अन्वधावत् ॥ ११ ॥

गो० टी०—स इति । परिकालयते निरकासयत् ॥ ११ ॥

१२ ] ति० टी०—ततस्तेन वालिना सोऽहमनुबद्धोऽनुद्रुतः प्रधावितः ॥ १२ ॥

रा० टी०—तत इति । ततस्तेन वालिना प्रधावितः अनुद्रुतः सानुबन्धः अमात्यसहितोऽहं नद्यादीन् पश्यन् सन् आगच्छमिति शेषः ॥ १२ ॥

गो० टी०—ततोऽहमिति । सानुबन्धः सामात्यः नदीः पश्यन्नहं प्रधावित इत्यन्वयः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—ततो वै तदनुधावनहेतोर्मया गोष्पदवत्परिभ्राम्यमाणेयं पृथिव्यलातचक्रप्रतिमादर्शतलसंकाशा च दृष्टा । गोष्पदवदित्यनेन लङ्घनेऽप्रयास उक्तः । अलातचक्रेत्यनेन स्वीयो भ्रमणवेगः । आदर्शतलेत्यनेन भूतचक्रवर्तिपदार्थस्य स्पष्टमनुभव उक्तः ॥ १३ ॥

रा० टी०—आदर्शेति । ततः प्रधावनाद्धेतोः मया पृथिवी आदर्शतलसंकाशा स्पष्टं सर्वदर्शनेन आदर्शतलसदृशी अलातचक्रप्रतिमा अतिवेगवत्स्वगमनेन अलातचक्रसदृशी च दृष्टा, गोष्पदवत् भ्रमणे श्रमाभावेन गोष्पदसदृशी च कृता ॥ १३ ॥

१४ ] ति० टी०—उक्तमेव विवृणोति—पूर्वां दिशमिति १४

रा० टी०—भ्रमणप्रकारमाह—पूर्वामित्यादिभिः । पूर्वां दिशं गत्वा द्रुमादीन् पश्यामि अपश्यम् ॥ १४ ॥

गो० टी०—पूर्वां दिशमिति । पश्यामि अपश्यम् अप्सरसा अप्सरसाम् पूर्वसवर्णदीर्घः । वालिनाभिद्रुतः परिकाल्यमानोऽहं द्रुमादिकमपश्यमिति पूर्वेणान्वयः ॥ १४–१६ ॥

१५ ] ति० टी०—अप्सरसशब्दोऽकारान्तोऽप्यार्षः ॥ १५ ॥

रा० टी०—उदयमिति । तत्र पूर्वदिशि उदयपर्वतादि पश्यामि अपश्यम् अप्सरसशब्दः अदन्तोऽप्यत एव बुध्यते १५

१६ ] ति० टी०—परिकाल्यमानः परिकालयमानः पलायमान इत्यर्थः अकारलोप आर्षः पुनरावृत्योदयगिरिभुवः ॥ १६ ॥

रा० टी०—परीति । वालिना परिकाल्यमानः पलायमानः अत एव अभिद्रुतः शीघ्रं प्रचलितोऽहं पुनरावृत्य निवर्त्य प्रस्थितः मार्गान्तरेण पश्चाद्भागं प्रचलितोऽहमासमिति शेषः ॥ १६ ॥

१७ ] ति० टी०—तस्या दिशस्तां दिशं त्यक्त्वा ॥ १७ ॥

रा० टी०—दिश इति । ततोऽनन्तरं तस्याः पूर्वस्याः दिशः विन्ध्यपादपसंकीर्णां दक्षिणां दिशं प्रस्थितोऽहमभवमिति शेषः ॥ १७ ॥

गो० टी०—पुनरित्यादि श्लोकद्वयमेकान्वयम् । अस्याः पूर्वस्या दिशः पुनरावृत्य प्रस्थितोऽस्मि । आवर्तमानोऽहं पुनर्वालिनाभिद्रुतोऽस्मि । विन्ध्यपादपेत्यनेन किष्किन्धाया दक्षिणतोऽपि विन्ध्यपर्वतशेषोऽस्तीति गम्यते ॥ १७–१९ ॥

१८ ] ति० टी०—द्रुमान्तरे शैलान्तरे च तद्व्यवहितं वालिनं पश्यन्नपरां पश्चिमां दिशं समभिद्रुत इति शेषः ॥ १८ ॥

रा० टी०—द्रुमेति । वालिना समभिद्रुतोऽहं दक्षिणतो दक्षिणस्यां दिशि द्रुमशैलान् पश्यन् सन् अपरां तद्भिन्नां पश्चिमां दिशं प्राप्तः ॥ १८ ॥

१९ ] ति० टी०—गिरिसत्तमम् अभिधावित इति शेषः १९

रा० टी०—संपश्यन्निति । विविधान् देशान् गिरिसत्तममस्तं च संपश्यन् सन् गिरिश्रेष्ठमस्तं प्राप्य उत्तरां दिशं संप्रधावितः ॥ १९ ॥

२० ] ति० टी०—मेरुं महामेरुम् । न विन्दे न लभे ॥ २० ॥

रा० टी०—हिमवन्तमिति । वालिना समभिद्रुतोऽहं हि-

१ सानुबन्ध इति गो. रा. पाठः । २ तदेति गो. पाठः । ३ पर्वतांश्च नदी रम्या इति गो. पाठः । ४ कालयमान इति गो. पाठः । ५ अर्धमेतदधिकं गो. पाठे । ६ भूषितामिति गो. पाठः । ७ शैलांस्तत इति गो. पाठः । ८ पश्चिमां त्विति गो. पाठः । ९ समिति गो. रा. पाठः । १० उत्तरामिति गो. पाठः । ११ विन्दमिति गो. पाठः । १२ पलायमानमिति युक्तं भाति ।

ततो मां बुद्धिसंपन्नो हनुमान्वाक्यमब्रवीत् । इदानीं मे स्मृतं राजन्यथा वाली हरीश्वरः ॥ २१ ॥
मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले । प्रविशेद्यदि वा वाली मूर्धास्य शतधा भवेत् ॥ २२ ॥
तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति । तत्र पर्वतमासाद्य ऋष्यमूकं नृपात्मज ॥ २३ ॥
न विवेश तदा वाली मतङ्गस्य भयात्तदा । एवं मया तदा राजन्प्रत्यक्षमुपलक्षितम् ॥
पृथिवीमण्डलं सर्वं गुहामस्म्यागतस्ततः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

तत्तद्दिक्प्रदेशेषु बहुशो निपुणमन्विष्यापि सीतामप्राप्नुवद्भिस्तत्कार्यनिराशैर्विनतादिभिर्मासावधेः प्रागेव प्रत्यागत्याभिवाद्य रामसुग्रीवौ निवेदितसीतादर्शनैरनेकहेतूक्तिभिर्हनुमत्येव सीताशुद्धिं निश्चित्य समर्थयद्भिस्तास्थे ।

दर्शनार्थं तु वैदेह्याः सर्वतः कपिकुञ्जराः । व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १ ॥
ते सरांसि सरित्कक्षानाकाशं नगराणि च । नदीदुर्गांस्तथा देशान्विचिन्वन्ति समन्ततः ॥ २ ॥
सुग्रीवेण समाख्याताः सर्वे वानरयूथपाः । तत्र देशान्विचिन्वन्ति सशैलवनकाननान् ॥ ३ ॥

भवत्प्रभृति शरणं रक्षकं यदा न विन्दे ततस्तदा हनमान् वाक्यमब्रवीत् । सार्धश्लोक एकान्वयी ॥ २० ॥

गो० टी०—हिमवन्तमिति । अपश्यमिति शेषः ॥२०॥

गो० टी०—यदेत्यादि । शरणं रक्षणं न विन्दं नाविन्दम् २१

२१ ] ति० टी०—किमब्रवीत्तदाह—इदानीमिति । मे मया स्मृतम् । किं स्मृतं तदाह—यथेति ॥ २१ ॥

२२ ] ति० टी०—तदा पूर्वकाले । अस्मिन्नाश्रममण्डले वाली यदा प्रविशेत्तदास्य मूर्धा शतधा भवेदिति हरीश्वरो मतङ्गेन शप्तः ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—इदानीमिति । अस्मिन्नाश्रममण्डले यदि वाली प्रविशेत् तदा अस्य मूर्धा शतधा भवेत् इति मतङ्गेन यथा वाली शप्तः तथा इदानीं मे मया स्मृतम् । सार्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

गो० टी०—इदानीमित्यादि । राजन् अस्मिन्नाश्रममण्डले वाली प्रविशेद्यदि तदास्य मूर्धा शतधा भवेदिति मतङ्गेन पुरा हरीश्वरो यथाभिशप्तः तथा इदानीं मे स्मृतमिति योजना । निरुद्विग्नः निर्भयः भावे निष्ठा । इति हनुमान् वाक्यमब्रवीदिति संबन्धः ॥ २२ ॥ २३ ॥

गो० टी०—तत इति । आसाद्य स्थितोऽहमिति शेषः २४

२३ ] ति० टी०—तत्र मतङ्गाश्रमे । निरुद्विग्नो निर्भयः । आसाद्य स्थितस्य मम समीपमिति शेषः, न विवेशेत्यन्वयः॥२३॥

रा०टी०—तत्रेति । तत्र मतङ्गाश्रमे निरुद्विग्नः उद्वेगरहितः अत एव सुखः अस्माकं वासो भविष्यति । तत्र तस्यां हनुमदुक्तौ सत्याम् ऋष्यमूकमासाद्य प्राप्य विद्यमानस्य मम समीपे मतङ्गस्य भयात् वाली न विवेश । सार्धश्लोक एकान्वयी ॥ २३ ॥

२४ ] ति० टी०—तदा जातशापकृतादिति शेषः । गुहाम् ऋष्यमूकस्येति शेषः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥४६॥

रा० टी०—उपसंहरन्नाह—एवमिति । एवमुक्तप्रकारेण पृथिवीमण्डलं प्रत्यक्षं मया उपलक्षितं दृष्टं ततोऽनन्तरं गुहामागतोऽस्मि ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०—एवमिति । अस्य ऋश्यमूकस्य गुहां सीताभरणस्थानभूताम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

१ ] ति० टी०—यथोक्तम् । स्वस्वान्वेषणीयतयोक्तं देशमनतिक्रम्येत्यर्थः ॥ १ ॥

रा०टी०—दक्षिणातिरिक्तदिग्गतानां वानराणां वृत्तान्तं वर्णयितुमाह—दर्शनार्थमिति । ये कपिकुञ्जराः वैदेह्याः दर्शनार्थं कपिराजेन सर्वतः सर्वदिक्षु व्यादिष्टा नियुक्तास्ते यथोक्तमुक्तमनतिक्रम्य अञ्जसा अनायासेन जग्मुः ॥ १ ॥

गो० टी०—अथ दक्षिणेतरदिग्गतवानरागमनं सप्तचत्वारिंशे—दर्शनार्थं त्वित्यादि । यथोक्तं देशम् ॥ १ ॥

२–३ ] ति० टी०—आकाशं वनगिर्यनावृतप्रदेशमित्यर्थः ।

१ ततेति गो. पाठः । २ हनूमानिति रा. पाठः । ३ वै इति गो. पाठः । ४ कृत्स्नमिति गो. पाठः । ५ अस्म्यागत इति गो. पाठः । ६ यूथपा इति गो. पाठः । ७ सरांसि सरित इति गो. पाठः । ८ शैलानिति गो. पाठः । ९ प्रदेशान्प्रवीति गो. पाठः ।

विचित्य दिवसं सर्वे सीताधिगमने धृताः । समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४ ॥
सर्वर्तुकांश्च देशेषु वानराः सफलद्रुमान् । आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहःसु ते ॥ ५ ॥
तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः । कपिराजेन संगम्य निराशाः कपिकुञ्जराः ॥ ६ ॥
विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह । अदृष्ट्वा विनतः सीतामाजगाम महाबलः ॥ ७ ॥
दिशमप्युत्तरां सर्वां विविच्य स महाकपिः । आगतः सह सैन्येन भीतः शतबलिस्तदा ॥ ८ ॥
सुषेणः पश्चिमामाशां विविच्य सह वानरैः । समेत्य मासे पूर्णे तु सुग्रीवमुपचक्रमे ॥ ९ ॥
तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च । आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥
विचिताः पर्वताः सर्वे वनानि गहनानि च । निम्नगाः सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११ ॥

नदीदुर्गानिति । नदीप्रवाहैर्गन्तुमशक्या देशा नदीदुर्गास्तान् ॥ २ ॥ ३ ॥

रा० टी०—ते इति । ते प्रेषिता वानराः सरःप्रभृतीन् विचिन्वन्ति व्यचिन्वन् ॥ २ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सुग्रीवेणेति । सुग्रीवेण समाख्याताः सम्यगुपदिष्टाः सर्वे वानरयूथपाः विचिन्वन्ति॥३॥

गो० टी०—तदेव विवृणोति—सरांसीत्यादिना । कक्षान् गुल्मान् लतागृहानित्यर्थः । आकाशं वृक्षगुल्मादिरहितप्रदेशं नदीदुर्गान् नदीभिर्दुर्गमान् ॥ २ ॥ ३ ॥

४ ] ति० टी०—दिवसमित्यत्यन्तसंयोगे द्वितीया । धृता उद्युक्ताः । मेदिन्यां सर्वाधारभूतायां निद्रासौकर्यार्थमिति भावः॥४

रा० टी०—तत्प्रकारमाह—विचित्येति । सीताधिगमने सीतादर्शने धृता निश्चिताः सर्वे वानराः दिवसं विचित्य पृथक् पृथग्गत्वा अन्वीक्ष्य निशाकालेषु मेदिन्यां सर्वसंमतिविषयीभूतभूमौ समायान्ति संघीभूय प्राप्नुवन्ति ॥ ४ ॥

गो० टी०—विचित्येति । धृताः तत्पराः ॥ ४ ॥

५ ] ति० टी०—तेषु देशेषु सर्वर्तुकानित्यसंनिहितसर्वर्तुयुक्तान्, अत एव सदा सफलद्रुमान्सर्वेष्वहःसु विचयनसमये समासाद्य कामं प्राप्य, रजनीं रजन्यां शय्यां चक्रुः । तादृशवृक्षवत्त्वं च देशस्य रामप्रसादात् ॥ ५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सर्वर्तुकानिति । ते वानराः सर्वेषु देशेषु अहस्सु विचित्येति शेषः, सर्वर्तुकान् सर्वकालं संनिहितसर्वऋतून् सफलाः सर्वऋतूचितफलसहिताः ये द्रुमास्तान् रजनीं रजन्यामासाद्य प्राप्य शय्यां शयनं चक्रुः॥५॥

गो० टी०—विचित्येति श्लोकोक्तं विवृणोति—सर्वेति । सर्वर्तुकामान् काम्यन्त इति कामाः पुष्पफलादयः सर्वर्तुसंभवफलपुष्पादियुक्तानित्यर्थः । सफलान् वानरैरुपभुज्यमानत्वेन सफलान् द्रुमानासाद्य सर्वेष्वहस्सु एकमासान्तर्गतसर्वदिनेषु रजनीं रजन्यामेव शय्यां चक्रुः । अनेनाहारविश्रमादिकमहस्सु नास्तीत्यवगम्यते ॥ ५ ॥

६–८ ] ति० टी०—तदहः प्रस्थानदिवसं प्रथमं कृत्वा गताः । पुनर्मासे गते निराशाः सीतालाभे प्रस्रवणं गता आगताः, कपिराजेन संगम्य स्थिता इत्यन्वयः ॥ ६–८ ॥

रा० टी०—तदिति । तत् अन्वेषणाज्ञापनसंबन्धि अहो दिनं प्रथमं कृत्वा प्रथमत्वेन परिगणय्य मासे मासान्तदिवसे त्रिंशत्तमे इत्यर्थः, प्रस्रवणं गताः निराशाः सीतादर्शनविषयकाशारहिताः अप्राप्तसीतावृत्तान्ता इत्यर्थः, कपिकुञ्जराः कपिराजेन संगम्य अतिष्ठन्निति शेषः ॥ ६ ॥

गो० टी०—तदिति । तदहः प्रस्थानदिनं प्रथमं कृत्वा तदारभ्य मासे पूर्णे सति निराशाः सीतान्वेषणे निरुत्साहाः सन्तः कपिराजेन संगम्य तस्मै स्वागमनं निवेदयेत्यर्थः, प्रस्रवणं माल्यवन्तं गताः ॥ ६ ॥

रा० टी०—तदागमनप्रकारमाह—विचित्येत्यादिभिः । महाबलो विनतः उक्तामादिष्टां पूर्वां दिशं यथावत् विचित्य सीतामदृष्ट्वा आजगाम ॥ ७ ॥

रा० टी०—दिशमिति । शतबलिर्वीरः उत्तरां दिशं विविच्य विचित्य सीतामदृष्ट्वेति शेषः, आगतः ॥ ८ ॥

गो० टी०—एवं सामान्येन वानरागमनमुक्त्वा प्रत्येकं च दर्शयति—विचित्येत्यादिना । सचिवैः सहायभूतैः ॥७॥८॥

९–१० ] ति० टी०—उपचक्रमे प्राप्तः ॥ ९ ॥ १० ॥

रा० टी०—सुषेण इति । सुषेणः पश्चिमां दिशं विविच्य सीतामलब्ध्वेति शेषः, सुग्रीवमुपचक्रमे प्राप ॥ ९ ॥

गो० टी०—सुषेण इति । उपचक्रमे उपागतः ॥ ९ ॥

रा० टी०—तमिति । रामेण सह आसीनं प्रस्रवणगिरिस्थं तं सुग्रीवं समासाद्य अभिवाद्य च इदमब्रवीत्, यूथत्रयमिति शेषः ॥ १० ॥

गो० टी०—तमिति । प्रस्रवणपृष्ठस्थं प्रस्रवणाग्रस्थं रामेण सहासीनं रामेण सहितमित्यर्थः । वनानि क्षुद्रवनानि गहनानि महावनानि सागरान्ताः समुद्रतीराणि लताविततसंतताः लताभिर्विततैः व्याप्ताः संततः निरन्तरा इति महागुल्मविशेषणम् ॥ १०–१२ ॥

११ ] ति० टी०—सागरान्ताः सागरमध्यवर्तिद्वीपाः ॥११॥

१ कामानिति गो. पाठः । २ सफलानिति गो. पाठः । ३ यूथपा इति गो. पाठः । ४ उत्तरां च दिशमिति गो. पाठः । ५ वीर इति गो. रा. पाठः । ६ लिरिति गो. रा. पाठः । ७ विचित्येति गो. पाठः । ८ मासि संपूर्णे इति गो. पाठः ।

गुहाश्च विचिताः सर्वा याश्च ते परिकीर्तिताः । विचिताश्च महागुल्मा लताविततसंतताः ॥ १२ ॥
गहनेषु च देशेषु दुर्गेषु विषमेषु च । सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥ १३ ॥
²ये चैव गहना देशा विचितास्ते पुनः पुनः ।
उदारसत्त्वाभिजनो हनूमान्स मैथिलीं ज्ञास्यति वानरेन्द्र ।
दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

## अष्टचत्वारिंशः सर्गः ।

अङ्गदादिभिर्युतो हनुमान्विन्ध्यगहनगह्वरादिषु सीता व्यचिनोत् । पुत्रनाशशोकतः खिन्नकण्डुमुनिशापाभिशप्तफलपुष्पागमवृक्षके कस्मिंश्चिद्वने परिश्रमपरिश्रान्ताः कपयस्तत्र कंचिद्राक्षस व्यलोकयन् । साटोप मुष्टिमुद्यम्याभ्यापतन्त तमङ्गदो रावणबुद्ध्या जघान । कान्तारभ्रमणपरिश्रान्तास्ते क्वचन वृक्षमूलमुपाजग्मुः ।

सह ताराङ्गदाभ्यां तु सहसा हनुमान्कपिः । सुग्रीवेण यथोद्दिष्टं गन्तुं देशं प्रचक्रमे ॥ १ ॥
स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः । ततो विचित्य विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥
पर्वताग्रनदीदुर्गान्सरांसि विपुलद्रुमान् । वृक्षखण्डांश्च विविधान्पर्वतान्वनपादपान् ॥ ३ ॥
अन्वेषमाणास्ते सर्वे वानराः सर्वतोदिशम् । न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४ ॥
ते भक्षयन्तो मूलानि फलानि विविधान्यपि । अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह ॥
स तु देशो दुरन्वेषो गुहागहनवान्महान् । निर्जलं निर्जनं शून्यं गहनं घोरदर्शनम् ॥ ५ ॥

१२-१३ ] ति० टी०—लताविततैर्लताप्रतानैः संतताः समन्ताद्व्याप्तास्तादृशा महागुल्मा लतागृहविशेषाः ॥१२॥१३॥

रा० टी०—तद्वचनाकारमाह—विचिता इति । पर्वतादयो विचिता अस्माभिरिति शेषः । श्लोकद्वयमेकान्वयि ॥११॥१२॥

रा० टी०—गहनेष्विति । गहनादिविषमानानि अतिप्रमाणानि अतिबृहच्छरीराणि सत्त्वानि अन्वेषणप्रतिबन्धकीभूतप्राणिजातानि विचितानि च ॥ १३ ॥

गो० टी०—गहनेष्विति । गहनेषु दुष्प्रवेशेषु नानाद्वीपेष्वित्यर्थः । दुर्गेषु दुःखेन गन्तव्येषु निम्नोन्नतेष्वित्यर्थः । अतिप्रमाणानि अतिमात्रशरीराणि विचितानि किमयं रावणः उत नेतीति भावः । उदारसत्त्वः श्रेष्ठसत्त्वोऽभिजनो वंशो यस्य स उदारसत्त्वाभिजनः महाबलवतः पुत्र इति सीतादर्शने प्रथमो हेतुः, महात्मा महाधैर्य इति द्वितीयः, दिशन्त्वित्यादिना तृतीयो हेतुः । इति अब्रुवन् वानरा इति पूर्वेणान्वयः ॥ १३-१४ ॥

अस्मिन्सर्गे चतुर्दश श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

१४ ] ति० टी०—दिक्त्रयासत्त्वसिद्धनिश्चयमर्थमब्रुवदति—उदारेति ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥४७॥

रा० टी०—ये इति । ये गहना वृक्षादिपिहितत्वादिना दुर्गमास्ते देशाः पुनः पुनर्विचिताः । अर्धं पृथक् ॥ १४ ॥

रा० टी०—ननु कथं सीतावृत्तान्तलाभ इत्यत आह—उदारेति । यां दिशं सीता गता तां दिशं हनुमान् एवास्थितः अतः उदाराः अधिकाः सत्त्वाभिजना यस्य स हनुमान् मैथिलीं ज्ञास्यति ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

१-३ ] ति० टी०—प्रचक्रमे अन्वेष्टुमिति शेषः ॥ १-३ ॥

४-५ ] ति० टी०—अन्वेषमाणास्ते विविधानि फलान्यपि भक्षयन्तः सीतां न ददृशुः ॥ ४ ॥ ६ ॥

रा० टी०—हनुमदादिवृत्तान्तमाह—सहेत्यादिभिः । हनुमान् सुग्रीवेण उद्दिष्टं देशं गन्तुं प्रचक्रमे ॥ १ ॥

गो० टी०—अथ सीतान्वेषणाय दक्षिणां दिशं गतानाम-

१ त्वया या इति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ महात्मेति गो. पाठः । ४ द्रक्ष्यति वानरेन्द्र इति गो. रा.पाठः । ५ गत्वा स इति गो. पाठः । ६ तं देशमुपचक्रमे इति गो. पाठः । ७ विचिनोति स्मेति गो. पाठः । ८ अश्नानिति गो. पाठः । ९ घनेनि गो. पाठः । १० चेति गो. पाठः । ११ श्लोकोऽयमधिकः गो. रा.पाठे । १२ हीति रा. पाठः । १३ रोमहर्षणमिति गो. रा. पाठः ।

ताहशान्यप्यरण्यानि विचित्य भृशपीडिताः । स[1] देशश्च दुरन्वेष्यो गुहागहनवान्महान् ॥ ६ ॥
त्यक्त्वा तु तं ततो[2] देशं सर्वे वै हरियूथपाः । देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ॥ ७ ॥
यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः । निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥ ८ ॥
न सन्ति महिषा यत्र न मृगा न च हस्तिनः । शार्दूलाः पक्षिणो वाऽपि ये चान्ये वनगोचराः ॥ ९ ॥
न चात्र[4] वृक्षा नौषध्यो न वल्ल्यो[5] नापि वीरुधः । स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ॥ १० ॥
प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्च विवर्जिताः[6] । कण्डुर्नाम महाभागः सत्यवादी तपोधनः ॥ ११ ॥
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः । तस्य तस्मिन्वने पुत्रो बालको[7] दशवार्षिकः ॥ १२ ॥
प्रनष्टो जीवितान्ताय क्रुद्धस्तेन महामुनिः । तेन धर्मात्मना शप्तं कृत्स्नं तत्र[8] महद्वनम् ॥ १३ ॥

सुरानिरसनपर्यन्तो वृत्तान्तोऽष्टचत्वारिंशे—सह ताराङ्गदाभ्यामित्यादि ॥ १ ॥

रा० टी०—स इति । स हनुमान् कपिसत्तमैः सह दूरं देशमुपागम्य विन्ध्यस्य गुहाः गहनानि च विचित्य अतिष्ठदिति शेषः ॥ २ ॥

रा० टी०—पर्वतेति । सर्वदिशं पर्वतादीन् अन्वेषमाणाः सर्वे वानराः हनुमदादयः सीतां न ददृशुः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०—ते इति । अन्वेषमाणास्ते सर्वे वानराः मूलानि फलानि च भक्षयन्तः सन्तस्तत्र तत्र न्यवसन् ॥ ५ ॥

गो० टी०—स इति । पर्वताग्रान् विन्ध्याग्रप्रदेशान् पर्वतान् पर्यन्तपर्वतान् ॥ २–५ ॥

गो० टी०—निर्जलमित्यादि । वन्ध्यफलाः फलैर्वन्ध्याः निष्फला इत्यर्थः । स्निग्धपत्रा इत्यादि । अत्रापि न सन्तीत्यनुषज्यत इति केचित् तन्न, भ्रमरैश्चापि वर्जिता इत्यस्यानन्वयात् । किं तु भ्रमरैरप्यनुपभुक्तं स्थलपद्मिनीमात्रमित्यर्थः । सर्वेऽपि महातटाकाः स्थलपद्मिनीत्वं गता इति भावः । अन्यं देशं विविशुरिति पूर्वेणान्वयः ॥ ६–१० ॥

६–७ ] ति० टी०—यत्र निर्जलत्वादिवद्गहनं तादृशान्यपि दुरन्वेष्याणि विचित्येत्यन्वयः । भृशपीडिता निर्जलारण्यान्वेषणेन क्षुत्पिपासाभ्यां पीडिताः । स देशो निर्जलादिदेशो यद्यपि दुरन्वेष्यः, अथापि तं विचित्य ततस्तं देशं त्यक्त्वाऽन्यदेशं विविशुरित्यग्रिमेणान्वयः ॥ ६ ॥ ७ ॥

८–९ ] ति० टी०—वन्ध्यफला अनुत्पन्नफलाः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—वल्ल्यो वृक्षाद्याश्रिताः । वीरुधो भूम्याधाराः । स्थले यत्र स्थले नेत्यनुकर्षः ॥ १० ॥

रा० टी०—स इति । स तैः परिमार्गितो देशो यतो गुहागहनवान् अतः दुरन्वेषः अन्यैः परिमार्गयितुमशक्योऽस्तीति शेषः । अर्धं पृथक् । निर्जनमिति । निर्जनत्वादिविशिष्टं तं देशं त्यक्त्वा परित्यज्य सर्वे हरियूथपाः आसन्निति शेषः । अर्धद्वयमेकान्वयि ॥ ६ ॥

रा० टी०—ताहशानीति । तादृशानि निर्जनत्वादिविशिष्टानि अरण्यानि विचित्य भृशपीडिताः अकुतोभयाः वानराः यत्र वन्ध्यफलाः सर्वकालं फलाभाववन्तः विपुष्पाः पुष्परहिताः वृक्षाः सन्ति सरितो निस्तोयास्तोयरहिताः अत एव यत्र मूलं सुदुर्लभमत एव यत्र महिषादयो न सन्ति अत एवात्र वृक्षाः वृक्षजातीया औषध्यादयो न यत्र स्थले स्निग्धपत्राः फुल्लपङ्कजाः सुगन्धाः पद्मिन्यो न सन्ति अत एव भ्रमरैर्विवर्जिताः तमन्यं देशं विविशुः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ ७–११ ॥

११ ] ति० टी०—भ्रमरैर्विवर्जिता विगतं वर्जितं याभ्यस्ताः संयुक्ता इत्यर्थः । तादृशाः फुल्लपङ्कजाश्च यत्र न सन्ति । यत्र वने कण्डुर्नाम महर्षिरासीत् ॥ ११ ॥

रा० टी०—तस्य निर्जलत्वादिविशिष्टत्वे हेतुमाह—कण्डुरिति । परमामर्षी अपराधासहनशीलः नियमैः इन्द्रियनिग्रहादिभिः उपलक्षितः अत एव दुष्प्रधर्षणः प्रधर्षयितुमशक्यः कण्डुर्नाम महर्षिस्तस्मिन् अवसदिति शेषः ॥ १२ ॥

गो० टी०—देशस्य तादृशत्वे निमित्तमृषिरित्याह—कण्डुरित्यादिना ॥ ११ ॥

१२ ] ति० टी०—वने पूर्वमिति शेषः । इदानीमुक्तलक्षणः ॥ १२ ॥

रा० टी०—तस्य कण्डोः दशवार्षिको बालस्तस्मिन्वने प्रनष्टः कथंचिन्मृतस्तेन हेतुना जीवितान्ताय वनप्रध्वंसाय महामुनिः कण्डुः क्रुद्धोऽभवदिति शेषः ॥ १३ ॥

गो० टी०—तस्येति । तत्र वने विषये जीवितान्ताय तस्य नाशाय कुपितः ॥ १२ ॥

१३ ] ति० टी०—जीवितान्ताय जीवितान्तं गत्वा प्रनष्टस्तेन बालदुर्मरणेन क्रुद्धो मुनिरभूत् ततस्तेन धर्मात्मना शापानुग्रहसमर्थप्रबलधर्मवता । तत्र काले शप्तमभूत् ॥ १३ ॥

रा० टी०—तेनेति । धर्मात्मनाऽपि तेन कण्डुना शप्तं दुराधर्षं कृत्स्नं वनमशरण्यं जलादिरहितमत एव मृगपक्षिविवर्जितम् अभवदिति शेषः ॥ १४ ॥

१ एतदाद्ययोः श्लोकयोः व्यत्यासः गो. पाठे । २ अर्धमेतत् गो. रा. नास्ति । ३ तदेति गो. पाठः । ४ यत्रेति गो पाठः । ५ लता इति गो.पाठः । ६ ऽपीति गो. पाठः । ७ बालः षोडशेति गो. पाठः । ८ तत्रेति गो. पाठः ।

अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम् । तस्य ते काननान्तांस्तु गिरीणां कन्दराणि च ॥ १४ ॥
प्रभवानि नदीनां च विचिन्वन्ति समाहिताः । तत्र चापि महात्मानो नापश्यञ्जनकात्मजाम् ॥ १५ ॥
हर्तारं रावणं वाऽपि सुग्रीवप्रियकारिणः । ते प्रविश्य तु तं भीमं लतागुल्मसमावृतम् ॥ १६ ॥
ददृशुर्भीमकर्माणमसुरं सुरनिर्भयम् । तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवासुरम् ॥ १७ ॥
गाढं परिहिताः सर्वे दृष्ट्वा तं पर्वतोपमम् । सोऽपि तान्वानरान्सर्वान्नष्टाः स्थेत्यब्रवीद्बली ॥ १८ ॥
अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य संगतम् । तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ॥ १९ ॥
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह । स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् ॥ २० ॥
असुरो न्यपतद्भूमौ पर्यस्त इव पर्वतः । ते तु तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः ॥ २१ ॥
व्यचिन्वन्प्रायशस्तत्र सर्वं ते गिरिगह्वरम् । विचितं तु ततः सर्वं सर्वे ते काननौकसः ॥ २२ ॥
अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् । ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ॥
एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०—तेनेति । अशरण्यम् अनाश्रयम् अभवदिति शेषः ॥ १३ ॥

१४ ] ति० टी०—शापस्वरूपमाह—अशरण्यमनावासम् । ते वानरास्तस्य काननान्तान्विचिन्वन्तीत्यन्वयः ॥ १४ ॥

रा० टी०—तस्येति । तस्य सुग्रीवस्य प्रेषितास्ते हनुमदादयः काननान्तान् वनान्तपर्यन्तान् गिरीणां कन्दराणि च नदीनां प्रभवाणि उत्पत्तिस्थानानि च समाहिताः सन्तः विचिन्वन्ति ॥ १५ ॥

गो० टी०—तस्य त इति । नदीनां प्रभवानि गिरिगणमध्यप्रदेशाः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—नदीनां प्रभवान्युत्पत्तिस्थानानि ॥ १५ ॥

रा० टी०—तत्रेति । सुग्रीवप्रियकारिणः हनुमदादयः जनकात्मजां रावणं च नापश्यन् ॥ १६ ॥

१६ ] ति० टी०—ते प्रविश्य वनान्तरमिति शेषः । तमसुरं ददृशुरित्यन्वयः ॥ १६ ॥

रा० टी०—ते इति । ते हनुमदादयः लतागुल्मसमावृतं भीमं वनान्तरं प्रविश्य सुरनिर्भयं वरदानेन देवभयरहितं सुरवरदानात् प्राप्तभयाभावं वा भीमकर्माणमसुरं ददृशुः ॥१७॥

गो० टी०—ते प्रविश्येति । सुरनिर्भयं सुरेभ्यो निर्भयम् १६

१७ ] ति० टी०—सुरेभ्यो निर्भयः सुरनिर्भयः तथा वरदानादिति भावः ॥ १७ ॥

रा० टी०—तमिति । शैलमिव स्थितं घोरं तमसुरं दृष्ट्वा वानराः विव्यथुरिति शेषः, अत एव पर्वतोपमं तं दृष्ट्वा गाढं यथा भवति तथा परिहिताः संनद्धाः अभवन्निति शेषः ॥१८॥

गो० टी०—तं दृष्ट्वेति । गाढं परिहिताः दृढं परिहितवसनाः अभवन् ॥ १७ ॥

१८–२१ ] ति० टी०—गाढं परिहिता दृढं परिबद्धवस्त्राः संनद्धा इति यावत् ॥ १८–२१ ॥

रा० टी०—स इति । असुरोऽपि यूयं सर्वे नष्टाः स्थ इति सर्वान् वानरान् अब्रवीत्, सङ्गतं बद्धं मुष्टिमुद्यम्य अभ्यधावत च ॥ १९ ॥

रा० टी०—तमिति । वालिपुत्रोऽङ्गदः आपतन्तमसुरं रावणोऽयमिति ज्ञात्वा अभिजघान ॥ २० ॥

गो० टी०—सोऽपीति ॥ १८ ॥ १९ ॥

रा० टी०—स इति । वालिपुत्राभिहतः सोऽसुरः वक्त्राच्छोणितमुद्वमन् सन् पर्यस्तः प्रक्षिप्तः पर्वत इव भूमौ न्यपतत् ॥ २१ ॥

रा० टी०—ते इति । ते घोरप्राये तस्मिन् असुरे निरुच्छ्वासे उच्छ्वासरहिते सति जितकाशिनः जितेन जयेन काशः प्रकाशो येषां ते वानराः सर्वं गिरिगह्वरं विचिन्वन् । आगमशासनस्यानित्यत्वात् अड्विरहः ॥ २२ ॥

गो० टी०—पर्यस्तः पातितः ॥ २० ॥

गो० टी०—तेऽपीति । तस्मिन्नसुरे निरुच्छ्वासे मृत इत्यर्थः। तस्मिन्नसुरे रावणभ्रान्त्या तत्समीपवने चिरमन्वेषितवन्त इति बोध्यम् ॥ २१ ॥

२२–२३] ति० टी०—सर्वं विचितं ज्ञात्वेति शेषः २२॥२३

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टचत्वारिंशः सर्गः ॥४८॥

१ चेति गो. पाठः । २ ऽऽश्रितिति गो. पाठः । ३ क्रूरेति गो. पाठः । ४ अपरमिति गो. पाठः । ५ संहितमिति गो. पाठः । ६ ऽपीति गो. पाठः । ७ व्यचिन्वन्निति गो. पाठः । ८ तदिति गो. पाठः । ९ कृत्स्नेति गो. पाठः । १० काननं पुनरिति गो. पाठः ।

# एकोनपञ्चाशः सर्गः ।

अटव्यटनश्रान्तानपि फलानिष्पत्तेः सुनिर्विण्णान्वानरान् सुग्रीवचण्डतामन्वेषणकालातिपातं च संस्मारयन्नङ्गदः फलसंभावनया प्रोत्साहयन्नन्वेषणे प्रवर्तयति । अङ्गदवचसः समर्थनाद्गन्धमादनेनोद्दीपितोत्साहास्ते निर्गत्य रजतगिरिगुहादीनि विचिन्वन्तः सुश्रान्ताः क्वचन वृक्षखण्डे किंचिद्विश्रम्य पुनरन्वेषणसनद्धा बभूवुः ।

अथाङ्गदस्तदा सर्वान्वानरानिदमब्रवीत् । परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ॥ १ ॥
वनानि गिरयो नद्यो दुर्गाणि गहनानि च । दरी गिरिगुहाश्चैव विचिताः सर्वमन्ततः ॥ २ ॥
तत्र तत्र सहास्माभिर्जानकी न च दृश्यते । तथा रक्षोऽपहर्ता च सीतायाश्चैव दुष्कृती ॥ ३ ॥
कालश्च नो महान्यातः सुग्रीवश्चोग्रशासनः । तस्माद्भवन्तः सहिता विचिन्वन्तु समन्ततः ॥ ४ ॥
विहाय तन्द्रीं शोकं च निद्रां चैव समुत्थिताम् । विचिनुध्वं तथा सीतां पश्यामो जनकात्मजाम् ॥ ५ ॥
अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम् । कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥
अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकसः । खेदं त्यक्त्वा पुनः सर्वं वनमेव विचिन्वताम् ॥ ७ ॥

रा० टी०–विचितमिति । सर्वं काननं विचितं कृत्वा अन्यत् विलक्षणमपरं गिरिगह्वरं विविशुः ॥ २३ ॥

गो० टी०–विचितं त्विति । अपरम् अदूरम् 'परं दूरान्यमुख्येषु' इति वैजयन्ती । गिरिगह्वरं गिरिमध्यप्रदेशम् ॥२२॥

रा० टी०–ते इति । विचित्य खिन्नाः वस्तुप्राप्त्यभावेन प्राप्तखेदाः निष्पत्य तस्मान्निस्सृत्य एकान्ते वृक्षमूले समागतास्ते वानराः दीनमानसाः सन्तः निषेदुः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०–ते विचित्येति । विनिष्पत्य विनिर्गत्य समागताः संघीभूताः ॥ २३ ॥

अस्मिन्सर्गे चतुर्विंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

१–२ ] ति० टी०–समाश्वास्य वानरानिति शेषः ॥१॥२॥

रा० टी०–वानरान् प्रति अङ्गदोक्तिमाह–अथेति । अथ वृक्षमूलस्थित्यनन्तरं परिश्रान्तो महाप्राज्ञोऽङ्गदः शनैः समाश्वास्य वानरान् इदं वचोऽब्रवीत् ॥ १ ॥

रा० टी०–तद्वचनाकारमाह–वनानीत्यादिभिः । वनादयोऽन्ततो विचिताः अस्माभिरिति शेषः ॥ २ ॥

गो० टी०–पुनः प्रदेशान्तरान्वेषणमेकोनपञ्चाशे–अथाङ्गद इत्यादि । सह युगपत् दाक्ष्यम् उत्साहः "दक्ष उत्साहे" इत्युक्तेः । मनसश्चापराजयः धैर्यमित्यर्थः । वनमेतत् विचीयताम् अन्विष्यताम् । मीलनं नेत्रमीलनं कर्तव्यमकृत्वा तूष्णींभाव इत्यर्थः । खेदमिति । विचिन्वतामिति चिनोतेर्लोटि प्रथमपुरुषबहुवचने रूपम् । 'विचीयताम्' इति पाठे युष्माभिरिति शेषः ॥ १—१० ॥

३ ] ति० टी०–रक्षस्तद्रूपोपहर्तेत्यर्थः ॥ ३ ॥

रा० टी०–तत्रेति । तत्र तत्र अन्वेषिते स्थले स्थले सहा दुःखानि सहमाना जानकी सीताया अपहर्ता रक्षश्च अस्माभिर्न दृश्यते अदन्तो रक्षःशब्दोऽपि अत एव सान्ता अदन्ता अपि पक्षः सानुकूलः अत एव भद्रादिवन्नार्षकल्पना ॥ ३ ॥

४ ] ति० टी०–नो महान्यातः मासमध्य इति शेषः । तन्मध्येऽल्पोऽवशिष्ट इति भावः । परावृत्य गमने महदनिष्टमित्याह—सुग्रीवश्चेति ॥ ४ ॥

रा० टी०–काल इति । कालः नियमितान्वेषणसमयः महान् बहुर्यातो व्यतीतः सुग्रीवश्च उग्रशासनस्तस्मात् सहिताः भवन्तो विचिन्वन्तु ॥ ४ ॥

५ ] ति० टी०–तथा विचिनुध्वम्, यथा सीतां पश्याम इत्यन्वयः ॥ ५ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–विहायेति । शोकं समुत्थितां निद्रां च विहाय सीतां यथा पश्यामस्तथा विचिनुध्वम् ॥ ५ ॥

६ ] ति० टी०–अनिर्वेदमखेदम् दाक्ष्यं सामर्थ्यम् अपराजयं कार्यापराङ्मुखत्वम् । एतद्वक्ष्यमाणम् ॥ ६ ॥

रा० टी०–अनिर्वेदमिति । अनिर्वेदं खेदराहित्यं विरक्तिराहित्यं वा दाक्ष्यं सामर्थ्यं च मनसः अपराजयं न्यूनीकरणाभावं च कार्यसिद्धिकराणि आहुस्तस्मात् अहमेतद्ब्रवीमि ॥६॥

७ ] ति० टी०–हे वनौकसः ! इदं दुर्गवनमद्यापि विचिन्वन्तु भवन्तः । आदरात्पुनराह—खेदं त्यक्त्वा पुनर्विचिन्वताम् ॥ ७ ॥

रा० टी०–अद्येति । विचिन्वताम् अन्वेषणसाधकानां करचरणादीनां खेदं श्रमं त्यक्त्वा विस्मृत्य अद्यापीदं वनं विचिन्वन्तु ॥ ७ ॥

---

१ आश्वस्येति गो. पाठः । २ दर्य इति गो. पाठः । ३ विचितानि समन्तत इति गो. पाठः । ४ तदेति गो. पाठः । ५ हृता येन सीता सुरसुतोपमेति गो. पाठः । ६ व इति गो. पाठः । ७ जय इति गो. पाठः । ८ तदिति गो. पाठः । ९ सर्वैरिति गो. पाठः । १० चीयतामिति गो. पाठः ।

अवश्यं [1]कुर्वतां तस्य दृश्यते कर्मणः फलम् । परं निर्वेदमागम्य नहि [3]नोन्मीलनं क्षमम् ॥ ८ ॥
सुग्रीवः [4]क्रोधनो राजा तीक्ष्णदण्डश्च [5]वानराः । भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९ ॥
हितार्थमेतदुक्तं वः क्रियतां यदि रोचते । उच्यतां [6]हि क्षमं [7]यत्तत्सर्वेषामेव वानराः ॥ १० ॥
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः । उवाच [8]व्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥
सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह । हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥ १२ ॥
पुनर्मार्गामहे शैलान्कन्दरांश्च शिलास्तथा । काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥
यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना । विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि संगताः ॥ १४ ॥
ततः समुत्थाय पुनर्वानरास्ते महाबलाः । विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥
ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् । शृङ्गवन्तं दरीवन्तमधिरुह्य च वानराः ॥ १६ ॥
तत्र [11]लोध्रवनं रम्यं सप्तपर्णवनानि च । विचि[12]न्वन्तो हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७ ॥
तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः । न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८ ॥
ते तु दृष्टिगतं [13]दृष्ट्वा तं शैलं बहुकन्दरम् । [14]अध्यारोहन्त हरयो वीक्षमाणाः समन्ततः ॥ १९ ॥
अवरुह्य ततो भूमिं [15]भ्रान्ता विगतचेतसः । [16]स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥
ते मुहूर्तं समाश्वस्ताः किंचिद्भग्नपरिश्रमाः । पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१ ॥

८ ] ति० टी०—निर्वेदं खेदम् । नोन्मीलनमनुन्मीलनमनुद्योग इति यावत् । न क्षमं न युक्तम् ॥ ८ ॥

रा० टी०—अवश्यमिति । क्रियमाणस्य कर्मणः फलमवश्यं दृश्यते अतः परं निर्वेदं कार्याद्विरक्तिमागम्य प्राप्य नोन्मीलनम् अनुन्मीलनमुत्साहाभाव इत्यर्थः नैव क्षमं युक्तम् ॥ ८ ॥

९ ] ति० टी०—तत्र हेतुः—सुग्रीव इति ॥ ९ ॥

रा० टी०—सुग्रीव इति । वानरो राजा सुग्रीवः क्रोधनः कार्याभावे अतीवक्रोधयुक्तो भवतीत्यर्थः, अतस्तस्य सुग्रीवस्य महात्मनो रामस्य च भेतव्यम् । संबन्धसामान्यविवक्षया षष्ठी ॥ ९ ॥

१०–११ ] ति० टी०—यदि मदुक्तमतेन रोचते तर्हि यदन्यत्क्षमं तदुच्यताम् ॥ १० ॥ ११ ॥

रा० टी०—हितार्थमिति । हितार्थं हितसाधकमेतत् उक्तं मद्वचनं यदि वो रोचते तर्हि क्रियतां सर्वेषां यत्क्षमं युक्तं तदुच्यतां च ॥ १० ॥

रा० टी०—अङ्गदस्येति । गन्धमादनो नाम वानरः अङ्गदस्य वचः श्रुत्वा पिपासाश्रमखिन्नया पिपासापरिश्रमोभयजनितखेदयुक्तया वाचा उवाच ॥ ११ ॥

गो० टी०—अङ्गदस्येत्यादि । कन्दरान् भेदान् विचिन्वन्तु वनं सर्व इति भवन्त इति शेषः ॥ ११—२२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

१२–१७ ] ति० टी०—वो युष्माकम् । यदङ्गद उवाच तत्सदृशम् तस्यैवेति शेषः ॥ १२–१७ ॥

रा० टी०—तद्वचनाकारमाह—सदृशमिति । यद्वाक्यमङ्गद उवाच तत् वः सदृशं योग्यमतः हितमनुकूलमस्याङ्गदस्य भाषितं क्रियतां युष्माभिरिति शेषः ॥ १२ ॥

रा० टी०—पुनरिति । शैलादीन् पुनर्मार्गामहे ॥ १३ ॥

रा० टी०—यथेति । सङ्गताः कृतसंमताः सर्वे भवन्तः सुग्रीवेणोद्दिष्टानि सर्वाणि गिरिदुर्गाणि यथावद्विचिन्वन्तु ॥ १४ ॥

रा० टी०—तत इति । ततः गन्धमादनवचनश्रवणानन्तरं सीतादर्शनकाङ्क्षिणः महाबलाः वानराः समुत्थाय विन्ध्यकाननसंकीर्णां विन्ध्यवननिबिडां दक्षिणां दिशं विचेरुः ॥ १५ ॥

रा० टी०—ते इति । शारदाभ्रप्रतिमं शरत्कालिकमेघसदृशं श्रीमद्रजतपर्वतं हरिवरास्ते वानराः अधिरुह्य तत्र रजतपर्वते विद्यमानं लोध्रवनं विचिन्वन्तः आसन्निति शेषः । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—तस्य रजतपर्वतस्य ॥ १८ ॥

रा० टी०—तस्येति । तस्य रजतपर्वतस्य अग्रमधिरूढाः श्रान्तास्ते वानराः वैदेहीं न पश्यन्ति स्म ॥ १८ ॥

१९–२१ ] ति० टी०—दृष्टिगतं दृष्टिगोचरम् । अध्यारोहन्त अवारोहन्तेत्यर्थः ॥ १९–२१ ॥

रा० टी०—ते इति । ते हरयो वानराः दृष्टिगतं दृष्टिविषयं शैलं बहुकन्दरं दृष्ट्वा अध्यारोहन्त अवारोहन्त ॥ १९ ॥

१ क्रियमाणस्येति गो. रा. पाठः । २ अलमिति गो. पाठः । ३ नो मीलनमिति गो. पाठः । ४ कोपन इति गो. पाठः । ५ वानर इति गो. पाठः । ६ वेति गो. पाठः । ७ यन्न इति गो. पाठः । ८ अव्यक्तयेति रा. पाठः । ९ दरीरिति गो. पाठः । १० सर्वश इति गो. पाठः । ११ क्रोद्रेति गो. पाठः । १२ न्वैस्ते इति गो. पाठः । १३ कृत्वेति गो. पाठः । १४ अवारोहन्तेति गो. पाठः । १५ भ्रान्ता इति गो. पाठः । १६ स्थित्वेति गो. पाठः ।

हनुमत्प्रमुखास्तावत्प्रस्थिताः प्लवगर्षभाः । विन्ध्यमेवादितः कृत्वा विचेरुश्च समन्ततः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ।

दुरन्वेषविन्ध्यगुहादिष्वन्वेषणेनैव सुग्रीवादिष्टकालातिपाते क्षुत्पिपासार्दिता हनुमदादयः ऋक्षबिलाख्यां कांचिद्दरीं ददृशुः । बिलद्वाःस्थार्द्रपक्षखगदर्शनादनुमितान्तर्जलां तां गाढान्धतमोवृतामप्येकैकहस्तावलम्बेन रचितमालाः प्राविशन् । आक्रमितकिंचिदन्तराश्च काञ्चनवृक्षादिभासोद्योतमानेऽद्भुतप्रदेशे कांचित्तपस्विनीं ददृशुः । तत्प्रदेशविषयजिज्ञासुर्हनुमांस्तामभिवाद्य पृच्छति ।

सह ताराङ्गदाभ्यां तु संगम्य हनुमान्कपिः । विचिनोति चॅ विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥
सिंहशार्दूलजुष्टांश्च गुहाश्च परितस्तदा । विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २ ॥
आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् । तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ॥ ३ ॥
स हि देशो दुरन्वेष्यो गुहागहनवान्महान् । तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम् ॥ ४ ॥
परस्परेण रहिता अन्योन्यस्याविदूरतः । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ ५ ॥
मैन्दश्च द्विविदश्चैव हनूमाञ्जाम्बवानपि । अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६ ॥

रा० टी०—अवरुह्येति । श्रान्ताः परिश्रमवन्तः अत एव विगतचेतसः संचलितचित्ताः वानरास्ततः रजतपर्वतात् भूमिमवरुह्य प्राप्य वृक्षमूलमुपाश्रिताः सन्तस्तत्र मुहूर्तं स्थिताः बभूवुरिति शेषः ॥ २० ॥

रा० टी०—ते इति । मुहूर्तं समाश्वस्ताः अत एव किंचित् भग्नपरिश्रमाः वानराः कृत्स्नां दक्षिणां दिशं मार्गितुं पुनरुद्यताः अभवन्निति शेषः ॥ २१ ॥

२२ ] ति० टी०—आदितस्तावद्विन्ध्यं विचेरुः अन्वेषणायेति शेषः । तावच्छब्दो वाक्यालंकारे ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥४९॥

रा० टी०—हनुमदिति । प्रस्थिताः उद्यताः कृतोद्योगाः हनुमत्प्रमुखाः प्लवगर्षभाः तावत् पूर्वं विन्ध्यमेव समन्ततो विचेरुः ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

१ ] ति० टी०—सहेति ॥ १ ॥

रा० टी०—तदन्वेषणमेवाह—सहेत्यादिभिः । हनुमान् कपिस्ताराङ्गदाभ्यां सह सङ्गम्य नगेन्द्रस्य विन्ध्यस्य विषमेषु दुर्गमेष्वित्यर्थः, महाप्रस्रवणेषु तत्समीपेषु वर्तमानाः सिंहशार्दूलजुष्टाः गुहाः बहुगुहावत्यः गुहावनानि च विचिनोति व्यचिनोत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथ ऋक्षबिले स्वयंप्रभादर्शनं पञ्चाशे—सहेत्यादि ॥ १ ॥

२ ] ति० टी०—विषमेषु क्लेशजनकेषु ॥ २ ॥

गो० टी०—सिंहेति । नगेन्द्रस्य शार्दूलजुष्टेषु विषमेषु विषमप्रदेशेषु शिलाः महाप्रस्रवणेषु सरितश्च विचिनोति स्मेति पूर्वेणान्वयः ॥ २ ॥

३ ] ति० टी०—दक्षिणपश्चिमां कोटिं नैरृत्यभागीयशृङ्गम् स कालः सुग्रीवकल्पितः कालः व्यत्यवर्तत व्यतिक्रान्तः ॥३॥

रा० टी०—आसेदुरिति । तस्य उक्तस्य शैलस्य दक्षिणपश्चिमां नैरृत्यकोणस्थां कोटिं शृङ्गमासेदुः तत्रैव शृङ्गे वसतां तेषां सः अमार्गणीयः कालः रात्रिसमयः व्यत्यवर्तत व्यतीतोऽभवत् ॥ ३ ॥

गो० टी०—आसेदुरिति । कालः सुग्रीवोक्तमासः । मासः पूर्णो बिलस्थानामित्युत्तरत्राङ्गदवचनस्य बिल एवान्यो मासो गत इत्यर्थो वक्ष्यते ॥ ३ ॥

४ ] ति० टी०—स देशो नैरृत्यविन्ध्यकोटिप्रदेशः ॥ ४ ॥

रा० टी०—स इति । गुहागहनवान् स देशः यद्यपि दुरन्वेष्यस्तथापि वायुसुतो हनुमान् विचिनोति स्म । अन्यकर्तृकविचयनस्यापि सत्त्वेऽपि प्राधान्यात् हनुमन्मात्रोक्तिः ॥ ४ ॥

गो० टी०—ननु विचेतव्यप्रदेशेषु बहुषु विद्यमानेषु कथमत्रैव मासं क्षपितवन्त इत्याशङ्क्याह—स हीति ॥ ५ ॥

गो० टी०—तत्रेति । सङ्गम्येत्यध्याहार्यम् । वायुसुतः हनुमान् अन्योन्यस्याविदूरतः परस्परेण संगमय्य सर्वं पर्वतं विचिनोति स्मेति संबन्धः ॥ ६ ॥

५–६ ] ति० टी०—परस्परेण रहिताः प्रत्येकमन्योन्यस्याविदूरतो भूत्वा हनुमान्गजादयश्च विचिन्वन्ति स्म ॥६॥५॥

---

१ ते त्विति गो. पाठः । २ तावदिति गो. पाठः । ३ ते ततस्तत इति गो. पाठः । ४ स्मेति गो. पाठः । ५ जुष्टेषु शिलाश्च सरितस्तथेति गो. पाठः । ६ हनुमानिति गो. पाठः । ७ सुषेणो जाम्बवान्नल इति गो. पाठः ।

गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् । विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७ ॥
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् । क्षुत्पिपासापरीतास्तु श्रान्तास्तु सलिलार्थिनः॥ ८ ॥
अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् । तत्र क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् ॥ ९ ॥
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः । ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ॥ १० ॥
विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः । संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ॥ ११ ॥
अभ्यपद्यन्त संहृष्टास्तेजोवन्तो महाबलाः । नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ॥ १२ ॥
दुर्दर्शमिव घोरं च दुर्विगाह्यं च सर्वशः । ततः पर्वतकूटाभो हनूमान्मारुतात्मजः ॥ १३ ॥
अब्रवीद्वानरान्घोरान्कान्तारवनकोविदः । गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् १४ ॥
वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् । अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः१५ ॥
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वशः । नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ॥ १६ ॥

---

७ ] ति० टी०—विवृतमनावृतद्वारम् ॥ ७ ॥

रा० टी०—अन्वेषणप्रकारमाह—परस्परेणेति । अन्योन्यस्य अविदूरतः समीपे एव स्थिताः परस्परेण रहिताः साहाय्यहीनाः गजादयः दक्षिणां दिशं विचिन्वन्तः सन्तः ततस्तान् प्रसिद्धान् गिरिजालावृतान् पर्वतसमूहाच्छादितान् देशान्मार्गित्वा तत्र देशे विवृतमनाच्छादितद्वारं बिलं ददृशुः । श्लोकत्रयमेकान्वयि ॥ ५—७ ॥

गो० टी०—गज इत्यादि । चकाराद्गवयमांश्च गजादयः गिरिजालावृतान् देशान्मार्गित्वा ततो दक्षिणां दिशं विचिन्वन्तः तत्र विवृतं विस्तृतं बिलं ददृशुरिति संबन्धः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—दुर्गं दुर्गमम् । दानवेन मयेन ॥ ८ ॥

रा० टी०—दुर्गमिति । दानवेनाभिरक्षितमत एव दुर्गं दुर्गमं लतावृक्षैरवकीर्णम् ऋक्षबिलं नाम महाबिलं क्षुत्पिपासापरीताः अत एव श्रान्ताः खिन्ना अत एव सलिलार्थिनः वानराः ददृशुः । सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०—दुर्गमित्यादि । दानवेन मयेन ऋक्षबिलं नाम ऋक्षबिलमिति प्रसिद्धम् महाबिलं ददृशुरिति पुनरुक्तिर्गुणान्तरविधानाय ॥ ८ ॥

९ ] ति० टी०—तत्र ततः निष्क्रमन्निराक्रमन् ॥ ९ ॥

रा० टी०—तत्रेति । तत्र तस्माद् बिलात् पद्मरेणुभिः रक्ताङ्गाः जलार्द्राः क्रौञ्चादयः निष्क्रमन् निरक्रमन् । अर्धद्वयमेकान्वयि ॥ ९ ॥

गो० टी०—तत इति । निष्क्रमन् निरक्रमन् ॥ ९ ॥

१० ] ति० टी०—सुगन्धि, बिलान्तर्वक्ष्यमाणदिव्यगन्धपुष्पसंबद्धवातसङ्गात् ॥ १० ॥

रा० टी०—तत इति । ततो दर्शनानन्तरं सुगन्धि वक्ष्यमाणपुष्पितदिव्यतरुवायुसंबन्धात् शोभनगन्धयुक्तं तद्बिलमासाद्य प्राप्य वानरर्षभाः विस्मयव्यग्रमनसः अपूर्वदर्शनजनितविस्मयहेतुकचञ्चलचित्ता बभूवुः ॥ १० ॥

गो० टी०—ततस्तदिति । दुरतिक्रमं दुष्प्रवेशम् ॥ १० ॥

११ ] ति०टी०—संजातपरिशङ्काः। संजातजलसंभावनाः ११

रा० टी०—संजातेति । संजाता शङ्का जलविषयकतर्को येषां ते अत एव संहृष्टाः प्लवगोत्तमाः नानासत्त्वसमाकीर्णम् अतिघोरं भयावहमित्यर्थः, दुर्दर्शं द्रष्टुमशक्यं दुर्विगाह्यं बिलम् अभ्यपद्यन्त । अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

गो०टी०—संजातेति । संजातपरिशङ्काः किमिदं पातालम् उतान्यन्मायामयमिति संदिहानाः असंहृष्टाः सन्तः अभ्यपद्यन् अभ्यपद्यन्त ॥ ११ ॥

१२–१३] ति० टी०—दैत्येन्द्रनिलयः पातालम् ॥१२॥१३॥

गो०टी०—नानेति श्लोको बिलविशेषणम् ॥ १२ ॥

रा० टी०—तत इति । कान्तारवनकोविदो दुर्गमारण्याभिज्ञाता हनुमान् घोरान् वानरान् अब्रवीत् ॥ १३ ॥

गो० टी०—तत इति । कान्तारे दुर्गमार्गे वने कोविदः समर्थः ॥ १३ ॥

१४–१६ ] ति० टी०—कान्तारवनकोविदस्तत्प्रवेशादौ समर्थः ॥ १४–१६ ॥

रा० टी०—तद्वचनाकारमाह—गिरीति । दक्षिणां दिशं प्राप्य गिरिजालावृतान् देशान् मार्गित्वा परिश्रान्ता वयं मैथिलीं न पश्यामः ॥ १४ ॥

रा० टी०—अस्मादिति । जलार्द्राः हंसादयः अस्मात् बिलात् निष्पतन्ति तथा बिलद्वारि स्निग्धाः पादपास्तिष्ठन्ति अतः सलिलवान् कूपो वा यदि वा अथवा ह्रदोऽस्तीति शेषः, नूनं निश्चितमेतत् । अर्धचतुष्टयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—गिरीति । गिरिजालावृतान् देशान् । दक्षिणां दिशम् तादृशदेशरूपां दक्षिणां दिशमित्यर्थः ॥ १४ ॥ १५ ॥

गो० टी०—नूनमिति । अस्तीति शेषः ॥ १६ ॥

---

१ चेति गो. पाठः । २ पद्यन्तेति गो. पाठः । ३ अतीति गो. पाठः । ४ गाह्यमिति गो. पाठः । ५ हनुमान्वचनेति गो. पाठः । ६ सर्वानिति गो. पाठः । ७ चेति रा. पाठः । ८ सर्वत इति गो. पाठः ।

तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः । ईत्युक्तास्तद्विलं सर्वे विविशुस्तिमिरावृतम् ॥ १७ ॥
अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् । निशाम्य तस्मात्सिंहांश्च तांस्तांश्च मृगपक्षिणः ॥ १८ ॥
प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् । न तेषां सज्जते दृष्टिर्न तेजो न पराक्रमः ॥ १९ ॥
वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते । ते प्रविष्टास्तु वेगेन तद्विलं कपिकुञ्जराः ॥ २० ॥
प्रकाशं चाभिरामं च ददृशुर्देशमुत्तमम् । ततस्तस्मिन्बिले भीमे नानापादपसंकुले ॥ २१ ॥
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् । ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ॥ २२ ॥
परिपेतुर्बिले तस्मिन्कंचित्कालमतन्द्रिताः । ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ॥ २३ ॥
आलोकं ददृशुर्वीरा निराशा जीविते यदा । ततस्तं देशमागम्य सौम्या वितिमिरं वनम् ॥ २४ ॥
ददृशुः काञ्चनान्वृक्षान्दीप्तवैश्वानरप्रभान् । सालांस्तालांस्तमालांश्च पुंनागान्वञ्जुलान्धवान् २५ ॥
चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् । स्तबकैः काञ्चनैश्चित्रै रक्तैः किसलयैस्तथा ॥ २६ ॥

१७ ] ति० टी०—इत्युक्ताः हनमतेति शेषः ॥ १७ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण उक्ताः हनुमता बोधिताः सर्वे हरयः अचन्द्रसूर्यं चन्द्रसूर्यादिरहितम् अत एव तिमिरावृतम् अत एव रोमहर्षणं भयजनकत्वेन रोमोद्गमकारकं तद्विलं विविशुः ॥ १७ ॥

गो० टी०—इत्युक्त्वेति । हनुमदुक्तप्रकारेण सर्वेऽप्युक्त्वा विविशुः तिमिरावृतं ददृशुश्च । अचन्द्रसूर्यं चन्द्रसूर्यकिरणरहितम् ॥ १७ ॥

१८ ] ति० टी०—निशाम्यावलोक्य ॥ १८ ॥

रा० टी०—निशाम्येति । तस्मात् बिलात् निर्गच्छत इति शेषः सिंहादीन् निशाम्य अवलोक्य हरिशार्दूलाः तिमिरसंवृतं बिलं प्रविष्टाः ॥ १८ ॥

गो० टी०—निशाम्येति । तस्मान्निर्गच्छतः सिंहान् तांस्तान् नानाप्रकारान् मृगपक्षिणश्च ॥ १८ ॥

१९-२१ ] ति० टी०— न सज्जते न प्रतिबध्यते । तेजः प्रभावः । अन्ये तु तेषां दृष्टिर्न सज्जते तत्रत्यपदार्थेष्विति शेषः, तिमिरावृतत्वात्, अत एव तेजःपराक्रमयोरपि कुण्ठितगमनम् । यद्यपि वायोरिव गतिस्तथाऽपि यतो दृष्टिस्तमसि प्रतिबद्धा वर्तते, अतो वेगेन परस्परहस्तग्रहणपूर्वकं प्रविष्टा इत्यर्थः । अत एव ' गृह्य हस्तैः परस्परम् ' इत्यग्रे हनुमदुक्तिरित्याहुः ॥ १९-२१ ॥

रा० टी०—नेति । तेषां वानराणां दृष्टिप्रभृति न सज्जते निरुध्यते अत एव तेषां दृष्टिस्तमसि वर्तते वायोरिव गतिश्च ॥ १९ ॥

गो० टी०—न तेषामिति । वर्तते अयत्नपूर्वं प्रवर्तत इत्यर्थः ॥ १९ ॥

रा० टी०—ते इति । प्रविष्टास्ते कपिकुञ्जराः प्रकाशं शोभितम् अभिरामं सुखप्रदं देशं ददृशुः दूरतोऽवलुलोकिरे ॥२०॥

गो० टी०—ते प्रविष्टा इति । प्रकाशं निस्तमस्कम्॥२०॥

रा० टी०—तत इति । ततस्तद्देशावलोकनानन्तरम् अन्योन्यं संपरिष्वज्य तद्देशावलोकनजनितानन्देनालिङ्ग्य तस्मिन् भीमे बिले योजनमन्तरं देशं जग्मुः ॥ २१ ॥

गो० टी०—संग्रहणोक्तं प्रपञ्चयति—ततस्तस्मिन्नित्यादिना । अन्योन्यं संपरिष्वज्य अन्योन्यं हस्तावलम्बनं कृत्वा ॥ २१ ॥

२२ ] ति० टी०—अन्योन्यं संपरिष्वज्य तिमिरदेशविनिर्गमजसंतोषवशादिति शेषः । यद्वाऽन्योन्यं हस्तावलम्बनं कृत्वा हस्तेन परस्परस्योरआदि सम्यग्धृत्वेति यावत् पूर्वोक्तस्यैव विस्तरः । नष्टसंज्ञास्तृषावशात्, तदाह—तृषिता इति॥२२॥

रा० टी०—ते इति । तृषिताः पिपासावन्तः अत एव सलिलार्थिनः अत एव नष्टसंज्ञाः तल्लाभाभावहेतुकविवेकरहिताः अत एव संभ्रान्ताः चञ्चलचित्तास्ते वानराः तस्मिन् बिले परिपेतुः अत एव कंचित्कालमतन्द्रिता अभवन्निति शेषः ॥ २२ ॥

गो० टी०—त इति । परिपेतुः जग्मुः । कंचित्कालमित्यत्यन्तसंयोगे द्वितीया ॥ २२ ॥

२३ ] ति० टी०—परिपेतुरिति अधोमार्गावलम्बनान्धकारे गताः ॥ २३ ॥

रा० टी०—ते इति । परिश्रान्तास्तथा जीविते निराशाः प्लवङ्गमाः आलोकं प्रकाशितदेशं ददृशुः ॥ २३ ॥

गो० टी०—ते कृशा इति । आलोकं प्रकाशम्॥२३-२५॥

२४-२६] ति० टी०—आलोकमेव ददृशुः, न तु जलम् । जीविते निराशा यदा बभूवुस्तदोच्यमानलक्षणं देशमागम्य काञ्चनान्वृक्षांश्च ददृशुः । यद्वा जीविते निराशा बभूवुस्तदा भगवत्कृपया लोकं ददृशुरुच्यमानविशेषणे देशे काञ्चनान्वृक्षान्ददृशुः ॥ २४—२६ ॥

रा० टी०—तत इति । सौम्याः वानरास्ततस्तितिमिराव-

१ इत्युक्त्वेति गो. पाठः । २ चक्षुरिति गो. पाठः । ३ प्रकाशममीति गो. पाठः । ४ दुर्गे इति गो. पाठः । ५ तदेति गो. पाठः । ६ सौम्यमिति गो. पाठः । ७ च पुंनागान्ककुभानिति गो. पाठः ।

आपीडैश्च लताभिश्च हेमाभरणभूषितान् । तरुणादित्यसंकाशान्वै[1]दूर्यमयवेदिकान् ॥ २७ ॥
विभ्राजमानान्वपुषा पादपांश्च हिरण्मयान् । नीलवैदूर्यव[2]र्णाश्च पद्मिनीः पत[3]गैर्वृताः ॥ २८ ॥
महद्भिः का[4]ञ्चनैर्वृक्षैर्वृतं बालार्कसंनिभैः । जातरूपमयैर्मत्स्यैर्महद्भिश्चा[5]थ पङ्कजैः ॥ २९ ॥
नलिनीस्तत्र ददृशुः प्रसन्नसलिला[6]युताः । काञ्चनानि विमानानि राजतानि तथैव च ॥ ३० ॥
तपनीयगवाक्षाणि मुक्ताजालावृतानि च । हैमराजतभौमानि वैदूर्यमणिमन्ति च ॥ ३१ ॥
ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः । पुष्पितान्फलिनो वृक्षान्प्रवालमणिसंनिभान् ॥ ३२ ॥
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः । मणिकाञ्चनचित्राणि शयनान्यासनानि च ॥ ३३ ॥
[10]विविधानि विशालानि ददृशुस्ते समन्ततः । हैमराजतकांस्यानां भाजनानां च रा[8]शयः ॥ ३४ ॥
अगुरूणां च दिव्यानां चन्दनानां च संचयान् । शुचीन्यभ्यवहाराणि मूलानि च फलानि च ॥ ३५ ॥
महार्हाणि च या[7]नानि मधूनि रसवन्ति च । दिव्यानामम्बराणां च महार्हा[9]णां च संचयान् ॥ ३६ ॥
कम्बलानां च चित्राणामजिनानां च संचयान् । [ त[11]त्र तत्र च विन्यस्तान्दीप्तान्वैश्वानरप्रभान् ॥
ददृशुर्वानराः शुभ्राञ्जातरूपस्य संचयान् । ] तत्र तत्र विचिन्वन्तो बिले त[12]त्र महाप्रभाः ॥ ३७ ॥
ददृशुर्वानराः शूराः स्त्रियं कांचिददूरतः । तां [13]चैव ते ददृशुस्तत्र चीरकृष्णाजिनाम्बराम् ॥ ३८ ॥
तापसीं नियताहारां ज्वलन्तीमिव तेजसा । विस्मिता हरयस्तत्र [14]व्यवतिष्ठन्त सर्वशः ॥
प[15]प्रच्छ हनुमांस्तत्र काऽसि त्वं कस्य वा बिलम् । ॥ ३९ ॥

तद्देशात् वितिमिरं तं प्रकाशदेशमागम्य वितिमिरं वनं ददृशुरित्युत्तरेणान्वयः ॥ २४ ॥

रा० टी०—दर्शनप्रकारमाह—ददृशुरिति । काञ्चनान् सुवर्णमयान् अत एव दीप्तवैश्वानरप्रभान् प्रदीप्ताग्निसदृशान् सालादीन् चित्रैरनेकविधैः काञ्चनैः अत एव रक्तैः स्तबकैः गुच्छैः किसलयैः पत्रैश्च आपीडैः अत्युन्नतोर्ध्वभागैश्च लताभिश्च युक्तान् हिरण्मयान् पादपान् तद्भिन्नवृक्षांश्च पतगैः पक्षिभिर्वृताः पद्मिनीश्च बालार्कसंनिभैः काञ्चनैर्वृक्षैः जातरूपमयैर्मत्स्यैश्च महद्भिः पङ्कजैश्च वृताः प्रसन्नसलिलायुताः नलिनीः सरसीश्च ददृशुः । सार्धश्लोकपञ्चकमेकान्वयि ॥ २६—३० ॥

२७ ] ति० टी०—आपीडैः स्तबकशेखरैर्लताभिश्च संयुक्तान्पादपान्ददृशुः ॥ २७ ॥

गो० टी०—आपीडैः शेखरैः लताभिश्च उपशोभितानिति शेषः, हेमाभरणभूषितान् फलितहेमाभरणान् पादपांश्च हिरण्मयान् रजतमयांश्च वृक्षान् ॥ २६ ॥ २७ ॥

२८–२९ ] ति० टी०—पद्मिनीः पद्मलताः ॥ २८ ॥ २९ ॥

गो० टी०—नीलवैदूर्येत्यादि श्लोकद्वयमेकान्वयम् । उक्तविशेषणविशिष्टाः पद्मिनीः उक्तविशेषणयुक्ता नलिनीश्च ददृशुरित्यन्वयः । अतो न पुनरुक्तिः ॥ २८ ॥ २९ ॥

३०] ति० टी०—पद्मादियुता नलिनीः सरांसि च ददृशुः ३०

रा० टी०—काञ्चनानीति । काञ्चनानि राजतानि च विमानानि तपनीयाः गवाक्षाः वातायनाः येषु तानि मुक्ताजालैः मुक्ताखचितकुड्यगतजालविशेषैरावृतानि हैमराजतभौमानि हेमादिमयानि वैदूर्यमणिवन्ति वैदूर्यमणिविशिष्टानि सर्वशो गृहमुख्यानि हरयो ददृशुः । श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

गो० टी०—काञ्चनानीत्यादि । हैमराजतभौमानीति शेषः, गृहमुख्यविशेषणं वा ॥ ३०—३२ ॥

३१–३५ ] ति० टी०—मुक्ताजालैर्मुक्ताखचितजालैरावृतानि । हैमेत्यादि गृहमुख्यानीत्यस्य विशेषणम् ॥ ३१–३५ ॥

३६–३८ ] ति० टी०—यानानि शिबिकादीनि ॥ ३६–३८ ॥

३९] ति० टी०—व्यवतिष्ठन्त तूष्णीमवस्थिता बभूवुः ॥ ३९ ॥

रा० टी०—पुष्पितानिति । पुष्पितान् पुष्पविशिष्टान् फलिनः फलविशिष्टान् मणिसंनिभान् वृक्षान् काञ्चनभ्रमरान् स्वर्णमयचूडाविशिष्टमधुपांश्च मधूनि च मणिकाञ्चनचित्राणि विशालानि विस्तीर्णानि शयनानि आसनानि च ददृशुः । श्लोकद्वयमेकान्वयि ॥ ३३ ॥ ३४ ॥

गो० टी०—जातरूपस्य संचयान् । इत्येष पाठक्रमः ॥ ३३ ॥

रा० टी०—हैमेति । बिले तत्र तत्र प्रतिप्रदेशे विचिन्वन्तो वानराः हैमादीनां भाजनानां राशयो राशीन् अगरूणां चन्दनानां च संचयान् शुचीनि पवित्राणि अभ्यवहाराणि भक्षणीयानि मूलानि फलानि च महार्हाणि बहुमूल्यानि यानानि शिबिकादीनि च रसवन्ति मधुराणि मधूनि च अम्बराणां वस्त्राणां संच-

---

१ वैडूर्यकृतेति गो. पाठः। २ वर्णानिति रा. पाठः। ३ पतगावृता इति गो. पाठः। ४ काञ्चनैः पद्मैर्वृता इति गो. वृतेति रा. पाठः। ५ च सकच्छपैरिति गो. पाठः। ६ वृता इति गो. पाठः। ७ महार्हाणि च यानानीति गो. पाठः। ८ संचयानिति गो. पाठः। ९ हार्याणीति गो. पाठः। १० पानानीति गो. पाठः। ११ अधिकोऽयं श्लोकः गो. पाठे। १२ तस्मिन्महाबला इति गो. पाठः। १३ दृष्ट्वा भृशसंत्रस्ता इति गो. रा. पाठः। १४ व्यवातिष्ठन्तेति गो. पाठः। १५ अर्धमेतत् रा. नास्ति।

**ततो हनूमान्गिरिसंनिकाशः कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।**
**पप्रच्छ का त्वं भवनं बिलं च रत्नानि चेमानि वदस्व कस्य ॥ ४० ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।

स्वयंप्रभाख्या सा तापसी बिलनिर्माणादि निवेद्याभ्यागतवानरान्फलमूलाद्यशनपानेन विश्रामयन्ती वानरागमनकारणं पृच्छति ।

**इत्युक्त्वा हनुमांस्तत्र चीरकृष्णाजिनाम्बराम् । अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १ ॥**
**इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् । क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥ २ ॥**
**महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः । इमांस्त्वेवंविधान्भावान्विविधानद्भुतोपमान् ॥ ३ ॥**
**दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः । कस्यैते काञ्चना वृक्षास्तरुणादित्यसंनिभाः ॥ ४ ॥**
**शुचीन्यभ्यवहार्याणि मूलानि च फलानि च । काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ५ ॥**
**तपनीयगवाक्षाणि मणिजालावृतानि च । पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धयः ॥ ६ ॥**
**इमे जाम्बूनदमयाः पादपाः कस्य तेजसा । काञ्चनानि च पद्मानि जातानि विमले जले ॥ ७ ॥**

यांश्च चित्राणां कम्बलानाम् अजिनानां च संचयान् कांचित् स्त्रियं च ददृशुः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ ३६-३८ ॥

**गो॰ टी॰–हैममित्यादि ।** शुभान् निर्मलान् ॥३४—३८॥

**रा॰ टी॰–तामिति ।** चीरकृत्स्नाजिनाम्बरां तेजसा ज्वलन्तीमिव तापसीं दृष्ट्वा भृशसंत्रस्ताः विस्मिताश्च सर्वे हरयः सर्वशः सर्वस्थलेषु व्यवातिष्ठन्त व्यवातिष्ठन्त । सार्धश्लोक एकान्वयी ॥ ३९ ॥ ४० ॥

**गो॰ टी॰–तां दृष्ट्वेति ।** व्यवातिष्ठन्त दूरे स्थिता इत्यर्थः ॥ ३९ ॥ ४० ॥

४० ] **ति॰ टी॰–**पप्रच्छ हनूमानित्यर्थस्यैव सविशेषप्रतिपादनम्—**ततो हनुमानिति** ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

**रा॰ टी॰–तत इति ।** ततो तापसीदर्शनानन्तरं कृताञ्जलिर्हनूमान् वृद्धां तां तापसीमभिवन्द्य त्वं का भवनादीनि च कस्य इति त्वं वदस्व इति पप्रच्छ ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चाशत्तमः सर्गः ॥ ५० ॥

**गो॰ टी॰–**पप्रच्छेत्यर्धस्य विवरणम्–**ततो हनुमानिति** ॥ ४१ ॥

अस्मिन् सर्गे सार्धैकचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

१] **ति॰ टी॰–**इत्युक्त्वा का त्वं भवनमित्यादि पृष्ट्वा ॥१॥

**रा॰ टी॰–**तापसीं प्रति हनुमदुक्तिमेवाह–**इतीत्यादिभिः ।** इति अनेन प्रकारेण उक्त्वा पृष्ट्वा हनूमान् तां तापसीमब्रवीत् १

**गो॰ टी॰–**अथ स्वयंप्रभया ऋक्षबिलवृत्तान्तोक्तिरेकपञ्चाशे–**इत्युक्त्वेत्यादि ।** परिखिन्नाः अध्वश्रमखिन्नाः क्षुत्पिपासापरिश्रान्तत्वेऽपि ।पिपासैव प्रवेशहेतुरित्याशयेनोक्तं पिपासिता इति । भावान् पदार्थान् । प्रव्यथिताः किमिदमसुरादिमायेति संजातव्यथाः । नष्टचेतसः कर्तव्यबुद्धिरहिताः मणिजालावृतानि रत्नमयजालकानि । जालकगवाक्षयोर्भेद उक्तः। आत्मानं त्वाम् । अनुभावं प्रभावम् । कस्य चैतत्तपोबलं तवेत्यर्थः ॥ १—९ ॥

२] **ति॰ टी॰–**किमब्रवीत्तदाह–**इदमिति ।** सहसा हठात्[२]

**रा॰ टी॰–**तद्वचनाकारमाह–**इदमित्यादिभिः ।** क्षुत्पिपासापरिश्रान्ताः अत एव परिखिन्नाः वयम् इदं बिलं सहसा प्रविष्टाः ॥ २ ॥

३-६ ] **ति॰ टी॰–**उक्तमेवार्थं प्रपञ्चयति—**महदिति ।** भावान्पदार्थान् ॥ ३—६ ॥

**रा॰ टी॰–महदिति ।** धरण्याः महद्विवरं प्रविष्टा- वयं एवंविधान् विविधान् अनेकान् अद्भुतोपमान् अद्भुतपदार्थसदृशान् इमान् भावान् पदार्थान् दृष्ट्वा प्रव्यथिताः संचलितचित्ताः अत एव संभ्रान्ताः भीताः अत एव नष्टचेतसः ध्वस्तविवेकाः स्म स्मः । सार्धश्लोक एकान्वयी ॥ ३ ॥

**रा॰ टी॰–कस्येति ।** एते वृक्षादयः कस्य । सार्धश्लोक एकान्वयी ॥ ४-६ ॥

७ ] **ति॰ टी॰–**कस्य तेजसा संभूता इति शेषः ॥ ७ ॥

---

१ हेमानीति गो. पाठः । २ पुनरिति गो. पाठः । ३ हार्याणीति गो. पाठः । ४ गन्धिन इति गो. पाठः ।

कथं मत्स्याश्च सौवर्णा दृश्यन्ते सह कच्छपैः । आत्मनस्त्वनुभावाद्वा कस्य [2]वैतत्तपोबलम् ॥ ८ ॥
अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि । एवमुक्ता हनुमता तापसी धर्मचारिणी ॥ ९ ॥
प्रत्युवाच हनूमन्तं सर्वभूतहिते रता । मयो नाम महातेजा मायावी [4]वानरर्षभ ॥ १० ॥
तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् । पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ॥ ११ ॥
येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् । स तु वर्षसहस्राणि तपस्तप्त्वा महद्वने ॥ १२ ॥
पितामहाद्वरं लेभे सर्वमौशनसं धनम् । [6]विधाय सर्वं बलवान्सर्वकामेश्वरस्तदा ॥ १३ ॥
उवास सुखितः कालं कंचिदस्मिन्महावने । तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ॥ १४ ॥
विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः । इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ॥ १५ ॥
[8]शाश्वतः कामभोगश्च गृहं चेदं हिरण्मयम् । दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा ॥ १६ ॥

रा० टी०—इमे इति । कस्य तेजसा इमे पादपाः जाम्बूनदमयाः सुवर्णोपादानकाः पद्मानि च काञ्चनानि जातानि ॥ ७ ॥

८ ] ति० टी०—आत्मनः तवेत्यर्थः । कस्य वा अन्यस्य वेत्यर्थः ॥ ८ ॥

९-१०] ति०टी०—अजानतामेतत्स्वरूपमजानताम्९॥१०॥

रा० टी०—कथमिति । कच्छपैः सह मत्स्याः सौवर्णाः कथं दृश्यन्ते अयमेतत्सर्वनिर्मापकः आत्मनस्तव अनुभावाद्वा कस्यचित्तपोबलं वा, अजानतां नोऽस्माकं समीपे सर्वमाख्यातुमर्हसि । सार्धश्लोक एकान्वयी ॥ ८ ॥ ९ ॥

रा० टी०—एवमिति । हनुमता एवमुक्ता तापसी हनूमन्तं प्रत्युवाच ॥ १० ॥

रा० टी०—मय इति । मयो नाम महातेजा यो मायावी तेन इदं काञ्चनं वनं निर्मितम् ॥ ११ ॥

गो० टी०—मयो नामेति । मयो नाम त्रिपुराधिपतिः त्रिपुरे नष्टे स्वरक्षणार्थमिदं बिलं कृतवानिति मात्स्यपुराणे त्रिपुरदहनप्रस्तावेऽभिहितम् । मायया विचित्रशक्त्या मायावी मायायुक्तः दानवर्षभ इत्यनेन नायमसुरतक्षा मय इति सूचितम् ॥ १०—१३ ॥

११ ] ति० टी०—मायया विचित्रनिर्माणशक्त्या । को मय इत्याशङ्क्य तत्प्रसिद्धिमाह—पुरेति । विश्वकर्मा शिल्पी ह प्रसिद्धम् ॥ ११ ॥

रा० टी०—तन्निर्माणशक्तिलाभे कारणं वदन्ती आह—पुरेति । येन इदं काञ्चनं भवनोत्तमं निर्मितं स पुरा पूर्वं दानवमुख्यानां विश्वकर्मा शिल्पी बभूव ॥ १२ ॥

१२ ] ति० टी०—येनेदं निर्मितं स दानवानां विश्वकर्मेत्यन्वयः । निर्माणशक्तिबीजमाह—स त्विति ॥ १२ ॥

रा० टी०—स इति । स शिल्पी महावने वर्षसहस्राणि तपस्तप्त्वा औशनसम् उशनःसंबन्धि धनं सर्जनसामर्थ्यं सर्जनसामग्रीजातं च वरं पितामहाल्लेभे ॥ १३ ॥

१३ ] ति० टी०—वरं विचित्रसृष्टिसामर्थ्यरूपम् । अपि च सर्वमौशनसं धनं निर्माणसाधनपदार्थजातं निर्माणसाधनशिल्पं शास्त्रज्ञानं च लेभे । शिल्पशास्त्रस्योशनःप्रणीतत्वात्तद्धनत्वव्यपदेशः । बलवानुक्तरूपबलवान् । सर्वकामेश्वरः स्वसृष्टिभोग्यविशेषाणामीश्वरो भोक्ता ॥ १३ ॥

रा० टी०—विधायेति । तदा लब्धवरसमये सर्वकामेश्वरः सर्वविषयनिर्माणे स्वतन्त्रः मयः सर्वमिदं वनादि विधाय निर्माय अस्मिन् स्वनिर्मिते महावने सुखितः सन् कंचित्कालमुवास ॥ १४ ॥

१४ ] ति० टी०—सुखितोऽत्रोवास । हेमायां तदाख्याप्सरसि सक्तम् ॥ १४ ॥

रा० टी०—तमिति । हेमायां तदभिधायाम् अप्सरसि सक्तं दानवपुङ्गवं तं मयमशनिं वज्रं गृह्य गृहीत्वा विक्रम्य युद्धं कृत्वा पुरन्दरो जघान ॥ १५ ॥

गो० टी०— तमिति । तं स्वपुत्रीं मन्दोदरीं रावणाय दत्तवन्तम् । एकान्ते हेमायां सक्तं विदित्वा ईशः त्रैलोक्याधिपतिः अशनिं वज्रं गृहीत्वा जघान ॥ १४ ॥

१५] ति० टी०—दानवपुंगवमशनिं गृह्य गृहीत्वा विक्रम्यैव युद्धं कृत्वैव पुरंदरो जघान। यद्यप्यसुरस्थशिल्पी मयो नित्य इति कथं हननं तस्य, तथापि य एवासुरशिल्पिपदस्थः सर्वोऽपि मयाख्य इति 'प्रवाहनित्यतैव तस्येन्द्रवत्' इति न दोषः । तस्मिंश्च हते इदं वनं शाश्वतः कामभोग इदं गृहं च मयभुक्तायै हेमायै न्यायप्राप्तत्वाद्भगवता ब्रह्मणा दत्तमित्यर्थः । एतेन विचित्रनिर्माणसामर्थ्यगुणयोगादत्र ब्रह्मशब्दो मयदानवपर इत्यपास्तम् । हतेन दानासंभवात् ॥ १५ ॥

रा० टी०—इदमिति । इदमुत्तमं वनं शाश्वतः सार्वकालिकः कामभोगश्च हिरण्मयं गृहं च ब्रह्मणा हेमायै दत्तम् ॥ १६ ॥

गो० टी०—इदं चेति । मयनाशानन्तरम् इदं वनं ब्रह्मणा हेमायै दत्तम् ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—स्वयंप्रभेत्यन्वर्थं नाम तस्याः, तेन सूर्यावलोकाभावेऽपि प्रकाशवत्त्वमुपपादितम् । तस्या हेमाया भवनमित्यन्वयः ॥ १६ ॥

१ चरन्तीति गो. पाठः । २ आत्मानमनुभावं चेति गो. पाठः । ३ चेति गो.पाठः । ४ दानवर्षभ इति गो. पाठः । ५ महावने इति गो. रा.पाठः । ६ वनं विधायेति गो. पाठः। ७जघान स इति गो.पाठः।८शाश्वताः कामभोगा इति गो.पाठः।९शिल्पिशब्दो ह्रस्वः।१०स सर्वं इति च युक्त इति भाति।

इदं रक्षामि भवनं हेमाया वानरोत्तम । मम प्रियसखी हेमा नृत्तगीतविशारदा ॥ १७ ॥
तया दत्तवरा चास्मि रक्षामि भवनं महत् । किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपद्यथ ॥ १८ ॥
कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् । शुचीन्यभ्यवहाराणि मूलानि च फलानि च ॥
भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हसि ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ।

रामवनप्रवेशादात्मनो गुहाप्रवेशावधि वृत्तान्त निवेदयन्हनुमान्स्वयंप्रभया कृतातिथ्यं प्रशंसंस्तत्प्रत्युपकृति चिकीर्षुराज्ञापयेति तां प्रार्थयते । धर्ममाचरन्त्या मे न केनचित्प्रयोजनमिति सा तन्निषेधति ।

अथ तानब्रवीत्सर्वान्विश्रान्तान्हरियूथपान् । इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १ ॥
वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् । यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि तां कथाम् ॥ २ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः । आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः । रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥ ४ ॥

रा० टी०—ननु त्वं काऽसीत्यत आह—दुहितेति । मेरुसावर्णेः दुहिताऽहं तस्याः हेमायाः स्वयंप्रभा तदभिधमिदं भवनं रक्षामि । वाक्यार्थस्य कर्मतयाऽन्वयान्न द्वितीया, स्वयम्प्रभाशब्दस्य मेरुसावर्णिदुहितुर्नामत्वे तु भवनमिति द्वितीयान्तमेव ॥ १७ ॥

१७ ] ति० टी०—ननु त्वं किमर्थं रक्षसि तत्राह—मम प्रियसखीति ॥ १७ ॥

रा० टी०—ननु त्वं किमर्थं रक्षसीत्यत आह-ममेति । नृत्यगीतविशारदा हेमा मम प्रियसखी अतः तया आदत्तः गृहीतो वरः स्वभवनरक्षारूपः यस्याः साऽहं महद्भवनं रक्षामि ॥ १८ ॥

गो० टी०—ममेति । सेदानीं ब्रह्मसदनं गतेत्याशयेनाह—नृत्तेति ॥ १७ ॥

१८ ] ति० टी०—दत्तवरा रक्षणसामर्थ्यवरदानसंबन्धित्वेन प्रार्थितरक्षणा च । एवं स्ववृत्तान्तमुक्त्वा हनमदादिवृत्तान्तं पृच्छति—किमिति ॥ १८ ॥

रा० टी०—किमिति । कस्य जनस्य हेतोः किं कार्यं कृत्यं भवतामस्ति वा यतः कान्ताराणि दुर्गमपथान् प्रपद्यथ दुर्गं दुर्गममिमं वनं युष्माभिः कथमुपलक्षितम् आगत्य अवलोकितम् ॥ १९ ॥

गो० टी०—किमिति । किं कार्यं किं प्रयोजनम् कस्य हेतोः कस्मात् प्रयोजनात् ॥ १८ ॥ १९ ॥

अस्मिन् सर्गे सार्धैकोनविंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

१९ ] ति० टी०—अभ्यवहाराण्यभ्यवहार्याणि ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकपञ्चाशः सर्गः ॥ ५१ ॥

रा० टी०—म्लानमुखान् तान् दृष्ट्वा आह—शुचीनीति । अभ्यवहाराणि भक्षणीयानि शुचीनि मूलानि फलानि च भुक्त्वा पानीयं पीत्वा च सर्वं मे पृष्टं वक्तुमर्हथ ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकपञ्चाशत्तमः सर्गः ॥ ५१ ॥

१ ] ति० टी०—इदं वचनं वक्ष्यमाणम् ॥ १ ॥

रा० टी०—वानरान् प्रति मेरुसावर्णितनयोक्तिमेवाह—अथेति । अथ वानरकर्तृकभोजनाद्यनन्तरं विश्रान्तान् हरियूथपान् एकाग्रा यतचित्ता तापसी इदमब्रवीत् ॥ १ ॥

गो० टी०—अथ हनुमता स्वागमनहेतुरुच्यते द्विपञ्चाशे—अथेत्यादि ॥ १ ॥ २ ॥

२-३ ] ति० टी०—यदि चैतत्किं कार्यमित्यादि प्राक्पृष्टार्थतत्त्वम् ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—वानरा इति । हे वानराः! फलभक्षणात् यदि वः खेदः प्रनष्टः यदि च एतत् मत्पृष्टं मया श्राव्यं तर्हि श्रोतुमिच्छामि अतः कथ्यताम् ॥ २ ॥

रा० टी०—तस्या इति । तस्यास्तापस्यास्तद्वचनं श्रुत्वा मारुतात्मजो हनुमान् आर्जवेन सरलतया यथातत्त्वं याथार्थ्यमनतिक्रम्य आख्यातुमुपचक्रमे ॥ ३ ॥

गो० टी०—तस्या इति । आर्जवेन अकपटेन ॥ ३–६ ॥

४] ति० टी०—सर्वलोकराजत्वेन तस्येश्वरत्वं सूचितम् ॥ ४ ॥

१ भवनोत्तममिति गो. पाठः । २ प्रपद्यथेति गो. पाठः । ३ इमान्यभ्यवहार्याणीति गो. पाठः । ४ अर्हथेति गो. पाठः । ५ विक्रान्तान्हरिपुङ्गवानिति गो. पाठः । ६ प्रणष्ट इति गो. पाठः । ७ कथ्यतामिति गो. रा. पाठः । ८ हनुमानिति गो. पाठः । ९ सखीत्वेनेति दीर्घ एव युक्त इति भाति ।

लक्ष्मणेन सह भ्रात्रा वैदेह्या सह भार्यया । तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५ ॥
वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥
अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् । सहैभिर्वानरैर्मुख्यैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् । सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८ ॥
विचित्य तु वनं सर्वं समुद्रं दक्षिणां दिशम् । वयं बुभुक्षिताः सर्वे वृक्षमूलमुपाश्रिताः ॥ ९ ॥
विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः । नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥
चारयन्तस्ततश्चक्षुर्दृष्टवन्तो महद्बिलम् । लतापादपसंपन्नं तिमिरेण समावृतम् ॥ ११ ॥
अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलरेणुभिः । कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥ १२ ॥
साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः । तेषामपि हि सर्वेषामनुमानमुपागतम् ॥ १३ ॥
अस्मिन्निपतिताः सर्वेऽप्यथ कार्यत्वरान्विताः । ततो गाढं निपतिता गृह्य हस्तैः परस्परम् ॥ १४ ॥

रा० टी०—तदाख्यानमेवाह—राजेति । सर्वस्य लोकस्य भुवनस्य राजा महेन्द्रवरुणौ उपमा यस्य स रामो लक्ष्मणेन भ्रात्रा वैदेह्या भार्यया च सह दण्डकावनं प्रविष्टः । सार्धश्लोक एकान्वयी ॥ ४ ॥

५–६ ] ति० टी०—बलाद्बलात्कारेण ॥ ५ ॥ ६ ॥

७ ] ति० टी०—अङ्गदप्रमुखैर्वानरैः सह वयं प्रस्थापिताः॥७॥

रा० टी०—तस्येति । तस्य रामस्य भार्या बलात् स्वस्वरूपाच्छादनात् संन्यासिवेषेणेत्यर्थः, रावणेन जनस्थानात् हृता एतेन सीताया आभरणप्रक्षेपसमये रावणस्य संन्यासिवेषो हनुमताऽवलोकित इति सूचितम् । अर्धं पृथक् ॥ ५ ॥

रा० टी०—वीर इति । येन अङ्गदप्रमुखैः सहिता वयं वयं वः रामसख्यरक्षणस्य अयः प्राप्तिर्यस्मिन् तत् यथा भवति तथा दक्षिणां दिशं प्रस्थापिताः स वानरमुख्यानां राजा सुग्रीवो नाम वानरः राज्ञो रामस्य सखा । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—वीर इति । दक्षिणामाशां येन प्रस्थापिताः स राजाऽस्तीति पूर्वेणान्वयः ॥ ६–१२ ॥

८ ] ति० टी०—सहिता मिलिताः सन्तो रावणं सीतया सह मार्गध्वमिति वयं चोदिताश्च स्मः ॥ ८ ॥

९ ] ति० टी०—तदाह—विचित्य त्विति । समुद्रं विचेतुकामा इति शेषः ॥ ९ ॥

रा० टी०—रावणमिति । सीतया सह कामरूपिणं रावणं सहिताः सर्वे यूयं मार्गध्वमिति चोदिताः सुग्रीवेण प्रेरिता वयं समुद्रं विचेतुकामाः सन्त इति शेषः, दक्षिणां दिशं विचित्य बुभुक्षिताः सन्तः वृक्षमूलमुपाश्रिताः प्राप्ताः । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

१०–११ ] ति० टी०—नाधिगच्छाम । हे इति स्वयंप्रभासंबोधनम् । नाध्यगच्छाम पारं चिन्तामहार्णवस्येति शेषः ॥ १० ॥ ११ ॥

रा० टी०—विवर्णेति । ध्यानपरायणाः सुग्रीवाज्ञास्मरणनिरताः सर्वे वयं नाधिगच्छामहे सीतावृत्तान्तं न जानीमः अतः चिन्तामहार्णवे शोकसागरे इत्यर्थः, मग्ना अत एव विवर्णवदनाः वयं पारं शोकसागरस्यान्तं नाधिगच्छामहे प्राप्नुमः । अधिगच्छामहे इति शब्दावृत्त्या उभयान्वयि ॥ १० ॥

रा० टी०—चारयन्त इति । ततस्तस्मिन् समये चक्षुश्चारयन्तो वयं लतापादपसंपन्नं महत् वनं दृष्टवन्तोऽभवाम॥११॥

१२ ] ति० टी०—सलिलरेणुभिः सलिलपद्मरेणुयुक्तपक्षैरुपलक्षिता इत्यर्थः निष्पतन्ति निष्पतिताः ॥ १२ ॥

रा० टी०—अस्मादिति । सलिलरेणुभिः पक्षैः उपलक्षिताः जलक्लिन्ना हंसादयः अस्मात् बिलात् निष्पतन्ति अत्र ध्रुवं जलमस्तीति तात्पर्यम् । अत्र बिले साधु प्रविशामेति प्लवङ्गमा मयोक्ताः । सार्धश्लोक एकान्वयी ॥ १२ ॥

१३ ] ति० टी०—अनुमानं जलानुमापको हेतुरागतं मनश्चाप्तम् ॥ १३ ॥

रा० टी०—तेषामिति । तेषां मयोक्तवानराणाम् अनुमानम् अनुमानेन जलसत्तानिश्चयः उपागतम् । अथ अतः कार्यत्वरान्विताः जलपानविषयकत्वरायुक्ताः सर्वे अस्मिन् बिले बिलसमीपे निपतिताः ॥ १३ ॥

गो० टी०—तेषामिति । अनुमानमुपागतम् जलचरसत्त्वदर्शनेन जलबुद्धिर्जातेत्यर्थः, यद्वा तेषामपीति भर्तृकार्यत्वरान्विताः सन्तो गच्छामः बिलद्वारमिति शेषः । बिलं प्रविशाम इति अनुमानम् अङ्गीकरणम् ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—अस्मिन्देशे ततो गच्छाम इत्युक्त्वा निबिडान्धकारत्वात्परस्परं हस्तैर्गाढं गृहीत्वा निपतिताः गुहामिति शेषः । 'हस्ते' इति पाठेऽपि हस्तैरित्येवार्थः । परिष्वज्येति पूर्वोक्तस्वरसात् ॥ १४ ॥

रा० टी०—तत इति । ततस्तदा निपतीता वानराः गाढं

१ चापीति गो. पाठः । २ घोरैरिति गो. पाठः । ३ वयं सर्वे समग्रामिति गो. पाठः । ४ बुभुक्षिताः परिश्रान्ता इति गो. पाठः । ५ वयमिति गो. पाठः । ६ छन्नमिति गो. पाठः । ७ विस्रवैरिति गो. पाठः । ८ गच्छाम प्रविशामेति भर्तृकार्येति गो. पाठः । ९ हस्ताविति गो. पाठः ।

इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् । एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ १५ ॥
त्वां चैवोपगताः सर्वे परिद्यूना बुभुक्षिताः । आतिथ्यधर्मदत्तानि मूलानि च फलानि च ॥ १६ ॥
अस्माभिरुपयुक्तानि[1] बुभुक्षापरिपीडितैः । यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया ॥ १७ ॥
ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः । एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयंप्रभा ॥ १८ ॥
प्रत्युवाच ततः सर्वानिदं वानरयूथपान् । सर्वेषां परितुष्टाऽस्मि वानराणां तरस्विनाम् ॥ १९ ॥
चरन्त्या मम धर्मेण न कार्यमिह केनचित्[2] । एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् ॥ २० ॥
उवाच हनुमान्वाक्यं तामनिन्दितलोचनाम्[3] । शरणं त्वां प्रपन्नाः स्मः सर्वे वै[4] धर्मचारिणीम् ॥ २१ ॥
यः कृतः समयोऽस्मासु[5] सुग्रीवेण महात्मना । स तु[6] कालो व्यतिक्रान्तो[7] बिले च परिवर्तताम् ॥ २२ ॥
सा त्वमस्माद्बिलाद्घोरा[8]दुत्तारयितुमर्हसि । तस्मात्सुग्रीववचनादतिक्रान्तान्गतायुषः ॥ २३ ॥
त्रातुमर्हसि नः सर्वान्सुग्रीवभयशङ्कितान्[9] । महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ॥ २४ ॥
तच्चापि न कृतं कार्यमस्माभिरिह वासिभिः । एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ॥ २५ ॥

यथा भवति तथा हस्तैः परस्परं गृह्य गृहीत्वा इदं बिलं प्रविष्टाः ॥ १४ ॥

१५ ] ति० टी०—एतत्सीतान्वेषणरूपम् ॥ १५ ॥

रा० टी०—एतदिति । एतत् पिपासादिशमनरूपं नोऽस्माकं कार्यम् एतेनैव कृत्येन कार्येण वयमागताः बिलप्राप्ताः । अर्धं पृथक् ॥ १५ ॥

गो० टी०—एतदिति । परिद्यूनाः परिक्षीणाः ॥१५–१७॥

१६–१७ ] ति० टी०—यतो बुभुक्षिता अतः परिद्यूनाः क्षीणाः ॥ १६ ॥ १७

रा० टी०—त्वामिति । बुभुक्षिता अत एव परिद्यूनाः क्षीणा ये सर्वे वानराः त्वामुपागतास्तैरस्माभिः आतिथ्यधर्मदत्तानि फलानि उपभुक्तानि । सार्धश्लोक एकान्वयी ॥ १६ ॥

रा० टी०—यदिति । बुभुक्षया म्रियमाणाः सर्वे वानराः यद्यस्मात् त्वया रक्षिताः तस्मात् प्रत्युपकारार्थं वानरास्ते किं कुर्वन्तु तद्ब्रूहि ॥ १७ ॥

१८ ] ति० टी०—किं ते कुर्वन्तु प्रियमिति शेषः ॥ १८ ॥

रा० टी०—एवमिति । एवमुक्ता सर्वज्ञा स्वयंप्रभा वानरयूथपानिदं प्रत्युवाच ॥ १८ ॥

गो० टी०—एवमिति ॥ १८ ॥

१९ ] ति० टी०—परितुष्टास्मि प्रत्युपचिकीर्षावचनेनैवेति भावः । धर्मेण चरन्त्या धर्मानुष्ठानेन वर्तमानायाः ॥ १९ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—सर्वेषामिति । सर्वेषां वानराणां परितुष्टाऽस्मि प्रत्युपकारकरणमन्तरैवेति शेषः । ननु प्रत्युपकारः कार्य एवेत्यत आह—धर्मेण चरन्त्या मम कार्यं कर्तव्यं केनचित् न कार्यम् । एतेन स्वधर्माचरणमन्तरा मे कार्यं नास्तीति सूचितम् ॥ १९ ॥

गो० टी०—सर्वेषामिति । संबन्धसामान्ये षष्ठी ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

२०–२१ ] ति० टी०—अत्र कतकस्तु द्विपञ्चाशत्सर्गसमाप्तिमाह । एवमुक्त इति ॥ २० ॥ २१ ॥

रा० टी०—एवमिति । एवमुक्तो हनुमान् अनिन्दितचेष्टितां तामुवाच ॥ २० ॥

गो० टी०—अथ बिलादुत्तीर्णानां वानराणां निर्वेदविप्रलापो—एवमुक्त इत्यादि ॥ १ ॥

रा० टी०—तद्वचनाकारमाह—शरणमिति । हे धर्मचारिणि ! शरणं रक्षिकां त्वां वयं प्रपन्नाः प्राप्ताः स्मः । एतेन रक्षा कर्तव्येति सूचितम् । अर्धं पृथक् ॥ २१ ॥

गो० टी०—शरणमित्यादि । बिले च परिवर्ततामित्यनेन बहुकालं वानरैर्बिले स्थितमिति गम्यते ॥ २–१० ॥

२२ ] ति० टी०—समयः कालावधिर्मासरूपः । बिले च बिले एव ॥ २२ ॥

रा० टी०—ननु युष्माकं रक्षा कथं भविष्यतीत्यत आह—य इति द्वाभ्याम् । अस्मासु यः समयः कालनियमः सुग्रीवेण कृतः स कालस्ते बिले परिवर्ततामस्माकं व्यतीतः ॥ २२ ॥

२३-२५ ] ति० टी०—तस्माद्धेतोरस्माद्बिलादस्मानित्यन्वयः । गतायुषो नष्टजीवितान् तत्र हेतुः—सुग्रीववचनादतिक्रान्तानिति सुग्रीवाज्ञप्तकालादतिक्रान्तकालानित्यर्थः ॥ २३–२५ ॥

रा० टी०—सेति । सुग्रीववचनात् अतिक्रान्तान् अत एव गतायुषोऽस्मान् अस्माद्बिलात् उत्तारयितुं त्वमर्हसि ॥२३॥

रा० टी०—त्रातुमिति । उपसंहरन्नाह—सुग्रीवभयशङ्कितान् अस्मान् त्रातुं त्वमर्हसि । ननु तत्कार्यसाधनायागतानां

१ भुक्तानीति गो. पाठः । २ अत्रैव सर्गसमाप्तिः गो. पाठे । ३ चेष्टितामिति गो. रा. पाठः । ४ चेति रा. पाठः । ५ ऽस्माकमिति गो. पाठः । ६ चेति गो. पाठः । ७ ह्यतीति गो.पाठः । ८ घोरादिति गो. पाठः । ९ कर्शितानिति । गो. पाठः ।

जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् । तपसः सुप्रभावेण नियमोपार्जितेन च ॥ २६ ॥
सर्वानेव बिलादस्मात्तारयिष्यामि वानरान् । निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः ॥ २७ ॥
नहि निष्क्रमितुं शक्यमनिमीलितलोचनैः । ततो निमीलिताः सर्वे सुकुमाराङ्गुलैः करैः ॥ २८ ॥
सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षया । वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा ॥ २९ ॥
निमेषान्तरमात्रेण बिलादुत्तारितास्तया । उवाच सर्वांस्तांस्तत्र तापसी धर्मचारिणी ॥ ३० ॥
निःसृतान्विषमात्तस्मात्समाश्वास्येदमब्रवीत् । एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलतायुतः ॥ ३१ ॥
एष प्रस्रवणः शैलः सागरोऽयं महोदधिः । स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः ॥
इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ।

हनुमत्प्रार्थितस्वयप्रभया स्वाज्ञया निमीलितलोचनेषु कपिषु क्षणमात्रेण गुहात उत्तारितेषु फलपुष्पाङ्कुरोद्गमाच्छिशिरागममनुमाय विषीदत्सु सुग्रीवचण्डत्वं कथयन्नङ्गदः कालातिक्रमतः सुग्रीवक्रोधाग्नौ शलभायमानेषु भवत्सु प्रायोपवेशनमेव शरणमित्यनुशास्ति। विषीदतो वानरान्रामसुग्रीवभीतेः स्वयंप्रभाबिलमेव युष्माकं रक्षकमिति तारः सूचयति । अनुमोदिततद्वचनास्ते तत्रैव वासं निश्चिक्युः ।

ततस्ते ददृशुर्घोरं सागरं वरुणालयम् । अपारमभिगर्जन्तं घोरैरूर्मिभिराकुलम् ॥ १ ॥

युष्माकं कथं भीतिरित्यत आह–यत् महत्कार्यं सीतान्वेषणमस्माभिः कर्तव्यं तदपि न कृतम् । सार्धश्लोक एकान्वयी॥२५॥

रा० टी०–एवमिति । हनुमता एवमुक्ता तापसी अब्रवीत् । अर्धं पृथक् ॥ २६ ॥

२६–२७ ] ति० टी०–प्रविष्टेनेदं बिलं प्रविष्टेन प्राणिना जीवताऽस्मान्निवर्तितुं दुष्करं मन्ये । तर्हि वयं किं कुर्मस्तत्राह–तपस इति ॥ २६ ॥ २७ ॥

रा० टी०–तद्वचनाकारमाह–जीवतेति । प्रविष्टेन मदाज्ञामन्तरा इहागतेन जीवता निवर्तितुं दुष्करं मन्ये । अर्धं पृथक् । नचु का गतिरस्माकमित्यत आह–तपस इति । नियमोपार्जितेन नियमयमादिना प्रकटितेन तपसो ज्ञानस्य प्रभावेण सर्वान् वानरान् बिलात्तारयिष्याम्येव ॥ २६ ॥

रा० टी०–निष्क्रमणोपायमाह–निमीलयतेति । हे वानरपुङ्गवाः ! अनिमीलितलोचनैः निष्क्रमितुं न शक्यम् अतः चक्षूंषि निमीलयत ॥ २७ ॥

२८ ] ति० टी०–निमीलिताः सन्तोऽकस्मादुन्मीलनभिया सुकुमाराङ्गुलैः करैः ॥ २८ ॥

रा० टी०–तत इति । ततस्तस्मिन्समये निमीलितुमाज्ञप्ताः गमनकाङ्क्षया हृष्टाः सर्वे वानराः सुकु सुकुमाराङ्गुलविशिष्टैः करैः दृष्टिं चक्षुः सहसा पिदधुः ॥ २८ ॥

गो० टी०–तत इति । विषमात् संकटप्रदेशात् ११–१६

२९–३० ] ति० टी०–सहसा दृष्टिं पिदधुः ॥२९॥३०॥

रा० टी०–वानरा इति । हस्तरुद्धमुखा एव वानराः निमेषान्तरमात्रेण तया स्वयंप्रभयैव बिलात् उत्तारिताः । तु वा एवार्थौ । च अनन्तरं धर्मचारिणी निःसृतान् वानरान् समाश्वास्य इदमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

३१ ] ति० टी०–इदमब्रवीत् दिङ्मोहभ्रान्त्यर्थमिति भावः ॥ ३१ ॥

३२ ] ति० टी०–प्रस्रवणः किष्किन्धासमीपप्रस्रवणादन्योऽयमित्याहुः । असुखत्वात्ततोऽपि तस्य दर्शनमित्यन्ये । यत्रेच्छा तत्र गन्तव्यमिति तात्पर्यम् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः॥ ५२ ॥

रा० टी०–तद्वचनाकारमाह–एष इति । एषः भवद्भिरागन्तव्यः विन्ध्यो गिरिः एषः प्रस्रवणः शैलः अयं महोदधिः सागरः भवद्भिः प्राप्त इति शेषः, अतः अहं भवनं गमिष्यामि वो स्वस्त्यस्तु । इत्युक्त्वा स्वयम्प्रभा तद्बिलं प्रविवेश । अयं प्रस्रवणः किष्किन्धासमीपवर्तिप्रस्रवणादन्य इति बोध्यम् । अर्धचतुष्टयमेकान्वयि ॥ ३१ ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्विपञ्चाशत्तमः सर्गः ॥ ५२ ॥

१ ] ति० टी०–तत इति ॥ १ ॥

रा० टी०–बिलनिर्गतवानराणां वृत्तान्तमाह–तत इत्या-

१ स्थितेति गो. पाठः । २ उद्धरिष्यामीति गो. पाठः । ३ समिति गो. पाठः । ४ ततस्तान्वानरान्सर्वानिति गो. पाठः । ५ कुत्र इति गो.पाठः । ६ आवृतमिति गो. पाठः ।

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् । तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ २ ॥
विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे । उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥ ३ ॥
ततः पुष्पातिभाराग्रांल्लताशतसमावृतान् । द्रुमान्वासन्तिकान्दृष्ट्वा बभूवुर्भयशङ्किताः ॥ ४ ॥
ते वसन्तमनुप्राप्तं प्रतिवेद्य परस्परम् । नष्टसंदेशकालार्था निपेतुर्धरणीतले ॥ ५ ॥
ततस्तान्कपिवृद्धांश्च शिष्टांश्चैव वनौकसः । वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ ६ ॥
स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः । युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ ७ ॥
शासनात्कपिराजस्य वयं सर्वे विनिर्गताः । मासः पूर्णो बिलस्थानां हरयः किं न बुध्यत ॥ ८ ॥

द्विभिः । ततः स्वयं प्रभाबोधनानन्तरम् अपारम् अदृश्यमानपारकं घोरैः ऊर्मिभिः आकुलं व्याप्तम् अत एव अभिगर्जन्तं वरुणालयं सागरं ते वानराः ददृशुः ॥ १ ॥

२ ] ति० टी०–गिरिदुर्गम् ऋक्षबिलाख्यम् । समयः कालावधिः ॥ २ ॥

रा० टी०–मयस्येति । मयस्य मायाविहितं गिरिदुर्गं विचिन्वतां वानराणां यः समयो राज्ञा सुग्रीवेण कृतः स मासो व्यतीतः ॥ २ ॥

३ ] ति० टी०–तदा शिशिरारम्भसमये ॥ ३ ॥

रा० टी०–विन्ध्यस्येति । तदा मासव्यतीतसमये संप्रपुष्पितपादपे विन्ध्यस्य गिरेः पादे प्रदेशविशेषे उपविश्य महात्मानो वानराः चिन्तामापेदिरे ॥ ३ ॥

गो० टी०–विन्ध्यस्येति । पादे दक्षिणपार्श्वे दक्षिणपश्चिमकोटावित्यर्थः । 'हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुंधरा' इति भेषजकल्पोक्तिः ॥ १६ ॥

४ ] ति० टी०–पुष्पातिभारयुक्तान्यग्राणि येषाम् । वासन्तिकान्वसन्तकाले फलवत आम्रादीन् ॥ ४ ॥

रा० टी०–तत इति । पुष्पाणामतिभारो येषु तान्येव अग्राणि येषां तान् वासन्तिकान् वसन्तकालकानिव द्रुमान् दृष्ट्वा भयशङ्किता बभूवुः । वासन्तिकशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः। एतेन तद्देशस्य प्रभावातिशयः सूचितः॥४॥

गो० टी०–तत इति । पुष्पातिभाराग्रान् पुष्पैरतिभाराणि अग्राणि येषां तान् वासन्तिकान् वसन्तफलिनश्चूतादीन् । ये वसन्ते फलन्ति ते शिशिरे पुष्प्यन्ति । भयशङ्किताः सुग्रीवाद्भयविषयशङ्कावन्तः ॥ १७ ॥

५ ] ति० टी०–भयकृतशङ्कां विवृणोति—ते इति । वसन्तमनुप्राप्तं प्रकृतशिशिरकालस्योत्तरकालमासन्नतया प्राप्तप्रायम् । नष्टः संदेशकाले राजसंदिष्टमासरूपे कालेऽनुष्ठेयोऽर्थो येषां ते ॥ ५ ॥

रा० टी०–ते इति । ते वानराः अनुप्राप्तं वसन्तं परस्परं प्रतिवेद्य वसन्तचिह्नहेतुकानुमानेन बोधयित्वा नष्टः संदेशकालरूपोऽर्थो येषां ते व्यतीतावधिमासका इत्यर्थः, वानरा धरणीतले निपेतुः एतेन तेषां शोकहेतुका भ्रान्तिः सूचिता। किं च वसन्तं बुद्धावारूढमनुप्राप्तं तं कालात्ययं परस्परं प्रतिवेद्य ते वानराः धरणीतले निपेतुः ॥ ५ ॥

गो० टी०–त इति । वसन्तम् अनुप्राप्तं प्रत्यासन्नम् । तदानीं हि शिशिरः । तथाहि । शरत्कालान्ते मार्गशीर्षे मासि सेनां संनिधाप्य पौषमासमवधिं कृत्वा प्रस्थापितवान् स पौषो माघश्चातीतः फाल्गुन एव प्रवृत्त इति तेन वसन्तः प्रत्यासन्न एव न प्राप्तः ॥ १८–२० ॥

६ ] ति० टी०–तान्भयेन भूतले पतितान् शिष्टान्वृद्धेभ्योऽन्यान् अनुमान्य संपूज्य ॥ ६ ॥

७ ] ति० टी०–प्राज्ञ अङ्गद इत्यार्षम् ॥ ७ ॥

रा० टी०–तत इति । सिंहवृषस्कन्धः सिंहवृषभस्कन्धसदृशस्कन्धविशिष्टः पीनायतभुजः स्थूलदीर्घभुजविशिष्टो महाप्राज्ञः सोऽङ्गदः शिष्टान् आप्तान् कपिवृद्धान् मधुरया वाचा आभाष्य संबोध्य अनुमान्य सत्कृत्य च अब्रवीत् । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

८ ] ति० टी०–शासनव्यतिक्रमं दर्शयति—मास इति । अन्वेषणावधित्वेन दत्त इत्यर्थः । किं न बुद्ध्यत नाबुद्ध्यत कालात्ययमिति शेषः ॥ ८ ॥

रा० टी०–तद्वचनाकारमाह–शासनादिति । कपिराजस्य शासनात् ये वयं विनिर्गतास्तेषां बिलस्थानामस्माकं मासः पूर्णः किं न बुध्यत ॥ ८ ॥

गो० टी०–शासनादित्यादि । वयमाश्वयुजे मासीति कालसंख्याव्यवस्थिताः कालसंख्यया नियमिताः । वयम् आश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण पञ्चदशरात्रसंख्यया नियम्य समाहूताः । ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसंख्यया समाहूताः । ततः सीतान्वेषणे पौषमासमवधि कृत्वा तेन प्रेषिताः । एवमाश्वयुजमासमारभ्य कालसंख्याव्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः । अन्ये त्वाहुः–आश्वयुजे मासि दशम्यामुत्थितायामितिवत्सामीपिकाधिकरणविवक्षया सप्तमी । तेन कार्तिके समनुप्राप्ते त्वं रावणवधे यत । इत्युक्तकालातिक्रमणप्रयुक्तरामकोपदर्शनात् कार्ति-

१ बुद्धा इति गो. पाठः । २ स्त्विति गो. पाठः ।

वयमाश्वयुजे मासि कालसंख्याव्यवस्थिताः । प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ ९ ॥
भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः । हितेष्वभिरता भर्तुर्निसृष्टाः सर्वकर्मसु ॥ १० ॥
कर्मस्वप्रतिमाः सर्वे दिक्षु विश्रुतपौरुषाः । मां पुरस्कृत्य निर्याताः पिङ्गाक्षप्रतिचोदिताः ॥ ११ ॥
इदानीमकृतार्थानां मर्तव्यं नात्र संशयः । हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ॥ १२ ॥
अस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् । प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ १३ ॥
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः । न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥ १४ ॥
अप्रवृत्तौ च सीतायाः पापमेव करिष्यति । तस्मात्क्षममिहाद्यैव गन्तुं प्रायोपवेशनम् ॥ १५ ॥

कान्तो विवक्षितः। सोऽपि चातीतः स मार्गणावधिभूतमार्गशीर्षमासः । अपिचेत्याभ्यां पदाभ्यां तदनन्तरभूतौ पौषमाघौ समुच्चीयेते । अतश्च फाल्गुन एव प्राप्त इति भाव इत्याहुः । अत उत्तरं किं कार्यम् ॥ २१ ॥ २२ ॥

९ ] ति० टी०—कालात्ययमेवाह—वयमिति । आश्वयुजे अतीतप्राये इति शेषः । 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत' इत्युक्तेः । ततः पञ्चदशरात्रकालसंख्यया प्रवर्तितदूतैर्व्यवस्थिता मिलिताः । एवं चामान्तमानेनाश्विनस्योत्तरे दीपोत्सवामायुते पक्षे सर्वसेनागमनं किष्किन्धायाम् । रामस्य क्रोधस्तु तत्रैव पक्षे कार्तिकसंनिधावपि तदुद्यमाभावकृतः । ततः कार्तिकेऽवधिरन्वेषणस्य । ततो मार्गशुक्ल इदं वचनम् । प्रायस्तद्वर्षे पौषः क्षयमासः । 'कार्तिकादित्रये नान्यतः' इत्युक्तेः अतो मार्गशुक्ल एव आम्रादीनां पुष्पोद्गमः उत्पाततो वा । तादृशरीत्या पुष्पोद्गमं दृष्ट्वाऽपि वसन्तासन्नतानुमानेन भयोपपत्तिः । कतकादयस्तु—अन्वेषणेऽवधित्वेन दत्तः पौषो मासः । 'आश्वयुजे' इत्यस्य तत्प्रत्यासन्नकार्तिकान्ते इत्यर्थः । कालसंख्येति कार्तिकोत्तरं पञ्चदशरात्रसंख्याकालेनावधिना वानरानयनाय दूतप्रेषणम् । ततः पूर्णिमान्तमानेन मार्गशुक्लेन सर्ववानरागमनम् । ततः पौषाद्यदिने दिक्ष्वन्वेषणाय वानरप्रस्थानम् । तत्र पौषे माघकृष्णीयकिंचिद्दिनसहितेऽतीते इदं वाक्यमित्याहुः । तेषां सीतानयनोत्तरं सीतां प्रति द्वादश मासा रावणावधिरिति स्पष्टमेव, पम्पायां चैत्रे आगमनमित्यस्योक्तत्वात् । ततः पूर्वं फाल्गुने सीतापहार इति च स्पष्टमेव । एवं च माघकृष्णे तच्छुक्लादौ वा हनूमतः सीतासमीपगमने हनूमन्तं प्रति 'वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम' इति सीतोक्तिविरोधः । किं च हनूमतो लङ्काप्रवेशदिने प्रदोषसमय एव पूर्णकल्पचन्द्रोदयवर्णनं च विरोध इत्याहुः ॥ ९ ॥

रा० टी०—वयमिति । आश्वयुजे आश्विने मासि कालसंख्याव्यवस्थिताः कालसंख्यायां संस्थापिताः वयं प्रस्थिताः सः नियमितकालः अतीतः अतः उत्तरमस्माभिः किं कार्यम् ॥ ९ ॥

१०-११ ] ति० टी०—उक्तमेव विस्तरेणाह—भवन्त इति । प्रत्ययमन्वेषणार्थराजनियोगं प्राप्ता ज्ञातवन्तो भवन्तो मां पुरस्कृत्य निर्याता इत्यन्वयः ॥ १० ॥ ११ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—भवन्त इति । प्रत्ययं राजविश्वासं प्राप्ताः नीतिमार्गविशारदाः अत एव सर्वकर्मसु निसृष्टाः यथाकालं नियोजिताः अत एव कर्मसु क्रियासु अप्रतिमाः अनुपमाः अत एव दिक्षु विश्रुतपौरुषाः अत एव भर्तुः हितेषु अभिरताः अत एव पिङ्गाक्षप्रतिचोदिताः सुग्रीवप्रेरिताः भवन्तः मां पुरस्कृत्य निर्गताः। श्लोकद्वयमेकान्वयि॥१०॥११॥

गो० टी०—भवन्त इति । प्रत्ययं विश्वासम् । नीतिमार्गे विशारदाः प्रगल्भाः । निसृष्टाः दक्षा इति यावत् ॥ २३–२६ ॥

१२ ] ति० टी०—तस्य कालस्य च बिले गतत्वादिदानीमकृतार्थानामस्माकं मर्तव्यं मरणमेवानुष्ठेयम् । कुतस्तत्राह—हरिराजस्येति ॥ १२ ॥

रा० टी०—इदानीमिति । इदानीं संयोजितकाले अकृतार्थानाम् अकृतराजप्रयोजनानामस्माकं कर्तव्यं सुग्रीवोक्तमिति शेषः। तत्र हेतुः—हरिराजस्य सुग्रीवस्य संदेशमुपदिष्टमकृत्वा कः सुखी भवेत् न कोऽपीत्यर्थः, अत्र संशयो न ॥ १२ ॥

१३ ] ति० टी०—प्रायोपवेशनं युक्तम् प्राणत्यागायेति शेषः ॥ १३ ॥

रा० टी०—ननु तत्करणे सामर्थ्यं नास्तीत्यत आह—अस्मिन्निति । सुग्रीवेण कृते नियमिते अस्मिन्काले अतीते सति प्रायोपवेशनं मरणाय अनशनं वनौकसां युक्तम् ॥१३॥

गो० टी०—तस्मिन्निति । प्रायाय अन्तगमनाय उपवेशनं शयनं प्रायोपवेशनम् ॥ २६ ॥ २७ ॥

१४] ति० टी०—स्वामिभावे निग्रहानुग्रहकृद्राजभावे व्यवस्थितोऽपराधः कालातिक्रमरूपः गतान्स्वसमीपं प्राप्तान्॥१४॥

रा० टी०—तदभावे न निर्वाह इत्याह—तीक्ष्ण इति । स्वामिभावे राजधर्मे व्यवस्थितः प्रकृत्या तीक्ष्णः सुग्रीवः अपराधकृतः गतान्संप्राप्तान् अस्मान् न क्षमिष्यति ॥ १४ ॥

१५ ] ति० टी०—अप्रवृत्तौ प्रवृत्तिप्रतिपादनाभावे । पापं वधरूपम् ॥ १५ ॥

रा० टी०—अप्रवृत्ताविति । सीतायाः अप्रवृत्तौ प्रवृत्त्यलाभे सति सुग्रीवः पापं वधं करिष्यत्येव तस्मात् इह अस्मिन् स्थाने पुत्रादींस्त्यक्त्वा तदास्थां संत्यज्य प्रायोपवेशनं गन्तुम् अद्यैव क्षमं युक्तम् । सार्धश्लोक एकान्वयी ॥ १५ ॥

१ कर्तव्यमिति रा. पाठः । २ तस्मिन्निति गो. पाठः । ३ प्रायोपविशनं हि नः इति गो. पाठः ।

त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च । ध्रुवं नो [1]हिंसते राजा सर्वान्प्रतिगतानितः ॥ १६ ॥
वधेनाप्रतिरूपेण श्रेयान्मृत्युरिहैव नः । न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ॥ १७ ॥
नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा । स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् ॥ १८ ॥
घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः । किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ॥
इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥ १९ ॥
एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् । सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ २० ॥
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियार[2]क्तश्च राघवः । [3]समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते ॥ २१ ॥
अदृष्टायां च वैदेह्यां दृष्ट्वा चैव समागतान् । राघवप्रियकामाय घातयिष्यत्यसंशयम् ॥ २२ ॥
न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः । प्रधानभूताश्च वयं सुग्रीवस्य समागताः ॥ २३ ॥
इहैव सीताम[4]न्वीक्ष्य प्रवृत्तिमुपलभ्य वा । नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ २४ ॥

गो० टी०–अप्रवृत्ताविति । अप्रवृत्तौ अवार्तायाम् । प्रायोपविशनमिति गुणाभाव आर्षः ॥ २८ ॥ २९ ॥

१६ ] ति० टी०–पुत्रादि त्यक्त्वा प्रायोपवेशनं गन्तुं कर्तुं क्षमं युक्तमित्यन्वयः । तत्र हेतुः—ध्रुवमिति ॥ १६ ॥

रा० टी०–ध्रुवमिति । इतः गतान् नोऽस्मान् राजा सुग्रीवो ध्रुवं हिंसते हिनस्ति हनिष्यति अतः अप्रतिरूपेण अपराधाभावादसदृशेन वधेन असदृशवधात् इह मृत्युरेव श्रेयान् ॥ १६ ॥

१७ ] ति० टी०–अप्रतिरूपेणापराधमूलत्वेनास्य वधस्याप्रतिरूपत्वम् । ननु युवराजत्वेनाभिषिच्य कथमसौ त्वां हनिष्यतीत्यत आह—न चाहमिति ॥ १७ ॥

रा० टी०–ननु 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इतिन्यायेन युवराजत्वेनाभिषेचितं त्वां सुग्रीवः कथं हनिष्यतीत्यत आह—नेति । यौवराज्येन युवराजत्वेन सुग्रीवेणाहं नाभिषेचितः किं तु रामेणाभिषिक्तोऽस्मि ॥ १७ ॥

गो० टी०—त्वां यौवराज्ये कृतवान् सुग्रीवः कथं हिंस्यादित्यत्राह—न चाहमिति ॥ ३० ॥ ३१ ॥

१८ ] ति० टी०–पूर्वं मां प्रति बद्धवैरः स राजा सुग्रीवो व्यतिक्रममाज्ञोल्लङ्घनं दृष्ट्वा घातयिष्यत्येव ॥ १८ ॥

रा० टी०–स्ववधस्यावश्यकत्वमाह—स इति । पूर्वं बद्धवैरः वालिवैरद्वारा बद्धः संपादितः वैरो येन स राजा सुग्रीवः व्यतिक्रमम् अतीतकालं मां दृष्ट्वा कृतनिश्चयो वधविषयकनिश्चयवान् सन् तीक्ष्णेन दण्डेन घातयिष्यति ॥ १८ ॥

१९–२०] ति० टी०–जीवितान्तरे राजाज्ञया जीवितनाशावधौ काले प्राप्ते मम व्यसनं पश्यद्भिरपि सुहृद्भिः किं कार्यमिति किं साध्यमित्यर्थकं शेषः । यदेवमतः—इहैवेति ॥१९॥२०॥

रा० टी०–किमिति । जीवितान्तरे जीवनावधिमध्ये मे व्यसनं राजहस्तात् मरणं पश्यद्भिः सुहृद्भिः किं कर्तव्यमिति शेषः, न किमपीत्यर्थः । एतेन मत्सुहृदामप्यधिकः खेदो भविष्यतीति सूचितम् अतः इह अस्मिन् पुण्ये सागररोधसि प्रायमासिष्ये ॥ १९ ॥

रा० टी०–एतदिति । कुमारेणाङ्गदेन एतत् भाषितं श्रुत्वा वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ २० ॥

गो० टी०–किमिति । मे जीवितान्तरे जीवितावधौ व्यसनं पश्यद्भिः सुहृद्भिः किं सुहृदो मद्व्यसनप्रदर्शनेन क्लेशयित्वा मम किं प्रयोजनमित्यर्थः ॥ ३२–३६ ॥

२१–२२ ] ति० टी०–प्रियायां रक्तोऽनुरक्तः । तस्मिन्समयेऽन्वेषणावधिकाले ॥ २१ ॥ २२ ॥

रा० टी०–तद्वाक्याकारमाह-तीक्ष्ण इति । राघवः प्रियारक्तः प्रियाविषयकात्यन्तानुरागवान् सुग्रीवाचरितवधवारणानर्ह इति तात्पर्यम् अतः तस्मिन् संकेतिते समये गते सति अकृतकार्यान् अस्मान् समीक्ष्य अनुमानेन निश्चित्य वैदेह्याम् अदृष्टायां सत्यां समागतान् राघवप्रियकामाय प्रकृत्या तीक्ष्णः सुग्रीवः घातयिष्यति । अर्धचतुष्टयमेकान्वयि ॥ २१ ॥ २२ ॥

२३ ] ति० टी०–अपराद्धानां कृतापराधानाम् । स्वामिपार्श्वतः स्वामिपार्श्वे सुग्रीवस्य प्रधानभूताः सेवका वयमिह समागताः ॥ २३ ॥

२४ ] ति० टी०–उपलभ्य वा गच्छाम । नो चेदिहैव स्थित्वा यमगृहं गमिष्यामः ॥ २४ ॥

रा० टी०–नेति । अपराद्धानाम् अबुद्धिपूर्वमपि जातापराधानां स्वामिपार्श्वतः स्वामिपार्श्वे गमनं न क्षमम् अतः समागताः सुग्रीवस्य प्रधानभूताः सेवका इति शेषः । वयं सीतामन्विष्य प्रवृत्तिं वृत्तान्तमुपलभ्य च वीरं सुग्रीवं गच्छामः नो चेद्वृत्तान्तज्ञानाभावे इहैव देहं त्यक्त्वेति शेषः यमक्षयं यमगृहं गच्छाम गच्छेम । अर्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०–इहैवेति । सीतामन्विष्य तस्याः प्रवृत्तिं वृत्तान्तमुपलभ्य वीरं तं गच्छाम नो चेदिहैव यमक्षयं यमगृहं गमिष्यामः ॥ ३६–३८ ॥

१ हिंसितेति गो. पाठः । २ सक्त इति गो. पाठः । ३ अर्धमेतत् गो. नास्ति । ४ अन्विष्येति गो. पाठः ।

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे ।
अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ २५ ॥
इदं हि मायाविहितं सुदुर्गमं प्रभूतपुष्पोदकभोज्यपेयम् ।
इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥ २६ ॥
श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।
यथा न हन्येम तथा विधानमसक्तमद्यैव विधीयतां नः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुष्पञ्चाशः सर्गः ।

तारमतेऽङ्गदादिभिरनुसृतेऽन्यवानरास्ततो व्यावर्तयन्हनुमान्युक्त्युपन्यासेनाङ्गदं भीषयमाणः सुग्रीवसौजन्य प्रशसंस्ततो भयाभाव च प्रतिपादयंस्तदन्तिकगमनमेव श्रेयस्करमिति प्रतिपादयति ।

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि । अथ मेने हृतं राज्यं हनूमानङ्गदेन तत् ॥ १ ॥
बुद्धया ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् । चतुर्दशगुणं मेने हनूमान्वालिनः सुतम् ॥ २ ॥
आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः । शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३ ॥

२५ ] ति० टी०–बिलं स्वयंप्रभाया बिलम् ॥ २५ ॥

२६ ] ति० टी०–कथमत्र प्राणत्राणमत आह—इदं हीति । नो इति लोकोक्तौ ॥ २६ ॥

रा० टी०–प्लवङ्गमानामिति । भयार्दितानां प्लवङ्गमानां वचः श्रुत्वा यदि वो रोचते तर्हि मायाविहितमिदं बिलं प्रविश्य सर्वे वयं वसाम इह बिले पुरन्दरादिभ्यो नो भयं न अतो विषादेन अलं न कर्तव्यमित्यर्थः इदं वचस्तारो बभाषे । अर्धचतुष्टयमेकान्वयि ॥ २५ ॥ २६ ॥

२७ ] ति० टी०–अङ्गदस्यापि अपिना तारस्य । असक्तमविलम्बम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥५३॥

रा० टी०–श्रुत्वेति । अङ्गदस्य अपिना तारस्य अनुकूलमविरोधं वचः श्रुत्वा प्रतीतास्तद्वचने जातविश्वासाः सर्वे हरयः यथा वयं न हन्येम तथा विधानं कृत्यमसक्तं प्राणापहारके आसक्तिरहितं यथा भवति तथा अद्यैव नोऽस्माभिर्विधीयतामित्यर्थः ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

गो० टी०–श्रुत्वेति । अङ्गदस्याप्यनुकूलं तारस्य वचनं श्रुत्वेत्यन्वयः । विधानं कार्यम् कर्मणि ल्युट् असक्तम् अविलम्बम् ॥ २९ ॥

अस्मिन् सर्गे सार्धैकोनचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

१ ] ति० टी०–ताराधिपतिवर्चसि तारे तथा ब्रुवति तुशब्दादङ्गदे प्रतिषेधाकरणात्तदनुमन्यमाने सति । अथानन्तरमङ्गदेन राज्यं सुग्रीवीयं कपिराज्यं हृतमिति मेने । तद्राज्यं स्वयंप्रभाबिलराज्यमित्यर्थ इत्यन्ये ॥ १ ॥

रा० टी०–अङ्गदं प्रति हनुमदुक्तिं वर्णयितुं हनुमद्विचारमाह–तथेत्यादिभिः । ताराधिपवर्चसि चन्द्रतेजःसदृशतेजोवति तारे तथा अङ्गदानुकूल्येन ब्रुवति सति अङ्गदेन राज्यं सुग्रीवकपिराजत्वं हृतमथ इति हनुमान्मेने एतेन तयोरुक्तिर्न समीचीनेति हनुमन्निश्चयः सूचितः अतिबुद्धिमाद्भिः सर्वं सुसाध्यमिति तस्य तात्पर्यम् ॥ १ ॥

गो० टी०–अथ हनुमता अङ्गदमतभेदनपूर्वकमङ्गदस्य सुग्रीवसमीपगमनाय नियोजनं चतुष्पञ्चाशे–तथेत्यादि । राज्यं हृतं मेने राज्यं कर्तुं सामर्थ्यमस्तीति मेन इत्यर्थः ॥१॥

२–३ ] ति० टी०–नन्वङ्गदे कथं राज्यापहारचिन्ताऽत आह—बुद्ध्येति । अष्टाङ्गयाऽष्टगुणया । तेऽत्र गुणाः 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति प्रसिद्धाः । चतुर्बलं सामदानभेदनिग्रहरूपोपायचतुष्टयजम् । चतुर्दशगुणम् 'देशकालज्ञता दार्ढ्यं सर्वक्ले-

१ पेयकमिति गो. पाठः । २ हिंस्येमेति गो. पाठः । ३ हनुमानिति गो. पाठः

बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः । शुश्रूषमाणं तारस्य शुक्रस्येव पुरन्दरम् ॥ ४ ॥
भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविशारदः । अभिसंधातुमारेभे हनूमानङ्गदं ततः ॥ ५ ॥
स चतुर्णामुपायानां द्वितीयमुपवर्णयन् । भेदयामास तान्सर्वान्वानरान्वाक्यसंपदा ॥ ६ ॥
तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् । भीषणैर्विविधैर्वाक्यैः कोपोपायसमन्वितैः ॥ ७ ॥
त्वं समर्थतरः पित्रा युद्धे तारेय वै ध्रुवम् । दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥

शसहिष्णुता । सर्वविज्ञानिता दाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥' इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥ ३ ॥

४ ] ति० टी०–तारस्य वचः शुश्रूषमाणं यतोऽपश्यत्ततो राज्यं हृतं मेने । शुक्रस्येव पुरन्दरम् विपरीतोपदेशग्रहे उपमैषा । शुक्रशब्दोऽत्र बृहस्पतिपर इति कश्चित् ॥ ४ ॥

रा० टी०–बुद्ध्येति । अष्टाङ्गया अष्टगुणयुक्तया बुद्ध्या युक्तं चतुर्बलैः समन्वितं चतुर्दशगुणं चतुर्दशसङ्ख्याकगुणविशिष्टं शुक्लपक्षादौ श्रिया वर्धमानं शशिनमिव तेजोबलपराक्रमैरापूर्यमाणं बुद्ध्या बृहस्पतिसमं शुक्रस्य वचः शुश्रूषमाणं पुरन्दरमिव तारस्य वचः शुश्रूषमाणं विक्रमे पितुः सदृशमङ्गदं मेने । श्लोकत्रयमेकान्वयि । बुद्धेरष्टगुणास्तु 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ।' चतुर्बलानि तु सामदानभेदनिग्रहरूपोपायाः । चतुर्दश गुणास्तु 'देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानतादाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम्' इति ॥२-४॥

गो० टी०–बुद्ध्या हीति । अष्टाङ्गया 'ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इत्युक्ताष्टाङ्गयुक्तया । चतुर्बलसमन्वितं बाहुबलमनोबलोपायबलबन्धुबलयुक्तम् । चतुर्दशगुणम् 'देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानिता दाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षत्वमचापलम् ॥' इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥

गो० टी०–आपूर्यमाणमित्यादि । तारस्य शुश्रूषमाणं मदस्य शृणोतीतित्वत्कारकशेषत्वात् षष्ठी । शुक्रस्येव पुरन्दरमिति पुरंदरशब्दसंनिधानादत्र शुक्रशब्दो बृहस्पतिपरः, यद्वा कस्यांचिदवस्थायां हितमुपदिशतः शुक्रस्य वचनं पुरन्दरः श्रुतवानित्यवगम्यते 'गुरोरिव पुरंदरम्' इति क्वचित्पाठः । अभिसंधातुम् अनुकूलयितुम् ॥ ३-५ ॥

५ ] ति० टी०–भर्तुः सुग्रीवस्यार्थेऽर्थकरणे परिश्रान्तं विमुखम् । सर्वशास्त्रविशारद इति हनुमद्विशेषणम् । अभिसंधातुं तारादिभ्यो भेदयितुम् ॥ ५ ॥

रा० टी०–भर्तुरिति । भर्तुः सुग्रीवस्य अर्थे प्रयोजनसाधने परिश्रान्तं जातश्रमं निवृत्तचित्तमित्यर्थः, अङ्गदम् अभिसंधातुं भर्तुरर्थे संयोजयितुं हनुमानारेभे ॥ ५ ॥

६ ] ति० टी०–स इति । अभिसंधित्सुर्हनुमानित्यर्थः । द्वितीय उपायो भेदस्तमुपवर्णयन् हेतौ शता तदुपायावलम्बनहेतुना तान्सर्वानङ्गदानुवर्तिनः । वाक्यसंपदा भेदजननक्षमन्यायोपेतेन 'हीनाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः' इत्यादिवाक्यसमूहेन ॥ ६ ॥

रा० टी०–स इति । स हनुमान् चतुर्णामुपायानां सामदानभेदनिग्रहरूपाणां तृतीयं भेदं वाक्यसंपदा युक्तियुक्तवचनसमूहेन उपवर्णयन् सर्वान् अङ्गदपक्षीयान् वानरान् भेदयामास 'हीनाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः' इत्यादिवचनैः अङ्गदसंमतेः पृथक् चकार ॥ ६ ॥

गो० टी०–स इति । चतुर्णां सामादीनां तृतीयं भेदम् 'साम दानं च भेदश्च दण्डश्चेति यथाक्रमम्' इति क्रमनियमात्॥६॥

७ ] ति० टी०–कोपोपायो दण्डस्ततसमान्वितैः । 'कोपापायसमन्वितैः' इति पाठः पाठः । कोपापनयनसामर्थ्ययुक्तैरभीषयन्न्यायप्रदर्शनपूर्वं भयमुत्पादयामास ॥ ७ ॥

रा० टी०–तेष्विति । तेषु अङ्गदपक्षीयेषु भिन्नेषु सत्सु कोपोपायसमन्वितैः कोपोपायेन दण्डेन समन्वितैः युक्तैः अत एव विभीषणैः भयप्रापकैः वाक्यैः अङ्गदमभीषयत् ॥ ७ ॥

गो० टी०–तेष्विति । कोपरूप उपायः कोपोपायः दण्डः तत्समन्वितैः ॥ ७ ॥

८] ति० टी०–भीषणमेव स्तुतिपूर्वं करोति—त्वमिति । त्वं पित्रा सुग्रीवेण युद्धे समर्थतरः । यद्वा त्वं पित्रा सदृश इति शेषः अत एव युद्धे समर्थतर इत्यर्थः । दृढं धारयितुं शक्तः । अस्य यदि सर्वे कपयस्त्वामनुवर्स्यन्तीति शेषः । कपिराज्यं किष्किन्धायां वा ऋक्षबिले वा ॥ ८ ॥

रा० टी०–तत्प्रकारमाह–त्वमिति । तारेय हे अङ्गद ! त्वं युद्धे पित्रा सदृश इति शेषः अत एव समर्थतरः अत एव कपिराज्यं धारयितुं पिता इव त्वं समर्थः तथापि नित्यमस्थिरचित्ताः चञ्चलमनसः कपयस्त्वयाऽऽज्ञाप्यं इह वासं पुत्रदारं विना न विषहिष्यन्ति करिष्यन्ति । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–त्वमिति । पित्रा पितुः ॥ ८ ॥

१ शास्त्रविदां वरमिति गो. पाठः । २ हनुमानिति गो. पाठः। ३ तृतीयमिति गो. रा. पाठः। ४ बहुभिरिति गो. पाठः। ५ धुरमिति गो. पाठः।

नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव । नाज्ञाप्यं विषहिष्यन्ति पुत्रदारं[1] विना त्वया ॥ ९ ॥
त्वां नैते ह्यनुरञ्जेयुः[2] प्रत्यक्षं प्रवदामि ते । यथाऽयं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ १० ॥
नह्यहं ते इमे सर्वे सामदानादिभिर्गुणैः । दण्डेन न[3] त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥
विगृह्यासनमप्याहुर्दुर्बलेन बलीयसा[4] । आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥
यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् । एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणम्[5] ॥ १३ ॥
स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा । लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥ १४ ॥
लक्ष्मणस्य च[6] नाराचा बहवः सन्ति तद्विधाः । वज्राशनिसमस्पर्शा गिरीणामपि दारकाः[7] ॥ १५ ॥

९ ] ति० टी०–न च तदस्तीत्याह—नित्यमिति । स्वभावादिति भावः । अस्थैर्ये कारणान्तरमप्याह–पुत्रदारं विनेति । पुत्रदाराणां किष्किन्धावर्तिनां सुग्रीवायत्तत्वात्त्वया सह बिलेऽवस्थाने तद्वियोगस्य स्पष्टत्वात् । निगृह्य स्थापनमप्यशक्यमित्याह— त्वयाऽऽज्ञाप्यं त्वत्कर्तृकमाज्ञापनं न सहिष्यन्ति । त्वत्तोऽप्यधिकबलत्वादिति भावः ॥ ९ ॥

गो० टी०–नित्यामिति । आज्ञाप्यं आज्ञापनम् भावे कृत्यप्रत्ययः । पुत्रदारान् पुत्रदारैर्विरहिताः । त्वयेति कर्तरि तृतीया अस्य आज्ञाप्यमित्यनेन संबन्धः ॥ ९ ॥

१० ] ति० टी०–पुत्रदारं हित्वा एते त्वां नानुरञ्जेयुस्त्वयि नानुरक्ता भवेयुः । उक्तमर्थं स्पष्टं यथा भवति तथा प्रवदामि प्रदर्शयामि । तदेव दर्शयति—अयं जाम्बवानिति ॥ १० ॥

११ ] ति० टी०–अहमिति स्वनिर्देशः । ते इमे सर्वे सामदानादिभिर्गुणैरुपायैस्त्वया सुग्रीवादपकर्षितुं शक्या न हि नापि दण्डेन ॥ ११ ॥

रा० टी०–त्वामिति । यथा जाम्बवदादयस्त्वां सुग्रीवविरोधित्वेन ज्ञायमानं न अनुरञ्जेयुस्तथा अहं न इमे सर्वे वानराश्च न इत्यहं ते प्रत्यक्षं प्रवदामि अत एव सामदानादिभिर्दण्डेन च सुग्रीवादपकर्षितुं पृथक्कर्तुं न शक्याः एतेन सुग्रीवस्यातिप्राबल्यं व्यञ्जितम्। श्लोकद्वयमेकान्वयि॥१०॥११॥

गो० टी०–त्वामिति । अयं जाम्बवान्नीलः सुहोत्रश्च एते त्वां यथा नानुयुञ्जेयुः नानुवर्तेन् तथाऽहमपि नानुवर्ते हि । त इमे सर्वे सामादिभिः सुग्रीवादपकर्षितुं न शक्याः ॥ १० ॥११॥

१२ ] ति० टी०–ननु गच्छत यूयमपि, एकेनैव मया स्थेयमत आह—विगृह्येति । दुर्बलेन सह विगृह्य बलीयसाऽऽसनं स्थितिः शक्येत्याहुः न तु दुर्बलस्य बलीयसा विगृह्यासनं शक्यम् तस्मादात्मरक्षाकरः आत्मरक्षाकरणेच्छुः पुरुषो दुर्बलः सन्बलीयसा न विगृह्णीत ॥ १२ ॥

रा० टी०–ननु भवन्तः सुग्रीवमेवानुसरन्तो गच्छन्तु एक एवाहमत्र स्थास्यामीत्यत आह–विगृह्येति । बलीयसा पुरुषेण सह विगृह्य वैरं संपाद्य दुर्बलेन आसनं स्थितिं कर्तुं न शक्यं तस्मात् आत्मरक्षाकरो दुर्बलो बलीयसा न विगृह्णीत इत्याहुराप्ता इति शेषः कर्तुं शक्यमित्यध्याहृतम् । नेति बलीयसेति च आवर्तते ॥ १२ ॥

गो० टी०–विगृह्यासनमिति । बलीयसः प्रबलस्य दुर्बलेन समं विगृह्य आसनमप्यत्रस्थानमपि कर्तव्यमाहुः न तु दुर्बलस्य बलीयसा तस्मात् आत्मरक्षाकरः स्वक्षेमकाम इति यावत्, दुर्बलः बलीयसा न विगृह्णीत विगृह्य नासीत ॥ १२ ॥

१३ ] ति० टी०–नन्वेषा गुहा न बलवतः साध्येत्याशङ्कयाह–यामिति । यामिमां गुहां धात्रीं रक्षिकां मन्यसे नेयं रक्षिकेति शेषः । कुतस्तत्राह—यदेतद्बिलमृक्षबिलं निर्भयमिति ताराच्छ्रुतम् एतदेतद्विषयविदारणं लक्ष्मणबाणानामीषत्कार्यमीषत्करम् खलभाव आर्षः ॥ १३ ॥

रा० टी०–ननु बिले न कस्माद्विद्भीतिरिति तत्रैव वत्स्यामीत्यत आह–यामिति । यदेतत् बिलं स्मृतं तारेण ज्ञातमाहात्म्यम् अत एव यामिमां धात्रीं रक्षिकां मन्यसे तस्य विदारणं लक्ष्मणबाणानाम् ईषत्कार्यमीषत्करम्, परिश्रममन्तरा साध्यमित्यर्थः ॥ १३ ॥

गो० टी०–स्वतो बलाभावेऽपि दुर्गबलमस्तीत्याशङ्क्याह–यां चेति । यामिमां गुहां धात्रीं रक्षकां मन्यसे । एतद्बिलमिति ताराच्छ्रुतम् एतत् ऋक्षबिलं विदारणे विषये लक्ष्मणबाणानामीषत्कार्यम् अयत्नसाध्यमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०–पुरा पूर्वं मायया भूतकान्तर्निर्मितैतत्पुरवर्तिमयवधार्थमशनिं तत्प्रदेशभुवि क्षिपतेन्द्रेण स्वल्पमेव कृतं मयवधमात्रं कृतम्, न तु पुरं भग्नम् । लक्ष्मणस्तु निशितैर्बाणैरेतत्पुरमपि पत्रपुटमिव भिन्द्यात् ॥ १४ ॥

रा० टी०–स्वल्पमिति । पुरा पूर्वं मयकर्तृकबिलस्थितिसमये अशनिं क्षिपता मयासुरमुद्दिश्य त्यजता इन्द्रेण स्वल्पं द्वाराकृतिच्छिद्रमात्रं कृतं लक्ष्मणस्तु बाणैः पत्रपुटमिव भिन्द्यात् ॥ १४ ॥

गो० टी०–स्वल्पमिति । पुरा बिलवासिनं मयमुद्दिश्याशनिं वज्रं क्षिपतेन्द्रेण स्वल्पं कृतं द्वारमात्रं कृतम् । लक्ष्मणस्तु निशितैर्बाणैः पत्रपुटमिव भिन्द्याद्धि ॥ १४ ॥

१५ ] ति० टी०–कुतस्तत्राह—लक्ष्मणस्येति । तद्विधा

१ दारानिति गो. पाठः । २ युञ्ज्युरिति गो. पाठः । ३ वेति गो. पाठः । ४ बलीयस इति गो. पाठः । ५ विदारणे इति गो. पाठः । ६ त्विति गो. पाठः । ७ दारणा इति गो. पाठः ।

अवस्थानं यदैव त्वमासिष्यसि परन्तप । तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः । खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥
स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः । तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥ १८ ॥
अत्युग्रवेगा निशिता घोरा लक्ष्मणसायकाः । अपावृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९ ॥
अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् । आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २० ॥
धर्मराजः पितृव्यस्ते प्रीतिकामो दृढव्रतः । शुचिः सत्यप्रतिज्ञश्च स त्वां जातु न नाशयेत् ॥ २१ ॥
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् । तस्यापत्यं च नास्त्यन्यत्तस्मादङ्गद गम्यताम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

इत्यस्य विवरणं वज्राशनीत्यादि । वज्रमिन्द्रकरस्थम, अशनिर्मेघस्थः यद्वा तद्विधा वालिहन्तृबाणसदृशाः ॥ १९ ॥

रा० टी०–लक्ष्मणस्येति । वज्राशनिसमस्पर्शः अत एव गिरीणामपि दारकास्तद्विधा अशनेरपि निर्मापकाः लक्ष्मणस्य नाराचाः बाणविशेषाः बहवः सन्ति ॥ १९ ॥

गो० टी०–लक्ष्मणस्येति । तद्विधाः तादृशा अपरिच्छिन्नवैभवा इति यावत्, गिरीणामपि दारणाः बिलस्य किमुतेति भावः ॥ १९ ॥

१६ ] ति० टी०–यदैवात्र बिले त्वमवस्थानमासिष्यसि प्राप्स्यसि तदैव सर्वे हरयः कृतनिश्चयास्त्वां त्यक्ष्यन्ति ॥ १६ ॥

रा० टी०–अवस्थानमिति । यदा अवस्थानं बिले स्थितिमासिष्यसि निश्रेष्यसि तदैव कृतनिश्चयाः त्वत्यागविषयकनिश्चयवन्तः सर्वे हरयः त्यक्ष्यन्ति त्वामिति शेषः ॥ १६ ॥

गो० टी०–अवस्थान इति । अवस्थाने बिले । यद्वा विगृह्यावस्थाने आसिष्यसि स्थास्यसि विगृह्यावस्थानं यदाऽध्यवसिष्यसीत्यर्थः ॥ १६–१८ ॥

१७ ] ति० टी०–नित्योद्विग्ना रामलक्ष्मणसुग्रीवेभ्यः । बुभुक्षिताः पुत्रदारादिजसुखभोगेच्छवस्त्वया दुःखशय्याभिर्दुःखस्थित्यादिभिः खेदिताः सन्तस्त्वां पृष्ठतः करिष्यन्ति । सर्वथा त्यक्ष्यन्त्येवेत्यर्थः ॥ १७ ॥

रा० टी०–तत्र हेतुं वदन्नाह–स्मरन्त इति । नित्योद्विग्नाः सुग्रीवादिभ्यो नित्यं भीताः बुभुक्षिताः अत एव खेदिताः पुत्रदाराणां स्मरन्तः सर्वे वानराः दुःखशय्याभिः शयितमिति शेषः त्वां पृष्ठतः पृष्ठे करिष्यन्ति त्वां संत्यज्य सुग्रीवसमीपं गमिष्यन्तीत्यर्थः ॥ १७ ॥

१८ ] ति० टी०–स्पन्दमानात्तृणादपि लघुरिति शेषः । अत एव भृशोद्विग्नो भविष्यसि । यद्वा तादृशतृणात्तद्दृष्ट्वा भृशोद्विग्नः रामाद्यागमनशङ्कयेति भावः ॥ १८ ॥

रा० टी०–स इति । हितकामैः सुहृद्भिर्बन्धुभिश्च हीनः अत एव भृशोद्विग्नस्त्वं स्पन्दमानात् उड्डीयमानात् तृणादपि लघुर्भविष्यसि ॥ १८ ॥

१९ ] ति० टी०–अतोऽत्युग्रवेगा निशिता घोरा लक्ष्मणसायका अपावृत्तं व्युत्थितं त्वां जिघांसन्तो भवेयुः । सर्वत्रात्र लक्ष्मणनामग्रहणं तस्य क्रूरस्वभावत्वात्, ईदृशानां रामालक्ष्यत्वाच्च ॥ १९ ॥

रा० टी०–न चेति । अपवृत्तं रामकार्योद्विमुखं त्वां जिघांसन्तः लक्ष्मणसायकाः जातु कादाचित् न हिंस्युः न अवश्यं हिंस्युरित्यर्थः एतेन इह त्वया नैव स्थातव्यमिति सूचितम् ॥ १९ ॥

गो० टी०–न चेति । लक्ष्मणसायकाः अपवृत्तं वृत्तहीनम् स्वकार्याकरमित्यर्थः, त्वां न हिंस्युरिति न हिंस्युरेवेत्यर्थः ॥ १९ ॥

२० ] ति टी०–एवं वास्तवं भयं प्रदर्श्य सुग्रीवसमाश्रयणमेव हितमित्याह–अस्माभिरिति । आनुपूर्व्याज्ज्येष्ठपुत्रत्वप्रयुक्तादनुक्रमात् ॥ २० ॥

रा० टी०–ननु तत्र गमने सुग्रीवो हनिष्यत्यत आह–अस्माभिरिति । अस्माभिः सार्धं गतं विनीतवत् विनीतियुक्तमुपस्थितं त्वामानुपूर्व्यात् कालक्रमेण सुग्रीवो राज्ये स्थापयिष्यति ॥ २० ॥

गो०टी०–अस्माभिरिति । आनुपूर्व्यात् क्रमप्राप्तेः २०-२२

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

२१ ] ति० टी०–राज्येऽवस्थाने हेतुमाह–धर्मेति । धर्मराजो धर्ममार्गवर्ती राजा तथा प्रीतिकाम एव त्वयि, न तु त्वद्वधकामः ॥ २१ ॥

रा० टी०–धर्मराज इति । धर्मराजः सद्धर्मैः शोभमानः प्रीतिकामः दृढव्रतः अप्रच्युतसंकल्पः अत एव सत्यप्रतिज्ञः स सुग्रीवस्त्वा त्वां न नाशयेत् ॥ २१ ॥

२२ ] ति० टी०–इतश्च सर्वथैवमेवेत्याह–प्रियकाम

१ स्थाने इति गो. पाठः । २ न च जातु न हिंस्युस्त्वामिति गो. रा. पाठः । ३ अपवृत्तमिति गो. रा. पाठः । ४ काम इति गो. पाठः । ५ नेति गो. पाठः । ६ जिघांसतीति गो. पाठः । ७ त्विति रा. पाठः ।

## पञ्चपञ्चाशः सर्गः ।

हनुमद्वर्णितसुग्रीवसौगुण्यमसहमानोऽङ्गदः सुग्रीवदोषानुद्घाटयंस्तद्गर्हणपूर्वं स्वप्रायोपवेशनिश्चयं वानरान्प्रतिश्रावयन्प्रायमुपाविशत् । तथाभूतेऽङ्गदे सबाष्पमोक्षं सुग्रीवं विनिन्दन्तः कपिवीरा अपि रामवनप्रवेशादिस्वप्रायोपवेशान्तसकलवृत्तान्तोद्घोषणेन गिरिदरीः पूरयन्तः प्रायमुपाविशन् ।

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् । स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १ ॥
स्थैर्यमात्ममनःशौचमानृशंस्यमथार्जवम् । विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥
भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३ ॥
कथं स धर्मं जानीते येन भ्रात्रा दुरात्मना । युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४ ॥
सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः । विस्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥ ५ ॥
लक्ष्मणस्य भयेनेह नाधर्मभयभीरुणा । आदिष्टा मार्गितुं सीता धर्मस्तस्मिन्कथं भवेत् ॥ ६ ॥

---

इति । अस्य जीवितम् तदर्थं त्वन्मातुः प्रीतिसंपादनप्रयोजनम् गम्यताम् अस्माभिः सार्धमिति शेषः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०–प्रियेति । ते मातुः प्रियकामः सुग्रीवोऽस्तीति शेषः। अत एव तदर्थं त्वन्मातृप्रीतिसिद्ध्यर्थम् अस्य सुग्रीवस्य जीवितं जीवनम् । तत्र हेतुः—तस्य सुग्रीवस्य अन्यदपत्यं नास्ति तस्माद्गम्यताम् ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

१ ] ति० टी०–प्रश्रितं विनीतम् । स्वामिसत्कारसंयुक्तं सुग्रीवसन्मानयुक्तमिति हनुमद्वाक्यविशेषणम् ॥ १ ॥

रा० टी०–श्रुत्वेति । स्वामिसत्कारसंयुक्तं हनुमतो वाक्यं श्रुत्वा अङ्गदोऽब्रवीत् ॥ १ ॥

गो० टी०–अथ हरीणां प्रायोपवेशः पञ्चपञ्चाशे–श्रुत्वेत्यादि ॥ १ ॥

२ ] ति० टी०–आत्ममनसोः शौचं कामादिदोषराहित्यम् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह—स्थैर्यमिति। सुग्रीवे स्थैर्यप्रभृतिः नोपपद्यते घटते ॥ २ ॥

गो० टी०–स्थैर्यमिति । स्थैर्यं स्थिरबुद्धिता । आत्ममनःशौचम् आत्मशुद्धिः मनसः शौचम् अन्तःकरणशुद्धिश्चेत्यर्थः । धैर्यं गाम्भीर्यम् ॥ २ ॥

३ ] ति० टी०–तदनुपपत्तिमेव दर्शयति–भ्रातुरिति । ज्येष्ठस्य भ्रातुर्भार्यां धर्मेण मातरं धर्ममार्गेण वर्तमानां ज्येष्ठभ्रातृपत्नीं तां मातृतुल्यां जीवतो मम समक्षम् अनेन 'देवराच्च सुतोत्पत्तिम्' इत्यतोऽपि धर्मत्वं वारितम् । यद्वा जीवतो महिषीमिति महिषीयुद्धकालिकस्वीकारपरम् । यः स्वीकरोति कथं स धर्मं जानीत इत्यन्वयः । एतेन हनुमदुक्तं धर्मराजत्वं प्रत्याख्यातम् । एतद्वचोऽङ्गदस्य केवलरोषमूलं त्रैवर्णिकातिरिक्तधर्मास्मरणमूलकम् ॥ ३ ॥

रा० टी०–तत्र हेतुं वदन्नाह–भ्रातुरिति । धर्मेण धर्मबुद्ध्या मातरं ज्येष्ठस्य भ्रातुर्भार्यां जुगुप्सितं यथा भवति तथा यः स्वीकरोति । युद्धाय युद्धं कर्तुं गच्छतेति शेषः भ्रात्रा अभिनियुक्तेन बिलमुखरक्षणाय नियोजितेन येन च बिलस्य मुखं पिहितं स सुग्रीवः धर्मं कथं जानीते। श्लोकद्वयमेकान्वयि॥३॥४॥

गो० टी०–मनःशौचाभावमुपपादयति–भ्रातुरिति । स कथं धर्मं जानीत इति वक्ष्यमाणमाकृष्यते । जीवत इत्यनेन भ्रातुर्मरणानन्तरं तद्भार्यापरिग्रहः कुलधर्म इत्यवगम्यते ॥ ३ ॥

४ ] ति० टी०–स उक्तजुगुप्सितकर्मकारी । धर्माज्ञाने उपपत्त्यन्तरमप्याह–युद्धाय युद्धार्थं गच्छता भ्रात्राऽभिनियुक्तेन । बिलरक्षणनियुक्तेनेत्यर्थः ॥ ४ ॥

गो० टी०–आनृशंस्याभावमुपपादयति–युद्धायेति । युद्धायाभिनियुक्तेन । द्वारान्निर्गतस्य शत्रोः युद्धाय वालिना नियुक्तेनेत्यर्थः ॥ ४ ॥

५ ] ति० टी०–सत्यादग्निसाक्षिकतया पाणिगृहीतो मित्रं कृतो राघवोऽपि येन विस्मृतः, स कस्य सुकृतमुपकारं स्मरेत् न कस्यापीत्यतः कथं कृतज्ञ इत्यर्थः ॥ ५ ॥

रा० टी०–सत्यादिति । सत्यात्सत्यमवलम्ब्य पाणिगृहीतः पाणिग्रहेण स्वीकृतः कृतकर्मा कृतोपकृतिः राघवः येन विस्मृतः सः सुग्रीवः कस्य सुकृतं स्मरेत् न कस्यापीत्यर्थः॥५॥

गो० टी०–आर्जवाभावमुपपादयति–सत्यादिति । पाणिगृहीतः पाणौ गृहीतः ॥ ५ ॥

६ ] ति० टी०–ननु तत्कार्ये प्रवृत्तत्वात्कथं न कृतज्ञोऽत आह—लक्ष्मणस्येति । भयौपाधिकयेषा प्रवृत्तिर्न धर्म-

१ जुगुप्सितमिति रा. पाठः । २ महात्मनेति गो. पाठः । ३ स्त्विति गो. पाठः । ४ भयार्तेनेति गो. पाठः । ५ सीतां धर्ममस्मिन्निति गो. पाठः ।

तस्मिन्पापे कृतघ्ने तु स्मृतिभिन्ने[1] चलात्मनि । आर्यः को विश्वसेज्जातु तत्कुलीनो [2]विशेषतः ॥ ७ ॥
राज्ये पुत्रं[3] प्रतिष्ठाप्य सगुणो [4]विगुणोऽपि वा । कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥
भिन्नमन्त्रोऽपराद्धश्च [5]भिन्नशक्तिः कथं ह्यहम् । किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९ ॥
उपांशुदण्डेन हि मां बन्धनेनोपपादयेत् । शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १० ॥
बन्धनाच्[6]चावसादान्मे श्रेयः प्रायोपवेशनम् । अनुजानन्तु[7] मां सर्वे गृहं गच्छन्तु वानराः ॥ ११ ॥
अहं वः प्रतिजानामि [8]न गमिष्याम्यहं पुरीम् । इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥ १२ ॥
[9]अभिवादनपूर्वं तु राजा कुशलमेव च । अभिवादनपूर्वं तु राघवौ बलशालिनौ ॥ १३ ॥
वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः । आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ १४ ॥
मातरं चैव मे तारामाश्वासयितुमर्हथ । प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ॥ १५ ॥

मूलेति भावः । 'धर्ममस्मिन्' इति पाठे धर्मं धर्मधीमूलं प्रवर्तनमित्यर्थः ॥ ६ ॥

रा० टी०—ननु विस्मृतिश्चेत् कथं वयं प्रेषिताः इत्यत आह—लक्ष्मणस्येति । नाधर्मभयभीरुणा अधर्मभयभीतभिन्नेन येन सुग्रीवेण लक्ष्मणस्य भयेन हेतुना सीतां मार्गितुं स्वयमादिष्टास्तस्मिन् सुग्रीवे धर्मः कथं भवेत् ॥ ६ ॥

गो० टी०—कथं तर्हि सेनामानीतवान् सुग्रीव इत्याशङ्क्याह—लक्ष्मणस्येति । नाधर्मभयभीरुणा भयशब्दोऽत्र भयहेतुपरः अधर्मरूपभयहेतोर्भीरुणा न च किंतु लक्ष्मणस्य भयात् लक्ष्मणदण्डनिमित्तभयादित्यर्थः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—स्मृतिभिन्ने स्मृतिर्मन्वादीनां भिन्ना त्यक्ता येन । चलात्मनि चञ्चलान्तःकरणे । तत्कुलीनो तज्ज्ञातिकोटिप्रविष्टः ॥ ७ ॥

रा० टी०—तस्मिन्निति । स्मृतिभिन्ने धर्मशास्त्रोक्तधर्मरहिते किंच उपकृतिविषयकस्मरणरहिते अत एव पापादिविशिष्टे तस्मिन् सुग्रीवे आर्यः बुद्धिमत्वादिना श्रेष्ठस्तत्कुलीनः तत् कुलजातः को विशेषतो विश्वसेत् न कोऽपीत्यर्थः ॥ ७ ॥

८ ] ति० टी०—तदेव विवृणोति—राज्ये इति । सुग्रीवः सगुणो निर्गुणो वाऽस्तु, न मे तद्विचारेण किंचित्, अपि तु शत्रुकुलीनं मां पुत्रं राज्ये प्रतिष्ठाप्य कथं सुग्रीवो जीवयिष्यति न कथमपीत्यर्थः ॥ ८ ॥

रा० टी०—राज्य इति । सगुणो धर्मवान् विगुणः अधर्मवान् तद्विचारेण न किंचित्फलमित्यर्थः, सुग्रीवः पुत्रं जनिष्यमाणस्वतनयं राज्ये प्रतिष्ठाप्य प्रतिष्ठापयितुं विचार्य शत्रुकुलीनं मां कथं जीवयिष्यति ॥ ८ ॥

गो० टी०—तव यौवराज्यस्थापनं किं विस्मृतोऽसीत्यत्राह—राज्य इति । पुत्रः जनिष्यमाणः स्वपुत्रः ॥ ८ ॥

९ ] ति० टी०—इतोऽपि न जीवयिष्यतीत्याह—भिन्नेति । भिन्नो बिलप्रवेशरूपो मन्त्रो यस्य सः । एवं मन्त्रस्य यस्य कस्यापि मुखाच्छ्रवणेऽवश्यंभाविनि स्पष्टमपराद्धश्च भवामि । हीनशक्तिः सुग्रीवापेक्षया हीनबलः हनुमदुक्तरीत्या सहायबलहीनश्च ९

रा० टी०—भिन्नेति । भिन्ना विनष्टा शक्तिः अन्वेषणसामर्थ्यं यस्य सः अत एव भिन्नः दूरीकृतो मन्त्रः तदुपदिष्टकालो येन अत एव अपराद्धोऽहं किष्किन्धां प्राप्य अनाथ इव कथं जीवेयम् ॥ ९ ॥

गो० टी०—भिन्नेति । भिन्नमन्त्रः प्रकाशितविगृह्यावस्थानमन्त्रः । अपराद्धः कृतापराधः, यद्वा पितृहिंसनेन संजातापराधः ॥ ९ ॥

१० ] ति० टी०—उपांशुदण्डस्यैव रूपम्—बन्धनेनेति । पुत्र इति कृत्वा वधाभावः । अपराद्ध इति च बन्धननिश्चयः ॥ १० ॥

रा० टी०—उपांश्विति । सुग्रीवः राजकारणात् उपांशुदण्डेन अल्पवधोपायेन बन्धनेन सर्वकालं निरोधेन उपपादयेत् योजयेत् ॥ १० ॥

गो० टी०—उपांश्विति । उपांशुदण्डेन रहस्यदण्डरूपेण । उपपादयेत् प्रापयेत् ॥ १० ॥

११–१२ ] ति० टी०—तदेव द्रढयन्नाह—बन्धनादिति । अवसादो बन्धनजं दुःखम् ॥ ११ ॥ १२ ॥

रा० टी०—बन्धनादिति । बन्धनात् बन्धनजनितात् अवसादात् खेदात् प्रायोपवेशनमेव श्रेयः अतः सर्वे वानराः मामनुजानन्तु प्रायोपवेशनाय आज्ञापयन्तु गृहं गच्छन्तु च ११

रा० टी०—मत्कर्तृककिष्किन्धागमनाय न यतितव्यमिति बोधयन्नाह—अहमिति । इह अस्मिन् समये मरणमेव श्रेयः अतः प्रायं प्रायोपवेशनमासिष्ये प्राप्स्यामि अतः किष्किन्धामहं न गमिष्यामि इति वः युष्माकमग्रेऽहं प्रतिजानामि प्रतिज्ञां करोमि ॥ १२ ॥

गो० टी०—बन्धनाच्चावसादान्म इति । वेति प्रसिद्धौ । बन्धनरूपावसादात् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—राजा सुग्रीवः कुशलमेव वाच्य इत्यनुकर्षः । न त्विदानीं दुःखवशादुक्तमित्यर्थः । राघवौ कुशलं वाच्यौ ॥ १३ ॥

१४–१५ ] ति० टी०—अथ मातुः कुशलविज्ञापनाशेष-

१ हीने इति गो. पाठः । २ जिजीविषुरिति गो. पाठः । ३ पुत्रः प्रतिष्ठाप्यः इति गो. पाठः । ४ निर्गुण इति गो. पाठः । ५ हीनेति गो. पाठः । ६ वेति गो. पाठः । ७ जानीतेति गो. पाठः । ८ नागमिष्यामीति गो. पाठः । ९ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे ।

विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् । एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ॥ १६ ॥
विवेश चाङ्गदो भूमौ रुदन्दर्भेषु दुर्मुखः । तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ॥ १७ ॥
नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः । सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ॥ १८ ॥
परिवार्याङ्गदं सर्वे व्यवसन्प्रायमासितुम् । तद्वाक्यं वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ॥ १९ ॥
उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् । दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ॥ २० ॥
मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह । रामस्य वनवासं च क्षयं दशरथस्य च ॥ २१ ॥
जनस्थानवधं चैव वधं चैव जटायुषः । हरणं चैव वैदेह्या वालिनश्च वधं तथा ॥
रामकोपं च वदतां हरीणां भयमागतम् ॥ २२ ॥

स संविशद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।
बभूव संनादितनिर्झरान्तरो भृशं नदद्भिर्जलदैरिवाम्बरम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

तया, आरोग्यपूर्वकत्वविशेषाभिवित्सया च पुनः सुग्रीवे कुशलविज्ञापनमाह—वाचयस्तात इति ॥ १४ ॥ १६ ॥

रा० टी०—अभीति । बलशालिनौ राघवौ अभिवादनपूर्वकं प्रणाम पूर्वकं कुशलं वाच्यौ वानरेश्वरो वानरश्रेष्ठः यवीयान् कनिष्ठो वृद्धो राजा सुग्रीवश्च अभिवादनपूर्वं कुशलं वाच्यः । मे मातरं ताराम् आश्वासयितुमर्हथ । सार्धश्लोकद्वयमेकान्वयि॥१३॥१४॥

गो० टी०—अभिवादनेति । राघवौ कुशलं वाच्यावित्यनुषङ्गः ॥ १३ ॥ १४ ॥

रा० टी०—आश्वासने हेतुमाह—प्रकृत्येति । प्रकृत्या स्वभावेन प्रियपुत्रा सानुक्रोशा दयावती तपस्विनी सा तारा विनष्टं मां श्रुत्वा जीवितं जीवनं हास्यति त्यक्ष्यति। एतेनाश्वासनस्य प्राणरक्षाहेतुत्वं सूचितम् । अर्धद्वयमेकान्वयि ॥ १६ ॥

गो० टी०—प्रकृत्येति । तपस्विनी शोचनीया॥१५॥१६॥

१६-१७ ] ति० टी०—वृद्धाञ्जाम्बवदादीन् ॥ १६ ॥१७ ॥

रा० टी०—एतावदिति । दुर्मुखः उदासीनवदनोऽङ्गदः रुदन् वृद्धान् तान् एतावदुक्त्वा अभिवाद्य च भूमौ दर्भेषु विवेश॥१६॥

रा०टी०—तस्येति । संविशतस्तस्याङ्गदस्य समीपे दुःखिताः अत एव रुदन्तो वानरर्षभाः नयनेभ्यः उष्णं वारि प्रमुमुचुः॥१७॥

गो० टी०—तस्य संविशतस्तस्मिन् संविशति संवेशः शयनम् ॥ १७ ॥ १८ ॥

१८] ति० टी०—सुग्रीवं निन्दन्तः अङ्गदपक्ष्या इति शेषः १८

रा० टी०—सुग्रीवमिति । सुग्रीवं निन्दन्तः यस्य एक एव पुत्रः सोऽपि मुमूर्षुरिति तस्यातीव दुर्भगत्वमिति वदन्तः वालिनं प्रशंसन्तः वाली अतीव भाग्यवान् युद्धे रामसंमुखे मृतः इति वदन्तः सर्वे वानराः अङ्गदं परिवार्य प्रायमासितुं व्यवसन् व्यवस्यन् ॥ १८ ॥

१९-२०] ति०टी०—व्यवसन् व्यवास्यन्नित्यर्थः॥१९॥२०॥

रा० टी०—तदिति । प्लवगर्षभाः वालिपुत्रस्य तत् प्रायोपवेशनविषयकप्रतिज्ञाबोधकं वाक्यं विज्ञाय संस्मृत्य उदकमुपस्पृश्य समुपाविशन् ॥ १९ ॥

रा० टी०—दक्षिणेति । उदक्तीरं समुद्रस्य उत्तरतटं समाश्रिताः दक्षिणाग्रेषु दर्भेषु संस्थिताः इति शेषः, मुमूर्षवो हरिश्रेष्ठाः एतत् प्रायोपवेशनं क्षमं युक्तमित्यूचुरिति शेषः॥२०॥

गो० टी०—मतं तदिति । तत्र विन्ध्ये उदक्तीरं समुद्रस्योत्तरतीरम् एतत् प्रायोपवेशनम् क्षममिति मत्वेति शेषः॥१९॥२०

२१ ] ति टी०—हरिश्रेष्ठा अपि एतत्प्रायोपवेशनमेवास्माकमत्र क्षमं युक्तमिति मन्यन्ते स्मेति शेषः । स्वामिनि म्रियमाणे तं परित्यज्यास्माकं गमनमयुक्तमिति तत्क्षमत्वव्यवसायः । रामस्य वनवासमित्यादिनाऽग्रिमसर्गार्थसंक्षेपः ॥ २१ ॥

२२ ] ति० टी०—भयमागतम् संपातिजं वक्ष्यमाणं भयमित्यर्थः ॥ २२ ॥

रा० टी०—रामस्येति । रामस्य वनवासादीन् वदतां हरीणां वानराणां भयं वक्ष्यमाणभीतिरागतं प्राप्तम् । अर्धचतुष्टयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०—रामस्येत्यादि । जनस्थानवधं जनस्थानस्थरक्षोवधम् आगतं भयं प्रायोपवेशनरूपभयनिमित्तं च वदतां वदत्सु च स महीधरो भृशं संनादितनिर्दरान्तरो बभूवेत्युत्तरेणान्वयः ॥ २१ ॥ २२ ॥

अस्मिन्सर्गे सार्धत्रयोविंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

२३] ति० टी०—भृशं नदद्भिः संपातिजभयादिति शेषः २३

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

१ दुर्मना इति गो.पाठः। २ मतं तदिति गो. पाठः। ३ तत्रेति गो.पाठः। ४ रणे इति गो. पाठः। ५ निर्दरेति गो. पाठः। ६ उत्खणैरिव गो.पाठः।

## षट्पञ्चाशः सर्गः ।

कपिकलकलं श्रुत्वा विन्ध्यकन्दरनिर्गतः संपातिः कपिकुलं विलोक्य चिरताहारपरिकल्पनहर्षाद्विधिं प्रशंसन्क्रमेण सर्वभक्षणं प्रतिजज्ञे । तदाकर्ण्य खिन्नोऽङ्गदो रामकार्यसिद्धेः प्राक्प्राप्तप्राणसंशयेभ्योऽस्मत्तो रामोपकाराय रावणहस्तात्प्राप्तमृत्युर्जटायुः प्रशस्यतर इत्युत्कीर्तयन्नेतद्विपन्मूलभूतां कैकेयीं निनिन्द । आकर्ण्यैतन्निर्विण्णः संपातिरङ्गदं प्रति स्वस्य जटायुरग्रजत्वं विनिवेद्य तन्मरणवृत्तं पृच्छन्स्वस्य निर्दग्धपक्षत्वमुक्त्वाऽऽत्मानं पर्वतादवतारयितुं प्रार्थयते ।

उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरिस्थले । हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥
संपातिर्नाम नाम्ना तु चिरंजीवी[1] विहङ्गमः । भ्राता जटायुषः श्रीमान्विख्यातबलपौरुषः[2] ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः । उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३ ॥
विधिः किल नरं लोके विधानेनानुवर्तते । यथाऽयं विहितो भक्ष्यश्चिरान्मह्यमुपागतः ॥ ४ ॥
परम्पराणां भक्षिष्ये वानराणां मृतं मृतम् । उवाचैतद्वचः[3] पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः । अङ्गदः परमायस्तो हनूमन्तमथाब्रवीत्[4] ॥ ६ ॥
पश्य सीतापदेशेन[5] साक्षाद्वैवस्वतो यमः । इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥
रामस्य न कृतं कार्यं न[6] कृतं राजशासनम् । हरीणामियमज्ञाता विपत्तिः सहसाऽऽगता ॥ ८ ॥

रा० टी०–स इति । संविशद्भिः महाद्रिकूटप्रतिमैः महाशैलशृङ्गसदृशैः प्लवङ्गमैः सः वानरसमीपवर्ती महीधरः नदद्भिर्जलदैरम्बरमाकाशमिव सन्नादितं निर्झरान्तरं निर्झरमध्यं यस्य सः बभूव ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

१–३ ] ति० टी०–गिरिस्थले गिरिप्रदेशे ॥ १–३ ॥

रा० टी०–भयमागतमित्युक्तम्, तत्स्वरूपं वर्णयितुमाह–उपेति । यस्मिन् गिरिस्थले सर्वे हरयः प्रायमुपविष्टाः तं देशं गृध्रराजः संपातिः उपचक्रमे जगाम ॥ १ ॥

गो० टी०–अथ संपातिसंवादः षट्पञ्चाशे–उपविष्टा इत्यादि । उपचक्रमे प्राप्तुमुपक्रान्तः ॥ १ ॥

रा० टी०–संपातिरिति । जटायुषः भ्राता नाम्ना संपातिः संपातिनामेत्यर्थः, विन्ध्यस्य कन्दरात् अभिनिष्क्रम्य हरीन्दृष्ट्वा हृष्टात्मा सन् गिरमब्रवीत् नाम प्रसिद्धमेतत् । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो०टी०–संपातिरित्यादि । श्लोकद्वयमेकान्वयम् ॥२॥३॥

४ ] ति० टी०–विधिः क्रियाफलम् । नरं प्राणिनं विधानेन प्राचीनकर्मानुसारेण । यथा तथा तथोच्यत इत्यर्थः । अयमामिषरूपोऽस्माकं भक्ष्यश्चिरान्मह्यं स्वत एवोपागतः ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह–विधिरिति । विधानेन पूर्वार्जितकर्मानुसारेण विधिः क्रियाफलं यथा नरमनुवर्तते प्राप्नोति तथा विहितः पूर्वार्जितकर्मणा निष्पादितः अयं भक्ष्यः मह्यमुपागतः अतः परम्पराणां क्रमेणाभिविष्टानां वानराणां मृतं मृतं वानरमहं भक्षिष्ये एतद्वचः प्लवङ्गमान् निरीक्ष्य पक्षी संपातिरब्रवीत् । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०–विधिरिति । विधिः दैवम् विधानेन योगक्षेमसंपादनेन । यथा यस्मात्कारणात् ॥ ४ ॥

५ ] ति० टी०–यतः परम्पराणां पङ्क्तित उपविष्टानां वानराणां मध्ये मृतं मृतं क्रमाद्भक्षिष्ये तस्मादिति पूर्वेण संबन्धः ॥ ५ ॥

गो० टी०–परमिति । पराणां वानराणां मध्ये मृतं मृतं परं वानरं भक्षिष्य इत्येवं वच उवाचेत्यन्वयः ॥ ५ ॥

६ ] ति० टी०–परमायस्तः परमखिन्नः ॥ ६ ॥

रा० टी०–तस्येति । भक्ष्यलब्धस्य लब्धं भक्ष्यं येन तस्य संपातेर्वचनं श्रुत्वा परमायस्तोऽतिखिन्नोऽङ्गदः हनूमन्तमब्रवीत् ॥ ६ ॥

गो० टी०–तस्येति । परमायस्तः परमोद्विग्न इत्यर्थः । अज्ञाता अचिन्तिता । स्नेहकारुण्ययन्त्रिताः स्नेहकारुण्याभ्यां बद्धाः । अन्योन्यम् अन्योन्यं प्रत्येकम् प्रत्येकम् परमां गतिं मुक्तिमित्यर्थः । रामलक्ष्मणयोरित्यादि । रामवनवासमारभ्य प्रायोपवेशपर्यन्तं यदस्ति तत्सर्वमिदं विकृतं कैकेय्या वरदानेन कृतं हीति संबन्धः इत्यङ्गदोऽब्रवीदिति संबन्धः ॥ ६–१६ ॥

७] ति० टी०–सीतापदेशेनेति । सीताव्याजेन प्राप्तप्रायोपवेशानामित्यर्थः । 'गृध्रापदेशेन' इति पाठः सुगमः ॥ ७ ॥

रा० टी०–तद्वचनाकारमाह–पश्येति । वैवस्वतो विवस्वत्पुत्रोपमः गृध्रापदेशेन गृध्रव्याजेन वानराणां विपत्तये इमं देशं साक्षादनुप्राप्तः ॥ ७ ॥

८ ] ति० टी०–अज्ञाताऽचिन्तिता ॥ ८ ॥

१ चिरंजीवीति गो. रा. पाठः । २ प्रख्याततेति गो. पाठः । ३ इदमिति गो. पाठः । ४ हनुमन्तमिति गो. पाठः । ५ गृध्रेति गो. पाठः । ६ राज्ञो न च वचः कृतमिति गो. पाठः ।

वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा । गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥
तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि । प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम्॥ १० ॥
अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः । ततस्तस्योपकारार्थं त्यजतात्मानमात्मना ॥ ११ ॥
प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा । राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ॥ १२ ॥
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् । स सुखी गृध्रराजस्तु रावणेन हतो रणे
मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम् ॥ १३ ॥
जटायुषो विनाशेन राज्ञो दशरथस्य च । हरणेन च वैदेह्याः संशयं हरयो गताः ॥ १४ ॥
रामलक्ष्मणयोर्वासमरण्ये सह सीतया । राघवस्य च बाणेन वालिनश्च तथा वधम् ॥ १५ ॥
रामकोपादशेषाणां रक्षसां च तथा वधम् । कैकेय्या वरदानेन इदं च विकृतं कृतम् ॥ १६ ॥
तदसुखमनुकीर्तितं वचो भुवि पतितांश्च निरीक्ष्य वानरान् ।
भृशचकितमतिर्महामतिः कृपणमुदाहृतवान्स गृध्रराजः ॥ १७ ॥

रा० टी०–रामस्येति । यैः रामस्य कार्यं न कृतं राजशासनं मासाभ्यन्तरे समागन्तव्यमिति सुग्रीवकृतनियोगश्च न कृतं तेषां हरीणामज्ञाता पूर्वमलक्षितेयं विपत्तिः आगता ॥ ८ ॥

९ ] ति० टी०–तिर्यग्योनिभूतानामस्माकमिव तिर्यग्योन्यन्तरस्यापि सीतानिमित्तं विपत्तिर्जातेत्याह—वैदेह्या इति । प्रत्यक्षं ह्रियमाणाया इति शेषः ॥ ९ ॥

रा० टी०–एतत्कर्तृकास्मद्रक्षणेऽस्माभिर्न शोचनीयमित्याह—वैदेह्या इति द्वाभ्याम् । वैदेह्याः प्रियकामेन जटायुषा यत् कर्म कृतं तत् वो युष्माकमशेषतः श्रुतम् ॥ ९ ॥

१० ] ति० टी०–रामस्य प्रियं कुर्वन्तीत्यनेन तस्मिन्सर्वप्रेमास्पदत्वं सूचयता सर्वात्मत्वं सूचितम् ॥ १० ॥

रा० टी०–तथेति । तिर्यग्योनिगतानि जटायुप्रभृतीनि प्राणांस्त्यक्त्वाऽपि यथा रामस्य प्रियं कुर्वन्ति तथा वयं करिष्याम इति शेषः ॥ १० ॥

११] ति० टी०–सार्वात्म्यमेव द्रढयति–अन्योन्यमिति । स्नेहकारुण्ययन्त्रिताः रामे इति शेष. । सर्वस्य रामत्वात्तदीयस्नेहेनैव परस्परोपकारकरणमित्यर्थः । स्नेहविषयता रामातिरिक्तेनेत्यनेन सूचितम् । तत उक्तस्नेहादियन्त्रणतः । तस्य रामस्योपकारार्थमित्यस्य प्रवृत्ता इति शेषः ॥ ११ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अन्योन्यमिति । स्नेहकारुण्ययन्त्रिताः स्नेहकारुण्ययोर्वशं प्राप्ताः शिष्टा अन्योन्यमुपकुर्वन्ति ततो हेतोस्तस्य रामस्योपकारार्थमात्मना स्वस्वप्रयत्नेन आत्मानं देहं त्यजत ॥ ११ ॥

१२ ] ति० टी०–ननु प्राणत्यागेन कथं रामस्य संतोष अत आह—प्रियमिति । हि यतो जटायुषा प्राणांस्त्यजता प्रियं कृतमिति रामस्य मतमिति शेषः । तथास्मन्मरणेनापि रामस्तथा मंस्यतीति भावः ॥ १२ ॥

रा० टी०–ननु मरणमात्रेण कथं रामप्रीतिर्भवितेत्यत आह–प्रियमिति । धर्मज्ञेन जटायुषा रामस्य प्रियं प्रीतिः कृतं संपादितं मरणेनैवेति शेषः । एवं राघवस्यार्थे कान्ताराणि दुर्गमपथान् प्रपन्नाः प्राप्ता ये वयं मैथिलीं न पश्याम ते वयं परिश्रान्ताः अत एव त्यक्तजीविताः सन्तः रामप्रीतिं निष्पादयिष्याम इति शेषः । सार्धश्लोकः एकान्वयी ॥ १२ ॥

१३ ] ति० टी०–सुखीति । सुखित्वमेव परमगतिप्राप्त्या दर्शयति–रावणेनेत्यादि । मुक्तश्चेति । अनेन सर्वतिर्यग्योनिराजत्वं कपीन्द्रस्य सूचितम् । गतश्च परमां गतिम् रामानुग्रहादिति शेषः ॥ १३ ॥

रा० टी०–स इति । रणे रावणेन हतः अत एव परमां गतिमुत्तमस्थानं गतो गृध्रराजो जटायुः सुग्रीवभयान्मुक्तः अत एव सुखी आस्ते इति शेषः । सुग्रीवभयान्मुक्त इत्यनेन गृध्रादीनामपि सुग्रीव एव राजेति सूचितम् ॥ १३ ॥

१४–१५] ति० टी०–जटायुषो विनाशेन प्रागिति शेषः । यदि पुनर्मुहूर्तमपि युद्धे रावणं निरुन्ध्यात्तदा रामदृग्गोचरो रावणः सीतां न हरेदिति भावः । राज्ञो दशरथस्य च द्राग्विनाशेन । यदि पक्षमात्रमपि राजजीवनं स्यात्तदा रामं प्रत्यानयेदेवेति भावः । वैदेहीहरणं तु स्पष्टमेव वानराणां प्राणसंशयकारणम् ॥ १४ ॥ १५ ॥

१६] ति० टी०–विकृतमरण्यवासवालिवधरक्षोवधरूपम् । इदं चास्मन्मरणरूपं च कैकेय्या वरदानेनैव कृतमित्यर्थः॥१६॥

रा० टी०–जटायुष इति । जटायुषो दशरथस्य च विनाशेन वैदेह्या हरणेन च हरयो वयं संशयं रामस्य शीघ्रं सुखयोगोऽस्ति न वेति संदेहं गताः प्राप्ताः ॥ १४ ॥

रा० टी०–रामेति । रामलक्ष्मणयोररण्ये वासादि विकृतमस्मत्प्रायोपवेशादि च कैकय्या वरदानेनैव कृतमवेहीति शेषः । अर्धचतुष्टयमेकान्वयि ॥ १५ ॥ १६ ॥

१७ ] ति० टी०–भृशचकितमतिः क्षुभितचित्तः । कृपणं दीनम् ॥ १७ ॥

१ तेनेति गो. पाठः । २ वास इति गो. पाठः । ३ वध इति गो. पाठः । ४ समीक्ष्येति गो. पाठः । ५ चलितेति गो. पाठः । ६ राडिति गो. पाठः । ७ आत्मनेपदमत्र युक्तं भाति ।

तत्तु श्रुत्वा तथा वाक्यमङ्गदस्य मुखोद्गतम् । अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १८ ॥
कोऽयं गिरा घोषयति प्राणैः प्रियतरस्य मे । जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥ १९ ॥
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः । नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥ २० ॥
इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् । यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ॥ २१ ॥
अतिदीर्घस्य कालस्य परितुष्टोऽस्मि कीर्तनात् । तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ॥ २२ ॥
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः । तस्यैव च मम भ्रातुः सखा दशरथः कथम् ॥ २३ ॥
यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः । सूर्यांशुदग्धपक्षत्वान्न शक्नोमि [२]विसर्पितुम् ॥
इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

**रा० टी०–तादिति ।** अनुकीर्तितं वानरैः कथितम् असुखं दुःखरूपं तद्वचो निरीक्ष्य श्रुत्वा भुवि पतितान् वानरांश्च निरीक्ष्य भृशचकितमतिर्गृध्रराजः संपातिः कृपणं वचः उदाहृतवान् ॥ १७ ॥

**गो० टी०–तदसुखमिति ।** समीक्ष्य ज्ञात्वेत्यर्थः । ज्ञानं च वचनश्रवणं वानराणां दर्शनं च । अस्य श्लोकस्यानन्तरं सर्गसमाप्तिर्भवितुमर्हति ॥ १७ ॥

१८ ] **ति० टी०–अस्यैव प्रपञ्चः—तत्त्विति** ॥ १८ ॥

**रा० टी०–तदेव भङ्ग्यन्तरेणाह–तदिति ।** तथा तेन प्रकारेण अङ्गदस्य मुखोद्गतं तद्वाक्यं श्रुत्वा गृध्रोऽब्रवीत् ॥ १८ ॥

**गो० टी०–तत्त्विति ।** तीक्ष्णतुण्डः तीक्ष्णमुखः । 'वक्त्रास्ये वदनं तुण्डम्' इत्यमरः ॥ १८–२४ ॥

१९ ] **ति० टी०–को घोषयति ।** स मया प्रष्टव्य इति शेषः ॥ १९ ॥

**रा० टी०–तद्वचनाकारमाह–कोऽयमिति ।** मे मनः कम्पयन्निव मे भ्रातुर्जटायुषो वधं गिरा वाचयन्त्या कोऽयं घोषयति वदति ॥ १९ ॥

२० ] **ति० टी०–प्रश्नमेवाह—कथमिति** ॥ २० ॥

**रा० टी०–कथमिति ।** राक्षसगृध्रयोर्युद्धं कथमासीत् । अर्धं पृथक् ॥ २० ॥

**रा० टी०–नामेति ।** भ्रातुरिदं जटायुरिति नामधेयं चिरस्य बहुकालतः श्रुतम् अतो भवद्भिः गिरिदुर्गादवतारितुमात्मानमिति शेषः, इच्छेयम् एतेन स्वस्य स्वत उत्तरणासामर्थ्यं व्यञ्जितम् ॥ २१ ॥

२१ ] **ति० टी०–गिरिदुर्गाद्भवद्भिरवतारितुमिच्छेयम्** आत्मानमिति शेषः । अवतारणफलमाह—**यवीयस इति ।** कनिष्ठस्येत्यर्थः ॥ २१ ॥

२२–२३ ] **ति० टी०–श्रोतुमिच्छेयम्** युष्मत्समीपमागत्येति शेषः । अन्वयस्तु—यस्य रामः प्रियः पुत्रः स दशरथो मम भ्रातुस्तस्यैव जटायुषः सखा, अतस्तत्स्नेहात्प्रयतमानस्य तस्य जनस्थानवासिनस्तस्य प्रसिद्धविक्रमस्य जटायुषो विनाशः कथमभवदिति तस्य विनाशं श्रोतुमिच्छेयमिति । कथं सखेत्यन्वयस्तु नोचितः, तदुत्तरस्याग्रेऽभावात् ॥ २२ ॥ २३ ॥

**रा० टी०–यवीयस इति ।** अतिदीर्घस्य कालस्यापगमे सतीति शेषः, यवीयसः कनिष्ठभ्रातुः कीर्तनात् अहं परितुष्टोऽस्मि । अर्धं पृथक् । तदिति । जनस्थाननिवासिनो भ्रातुः विनाशं विनाशप्रकारं श्रोतुमिच्छामि । अर्धद्वयमेकान्वयि ॥ २२ ॥

**रा० टी०–तस्येति ।** यस्य रामः पुत्रः स मम भ्रातुः सखा दशरथः कथं लोकान्तरं गत इति शेषः ॥ २३ ॥

२४] **ति०टी०–स्वस्यावतारणसापेक्षत्वे हेतुमाह–सूर्येति ।** अवतर्तुमवतारयितुम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

**रा० टी०–ननु त्वमेव कुतो नोत्तरसीत्यत आह—सूर्येति ।** सूर्यांशुना दग्धः पक्षो यस्य तत्त्वात् हेतोः विसर्पितुं चलितुं न शक्नोमि अतः पर्वतादवतर्तुमवतारितुमिच्छेयं भवद्भिरिति शेषः ॥ २४ ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

**गो० टी०–अत्र** 'कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः । सखा दशरथः कथम्' इत्येवमनुवादात् पूर्वमिदमप्यङ्गदेनोक्तमिति ध्येयम् ॥ २६ ॥

अस्मिन्सर्गे पञ्चविंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ तमस्येति गो. पाठः । २ उपेति गो. पाठः ।

## सप्तपञ्चाशः सर्गः ।

संपातिं पर्वतादवतारयन्नङ्गदस्तं प्रति रामवनप्रवेशादि स्वप्रायोपवेशान्तमुदन्तं निवेदयति ।

शोकाद्भ्रष्टस्वरमपि श्रुत्वा वानरयूथपाः । श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥
ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः । चक्रुर्बुद्धिं तदा रौद्रां सर्वान्नो भक्षयिष्यति ॥ २ ॥
सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति । कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥ ३ ॥
एतां बुद्धिं ततश्चक्रुः सर्वे ते हरियूथपाः । अवतार्य गिरेः शृङ्गाद्गृध्रमाहाङ्गदस्तदा ॥ ४ ॥
बभूवर्क्षरजो नाम वानरेन्द्रः प्रतापवान् । ममार्यः पार्थिवः पक्षिन्धार्मिकौ तस्य चात्मजौ ॥ ५ ॥
सुग्रीवश्चैव वाली च पुत्रौ घनबलावुभौ । लोके विश्रुतकर्माऽभूद्राजा वाली पिता मम ॥ ६ ॥
राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः । रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥ ७ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या सह भार्यया । पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितः ॥ ८ ॥
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् । रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ॥ ९ ॥

१ ] ति० टी०-भ्रष्टस्वरमपि भक्षणवचनस्वरापेक्षया भ्रष्टस्वरमित्यर्थः । तेन स्वरेण यद्यपि स निश्चितशोकः परितुष्टोऽस्मीति श्रद्धेयवचनो भवति तथापि न श्रद्दधुः, यतस्तस्य कर्मणा शङ्किताः । भक्षणार्थं वञ्चनमेव करोतीति बुद्ध्येति भावः ॥ १ ॥

रा० टी०-संपातिवचनश्रवणानन्तरकालिकमङ्गदादिवृत्तान्तमाह—शोकादित्यादिभिः । शोकात् भ्रातृवधश्रवणजनितपश्चात्तापात् भ्रष्टस्वरमपि संपातिवचनं श्रुत्वा तस्य संपातेः कर्मणा भक्षणोद्देश्यकवचनक्रियया शङ्किताः वानरयूथपास्तद्वाक्यं नैव श्रद्दधुः ॥ १ ॥

गो० टी०-अथ संपातिप्रश्नोत्तरं सप्तपञ्चाशे-शोकादित्यादि । कर्मणा हिंसाकर्मणा ॥ १ ॥

२ ] ति० टी०-तदेवाह—चक्रुरित्यादि । अस्यार्थस्येतीति शेषः ॥ २ ॥

रा० टी०-ते इति । प्रायमुपविष्टास्ते प्लवङ्गमाः गृध्रं दृष्ट्वा सर्वान् नोऽस्मान् भक्षयिष्यति अयं गृध्र इति शेषः, इति रौद्रां बुद्धिं चक्रुः ॥ २ ॥

गो० टी०-त इति । रौद्राम् आत्मत्यागाध्यवसायरूपत्वेन क्रूराम् ॥ २-४ ॥

३ ] ति० टी०-सिद्धिं मरणरूपाम् ॥ ३ ॥

रा० टी०-सर्वथेति । प्रायमासीनान् नोऽस्मान् यदि भक्षयिष्यति तर्हि इतः अस्माद्भक्षणात् सिद्धिं रामकार्यसाधनहेतुकमरणजनितसंसिद्धिं गताः वयं सर्वथा सर्वप्रकारेण कृतकृत्याः भविष्यामः एतां बुद्धिं सर्वे हरियूथपाः चक्रुः । सार्धश्लोक एकान्वयी ॥ ३ ॥

४ ] ति० टी०-एतां बुद्धिं भक्षणाभीष्टत्वबुद्धिम् ॥ ४ ॥

रा० टी०-अवतार्येति । तदा निश्चयकाले गिरिशृङ्गादवतार्य अङ्गदो गृध्रमाह । अर्धं पृथक् ॥ ४ ॥

५ ] ति० टी०-कोऽयं घोषयतीति प्रथमप्रश्नोत्तरमाह—बभूवेति । आर्यः पितामहः । पार्थिवः वानराणामिति शेषः ॥ ५ ॥

६-९ ] ति० टी०-घनबलौ बहुबलौ । 'ओघबलौ' इति पाठान्तरम् ॥ ६—९ ॥

रा० टी०-तद्वचनाकारमाह—बभूवेत्यादिभिः । ऋक्षरजो नाम वानरेन्द्रः मम आर्यः पितामहो बभूव । तस्यात्मजौ पुत्रौ घनबलौ महापराक्रमौ सुग्रीवो वाली चोभौ बभूवतुरिति शेषः । विश्रुतकर्मा वाली मम पिता अभूत् । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०-बभूवेत्यादि । आर्यः पितामहः । आत्मजौ औरसौ । ओघबलौ ओघसंख्याकपुरुषबलौ । ओघसंख्या च पूर्वोक्ता ॥ ५-८ ॥

रा० टी०-आत्मानं बोधयित्वा स्वागमनकारणीभूतं रामं बोधयन्नाह-राजेति । कृत्स्नस्य निखिलस्य जगतो ब्रह्माण्डस्य राजा इक्ष्वाकूणां कुले जात इति शेषः, दाशरथिः दशरथपुत्रः पितुर्निदेशनिरतो रामः लक्ष्मणेन वैदेह्या च सह दण्डकावने प्रविष्टः । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

रा० टी०-तस्येति । तस्य रामस्य भार्या रावणेन जनस्थानात् हृता । अर्धं पृथक्-रामस्येति । रामस्य पितुर्दशरथस्य मित्रं जटायुर्नाम गृध्रराट् ह्रियमाणां सीतां ददर्श । अर्धद्वयमेकान्वयि ॥ ९ ॥

गो० टी०-रामस्य त्विति । रामस्य तु पितुर्मित्रमिति कथनात् मैत्रीप्रकारं तु न जानामीत्युक्तं भवति ॥ ९-११ ॥

१ ते हरियूथपा इति गो. पाठः । २ वानरर्षभा इति गो. पाठः । ३ धार्मिक इति गो. पाठः । ४ ओघेति गो. पाठः । ५ चापीति गो. पाठः । ६ धर्म्यमिति गो. रा. पाठः ।

ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा। रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ॥
परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १० ॥
एवं गृध्रो हतस्तेन रावणेन बलीयसा। संस्कृतश्चापि रामेण जगाम गतिमुत्तमाम् ॥ ११ ॥
ततो मम पितृव्येण सुग्रीवेण महात्मना। चकार राघवः सख्यं सोऽवधीत्पितरं मम ॥ १२ ॥
मम पित्रा [1]निरुद्धो हि सुग्रीवः सचिवैः सह। निहत्य वालिनं रामस्ततस्तमभिषेचयत् ॥ १३ ॥
स राज्ये स्थापितस्तेन सुग्रीवो वानरेश्वरः। राजा वानरमुख्यानां तेन प्रस्थापिता वयम् ॥ १४ ॥
एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः। वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥ १५ ॥
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः। अज्ञानात्तु प्रविष्टाः स्म धरण्या विवृतं बिलम् ॥ १६ ॥
मयस्य मायाविहितं तद्बिलं च विचिन्वताम्। व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥ १७ ॥
ते वयं कपिराजस्य सर्वे वचनकारिणः। कृतां संस्थामतिक्रान्ता भयात्प्रायमुपासिताः ॥ १८ ॥
क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे। गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।

कदाचनाह जटायुश्च परस्परबलं जिज्ञासमानौ खमुत्पत्यासूर्यमण्डलं संप्राप्तावथ सौरातपसंलुष्टपक्षतिं जटायुषं रिरक्षिषुरहं स्वपक्षातपत्रं रचयन् स्वयं दग्धपत्रो विन्ध्यगिरावपतमिति स्ववृत्तं संपातिरङ्गदाय निवेदयति। सीताहरणविषये जानासि किंचिदित्यङ्गदेन पृष्टः संपाती रावणेन ह्रियमाणा काचिद्युवती मया दृष्टा या रामेत्याक्रोशन्त्यासीत्ततोऽहं तर्कये भवेत्सा वैदेहीति प्रतिवदति। स्वदूरदर्शित्वं प्रतिपादयन्संपातिर्लङ्कायाः शतयोजनवर्तित्वं तत्र च रावणस्य जानक्याश्च वसतिं कथयति। जटायुषे जलं दातुं दर्शितेच्छं संपातिं कीशाः समुद्रं प्रापय्यनिर्वर्तितनिवापं च प्रत्यानयन्।

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः। सबाष्पो वानरान्गृध्रः प्रत्युवाच महास्वनः ॥ १ ॥

---

**१०–१२ ] ति० टी०**–'रावणेन विहायसि' इति पाठे ह्रियमाणामिति शेषः। स्थापयित्वा भूमाविति शेषः ॥१०–१२॥

**रा०टी०–रावणमिति**। रावणं विरथं कृत्वा मैथिलीं च स्थापयित्वा परिश्रान्तः वृद्धो जटायुः रावणेन हतः ॥ १० ॥

**रा० टी०–एवमिति**। रावणेन हतः पश्चात् रामेण संस्कृतः कृतप्रमीतक्रियः गृध्रः उत्तमां गतिं जगाम ॥ ११ ॥

**रा० टी०–तत इति**। ततोऽनन्तरं राघवः मम पितृव्येण सुग्रीवेण सख्यं चकार सः कृतसख्यो रामो मम पितरमवधीत् ॥ १२ ॥

**१३–१८ ] ति० टी०**–स्वपितृवधे कारणमाह—**ममेति**। निरुद्धो निरुद्धराज्यः ॥ १३–१८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

**रा० टी०–ममेति**। रामो वालिनं निहत्य मम पित्रा निरुद्धो यः सुग्रीवस्तमभिषेचयत् अभ्यषेचयत् ॥ १३ ॥

**गो०टी०–निहत्येति**। अभिषेचयत् अभ्यषेचयत्१४–१७

**रा० टी०–स इति**। तेन रामेण राज्ये स्थापितोऽत एव वानरमुख्यानां राजा यः सुग्रीवस्तेन वयं प्रस्थापिताः ॥१४॥

**रा० टी०–एवमिति**। एवमनेन प्रकारेण रामप्रयुक्ताः रामेण नियोजिताः अत एव मार्गमाणाः वयं रात्रौ सूर्यप्रभामिव वैदेहीं नाधिगच्छामः ॥ १५ ॥

**रा० टी०–ते इति**। ते अन्वेषणे नियुक्ताः वयं दण्डकारण्यं विचित्य विवृतमपि हितं धरण्याः बिलमज्ञानाद्धेतोः प्रविष्टाः १६

**रा० टी०–मयस्येति**। मयस्य मायाविहितं मायया रचितं बिलं विचिन्वतामस्माकं यः समयो राज्ञा कृतः स मासः तत्र बिले व्यतीतः ॥ १७ ॥

**रा० टी०–ते इति**। कपिराजस्य वचनकारिणो वयं सर्वे कृतां कपिराजेन संकेतितां संस्थां मर्यादाम् अतिक्रान्ताः अत एव प्रायमुपासिताः ॥ १८ ॥

**रा० टी०–उपायान्तराभावे हेतुमाह–क्रुद्ध इति**। सलक्ष्मणे सुग्रीवे काकुत्स्थे रामे च क्रुद्धे सति तत्र गतानां नोऽस्माकं जीवितं नास्ति ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

**गो० टी०–ते वयमिति**। संस्थां व्यवस्थाम् ॥१८॥१९

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

**१ ] ति० टी०**–त्यक्तजीवितैस्त्यक्तजीवनाशभयैः। सबाष्पोऽश्रुपूर्णनयनः। 'सबाष्पान्' इति पाठान्तरम् ॥ १ ॥

---

१ गतश्चेति गो. पाठः। २ विरुद्ध इति गो. पाठः। ३ धर्मिण्या इति गो. पाठः। ४ उपास्मह इति गो. पाठः

यवीयान्स मम भ्राता जटायुर्नाम वानराः । यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥
वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये । न हि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३ ॥
पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ । आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥
आवृत्याकाशमार्गेण जवेन स्वर्गतौ भृशम् । मध्यं प्राप्ते तु सूर्ये तु जटायुरवसीदति ॥ ५ ॥
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् । पक्षाभ्यां छादयामास स्नेहात्परमविह्वलम् ॥ ६ ॥
निर्दग्धपत्रः पतितो विन्ध्येऽहं वानरर्षभाः । अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७ ॥
जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा । युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥ ८ ॥
जटायुषो यदि भ्राता श्रुतं ते गदितं मया । आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९ ॥
अदीर्घदर्शिनं तं वै रावणं राक्षसाधमम् । अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥ १० ॥
ततोऽब्रवीन्महातेजा भ्राता ज्येष्ठो जटायुषः । आत्मानुरूपं वचनं वानरान्संप्रहर्षयन् ॥ ११ ॥

रा० टी०—अङ्गदवचनश्रवणानन्तरकालिकं संपातिवचनं वर्णयन्नाह—इतीति । वानरैः इति करुणं वाक्यमुक्तः अत एव सबाष्पः अश्रुसहितः गृध्रः प्रत्युवाच ॥ १ ॥

गो० टी०—अथ संपातिना सीतास्थानकथनमष्टपञ्चाशे—इत्युक्त इत्यादि ॥ १ ॥

२ ] ति० टी०—आख्याताख्यातवन्तः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—यवीयानित्यादिभिः । हे वानराः ! यं रावणेन हतं यूयमाख्यात स जटायुः यवीयान् कनिष्ठो मम भ्राता ॥ २ ॥

गो० टी०—यवीयानिति । आख्यात भूते लोट् ॥२॥३॥

३ ] ति० टी०—तदपि भ्रातृवधमपि ॥ ३ ॥

रा० टी०—वृद्धेति । वृद्धभावात् वृद्धत्वप्राप्तेः हेतोः भ्रातुर्वैरविमोक्षणे रावणवधे इत्यर्थः, मे मम शक्तिर्नास्ति अत एव तत् अप्रियं शृण्वन्नप्यहं मर्षये सहे ॥ ३ ॥

४-५ ] ति० टी०—अथ शक्तिर्नास्तीत्यनेन पूर्वं महती शक्तिरासीदिति सूचितम् । तदेवाह—पुरेति । पुरा पूर्वं वृत्रवधे वृत्ते सति स जटायुरहं च जयैषिणौ वृत्रवधेनेन्द्रस्यातिप्रबलत्वं निर्णीय तज्जयैषिणौ भूत्वा प्रथममाकाशमार्गेण स्वर्गं गतौ । ततो गरुडवद्भृशं जवेन तं विजित्यावृत्य प्रत्यावृत्याऽऽदित्यं दर्पादुपयातौ स्वः । अथ तमुपयातयोरावयोर्मध्ये जटायुः सवितरि मध्यं प्राप्तेऽवसीददिति स्मेति कतकः । अन्ये तु—जयैषिणौ परस्परौ येनोत्पत्यादित्यः प्रथमं प्राप्यते स आवयोः प्रबल इति प्रतिज्ञापूर्वमिति शेष इत्याहुः । तेषामावृत्येति पदस्येन्द्रप्रसङ्गस्य चासंगतिः ॥ ४ ॥ ५ ॥

रा० टी०—पक्षाभावे हेतुमाह—पुरेत्यादिभिः । पुरा पूर्वं वृत्रवधे इन्द्रकर्तृकवृत्रासुरविघाते वृत्ते जाते सति जयैषिणौ स जटायुः अहं च जवेन वेगेन स्वः स्वर्गं गतौ इन्द्रजिगीषया प्राप्तौ । आवृत्य तं जित्वा परावृत्य रश्मिमालिनं किरणरूपमालाविशिष्टं स्वज्वलन्तं प्रकाशयन्तमादित्यमुपयातौ समीपं प्राप्तौ । तत्र जटायुः सूर्ये मध्यं प्राप्ते सति अवसीदति मति खेदं प्राप्नोत् । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—पुरेति । परस्परवेगातिशयख्यापनपराविति स्यर्थः । आदित्यमुपयातौ सूर्यसमीपं गतौ स्वः ॥ ४ ॥

गो० टी०—आवृत्येति । आवृत्य मण्डलगत्या । स्मशब्दस्य अवसीदतीत्यनेन संबन्धः ॥ ५ ॥

६ ] ति० टी०—छादयामास । अपरोक्षेऽपि लिट्त्वम् आर्षः ॥ ६ ॥

रा० टी०—तमिति । सूर्यरश्मिभिः अर्दितं पीडितं परमविह्वलं भ्रातरं जटायुषं दृष्ट्वा अहं पक्षाभ्यां छादयामास अतिशोकेन विक्षिप्तचित्तत्वात्परोक्षक्रियानिर्देशः ॥ ६ ॥

गो० टी०—तमिति । छादयामास आच्छादयम् ॥६-९॥

७ ] ति० टी०—निर्दग्धपक्षः सूर्यकिरणैरिति शेषः । भ्रातुर्जटायुषः प्रवृत्तिमित्यन्वयः ॥ ७ ॥

रा० टी०—निर्दग्धेति । निर्दग्धः पक्षो यस्य सोऽहमस्मिन्विन्ध्ये पतितः अत एव वसन् सन् भ्रातुः प्रवृत्तिं वृत्तान्तं नोपलक्षये ॥ ७ ॥

८ ] ति० टी०—जटायुषो भ्रात्रेत्यन्वयः ॥ ८ ॥

रा० टी०—जटायुष इति । जटायुषो भ्रात्रा संपातिना एवमुक्तोऽङ्गदः प्रत्युवाच ॥ ८ ॥

९ ] ति० टी०—यदि जटायुषो रामभक्तस्य भ्राता, यदि च मत्कथितं रामवृत्तान्तरूपं वस्तु ते त्वया श्रुतम्, यदि च तस्य रक्षसो निलयं जानासि तर्ह्याख्याहीति प्रार्थने लोट् ॥ ९ ॥

रा० टी०—तद्वचनाकारमाह—जटायुष इति । ते गदितं कथितं मया श्रुतमतः जटायुषो भ्राता यदि त्वमसि यदि च रक्षसो रावणस्य निलयं जानासि तर्हि आख्याहि कथय ॥९॥

१०-११ ] ति० टी०—अदीर्घदर्शिनं भाव्यनर्थविचारास-

१ परस्परेति गो. पाठः । २ स्वरिति रा. पाठः । ३ मार्गे त्विति गो. पाठः । ४ स्मेति गो. पाठः । ५ दिनकर इति गो. पाठः । ६ विह्वल इति गो. पाठः । ७ पक्ष इति गो. पाठः । ८ प्राज्ञ इति गो. रा. पाठः । ९ अधिपामिति गो. पाठः ।

निर्दग्धपक्षो गृध्रोऽहं गतवीर्यः प्लवङ्गमाः । वाङ्मात्रेणापि रामस्य करिष्ये साह्यमुत्तमम् ॥ १२ ॥
जानामि वारुणांल्लोकान्विष्णोस्त्रैविक्रमानपि । [3]देवासुरविमर्दांश्च ह्यमृतस्य विमन्थनम् ॥ १३ ॥
रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया । जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४ ॥
तरुणी रूपसंपन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥
क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती ॥ १६ ॥
सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् । असिते राक्षसे भाति यथा [5]विद्युदिवाम्बरे ॥ १७ ॥
तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् । श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८ ॥
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥
इतो [6]द्वीपे समुद्रस्य संपूर्णे शतयोजने । तस्मिंल्लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २० ॥
जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः । [8]प्रासादैर्हेमवर्णैश्च महद्भिः सुसमाकृता ॥ २१ ॥
प्राकारेणार्कवर्णेन महता [7]च समन्विता । तस्यां वसति वैदेही दीना कौशेयवासिनी ॥ २२ ॥

मर्थं रावणमन्तिके दूरे वा तिष्ठन्तं यदि जानासि तदा नः शंस ॥ १० ॥ ११ ॥

रा० टी०—अदीर्घेति । अदीर्घदर्शिनम् आगाम्यनर्थाविचारिणं रावणमन्तिके विद्यमानं यदि वा दूरे विद्यमानं यदि जानासि तर्हि शंस ॥ १० ॥

रा० टी०—तत इति । ततः अङ्गदकृतप्रश्नानन्तरं जटायुषो ज्येष्ठो भ्राता आत्मानुरूपं वचनमब्रवीत् ॥ ११ ॥

गो० टी०—अदीर्घदर्शनमिति । अदीर्घदर्शनम् आगाम्यनर्थानवेक्षकम् ॥ १०–१२ ॥

१२] ति० टी०—रामस्य साह्यम् रामकार्यप्रवृत्तानां युष्माकं सहायत्वमित्यर्थः ॥ १२ ॥

रा० टी०—तदाकारमाह—निर्दग्धेति । हे प्लवङ्गमाः ! निर्दग्धपक्षोऽहं वाङ्मात्रेण रामस्य साह्यं साहाय्यं करिष्ये ॥१२॥

१३] ति०टी०—वारुणाँल्लोकान् जलप्रधानांल्लोकान् । त्रैविक्रमांस्त्रिविक्रमावतारे आक्रान्तान्भूरादिलोकान् । देवासुरविमर्दांस्तद्युद्धानि । हिश्चार्थे । अमृतस्य मन्थनं च अनेन च ब्रह्माहरादिक्षणमारभ्यैतत्क्षणपर्यन्तं सर्ववृत्तान्तज्ञत्वं स्वस्य निवेदितम् ॥ १३ ॥

१४–१७ ] ति० टी०—रामस्येदं कार्यं प्रथममवश्यं मया कर्तव्यम्, परंतु जरादिमत्त्वादशक्यमिति भावः ॥ १४—१७ ॥

रा० टी०—जानामीति । वारुणादीन् लोकान् देवासुरविमर्दान् देवासुरकर्तृकयुद्धस्थानानि अमृतस्य मन्थनं च जानामि अतः यस्य मम जरया तेजो हृतं प्राणाश्च शिथिलास्तेनापि मया रामस्य तत् इदं सीताबोधनरूपं कार्यं तत् प्रथमं कर्तव्यम् । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—जानामीति । वारुणान् लोकान् अतलवितलादिलोकान् । त्रैविक्रमान् त्रिविक्रममितानुपरितनलोकानित्यर्थः महासुरविमर्दान् देवासुरसंग्रामान् ॥ १३ ॥ १४ ॥

रा० टी०—तद्बोधनमेवाह—तरुणीति । रूपसंपन्ना रामेत्यादि क्रोशन्ती भूषणानि अपविध्यन्ती गात्राणि विधुन्वती रावणेन ह्रियमाणा तरुणी मया दृष्टा । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

रा० टी०—सूर्येति । तस्याः ह्रियमाणायाः उत्तमं कौशेयं पट्टवस्त्रविशेषः शैलाग्रे नीलशैलशिखरे सूर्यप्रभेव अम्बरे आकाशे विद्युदिव असिते नीले राक्षसे यथा यथावद्भाति अभात् ॥ १७ ॥

गो०टी०—तरुणीत्यादि । अपविध्यन्ती छेदयन्ती १५-१८

१८–१९ ] ति० टी०—तां तु रावणह्रियमाणत्वेन दृष्टाम् । सीतात्वेन ज्ञाने हेतुः—रामस्य परिकीर्तनम् ॥ १८ ॥ १९ ॥

रा० टी०—तामिति । रामस्य परिकीर्तनाद्धेतोस्तां ह्रियमाणामहं सीतां मन्ये अतः तस्य रक्षसो निलयं कथयतो मे श्रूयताम् ॥ १८ ॥

रा० टी०—पुत्र इति । विश्रवसः साक्षात् औरसः पुत्रः वैश्रवणस्य भ्राता रावणो नाम राक्षसः लङ्कामध्यास्ते ॥ १९ ॥

गो० टी०—पुत्र इति । अध्यास्ते " अधिशीङ्स्थासां कर्म " इति नगर्याः कर्मत्वम् ॥ १९–२४ ॥

२०–२२] ति० टी०—सा च लङ्केशः शतयोजने शतयोजनात्परतः स्थिते समुद्रस्य द्वीपे तिष्ठतीति शेषः । तस्मिन्द्वीपे सा लङ्कापुरी विश्वकर्मणा निर्मिता ॥२०–२२॥

रा० टी०—ननु लङ्का क्वास्तीत्यत आह—इत इति । इतः अस्मात्स्थानात् शतयोजने पूर्णे सति तस्मिन्प्रसिद्धे समुद्रस्य द्वीपे काञ्चनवेदिकैः सुवर्णमयवेदिकाविशिष्टैर्जाम्बूनदमयैर्द्वारैश्च हेमवर्णैः प्रासादैश्च सुसमावृता अर्कवर्णेन प्राकारेण समन्विता च

१ हीनेति गो. पाठः । २ त्विति गो. पाठः । ३ महासुरविमर्दांश्चाऽप्यमृतस्य चेति गो. पाठः । ४ धून्वतीति गो. पाठः । ५ वा तडिदम्बुदे इति गो. पाठः । ६ द्वीपः इति गो. पाठः । ७ धर्ममेतत् गो. नास्ति । ८ सुसमावृतेति गो. पाठः ।

रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता । जनकस्यात्मजां राज्ञस्तस्यां द्रक्ष्यथ मैथिलीम् ॥ २३ ॥
[ लङ्कायामथ गुप्तायां सागरेण समन्ततः । संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् ॥
आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् । तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ॥ ]
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ । आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः॥२४॥
द्वितीयो बलिभोजानां ये च वृक्षफलाशनाः । भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह ॥ २५ ॥
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् । बलवीर्योपपन्नानां रूपयौवनशालिनाम् ॥ २६ ॥
षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा । वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥ २७ ॥
गर्हितं तु कृतं कर्म येन स्म पिशिताशिनः । प्रतिकार्यं च मे तस्य वैरं भ्रातृकृतं भवेत् ॥ २८ ॥

विश्वकर्मणा निर्मिता या लङ्कापुरी तस्यां रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता वैदेही वसति । सार्धश्लोकत्रयमेकान्वयि ॥ २०-२२ ॥

२३ ] ति० टी०—तस्या मैथिलीं द्रक्ष्यथ ॥ २३ ॥

रा० टी०—जनकस्येति । सागरेण समन्ततो गुप्तायां तस्यां लङ्कायां जनकस्यात्मजां द्रक्ष्यथ । अर्धद्वयमेकान्वयि॥२३॥

२४ ] ति० टी०—एतदग्रे 'लङ्कायामभिगुप्तायां सागरेण समन्ततः । संप्राप्य सागरस्यान्ते संपूर्णे शतयोजने । आसाद्य दक्षिणं कूलं ततो द्रक्ष्यथ रावणम् । तत्र वै त्वरिताः क्षिप्रं विक्रमध्वं प्लवंगमाः' । इत्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः । देवयोनित्वेन दिव्यज्ञानेन यूयं ता दृष्ट्वा प्रत्यागमिष्यथेत्यपि पश्यामि । अतो निःसंशयं गच्छतेति शेषः । अथ स्वस्य देवयोनित्वप्रदर्शनशेषतया पक्षिमार्गानाह—आद्य इति । पन्था आकाशमार्गः । अन्ये धान्यजीविनः पारावतादयः ॥ २४ ॥

रा० टी०—संप्राप्येति । शतयोजने संपूर्णे सति सागरस्यान्तं संप्राप्य दक्षिणं कूलमासाद्य गत्वा ततस्तत्र रावणं द्रक्ष्यथ ॥ २४ ॥

रा० टी०—तत्रेति । हे प्लवङ्गमाः ! त्वरिताः सन्तः क्षिप्रं विक्रमध्वम् । तत्र तस्यां लङ्कायां दृष्ट्वा सीतामिति शेषः, क्षिप्रं प्रत्यागमिष्यथ इति ज्ञानेन ज्ञानदृष्ट्या पश्यामि जानामि ॥२५॥

रा० टी०—अतिदूरवस्तुज्ञानोपपत्तये स्वजन्मनः प्राशस्त्यं बोधयन्नाह—आद्य इति । आद्यः प्रथमः पन्थाः आकाशमार्गः कुलिङ्गानां ये अन्ये धान्यजीविनः पारावतादयः तेषां च द्वितीयः तत ऊर्ध्वभागस्थः बलिभोज्यानां काकादीनां ये च वृक्षफलाशनाः शुकादयस्तेषां च द्वितीयो मार्गः ॥ २६ ॥

गो० टी०—तत्रैवेति । विक्रमध्वम् "वेः पादविहरणे" इत्यात्मनेपदम् । ज्ञानेन दिव्यज्ञानेन ॥ २६ ॥

गो० टी०—दूरस्थदर्शनं भवतः कुतो जातं तत्राह—आद्य इत्यादिना । कुलिङ्गानां भूमिप्रत्यासन्नगगनचारिणाम् । धान्यजीविनः पक्षिविशेषाः कुलिङ्गाः । ये चान्ये धान्यजीविन इति वचनात् । बलिभोजानां काकानाम् ॥ २६ ॥

२५ ] ति० टी०—बलिभोजाः काकाः, वृक्षफलाशनाः शुकादयः, भासाः पक्षिविशेषाः ॥ २५ ॥

रा० टी०—भासा इति । तृतीय तत ऊर्ध्वस्थमार्गं भासाः तदभिधपक्षिणः कुररैः सह क्रौञ्चाश्च गच्छन्ति चतुर्थं श्येनाः गच्छन्ति पञ्चमं गृध्रा गच्छन्ति ॥ २७ ॥

गो० टी०—भासा इति । भासाः जलवायसाः 'भासस्तु जलवायसः' इति निघण्टुः । श्येनविशेषा इत्यप्याहुः ॥ २७ ॥

२६ ] ति० टी०—बलवीर्येत्यादि हंसविशेषणम् ॥ २६ ॥

रा० टी०—बलेति । षष्ठः पन्थास्तु बलवीर्योपपन्नानां हंसानाम् । वैनतेयगतिः विनतासुतमार्गस्तु परा ततोऽप्युत्तरदेशवर्तिनी ॥ २८ ॥

गो० टी०—बलेत्यादि । वैनतेयात् गरुडात् नः अस्माकं जन्म उत्पत्तिः तेन तस्य या सप्तमी गतिः सैवास्माकमपीत्यर्थः । नन्वारण्यकाण्डे—द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः॥ इति वचनेन जटायुषोक्तेनेदं विरुद्धमिति चेत् न, वैनतेयादित्यस्य विनतापुत्रादरुणादित्यर्थ इत्यदोषात् वैनतेयगतिरित्यत्र वैनतेययोररुणगरुडयोर्गतिरित्यर्थः अनेन दिव्यज्ञानहेतुर्जन्मोत्कर्ष उक्तः ॥ २८ ॥

२७ ] ति० टी०—वैनतेयाद्विनतापुत्रादरुणात् 'तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः' इत्यरण्ये जटायुवाक्यात् एवं दिव्यज्ञानेन युष्मद्वृत्तज्ञानम् ॥ २७ ॥

रा० टी०—ननु तव क्वाऽन्तर्भाव इत्यत आह—वैनतेयादिति । सर्वेषां नोऽस्माकं जन्म वैनतेयात् विनतासुतारुणात् अस्तीति शेषः । अर्धं पृथक् ॥ २९ ॥

२८ ] ति० टी०—युष्मत्सहायकरणं च वैरबुद्धया स्वप्रयोजनमपीत्याह—गर्हितमिति । येन रावणेन परदारहरणरूपं गर्हितं कर्म कृतं तस्य पिशिताशिनो भ्रातृकृतं वैरमुद्दिश्य यत्प्रतिकार्यं तच्च मे कृतं भवेत् । युष्मत्प्रवर्तनेनेति शेषः ॥२८॥

रा० टी०—गर्हितमिति । येन पिशिताशिना रक्षसा गर्हितं कर्म सीतापहरणादिरूपं कृतं तत् रक्षः प्रतिकार्यं हिंसनीयं

१ तत्रेति गो पाठः । २ श्लोकद्वयमेतदधिकं गो.रा.पाठे । ३ अन्ते संपूर्णे शतयोजने इति रा. पाठः । ४ भोज्यानामिति रा.पाठः । ५ फलाशिन इति गो. पाठः । ६ श्लोकोऽयं द्वात्रिंशत्कस्थाने गो. पाठे । ७ आशनेनि गो. पाठः । ८ भ्रातुरिति गो. पाठः । ९ महदिति रा.पाठः । १० साह्यायेति युक्तं भाति ।

इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा । अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ॥ २९ ॥
तस्मादाहारवीर्येण निसर्गेण च वानराः । आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥ ३० ॥
अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः । विहिता वृक्षमूले तु वृत्तिश्चरणयोधिनाम् ॥ ३१ ॥
उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः । अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ॥ ३२ ॥
समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् । प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३३ ॥
ततो नीत्वा तु तं देशं तीरे नदनदीपतेः । निर्दग्धपक्षं संपातिं वानराः सुमहौजसः ॥ ३४ ॥
[२]तं पुनः प्रापयित्वा च तं देशं पतगेश्वरम् । बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

भवद्भिरिति शेषः । तेन तस्य हतस्य मे भ्रातुः वैरं कृतं छिन्नं भवेत् ॥ ३० ॥

गो० टी०—गर्हितमिति । येन पिशिताशिना गर्हितं कर्म सीतापहरणरूपं कृतम् मे भ्रातुर्हेतोः प्रतीकार्यं तस्य वैरं कृतं प्रतिकृतं भवेत् भवद्भिरिति शेषः । अयं श्लोकः चरणयोधिनामित्यनन्तरं निवेशनीय इत्याहुः ॥ ३२ ॥

२९ ] ति० टी०—ननु कथं लङ्कास्था सीतेति त्वया ज्ञाता तत्राह—इहस्थ इति । सौपर्णं सुपर्णलिङ्गकचक्षुष्मतीविद्यासिद्धिजम् सा च विद्या बह्वृचब्राह्मणे तृतीयपञ्चिकायामुक्ता॥२९॥

रा० टी०—इहस्थ इति । इहस्थोऽहं रावणं जानकीं च प्रपश्यामि । तत्र हेतुः—यथा सौपर्णं चक्षुर्बलं च दिव्यं तथा अस्माकमपि दिव्यम् ॥ ३१ ॥

गो० टी०—न केवलं दिव्यज्ञानं दिव्यचक्षुरप्यस्तीत्याह—इहस्थ इति । अपिशब्दो भिन्नक्रमः चक्षुरित्यनेन संबध्यते । सौवर्णमित्यनेन विशेषणेनातिदूरदर्शित्वमुक्तम् । आहारवीर्येण चक्षुष्याहारबलेनेत्यर्थः । निसर्गेण सौवर्णत्वानिबन्धनस्वभावेन ॥ २९ ॥ ३० ॥

३० ] ति० टी०—तस्मादुक्तविद्यासिद्धेः । निसर्गेणाहारवीर्येण च मासविशेषाहारबलेन च । आङभिविधौ । साग्रात्किंचिदधिकाद्योजनशतात् ॥ ३० ॥

रा० टी०—तस्मादिति । तस्माद्दिव्यनेत्रत्वात् हेतोः निसर्गेण स्वाभाविकेन आहारवीर्येण युक्ता वयं साग्रात् किंचिदधिकात्किंचिद्दधिकम् आयोजनशतात् योजनशतमभिव्याप्य वयं नित्यशः पश्याम पश्यामः ॥ ३२ ॥

३१ ] ति० टी०—अस्माकं तु निसर्गेण जातिस्वभावेन दूरतो दूरवर्तिदर्शनबलसंपादकेन भक्ष्यविशेषेण वृत्तिर्विहिता धात्रेति शेषः । कुक्कुटादीनां तु स्वावासवृक्षमूल एव तावद्दूरदृष्टिमात्रसंपादिका च वृत्तिर्विहिता ॥ ३१ ॥

रा० टी०—नेत्रस्यापि दिव्यत्वे प्रयोजनमाह—अस्माकमिति । निसर्गेण जातिस्वभावेन दूरतः दूरतोऽवलोकितवस्तुना अस्माकं वृत्तिर्विहिता विधिनेति शेषः । प्रसङ्गादन्यवृत्तिमप्याह—चरणयोधिना कुक्कुटानां वृत्तिः वृक्षमूलेषु आत्मासन्नवृक्षमूललभ्येषु विहिता ॥ ३३ ॥

गो० टी०—अस्माकमिति । वृत्तिः भक्ष्यग्रहणम् । चरणयोधिनां कुक्कुटानाम् पादमूले पादविकीर्णप्रदेशे वृत्तिः जीवनम् ॥ ३१ ॥

३२ ] ति० टी०—गमिष्यथ किष्किन्धामिति शेषः ॥३२॥

रा० टी०—प्रकृतमाह—उपाय इति । लवणाम्भसो लङ्घने कश्चिदुपायो दृश्यतामत एव वैदेहीमुपलभ्य समृद्धार्थाः सन्तो गमिष्यथ ॥ ३४ ॥

गो० टी०—एवं प्रासङ्गिकं परिसमाप्य प्रकृतमाह—उपाय इति । गमिष्यथेत्यत्र किष्किन्धामिति शेषः ॥ ३३ ॥

३३-३५ ] ति० टी०—नेतुं नाययितुम् ॥ ३३-३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०—समुद्रमिति । स्वर्गतस्य भ्रातुः उदकं प्रदास्यामि अतः वरुणालयं समुद्रं भवद्भिर्नेतुं प्राप्तुमात्मानमिति शेषः, इच्छामि ॥ ३५ ॥

गो० टी०—समुद्रमिति । नेतुमिच्छामि मामिति शेषः । भवद्भिरिति करणे तृतीया ॥ ३४ ॥

रा० टी०—तत इति । ततः संपातिवचनश्रवणानन्तरं प्रवृत्तिमुपलभ्य हृष्टाः महौजसो वानराः निर्दग्धपक्षं संपातिं नदनदीपतेस्तं प्रसिद्धं देशं नीत्वा ततः संपातिसंपादितकृत्यानन्तरं पतगेश्वरं संपातिं तमावासदेशं पुनः प्रापयित्वा प्रापय्य बभूवुः स्थिता इति शेषः । श्लोकद्वयमेकान्वयि ॥ ३६ ॥३७॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

गो० टी०—तत इत्यादि । तीरं देशं तीरप्रदेशमित्यर्थः । तं देशं संपात्यावासभूतं देशं पुनः प्रत्यानयित्वा प्रवृत्तिं वृत्तान्तम् उपलभ्य ते वानराः हृष्टाः बभूवुः ॥ ३५ ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यानेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

१ पादेति गो पाठः । २ पुनः प्रत्यानयित्वेति गो पाठः ।

## एकोनषष्टितमः सर्गः ।

रावणेन सीताया हरणस्य विषये जाम्बवता पृष्टः संपातिर्भक्ष्यान्वेषणाय सागरं संप्राप्य तत्र केनचिद्रक्षसा ह्रियमाणां कांचित्कनकप्रभा युवतीं दृष्ट्वा पश्चान्महर्षिवचसस्तयोः सीतारावणत्वं निश्चिन्वता सुपार्श्वनाम्ना मत्पुत्रेण मह्यमेतन्न्यवेदीति बभाष ।

ततस्तदमृतास्वादं गृध्रराजेन भाषितम् । निशम्य वेदतो हृष्टास्ते वचः प्लवगर्षभाः ॥ १ ॥
जाम्बवान्वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः । भूतलात्सहसोत्थाय गृध्रराजानमब्रवीत् ॥ २ ॥
क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् । तदाख्यातु भवान्सर्वं गतिर्भव वनौकसाम् ॥ ३ ॥
को दाशरथिबाणानां वज्रवेगनिपातिनाम् । स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४ ॥
स हरीन्प्रीतिसंमुक्तान्सीताश्रुतिसमाहितान् । पुनराश्वासयन्प्रीत इदं वचनमब्रवीत् ॥ ५ ॥
श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् । येन चापि ममाख्यातं यत्र चायतलोचना ॥ ६ ॥
अहमस्मिन्गिरौ दुर्गे बहुयोजनमायते । चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥
तं मामेवंगतं पुत्रः सुपार्श्वो नाम नामतः । आहारेण यथाकालं बिभर्ति पततां वरः ॥ ८ ॥

१ ] ति० टी०—तत इति । ते प्लवगर्षभा अमृतास्वादं गृध्रराजाभिभाषितं निशम्य हर्षादेव तद्वदतोऽनुवदन्तो हृष्टा बभूवुरित्यर्थः । वदत इत्यत्र नुमभाव आर्षः ॥ १ ॥

रा० टी०—संपातिप्रापणानन्तरकालिकवृत्तान्तमाह—तत इत्यादिभिः । अमृतास्वादम्‥अमृतास्वादसदृशास्वादविशिष्टं वदता स्थिरेण गृध्रराजेन भाषित वचो निशम्य श्रुत्वा हृष्टाः प्लवगोत्तमाः ततः पूर्वस्थितिदेशे अतिष्ठन्निति शेषः ॥ १ ॥

गो० टी०—ततस्तदमृतास्वादमित्यारभ्य पञ्च सर्गाः प्रक्षिप्ताः सर्वकोशेष्वदर्शनात् तान् विनापि कथासंघट्टनात् पूर्वोक्तार्थविरोधस्फोरकत्वाच्च । तथापि ते व्याख्यास्यन्ते—तत इत्यादि । हृष्टाः रोमाञ्चाञ्चिताः बभूवुरिति शेषः ॥ १–१७ ॥

२ ] ति० टी०—अब्रवीत् लङ्कायां सीतादर्शनं त्वदेकसाक्षिकमन्यसाक्षिकमपि वेति दार्ढ्यायापृच्छदित्यर्थः । भूतलादुत्थाय प्रायोपवेशं त्यक्त्वेत्यर्थः ॥ २ ॥

रा० टी०—जाम्बवानिति । वानरश्रेष्ठः वानरेभ्योऽधिकवयस्कः जाम्बवान् भूतलात् उत्थाय संपातिसमीपं गत्वेत्यर्थः, गृध्रराजानं संपातिमब्रवीत् समासान्तविधेरनित्यत्वात् टजभावः ॥ २ ॥

३ ] ति० टी०—प्रश्नमेवाह—क्वेति । सीतां को हरति स्म, ह्रियमाणा च केन दृष्टा, त्वयान्येनापि वा, हृता च क्व वा वर्तते इति सर्वं भवानाख्यातु । सामान्यतः श्रुत्वा प्रायोपवेशादुत्थितानां विशिष्य वदत्वित्यर्थः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—क्वेति । सीता क्व कस्मिन् स्थले अस्तीति शेषः, केन दृष्टा च हरणसमये इति शेषः, मैथिलीं को वा हरति अहरत्, तत्सर्वं भवान् आख्यातु वदतु अत एव वनौकसामस्माकं गतिर्विश्रामभूमिर्भव एतेन पूर्वसंपातिकथनसमये जाम्बवतः अतिशोकहेतुकानवधानता तद्वचनेऽप्रीतिर्वा सूचिता ॥ ३ ॥

४ ] ति० टी०—को जानकीहर्ता स्वयं रामबाणानां विक्रमं न चिन्तयतीत्यन्वयः ॥ ४ ॥

रा० टी०—क इति । वज्रवेगनिपातिनाम् अतिवेगविशिष्टवज्रवत्स्वयं निपतनशीलानां लक्ष्मणमुक्तानां दाशरथिबाणानां रामसंबन्धिशराणां विक्रमं को न चिन्तयति । एतेन तस्य विनाशोऽवश्यं भवितेति सूचितं तेनापहर्तुः अज्ञानातिशयः सूचितः ॥ ४ ॥

५ ] ति० टी०—प्रतिसंमुक्तांस्त्यक्तप्रायोपवेशान् । सीताश्रुतिसमाहितान्सीताविषयवृत्तान्तश्रवणे सावधानान्पुनराश्वासयन्नन्यसाक्षिकताप्रदर्शनेन भूयः स्वोक्तार्थं प्रत्यापयन् ॥ ५ ॥

रा० टी०—स इति । स संपातिः प्रतिसंमुक्तान् त्यक्तप्रायोपवेशनात् सीताश्रुतिसमाहितान् सीतावृत्तान्तश्रवणाय एकाग्रचित्तान् वानरान् आश्वासयन् सन् पुनरब्रवीत् ॥ ५ ॥

६ ] ति० टी०—वैदेह्या हरणं यथा मे मया श्रुतम्, येन च ममाख्यातम्, यत्र साऽऽयतलोचना वर्तते इति श्रुतम्, तदपीहेदानीं श्रूयताम् ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—श्रूयतामिति । यथा येन प्रकारेण वैदेह्या हरणं श्रुतं तं प्रकारं येन ममाग्रे आख्यातं कथितं तं च यत्रायतलोचना सीता अस्ति तं देशं च इह इदानीं मे श्रूयताम् ॥ ६ ॥

७-८ ] ति० टी०—तदेवाह—अहमिति । दुर्गे दुर्गमे क्षीणः प्राणो बलं पराक्रमश्च यस्य सः ॥ ७ ॥ ८ ॥

रा० टी०—अहमिति । क्षीणौ अल्पौ प्राणपराक्रमौ यस्य सोऽहं बहुयोजनम् आयते विस्तृते अस्मिन् गिरौ चिरात् बहुकालतो निपतितः ॥ ७ ॥

रा० टी०—तमिति । एवमनेन प्रकारेण तं पतितं मां नामतः प्रणामाय गतः प्राप्तः सुपार्श्वो नाम पुत्रः आहारेण यथाकालं बिभर्ति ॥ ८ ॥

१ मुदिता इति गो. वदता इति रा. पाठः । २ राजमथेति गो. पाठः । ३ प्रीतीति गो. पाठः । ४ वेति गो. पाठः । ५ गोविन्दपाठोऽपि तिलकशिरोमण्यन्यतरगृहीत एव युक्तोऽन्यथा पुनरुक्त्यापत्तेरिति भाति । ६ द्वितीयाविभक्तिकल्पनापेक्षया प्रथमैव युक्तेति भाति ।

तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः । मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥ ९ ॥
स कदाचित्क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः । [1]गतः सूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १० ॥
स मयाऽऽहा[2]रसंरोधात्पीडितः प्रीतिवर्धनः । [ [3]क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥
स ममाहारसंरोधात्पीडितं प्रीतिवर्धनः ] । अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ ११ ॥
अहं तात यथाकालमामिषार्थी खमाप्लुतः । महेन्द्रस्य गिरेर्द्वारमावृत्य [4]सुसमाश्रितः ॥ १२ ॥
तत्र सत्त्वसहस्राणां सागरान्तरचारिणाम् । पन्थानमेकोऽध्यवसं संनिरोद्धुमवाङ्मुखः ॥ १३ ॥
तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् । स्त्रियमादाय गच्छन्वै भिन्नाञ्जनच[5]योपमः ॥ १४ ॥
सोऽहमभ्यवहारा[6]र्थं तौ दृष्ट्वा कृतनिश्चयः । तेन साम्ना विनीतेन पन्थानमनुयाचितः ॥ १५ ॥
नहि सामोपपन्नानां प्रहर्ता विद्यते भु[7]वि । नीचेष्वपि जनः कश्चित्किमङ्ग वत मद्विधः ॥ १६ ॥
स यातस्तेजसा व्योम संक्षिपन्निव [8]वेगितः । अथाहं खेचरैर्भूतैरभिगम्य सभाजितः ॥ १७ ॥
दिष्ट्या जीवति [9]सीतेति अब्रुवन्मां महर्षयः । कथंचित्सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥ १८ ॥

९ ] ति० टी०—तीक्ष्णकामाः 'स्त्रीकामा वै गन्धर्वाः' इति श्रुतेः । यथा कामादिविषये गन्धर्वादेस्तैक्ष्ण्यं स्वभावात्तत एव स्वभावादेव वयं पतगाः तीक्ष्णक्षुधा इत्यर्थः ॥ ९ ॥

रा० टी०—आहारेणैव भरणे हेतुं वदन्नाह—तीक्ष्णेति । गन्धर्वास्तीक्ष्णकामाः भवन्ति तेषु कामभोगाधिक्यमित्यर्थः । भुजङ्गमाः सर्वाः तीक्ष्णकोपाः तेषु कोपाधिक्यमित्यर्थः । मृगाणां तु भयं तीक्ष्णं तेषु भयाधिक्यमित्यर्थः । ततस्तथा वयं तीक्ष्ण क्षुधा अस्माकं क्षुधाया आधिक्यमित्यर्थः ॥ ९ ॥

१० ] ति० टी०—यस्मादेवम्, अतः क्षुधार्तस्य, अत एवाहारकाङ्क्षिणो ममाहारार्थं सूर्येऽहन्यह्नि सूर्ये सूर्योदयकाले गतो मम पुत्रः सायमनामिषः प्राप्त आगतः ॥ १० ॥

रा० टी०—स इति । अहनि अहोनिमित्ते सूर्ये सति सूर्योदयकाले इत्यर्थः, गतः आहाराभिकाङ्क्षिणो मम पुत्रः अनामिषः आमिषरहितः सन् प्राप्तः मामिति शेषः ॥ १० ॥

११ ] ति० टी०—यत एवम्, अतः स मम प्रीतिवर्धनो मयाहारसंरोधात्पीडितो दुर्वचनेन खेदं प्रापितः सन्मामनुमान्य क्षमापयित्वा यथातत्त्वमिदं वक्ष्यमाणं वचनमब्रवीत् ॥ ११ ॥

रा० टी०—स इति । आहारसंरोधात् आहारस्याप्राप्तेरित्यर्थः, पीडितः मया भर्त्सितः पुत्रः अनुमान्य मां संप्रार्थ्य यथातत्त्वं याथार्थ्यमनतिक्रम्य इदमब्रवीत् ॥ ११ ॥

१२ ] ति० टी०—सुसमाश्रितः स्थितः ॥ १२ ॥

रा० टी०—तद्वचनाकारमाह—अहमिति । हे तात ! यथाकालं गमनकालमनतिक्रम्य आमिषार्थी खमाकाशमाप्लुतोऽहं महेन्द्रस्य गिरेः द्वारं निर्गममार्गमावृत्य सुसमाश्रितः संस्थितः १२

१३ ] ति० टी०—पन्थानं संनिरोद्धुमवसमित्यन्वयः॥१३॥

रा० टी०—तत्रेति । तत्र तस्मिन् समये सागरान्तरचारिणां सहस्राणां पन्थानं संनिरोद्धुम् अवाङ्मुखः एकोऽहं अध्यवसम् ॥ १३ ॥

१४ ] ति० टी०—सूर्योदयसमप्रभामुदयकालिकसूर्यसमप्रभाम् ॥ १४ ॥

रा० टी०—तत्रेति । तत्र तस्मिन् समये सूर्योदयसमप्रभाम् उदयकालिकसूर्यप्रभासदृशप्रभाविशिष्टां स्त्रियमादाय गच्छन् भिन्नाञ्जनचयोपमः विलक्षणाञ्जनसमूहसदृशः कश्चिज्जनो मया दृष्टः ॥ १४ ॥

१५ ] ति० टी०—तौ स्त्रीपुरुषौ । कृतनिश्चयः इमावेव हत्वा पितुरभ्यवहारार्थं नेष्यामीति कृतनिश्चय इत्यर्थः । ततस्तेन विनीतेन सता साम्नैव पन्थानमभियाचितोऽस्मि । अत एवासौ त्यक्त इति शेषः ॥ १५ ॥

रा० टी०—स इति । सः आमिषार्थी अहं स्त्रीपुरुषौ दृष्ट्वा अभ्यवहारार्थं त्वत्कर्तृकभोजनार्थं कृतनिश्चयः इमावेव हत्वा पितृकर्तृकभोजनार्थं नेष्यामीति निश्चयवानित्यर्थः, अहं विनीतेन तेन पुरुषेण साम्ना सामरूपोपायेन पन्थानमनुयाचितोऽभवमतः त्यक्तवानस्मीति शेषः ॥ १५ ॥

१६ ] ति० टी०—तत्र हेतुः—नहि सामेति ॥ १६ ॥

रा० टी०—त्यागे हेतुमाह—नेति । सामोपपन्नानां सामयुक्तानां प्रहर्ता हन्ता नीचेषु अपि जनेषु कश्चिन्न तद्विधः भवत्कुलजातसदृशः नेति किं वक्तव्यम् ॥ १६ ॥

१७ ] ति० टी०—अथ सस्त्रीकस्य तस्य गमनानन्तरं खेचरैर्भूतैः सिद्धचारणादिभिः सभाजितः पूजितोऽस्मि ॥१७॥

रा० टी०—स इति । तेजसा व्योम आकाशं संक्षिपन् व्याप्नुवन् इव सः गृहीतस्त्रीकः यातः अथानन्तरं खेचरैः भूतैः अभिगम्य प्राप्य सभाजितः प्रार्थ्यमानत्यागेन प्रशंसितोऽहमभवमिति शेषः ॥ १७ ॥

गो० टी०—स यात इति । सभाजितः पूजितः ॥ १८॥

१८ ] ति० टी०—'दिष्ट्या जीवति सीता' इति पाठः ।

१ गतसूर्ये इति गो. पाठः । २ वृद्धभावाच्च कोपाच्च परिभर्त्सित इति गो. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे । ४ च समास्थित इति गो. पाठः । ५ चयप्रभ इति गो. पाठः । ६ अर्थीति गो. पाठः । ७ क्वचिदिति गो. पाठः । ८ वेगत इति गो. पाठः । ९ जीवसि नातेति इति गो.रा. पाठः।

एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः । स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ १९ ॥
पश्यन्दाशरथेर्भार्यां रामस्य जनकात्मजाम् । भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ॥ २० ॥
रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्धजाम् । एष कालात्ययस्तात इति वाक्यविदां वरः ॥ २१ ॥
एतदर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् । तच्छ्रुत्वापि हि मे बुद्धिर्नासीत्काचित्पराक्रमे ॥ २२ ॥
अपक्षो हि कथं पक्षी कर्म किंचित्समारभेत् । यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना ॥ २३ ॥
श्रूयतां तत्र वक्ष्यामि भवतां पौरुषाश्रयम् । वाङ्मतिभ्यां हि सर्वेषां करिष्यामि प्रियं हि वः २४ ॥
यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः । तद्भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः ॥ २५ ॥
प्रहिताः कपिराजेन देवैरपि दुरासदाः । रामलक्ष्मणबाणाश्च विहिताः कङ्कपत्रिणः ॥ २६ ॥
त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे । कामं खलु दशग्रीवस्तेजोबलसमन्वितः ॥
भवतां तु समर्थानां न किंचिदपि दुष्करम् ॥ २७ ॥

दिष्ट्या सीता त्वद्दृष्टिपथं प्राप्ता जीवति स्म त्वया तद्धननस्येषत्करत्वात् एवं पूजयित्वा मां महर्षयोऽब्रुवन् । असौ त्वया दृष्टः पुरुषः सकलत्रः कथंचित्कुशली गतः, अतोऽसंशयं ते स्वस्त्यस्त्विति कतकः । अन्ये तु—'दिष्ट्या जीवसि तातेति' इति पाठः । हे तात ! त्वं दिष्ट्या रावणं प्राप्यापि जीवसीत्यब्रुवन् । यतोऽसौ सकलत्रः, अतोऽसंशयं त्वां संशयमप्रापय्य गतः अतस्ते स्वस्ति जातमित्यर्थमाहुः ॥ १८ ॥

रा० टी०–सभाजनप्रकारमाह—दिष्ट्येति । हे तात ! सकलत्रः असौ योगतः स कथंचित् जीवति त्वया त्यक्त इत्यर्थः, इति दिष्ट्या भाग्यम्, अतस्ते स्वस्ति इति महर्षयो मामब्रुवन् ॥ १८ ॥

गो० टी०–दिष्ट्येति । असौ सकलत्रः सरक्ष्यवर्गः अतः कथंचित् गतः अतस्ते स्वस्त्यासीत् असंशयम् इति मां महर्षयोऽब्रुवन्निति योजना ॥ १९ ॥

१९ ] ति० टी०–अथ स हर्ता रावण इति सा रामभार्येति चाहं प्रतिवेदितः ॥ १९ ॥

रा० टी०–एवमिति । ततः तस्यागानन्तरं परमशोभनैः सिद्धैरहमेवमुक्तः सः मया त्यक्तस्तु रक्षसां राजा रावणः सिद्धैः प्रतिवेदितः बोधितश्च चकारेण या ह्रियमाणा सा सीता प्रतिवेदिता दुष्टत्यागप्रशंसया हरणेनैवास्य विनाशो भवितेति महर्षीणां ज्ञानं सूचितम् ॥ १९ ॥

गो० टी०–स चेति । मे मया । प्रतिवेदितः ज्ञातः सुपार्श्ववचनमिदम् ॥ २० ॥ २१ ॥

२०–२२ ] ति० टी०–अतोऽहं भ्रष्टाभरणत्वादिगुणां रामभार्यां पश्यन्स्थित इत्येष तावन्मे कालात्ययः कालातिपातहेतुरिति समग्रमेतदर्थं वाक्यविदां वरः सुपार्श्वो मे प्रत्यवेदयत् । तच्छ्रुत्वापीति । सामान्यतः पूर्वं मया दृष्टमपि पुत्राद्धर्ता रावणो हर्ता रामपत्नीति निश्चित्य श्रुत्वाऽपि॥२०–२२॥

रा० टी०–पश्यन्निति । भ्रष्टाभरणकौशेयां रामलक्ष्मणयोर्नाम क्रोशन्तीं दाशरथेः रामस्य भार्यां पश्यन् अतिष्ठमिति शेषः । हे तात ! एषः कालात्ययः इति एतद्धेतुकः एतदर्थं वाक्यविदां वरः सुपार्श्वः मे समीपे प्रत्यवेदयत् । सार्धश्लोकद्वयमेकान्वयी ॥ २० ॥ २१ ॥

रा० टी०–तदिति । तत् रावणस्य कर्म श्रुत्वाऽपि पराक्रमे मे बुद्धिः काचिन्नासीत् हि यतः अपक्षः पक्षरहितः पक्षी किंचित्कर्म कथं समारभेत् । अर्धद्वयमेकान्वयि ॥ २२ ॥

गो० टी०–एष इति । कालात्ययः कालातिक्रमहेतुः । रावणदर्शनमिति भावः ॥ २२–२४ ॥

२३ ] ति० टी०–वाग्बुद्धिभ्यां साध्यो यो गुण उपकारलक्षणस्तन्मात्रवर्तनशीलेन ॥ २३ ॥

रा० टी०–यदिति । वाग्बुद्धिगुणवर्तिना वचसा बुद्धिगुणेन समीचीनोपदेशादिना च वर्तनशीलेन मया यत्कर्तुं शक्यं तत् भवतां पौरुषाश्रयं पौरुषसाध्यं वक्ष्यामि । तत्र तत् श्रूयताम् ॥ २३ ॥

२४ ] ति० टी०–पौरुषाश्रयं पराक्रमप्रतिष्ठाभूतम् । किंचैष उपकारो न केवलं भवत्प्रयोजन एव, अपि तु स्वप्रयोजनफलोऽपीत्याह—वाङ्मतिभ्यामिति । दाशरथेः कार्यमुद्दिश्य वः सर्वेषां वाङ्मतिभ्यां यत्प्रियं करिष्यामि तन्ममैव कार्यम् अत्र संशयो न ॥ २४ ॥

रा० टी०–वागिति । दाशरथेः यत्कार्यं तन्ममैव अतः वाङ्मतिभ्यां सर्वेषां वः प्रियं करिष्यामि ॥ २४ ॥

गो० टी०–वागिति । सर्वेषां वः युष्माकं वाङ्मतिभ्यां प्रियं करिष्यामि हि । दाशरथेर्यत्कार्यं तन्ममैव ॥ २६–२८ ॥

२५ ] ति० टी०–तत्तस्मान्मया भवतां कार्यसिद्धेरसंशयं दृष्टत्वाद्भवन्तोऽवश्यं कार्ये यतन्तामिति शेषः ॥ २५ ॥

२६ ] ति० टी०–विहिताः विधात्रेति शेषः ॥ २६ ॥

२७ ] ति० टी०–त्राणनिग्रहे त्राणे निग्रहे च पर्याप्ताः ।

१ हरिश्चति गो. पाठः । २ तावदिति गो. पाठः । ३ कालेति गो. पाठः । ४ एतमिति गो. पाठः । ५ उपक्रमे इति गो. पाठः । ६ स्थिति गो. पाठः । ७ यशस्विन इति रा. पाठः । ८ प्रेषिता इति गो. पाठः । ९ निशिता इति गो. पाठः ।

तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः । नहि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ।

जनितविश्वासः संपातिः पुनः श्रवणोत्कण्ठानङ्गदादीन्सीतावृत्तं निवेदयितुमुपक्रमते । सूर्योग्रतेजसा निर्दग्धपक्षोऽहं विन्ध्ये पतितो मूर्छितः षड्रात्रोत्तरं प्राप्तचेतनः पतनप्रदेशं विन्ध्यत्वेन निरधारयम् । ततश्चिरपरिचितादपि तस्मात्प्रदेशादहं कथंचिदवतीर्य कंचिदाश्रमं प्रविष्टस्तत्र वसन्तं निशाकरनामानं मुनिमभ्यवादये । पादयोः प्रणमन्तं मा निर्दग्धपक्षतया स मुनिः कथंचित्संपातित्वेनावधार्य पक्षतिप्लोषकारणं पप्रच्छ ।

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः । उपविष्टा गिरौ [१]रम्ये परिवार्य समन्ततः ॥ १ ॥
तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् । जनितप्रत्ययो हर्षात्संपातिः पुनरब्रवीत् ॥ २ ॥
कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम । [२]तथ्यं संकीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३ ॥
अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरानघ । [४]सूर्यतापपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥
लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव । वीक्षमाणो दिशः सर्वा नाभिजानामि किंचन ॥ ५ ॥
ततस्तु सागराञ्शैलान्नदीः सर्वाः सरांसि च । वनानि [३]च [५]प्रदेशांश्च निरीक्ष्य मतिरागता ॥ ६ ॥

समाहारद्वन्द्वः । यद्यपि दशग्रीवो लोकवृष्ट्या प्रबलः, तथापि भवतां रामलक्ष्मणसहायत्वेनैव समर्थानां सुकर एवेति भावः॥२७॥

रा० टी०—तदिति । कपिराजेन प्रहिताः मतिश्रेष्ठाः भवन्तः देवैरपि दुरासदाः सन्तीति शेषः । विहिताः चालिताः रामलक्ष्मणबाणाः त्रयाणामपि लोकानां त्राणनिग्रहे कामं पर्याप्ताः समर्था इत्यर्थः तत् तस्मात् हेतोः तेजोबलसमन्वितो यो दशग्रीवः तस्मिन् भवतां किंचिन्न दुष्करम् । श्लोकत्रयं संमिलितान्वयि ॥ २५—२७ ॥

२८ ] ति० टी०—कालसङ्गः कालविलम्बः । सज्जन्तेऽलसा भवन्ति ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकोनषष्टितमः सर्गः ॥५९॥

रा० टी०—तदिति । हि यतः बुद्धिमन्तो जनाः कर्मसु न सज्जन्ते अलसाः भवन्ति तत् ततः बुद्धिनिश्चयः बुद्धिजनितनिश्चयविशिष्टः सीतादर्शनोद्योग इत्यर्थः, क्रियताम् कालसंगेन कालविलम्बेन अलं न क्रियतामित्यर्थः ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

गो० टी०—तदिति । कालसङ्गेन कालविलम्बेन ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—वानरान्प्रति संपातिवचनान्तरं वर्णयितुमाह—तत इति । कृतमुदकमुदकक्रिया येन तं स्नातं रम्ये गिरौ स्थितं गृध्रं समन्ततः परिवार्य हरियूथपा उपविष्टाः संस्थिता अभवन्निति शेषः ॥ १ ॥

गो० टी०—ततः कृतोदकमित्यादि ॥ १ ॥

२ ] ति० टी०—जनितप्रत्ययः एष्यन्त्यन्वेषका इति निशाकरमुन्युक्तरीत्या रामदूतागमनदर्शनान्निशाकरोक्तपक्षप्ररोहादिदर्शनाच्च निशाकरवचसि विश्वस्तः । हर्षात्पक्षलाभजनितहर्षादात्मानमुपासीनमङ्गदं प्रति पुनरब्रवीत् ॥ २ ॥

रा० टी०—तमिति । हरिभिर्वृतमुपासीनमङ्गदं जनितः उत्पादितः प्रत्ययः अङ्गदादिषु विश्वासो येन स संपातिः पुनरब्रवीत् ॥ २ ॥

गो० टी०—तमिति । जनितप्रत्ययः जनितविश्वासो यथा भवति तथाऽब्रवीदिति योजना वानरदर्शनरूपस्वकार्यतो जनितविश्वास इत्यर्थः ॥ २—४ ॥

३ ] ति० टी०—तथ्यं मैथिलीं जानामीति मद्वाक्यं सत्यं यथा भवद्भिः प्रतिपत्तव्यं तथा संकीर्तयिष्यामि ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—कृत्वेति । हे हरयः ! मैथिलीं यथा जानामि तथा तथ्यं संकीर्तयिष्यामि अतः निःशब्दं शब्दनिवृत्तिं कृत्वा एकाग्राः सन्तो मम मत्तः शृण्वन्तु ॥३॥

४—६] ति० टी०—सूर्यरश्मिभिर्निर्दग्धः, अत एव विवशः । षड्रात्रात्परं लब्धसंज्ञः विह्वलन्निव परमार्त एव सन् ॥४—६॥

रा० टी०—तत्संकीर्तनाकारमाह—अस्येत्यादिभिः । सूर्यतापपरीताङ्गः सूर्यकिरणतापयुक्तः अत एव सूर्यरश्मिभिर्निर्दग्धोऽहमस्य विन्ध्यस्य शिखरे पतितोऽस्मि ॥ ४ ॥

१ दुर्गे इति गो. पाठः । २ तत्त्वमिति गो. पाठः । ३ वने इति गो. पाठः । ४ सूर्यातपेति गो. पाठः । ५ उदधिवेलां च समीक्ष्य मतिरागमदिति गो. पाठः ।

हृष्टपक्षिगणाकीर्णः कन्दरोदरकूटवान् । दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति [2]निश्चितः॥ ७ ॥
आसीच्चात्राश्रमं पुण्यं सुरैरपि सुपूजितम् । ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा भवत् ॥ ८ ॥
अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा [3]गिरौ । वसतो मम धर्मज्ञ स्वर्गते तु निशाकरे ॥ ९ ॥
अवतीर्य च विन्ध्याग्रात्कृच्छ्रेण विषमाच्छनैः । तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् । जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११ ॥
तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः । वृक्षो नापुष्पितः कश्चिदफलो वा न दृश्यते ॥ १२ ॥
उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः । द्रष्टुकामः प्रतीक्षे च भगवन्तं निशाकरम् ॥ १३ ॥
अथ पश्यामि दूरस्थमृषिं ज्वलिततेजसम् । कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥
तमृक्षाः सृमरा व्याघ्राः सिंहा नानासरीसृपाः । परिवार्योपगच्छन्ति दातारं प्राणिनो यथा ॥ १५ ॥
ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययुः । प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥ १६ ॥
ऋषिस्तु दृष्ट्वा मां [11]तुष्टः प्रविष्टश्चाश्रमं पुनः । मुहूर्तमात्रान्नि[12]र्गम्य ततः कार्यमपृच्छत ॥ १७ ॥

रा० टी०–लब्ध्वेति । षण्मासादूर्ध्वंलब्धसंज्ञ· विवशः स्ववशरहितोऽहं विह्वलमेव दिशो वीक्षमाणश्च सन् किञ्चन नाभिजानामि ॥ ५ ॥

रा० टी०–तत इति । ततोऽनन्तरं सागरादीन् वीक्ष्य मतिर्विवेक आगता ॥ ६ ॥

गो० टी०–लब्धसंज्ञस्त्विति । विह्वलमिव मूर्छामिव निश्चयः ॥ ५ ॥ ६ ॥

७ ] ति० टी०–कन्दराण्युदरे यस्य स चासौ कूटवान् शृङ्गवानित्यर्थः ॥ ७ ॥

रा० टी०–तदाकारमाह–हृष्टेति । कन्दरा एव उदरं यस्य स एव कूटवानिति कर्मधारयः अयं विन्ध्यः इति निश्चितः मयेति शेषः ॥ ७ ॥

गो० टी०–हृष्टेति । अभूदिति शेषः ॥ ७ ॥

८ ] ति० टी०–यस्मिन्नाश्रमे उग्रतपाभवदिति संधिरार्षः ॥ ८ ॥

रा० टी०–आसीदिति । यस्मिन् निशाकरो नाम ऋषिः उग्रतपाः अभवत् तदिदं पुण्यमाश्रमं सुरैरपि सुपूजितमासीत् । दीर्घं आर्षः, असिद्धत्वाभावज्ञापनाद्वा आगमशास्त्रस्यानित्यत्वादडभावो वा ॥ ८ ॥

गो० टी०–आसीदिति । भवत् अभवत् ॥ ८ ॥

९ ] ति० टी०–निशाकरे ऋषौ स्वर्गते तेन विनाऽत्र गिरौ वसतो ममाष्टौ वर्षसहस्राणि गतानीति शेषः ॥ ९ ॥

रा० टी०–अष्टाविति । निशाकरे स्वर्गते सति अस्मिन् गिरौ तेन ऋषिणा विना वसतो मम अष्टौ वर्षसहस्राणि व्यतीतानीति शेषः ॥ ९ ॥

गो० टी०–अष्टाविति । वर्षसहस्राणि गतानीति शेषः ॥ ९—१७ ॥

१० ] ति० टी०–अथ तत्स्थितिकालिकीं तद्दर्शनप्रवृत्तिमाह–अवतीर्येति । तीक्ष्णदर्भां तीक्ष्णाग्रा दर्भा यस्याम् ॥१०॥

रा० टी०–मुनिसंगमप्रकारं बोधयितुं पूर्ववृत्तमाह–अवतीर्येत्यादिभिः । विषमाद्विन्ध्याग्रादवतीर्य वसुमतीं पृथ्वीं पुनरागतोऽस्मीति शेषः ॥ १० ॥

११–१३] ति० टी०–तमृषिं द्रष्टुकामोऽस्मि द्रष्टुकामोऽभूवमित्यर्थः अत एव दुःखेन तदभ्याशमभ्यागतः ननु तद्वासोऽत्रेति त्वया कथं ज्ञातमत आह—जटायुषेति । अधिगतः प्राप्तः सेवित इत्यर्थः ॥ ११—१३ ॥

रा० टी०–तमिति । स ऋषिः जटायुषा मया च बहुशोऽधिगतः पूर्वं प्राप्तः अतः दुःखेनाभ्यागतोऽहं तमृषिं द्रष्टुकामः समवलोकनेच्छुरस्मि आसम् ॥ ११ ॥

रा० टी०–तदाश्रमचिह्नान्याह–तस्येति । आश्रमपदस्य श्रमनिवर्तकस्थानस्य अभ्याशे निकटे वाता ववुः अपुष्पितः अफलो वा कश्चिद्वृक्षो न दृश्यते ॥ १२ ॥

रा० टी०–उपेत्येति । निशाकरं द्रष्टुकामोऽहमाश्रममुपेत्य वृक्षमूलमुपाश्रितः सन् प्रतीक्षे प्रत्यैक्षे ॥ १३ ॥

१४ ] ति० टी०–उदङ्मुखमुपावृत्तं समुद्रे स्नात्वोदङ्मुखतया प्रत्यावृत्तम् ॥ १४ ॥

रा० टी०–अथेति । कृताभिषेकं कृतस्नानम् उदङ्मुखमुपावृत्तमागच्छन्तं दूरस्थमृषिं पश्यामि अपश्यम् ॥ १४ ॥

१५ ] ति० टी०–तस्य स्वसेवायोग्यत्वप्रदर्शनाय तिर्यग्योनिसेव्यत्वं तपोमहिमजं दर्शयति—तमृक्षा इति ॥१५॥

रा० टी०–तमिति । तमागच्छन्तमृषिं प्राणिनो दातारमिव ऋक्षादयः परिवार्य उपगच्छन्ति ॥ १५ ॥

१६–१७ ] ति० टी०–प्राप्तमाश्रममागतम् ॥१६ ॥ १७ ॥

रा० टी०–तत इति । ततोऽनन्तरं प्राप्तं स्वाश्रम इति

१ कन्दरान्तरेति गो. पाठः । २ निश्चय इति गो. पाठः । ३ विनेति गो. पाठः । ४ धर्मज्ञा इति गो. पाठः । ५ वेति गो. पाठः । ६ विपता इति गो. पाठः । ७ ऽहमिति गो. पाठः । ८ अपश्यामेति गो. पाठः । ९ नागा इति गो. पाठः । १० भातारमिति गो. पाठः । ११ प्रीत इति गो. पाठः । १२ निष्क्रम्येति गो. पाठः ।

सौम्य वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते । अग्निदग्धाविमौ पक्षौ प्राणाश्चापि शरीरके ॥ १८ ॥
गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे । गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥
ज्येष्ठोऽवितस्त्वं संपाते जटायुरनुजस्तव । मानुषं रूपमास्थाय गृह्णीतां चरणौ मम ॥ २० ॥
किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् । दण्डो वायं धृतः केन सर्वमाख्याहि पृच्छतः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।

निशाकरमुनिं प्रति स्वपक्षदाहकारणं विस्तरेण कथयन्संपातिर्गिरिशिखरात्पतनेन पक्षबलविहीनमपि जराजर्जरितमिदं कलेवरं मुञ्चामीति प्रतिजानीते ।

ततस्तद्दारुणं कर्म दुष्करं सहसा कृतम् । आचचक्षे मुनेः सर्वं सूर्यानुगमनं तथा ॥ १ ॥
भगवन्व्रणयुक्तत्वाल्लज्जया चाकुलेन्द्रियः । परिश्रान्तो न शक्नोमि वचनं परिभाषितुम् ॥ २ ॥

शेषः, ऋषिं ज्ञात्वा राजनि प्रविष्टे अन्तःपुरं गते सति सामात्यकम् अमात्यसहितं बलं सैन्यमिव तानि सत्त्वानि ययुः ॥१६॥

रा० टी०—ऋषिरिति । ऋषिस्तु मां दृष्ट्वा तुष्टः पुनराश्रमं प्रविष्टश्च मुहूर्तमात्रात् ततः आश्रमात् निर्गम्य कार्यं मम हिंसनहेतुमपृच्छत ॥ १७ ॥

१८ ] ति० टी०—ते रोम्णां वैकल्यं दृष्ट्वा नावगम्यते न प्रत्यभिज्ञायते भवानित्यर्थः वैकल्यमेवाह—अग्निदग्धौ ताविव अत एव शरीरकेऽल्पे शरीरे प्राणाः चाद्विक्रमबले अपि ते दग्धकल्पाः ॥ १८ ॥

रा० टी०—तत्प्रभाकारमाह–सौम्येति । हे सौम्य ! ते तव रोम्णां वैकल्यतामभावं दृष्ट्वा नावगम्यते प्रत्यभिज्ञायते भवानिति शेषः । वैकल्यताकारणमनुमिनोति इमौ तव पक्षौ अग्निदग्धौ अग्निदग्धाविव अत एव शरीरके अल्पशरीरे विद्यमानाः प्राणाश्चकारेण विक्रमादयोऽपि अग्निदग्धप्रायाः॥ १८ ॥

गो० टी०—सौम्येति । विकल एव वैकल्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् तस्य भावो वैकल्यता व्रणिता संजातव्रणा ते नावगम्यत इत्यत्र त इति भिन्नं पदम् । हे सौम्य ! ते रोम्णां वैकल्यतां दृष्ट्वा नावगम्यते रोमविकलत्वहेतुः स्वरूपमिति शेषः । अग्निदग्धाविति दृश्येते इति शेषः । व्रणितेत्यत्र दृश्यत इति शेषः ॥ १८–२१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

१९ ] ति० टी०—अथ प्रत्यभिज्ञामूलामभिज्ञामाह—गृध्राविति ॥ १९ ॥

२०] ति० टी०—अवितो ज्ञातः। गृह्णीतामगृह्णीताम्॥२०॥

रा० टी०—यथाकथंचित् तं ज्ञात्वा आह–गृध्राविति। जवे वेगे मातरिश्वसमौ वायुसदृशौ गृध्राणां राजानौ भ्रातरौ मे मम दृष्टपूर्वौ द्वौ गृध्रौ मानुषं रूपमास्थाय गृहीत्वा मम चरणौ गृह्णीताम् । हे संपाते ! यस्य तव जटायुरनुजः स ज्येष्ठस्त्वम् अवितो मया ज्ञातः । श्लोकद्वयमेकान्वयि ॥१९॥२०॥

२१ ] ति० टी०—किं कीदृशम् । व्याधिसमुत्थानमिति षष्ठीतत्पुरुषः । अयं दण्डो व्रणकरः प्रहारः केन धृतः केन कृतः॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—किमिति । किं ते व्याधिसमुत्थानं केनचित् दण्डो वाऽयं धृतः । ननु द्वयमपि नास्तीत्यत आह–तव पक्षयोः पतनं कथम् इति पृच्छतो मे सर्वं कारणजातमाख्याहि ॥२१॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

१ ] ति० टी०—तद्दारुणं कर्मेन्द्रेण युद्धरूपमनेन दुष्करं सहसा दर्पात्कृतं प्रथममाचचक्षे । तथा तदनन्तरकृतं सूर्यानुगमनं सर्वं प्रकृतविन्ध्यपतनप्रयोजनत्वेनाचचक्षे ॥ १ ॥

रा० टी०—मुनिकर्तृकप्रश्नानन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । ततः ऋषिकृतप्रश्नश्रवणानन्तरं दुष्करम् अन्यैः कर्तुमशक्यं तत् इन्द्रकर्तृकपराभवरूपं दारुणं कर्म सूर्यानुगमनं च मुनेः समीपे आचचक्षे ॥ १ ॥

गो० टी०—ततस्तादित्यादि ॥ १ ॥ २ ॥

२] ति० टी०—तदेवाह–भगवन्निति। व्रणयुक्तत्वादिन्द्रयुद्धे वज्रप्रहारजव्रणयुक्तत्वात्परिश्रान्तस्तथा पक्षनाशफलकानुचितकर्मकरणजलज्जयाऽऽकुलितेन्द्रियश्चाहं प्रतिभाषितुं सम्यगुत्तरं दातुं न शक्नोमि, तथापि कथंचिद्ब्रवीमीति शेषः ॥ २ ॥

रा० टी०—तत्कथनप्रकारमाह—भगवन्नित्यादिभिः। भगवन् हे मुने ! व्रणयुक्तत्वात् इन्द्रयुद्धे तत्र वज्रकृतव्रणवत्त्वाद्धे-

१ त्वञ्चैव व्रणिता तवेति गो. पाठः । २ हि त्वं तु इति गो. पाठः । ३ कृत इति गो. पाठः । ४ तदेति गो. पाठः । ५ व्याकुलेति गो. पाठः

अहं चैव जटायुश्च संघर्षाद्दर्पमोहितौ । आकाशं पतितौ दूराज्जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥
कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् । रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४ ॥
अप्यावां युगपत्प्राप्तावपश्याव महीतले । रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५ ॥
क्वचिद्वादित्रघोषश्च क्वचिद्भूषणनिःस्वनः । गायन्तीः स्माङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६ ॥
तूर्णमुत्पत्य चाकाशमादित्यपदमास्थितौ । आवामालोकयावस्तद्वनं शाद्वलसंस्थितम् ॥ ७ ॥
उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः । आपगाभिश्च संवीता सूत्रैरिव वसुंधरा ॥ ८ ॥
हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहागिरिः । भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९ ॥
तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदावयोः । समाविशत मोहश्च ततो मूर्छा च दारुणा ॥ १० ॥
न च दिग् ज्ञायते याम्या न चाग्नेयी न वारुणी । युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥ ११ ॥
मनश्च मे हतं भूयश्चक्षुः प्राप्य तु संश्रयम् । यत्नेन महता ह्यस्मिन्मनः संधाय चक्षुषी ॥ १२ ॥

तोः परिश्रान्तः प्राप्तखेदः अत एव लज्जया आकुलेन्द्रियोऽहं वचनं परिभाषितुमत्यन्तं वक्तुं न शक्नोमि । अत्यन्तं वक्तुं न शक्नोमीत्यनेन किंचिद्ब्रवीमीति सूचितम् ॥ २ ॥

३ ] ति० टी०–संघर्षात्पतनविषयस्पर्धातः । गर्वमोहितावविन्द्रजयगर्वमोहितौ ॥ ३ ॥

४ ] ति० टी०–पणं बद्ध्वा प्रतिज्ञां कृत्वा । प्रतिज्ञामेवाह—रविरिति । रविर्यावदस्तं महाद्रिं यायात्ततः प्रागावाभ्यां रविरनुयातव्योऽनुप्राप्तव्य इति प्रतिज्ञा ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह–अहमिति । गर्वमोहितौ इन्द्रजयजनितगर्वविशिष्टौ अहं जटायुश्च संघर्षात् परस्पराभिभवेच्छातः पराक्रमं स्वस्वबलं जिज्ञासन्तौ सन्तौ अस्तं महागिरिं रविः यावत् स्यात् यायात् तावदेव अनुयातव्यः आवाभ्यां प्राप्यः इति पणं कैलासशिखरे मुनीनामग्रतः बद्ध्वा दूरादाकाशं पतितौ गतौ । श्लोकद्वयमेकान्वयि ॥३॥४॥

गो० टी०–अहमिति । पतितौ प्राप्तौ ॥ ३–९ ॥

५ ] ति० टी०–युगपत्प्राप्तौ आकाशमिति शेषः । अपश्याव दृष्टवन्तौ ॥ ५ ॥

रा० टी०–अथेति । अथ गमनानन्तरं युगपत् एककालावच्छेदेन प्राप्तौ आकाशं गतौ आवां महीतले विद्यमानानि पृथक् पृथक् नगराणि चक्रप्रमाणानि अपश्याव ॥ ५ ॥

६ ] ति० टी०–क्वचिदूर्ध्वदिक्प्रदेशविशेषे ॥ ६ ॥

रा० टी०–क्वचिदिति । क्वचित् वादित्रघोषादिः शुश्रुव इति शेषः । क्वचित् रक्तवाससः बह्वीः अङ्गनाः पश्यावः ॥६ ॥

७ ] ति० टी०–आकाशमाकाशपथादर्वाक्तनं भूवर्तिवनम् । शाद्वलसंस्थितं शाद्वलानां बालतृणवद्देशानामिव संस्थानं यस्य तत् ॥ ७ ॥

रा० टी०–तूर्णमिति । आकाशम् आकाशपथादधोदेशं तूर्णम् उत्पत्य उल्लङ्घ्य आदित्यपदम् आस्थितौ आवां शाद्वलसंवृतं शाद्वलैर्बालतृणैः संवृतमाच्छादितमिव वनम् आलोकयाव, महातरवः दूर्वादलवद्दृश्यन्ते इत्यर्थः ॥ ७ ॥

८ ] ति० टी०–उपलैः सूक्ष्मपाषाणैः ॥ ८ ॥

रा० टी०–उपलैरिति । शिलोच्चयैः पर्वतैः संछन्ना भूः उपलैः सूक्ष्मप्रस्तरैरिव संछन्ना दृश्यते आपगाभिर्नदीभिः संवीता आच्छादिता वसुन्धरा सूत्रैरिव संवीता दृश्यते ॥ ८ ॥

९ ] ति० टी०–नागा गजाः ॥ ९ ॥

रा० टी०–हिमवानिति । हिमवदादयः जलाशये नागा गजा इव भूतले संप्रकाशन्ते ॥ ९ ॥

१० ] ति० टी०–तदा सवितारि मध्यं प्राप्ते मोहो दिङ्मोहस्ततो मोहादनन्तरं दारुणा मूर्च्छा सेन्द्रियमनउपप्लवो मूर्च्छा ॥ १० ॥

रा० टी०–तीव्र इति । तदा तादृशदर्शनसमये स्वेदाद्यासीत् ततस्तस्माद्धेतोः मोहो मूर्छा च समाविशत् ॥ १० ॥

गो० टी०–तीव्र इति । मोहः चित्तविभ्रमः । मूर्च्छा इन्द्रियैः सह मनस उपप्लवः तमः अज्ञानम् ॥ १० ॥

११ ] ति० टी०–मोहमूर्च्छे एव प्रकाशयति—न चेति । युगान्ते नियतो नियतदाहोऽपि लोक आवाभ्यां तत्कालेऽग्निना दग्धो हत इव दृष्टोऽभूत् ॥ ११ ॥

रा० टी०–नेति । याम्यादिर्दिग् न ज्ञायते अत एव नियतः नियमेन स्थितोऽपि लोकः युगान्ते अग्निना दग्धः अत एव हतः निहत इव ज्ञायते ॥ ११ ॥

गो० टी०–न दिगिति । याम्येत्यादिकं दिगन्तराणामुपलक्षणम् । नियतो लोकः नियतसंनिवेशो लोकः । युगान्ते अग्निना दग्धो हत इव अदृश्यतेति शेषः ॥ ११ ॥

१२ ] ति० टी०–मनश्च मे भूयोऽप्यधिकं संश्रयं चक्षुः

१ दर्पेति गो. पाठः । २ वीराविति गो. पाठः । ३ अथेति गो. रा. पाठः । ४ घोषाश्च ब्रह्मघोषांश्च शुश्रुव इति गो. पाठः । ५ चेति गो. पाठः । ६ पथमाश्रिताविति गो. पाठः । ७ संनिभमिति गो. पाठः । ८ महान्नग इति गो. पाठ. । ९ विशतीति गो. पाठः । १० नाग्नेया न चेति गो. पाठः । ११ मनिवर्त्येति गो. पाठः । १२ पुनरिति गो. पाठः । १३ चक्षुरि इति गो. पाठः ।

यत्नेन महता भूयो भास्करः प्रतिलोकितः । तुल्यपृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३ ॥
जटायुर्मामनापृच्छ्य निपपात महीं ततः । तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४ ॥
पक्षाभ्यां च मया गुप्तो जटायुर्न प्रदह्यत । प्रमादात्तत्र निर्दग्धः पतन्वायुपथादहम् ॥ १५ ॥
आशङ्के तं निपतितं जनस्थाने जटायुषम् । अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६ ॥
राज्याच्च हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च । सर्वथा मर्तुमेवेच्छन्पतिष्ये शिखराद्गिरेः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्ड एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

मा देहं त्याक्षीर्गच्छेश्चान्यत्र धृतरामावतारो भगवान्सीतान्वेषणार्थं वानरान्प्रेषयिष्यति तदा त्वं स्थित्वा तान्प्रति सीताप्रवृत्तिं निवेदयतस्ते पुनः पक्षप्ररोहः स्यादहमपि रामदर्शनपर्यन्तमेव शरीरं धर्तास्मीति प्रणिधानदर्शिनिशाकरमुन्युक्तं संपातिस्तान्कपीन्प्रादिशति ।

एवमुक्त्वा मुनिश्रेष्ठमरुदं भृशदुःखितः । अथ ध्यात्वा मुहूर्तं च भगवानिदमब्रवीत् ॥ १ ॥

प्राप्य तेन सह हतं सौरतेजसा प्रतिहतदर्शनशक्तिकमभूत् । अस्मिन्सूर्ये पुनश्चक्षुषी मनश्च संधाय ॥ १२ ॥

१३ ] ति० टी०—कथं सूर्यो दृष्ट इत्यत्र तत्प्रकारमाह—तुल्य इति । पृथ्व्यत्र जम्बूद्वीपावच्छिन्ना बोध्या ॥ १३ ॥

रा० टी०—मन इति । चक्षुःसंश्रयं नेत्ररूपमाश्रयं प्राप्य मे मनः भूयो हतं चक्षुषा सह शैथिल्यं प्राप्तमित्यर्थः, अतः महता यत्नेन मनः चक्षुषी च संधाय सूर्योन्मुखे कृत्वा महता यत्नेन भास्करः प्रतिलोकितः भास्करः नौ आवयोः पृथ्वीप्रमाणेन तुल्यः प्रतिभाति । श्लोकद्वयमेकान्वयि ॥१२॥१३॥

गो० टी०—मनश्चेत्यादि । संश्रयम् आश्रयभूतं चक्षुरिन्द्रियम् संनिवर्त्य स्वेन विप्रयुज्य भूयो भृशं हतं मे मनः महता यत्नेन अस्मिन् चक्षुषि पुनः संधाय महता यत्नेन भूयो रविः समवलोकित इति संबन्धः । 'हतं भूयः संनिवर्त्य तु संश्रयम् । यत्नेन महता ह्यस्मिन् पुनः सन्धाय चक्षुषि ॥ यत्नेन महता भूयो रविः समवलोकितः' इति पाठः ॥१२॥१३॥

१४ ] ति० टी०—ततः सूर्यदर्शनानन्तरम् अनापृच्छ्य मोहवशादिति शेषः। तं दृष्ट्वेति । मोहात्पतन्तं जटायुं दृष्ट्वाऽऽकाशादात्मानं मुक्तवानिति सूर्यसमीपवर्त्याकाशप्रदेशादात्मानं स्वशरीरं जटायुरक्षणार्थं मुक्तवान् पक्षौ विस्तार्य पतितवानित्यर्थः ॥ १४ ॥

रा० टी०—जटायुरिति । जटायुर्मामनापृच्छ्य अपृष्ट्वा महीं पपात । तन्निपतन्तं जटायुषमहं दृष्ट्वा आकाशात् सूर्यसमीपवर्तिगगनात् आत्मानं स्वशरीरं मुक्तवान् अहमप्यपतमित्यर्थः ॥ १४ ॥

गो० टी०—जटायुरिति । निपपात महीम् महीं प्रति निपपातेत्यर्थः । पतन्तं दृष्ट्वा अहमाकाशात् पूर्वाधिष्ठिताकाशप्रदेशात् आत्मानं तूर्णंमुक्तवान् जटायुषो रक्षणार्थं तदुपरि सत्वरमागच्छमित्यर्थः ॥ १४ ॥

१५-१६ ] ति० टी०—प्रमादाज्जटायुपरित्राणविषयचित्ताभिषङ्गात् तत्र तस्मिन्काले निर्दग्धो निर्दग्धपक्षः अथ वायुपथात्पतन्नहमाशङ्केऽनुमितवान्, न तु प्रत्यक्षतो दृष्टवानित्यर्थः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—सर्वथा मर्तुमेवेच्छन् शिखरात्पतिष्य इत्याहेति शेषः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे एकषष्टितमः सर्गः॥ ६१ ॥

रा० टी०—ननु जटायुः कथं न दग्ध इत्यत आह—पक्षाभ्यामिति । मया पक्षाभ्यां गुप्तः जटायुर्न प्रदह्यत प्रादह्यत । प्रमादात् अनवधानतया तत्र सूर्यसमीपे निर्दग्धः वायुपथात् पतन्नहं जनस्थाने निपतितं जटायुषमाशङ्के कथंचित् अजानाम् । सार्धश्लोक एकान्वयी ॥ १५ ॥

रा० टी०—अहमिति । विन्ध्ये पतितः अत एव जडीकृतः राज्यादिहीनोऽहं मर्तुमेव इच्छन् गिरेः शिखरात् पतिष्ये । सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

गो० टी०—पक्षाभ्यामिति । प्रमादात्सूर्यो धक्ष्यतीति बुद्ध्यवधानाभावात् ॥ १५-१७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

१ ] ति० टी०—एवमिति ॥ १ ॥

रा० टी०—संपातिवृत्तान्तनिवेदनानन्तरकालिकं वृत्तान्तमाह—एवमित्यादिभिः । मुनिश्रेष्ठमेवमुक्त्वा भृशदुःखितोऽहमरुदम् । अथ मद्रोदनदर्शनानन्तरं मुहूर्तं ध्यात्वा भगवान् अतिसमर्थो मुनिरिदमब्रवीत् ॥ १ ॥

१ रविः समवेति गो. पाठः । २ तुल्य इति गो. पाठः । ३ दह्यते इति गो. पाठः । ४ राज्येनेति गो. पाठः ।

पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः । चक्षुषी चैव प्राणाश्च विक्रमश्च बलं च ते ॥ २ ॥
पुराणे सुमहत्कार्यं भविष्यं हि मया श्रुतम् । दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३ ॥
राजा दशरथो नाम कश्चिदिक्ष्वाकुवर्धनः । तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४ ॥
अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति । तस्मिन्नर्थे[3] नियुक्तः सन्पित्रा सत्यपराक्रमः ॥ ५ ॥
नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति । राक्षसेन्द्रो जनस्थाने अवध्यः सुरदानवैः ॥ ६ ॥
सा च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली। न भोक्ष्यति महाभागा दुःखमग्ना यशस्विनी ॥ ७ ॥
परमान्नं च वैदेह्या ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८ ॥
तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति । अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९ ॥
यदि जीवति मे भर्ता लक्ष्मणो वाऽपि देवरः । देवत्वं गच्छतोर्वाऽपि तयोरन्नमिदं त्विति ॥ १० ॥

गो० टी०—एवमुक्त्वेत्यादि ॥ १–४ ॥

२ ] ति० टी०—पक्षप्रपक्षौ सूक्ष्मपक्षमहापक्षौ प्राणाः पुष्टप्राणाः । चक्षुषी उद्भूतशक्तिके ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—पक्षाविति । प्रपक्षौ तवात्यन्तस्वीकारविषयौ अन्यौ पक्षौ चक्षुषी च भविष्यतः प्राणादयश्च भविष्यन्ति भविष्यत इत्यस्य वचनविपरिणामेनान्यत्राप्यन्वयः ॥ २ ॥

३ ] ति० टी०—पुराणे नारदादिभिरुच्यमाने भविष्यरामचरितरूपे पुराणे श्रुत्वा विदितं तपसा दृष्टं च ॥ ३ ॥

रा० टी०—तत्र गमकमाह—पुराण इति । भविष्यं भविष्यत्कालिकं सुमहत् अत्यधिकं कार्यं मया श्रुतं श्रुत्वा च विदितं निश्चितं तपसा तपोबलेन दृष्टं साक्षात्कृतम् ॥ ३ ॥

४ ] ति० टी०—किं तत्राह—राजेत्यादि ॥ ४ ॥

रा० टी०—ननु किं तन्महत्कार्यमित्यत आह—राजेत्यादिभिः । दशरथो नाम कश्चिद्राजा भविष्यति तस्य पुत्रः रामो भविष्यति ॥ ४ ॥

५–६ ] ति० टी०—तस्मिन्नर्थेऽरण्यगमनरूपे ॥ ५ ॥ ६ ॥

रा० टी०—अरण्यमिति । सत्यपराक्रमो रामः तस्मिन् वनगमनरूपे अर्थे नियुक्तः सन् अरण्यं गमिष्यति ॥ ५ ॥

रा० टी०—नैर्ऋत इति । नैर्ऋतो निर्ऋतिकुलोद्भवः सुरदानवैरवध्यः रावणो नाम राक्षसेन्द्रः तस्य रामस्य भार्यां हरिष्यति ॥ ६ ॥

गो० टी०—अरण्यमिति । अस्मिन्नर्थे अरण्यगमने ॥ ५ ॥ ६ ॥

७ ] ति० टी०—प्रलोभ्यन्ती प्रलोभ्यमाना ॥ ७ ॥

रा० टी०—सेति । कामैः अन्येच्छाविषयभूतैः भक्ष्यैर्भोज्यैश्च प्रलोभ्यन्ती रावणेन प्रलोभ्यमाना दुःखमग्ना सा रामभार्या न भोक्ष्यति भोक्ष्यते ॥ ७ ॥

गो० टी०—सा चेति । काम्यन्त इति कामैः अपेक्षणीयैः प्रलोभ्यन्ती प्रलोभ्यमाना ॥ ७ ॥

८ ] ति० टी०—परमान्नं पायसम् ज्ञात्वा निराहारतामिति शेषः वासवो दास्यति स्वपुरुषद्वारेति शेषः ॥ ८ ॥

रा० टी०—परमेति । वासव इन्द्रः ज्ञात्वा रावणदत्तं वैदेही न भुङ्क्ते इति विज्ञाय सुराणामपि यद्दुर्लभम् अमृतप्रख्यं यदन्नं तत्परमान्नं पायसं वैदेह्याः वैदेह्यै दास्यति ॥ ८ ॥

गो० टी०—परमान्नमिति । ज्ञात्वा अनशनमिति शेषः ॥ ८–१३ ॥

९ ] ति० टी०—इन्द्रादिन्द्रपुरुषात्, न तु रावणपुरुषादिति विज्ञायाभूतलस्पर्शित्वादिरूपैर्देवचिह्नैः राम आगत्यैनं हत्वा त्वां नयिष्यति । संवत्सरतृप्तिकरमिदमन्नं भुक्त्वा देवकार्यसिद्धये मनुष्यभावं धृतवत्या प्राणा धर्तव्याः । 'देवैरपि मनुष्यभावे आहारं विना जीवितुं न शक्यते' इत्यादिवचनैश्च निश्चित्येत्यर्थः। निर्वपिष्यति दास्यति । ननु त्रेतायामस्थिप्राणवासस्योक्तत्वाज्जीवितुं शक्यत एवेति चेन्न, तथा सत्यपि क्षीणतायां देहवैरूप्ये रावणस्यानुरागभङ्गेन तत्पुण्याक्षये तस्य वधो न स्यादिति रूपलावण्याद्यहानाय तद्दानेनादोषात् । रावणस्य तु तथैव रूपादिदर्शनेन मद्दत्ताहाराग्रहणेऽपि वन्यफलादीन्याहारं करोतीति बुद्ध्या तस्यां नामनुष्यत्वानिश्चयः । एतेनाहारं विनाऽपि पूर्वरूपादिसत्त्वज्ञानेन तस्य तस्याममनुष्यत्वबुद्धौ तत्संबन्धाद्रामेऽपि तत्त्वबुद्धौ रामतो रावणवधो न स्यादित्यपास्तम् ॥ ९ ॥

रा० टी०—तदिति । तत् इन्द्रप्रेषितमन्नं मैथिली प्राप्य इदमिन्द्रादागतमिति विज्ञाय अग्रम् अग्रभागमुद्धृत्य रामाय रामं तर्पयितुं भूतले निर्वपिष्यति दास्यति ॥ ९ ॥

१० ] ति० टी०—दानमन्त्रः—यदीति । यदि जीवति तदाप्युपतिष्ठतु । कालान्तरे देवत्वं गच्छतोः प्राप्नुवतोरप्युपतिष्ठत्विति शेषः ॥ १० ॥

रा० टी०—दानमन्त्रमाह—यदीति । मे भर्ता लक्ष्मणश्च यदि जीवति इहैव प्राणधारणानुकूलव्यापारं करोति

१ भविष्यतीति गो. पाठः । २ नन्दन इति गो. पाठः । ३ अस्मिन्निति गो. पाठः । ४ जनस्थानादिनि गो. पाठः । ५ दुःखे मग्नेति गो. पाठः ।

एष्यन्ति [1]प्रेषितास्तत्र रामदूताः प्लवङ्गमाः । आख्येया राममहिषी त्वया तेभ्यो विहङ्गम ॥ ११ ॥
सर्वथा तु न गन्तव्यमीदृशः क्व गमिष्यसि । देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२ ॥
[2]उत्सहेयमहं कर्तुमद्यैव त्वां सपक्षकम् । इहस्थस्त्वं हि लोकानां हितं कार्यं करिष्यसि ॥ १३ ॥
त्वयाऽपि खलु तत्कार्यं तयोश्च नृपपुत्रयोः । ब्राह्मणानां [3]गुरूणां च मुनीनां वासवस्य च ॥ १४ ॥
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ । नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् ॥
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ।

एवं वानरैः सम सभाषमाणस्यैव संपातेः शरीरे मनोज्ञाः पक्षाङ्कुरा समुद्भवन् । तद्वीक्ष्य कपिभ्यः प्रदर्शयन्प्राप्तामोदः संपातिः स्वपक्षत्यङ्कुरान्निदर्शनीकृत्यैवमेव भवत्कार्यं सेत्स्यतीत्याश्वासयन्पक्षपरीक्षणायाकाशे उत्पपात । प्राप्तोत्साहाः कपयोऽपि दक्षिणाशामनु प्रतस्थिरे ।

एतैरन्यैश्च बहुभिर्वाक्यैर्[4]वाक्यविशारदः । मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स स्वमालयम् ॥ १ ॥

तर्हि इहैव तयोः इदमन्नं प्राप्नुयादिति शेषः, देवत्वं नित्यविहारत्वात्साकेतं गच्छतोर्वा इदमन्नं प्राप्नुयात् ॥ १० ॥

११] ति० टी०—तत्र लङ्कायाम् । गन्तुमेष्यन्त्यागमिष्यन्ति इहेति शेषः ॥ ११ ॥

१२] ति० टी०—न गन्तव्यम् इमं देशं विहायेति शेषः॥१२॥

रा० टी०—एष्यन्तीति । विहङ्गम हे संपाते ! प्रेषिताः रामदूताः प्लवङ्गमाः एष्यन्ति अतः तेभ्यः राममहिषी त्वया आख्येया बोधितव्या तत्र तस्मिन्काले त्वं स्वपक्षौ प्रतिपत्स्यसे प्राप्स्यसि अतः देशकालौ प्रतीक्षस्व ईदृशः पक्षादिहीनस्त्वं क्व गमिष्यसि ते गमनयोग्यो देशो नास्तीत्यर्थः। अतः सर्वथा त्वया न गन्तव्यम् । श्लोकद्वयमेकान्वयि ॥११॥१२॥

१३ ] ति० टी०—उत्सहेयम् यदि त्वया देवकार्यायेह स्थातव्यं स्यादिति शेषः । पक्षवत्त्वे हि चापल्याद्गन्तव्यमेवेतोऽन्यत्र त्वयेति भावः ॥ १३ ॥

रा० टी०—उत्सहेयमिति । यद्यपि त्वां सपक्षकं कर्तुम् अद्यैव उत्सहेयं तथापि न करोमीति शेषः । तत्र हेतुः—इहस्थस्त्वं लोकानां हितं सीतावृत्तान्तबोधनरूपं कार्यं करिष्यसि एतेन पक्षप्राप्तौ तव निश्चला स्थितिर्न भवितेति सूचितम्॥१३॥

१४ ] ति० टी०—लोकानामेवेत्येव न, अपि तु तयोर्नृपपुत्रयोस्तत्कार्यं दूतानां सीताबोधनरूपं त्वयाऽपि कार्यं तवापि कर्तुमर्हम् तवापि देवांशत्वेन त्वद्धितमपि तदिति भावः । तत्कार्यस्य लोकसंबन्धित्वं दर्शयति—ब्राह्मणानामिति । तत्कार्यमिति शेषः ॥ १४ ॥

रा० टी०—त्वयेति । नृपपुत्रादीनां तत् हितं त्वयाऽपि कार्यं तेन संपातेः परमसज्जनत्वं सूचितम् ॥ १४ ॥

गो० टी०—त्वयापीति । नृपपुत्रयोः तत्प्रयोजनं त्वयाऽपि कार्यं कर्तव्यम् ब्राह्मणादीनां च कार्यमिति संबन्धः ॥१४॥१५॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

१५ ] ति० टी०—इच्छाम्यहमिति । दृष्टतत्त्वार्थदर्शनो दृष्टं सिद्धं तत्त्वार्थदर्शनं यस्य स महर्षिरेवं भाव्यर्थमब्रवीत्, अतो हेतोरहमपि भ्रातरौ रामलक्ष्मणौ द्रष्टुमिच्छामि । यदि महर्षिरेवं मां प्रति नावक्ष्यत्तदा प्राणांश्चिरं धारयितुं नेच्छे नैच्छम्, अपि तु कलेवरं त्यक्ष्ये इत्येवैच्छमित्यर्थ इति कतकः । अन्ये तु—निशाकरवाक्यमेवेदम्, अहंपदार्थोऽपि स एवेत्याहुः ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०—रामदर्शनस्य दुर्लभत्वं बोधयन्नाह—इच्छामीति । रामलक्ष्मणौ द्रष्टुं यद्यप्यहमपीच्छामि तथापि प्राणान् चिरं धारयितुं नेच्छे अतः कलेवरं त्यक्ष्ये । दृष्टे साक्षात्कृते तत्त्वार्थदर्शने ब्रह्मवेदो येन स महर्षिः एवमब्रवीत् । सार्धश्लोक एकान्वयी ॥ १५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

१ ] ति० टी०—एतैरिति । मां प्रशस्य भाविदेवकार्यसाधकत्वेन स्तुत्वाऽभ्यनुज्ञाप्यामन्त्र्य ॥ १ ॥

रा० टी०—मुनिकर्तृकोपदेशानन्तरकालिकं वृत्तान्तमाह—एतैरित्यादिभिः । वाक्यविशारदो मुनिः एतैरुक्तैः रामकार्यसाधकैः अन्यैश्च तदुपयोगिभिर्बहुभिर्वाक्यैर्मां प्रशस्य सत्कारपू-

---

१ अन्वेषकास्तस्या इति गो. पाठः । २ नोत्सहेयमिति गो. पाठः । ३ सुराणामिति गो. पाठः । ४ वाक्यविदां वर इति गो. पाठः ।

कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः । अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २ ॥
अद्य त्वेतस्य कालस्य वर्षं साग्रशतं गतम् । देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे । मां निर्दहति संतापो वितर्कैर्बहुभिर्वृतम् ॥ ४ ॥
उदितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये । बुद्धिर्या तेन मे दत्ता प्राणानां रक्षणे मम ॥ ५ ॥
सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः । बुध्यता च मया वीर्यं रावणस्य दुरात्मनः ॥ ६ ॥
पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथम् । तस्या विलपितं श्रुत्वा तौ च सीताविर्योजितौ ॥ ७ ॥
न मे दशरथस्नेहात्पुत्रेणोत्पादितं प्रियम् । तस्य त्वेवं ब्रुवाणस्य [5]संहतैर्वानरैः सह ॥ ८ ॥
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् । स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ॥ ९ ॥
प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् । [6]निशाकरस्य राजर्षेः प्रसादादमितौजसः ॥ १० ॥
आदित्यरश्मिनिर्दग्धौ पक्षौ पुनरुपस्थितौ । यौवने वर्तमानस्य ममासीद्यः पराक्रमः ॥ ११ ॥
तमेवाद्यावगच्छामि बलं पौरुषमेव च । सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ॥ १२ ॥

वंकमुक्त्वा अनुज्ञाप्य वृत्तान्तं बोधयितुं नियुज्य च स्वमालयमाश्रमं प्रविष्टोऽभवदिति शेषः ॥ १ ॥

गो० टी०—एतैरित्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—पर्वतकन्दरादहं शनैः शनैर्विसर्पित्वा निःसृत्य विन्ध्यं विन्ध्यशिखरम् ॥ २ ॥

रा० टी०—कन्दरादिति । पर्वतस्य कन्दरात् शनैः शनैर्विसर्पित्वा विसर्प्य निर्गत्य विन्ध्यशृङ्गं समारुह्य भवतः दिव्यलोकं प्राप्तस्य मुनेः प्रतिपालये वचनमिति शेषः ॥ २ ॥

३ ] ति० टी०—एतस्य कालस्य मुनिसंवादानन्तरकालस्य साग्रं वर्षशतं गतम् शतशब्दोऽनन्तवाची तेन किंचिदधिकाष्टवर्षसहस्राणीत्यर्थः, प्राक्तथैव तेनोक्तेः ॥ ३ ॥

रा० टी०—अद्यत्व इति । अद्यत्वे अस्मिन् काले तस्य मुन्युपदिष्टकालस्य साग्रशतं किंचिदधिकशतसंख्याकं वर्षं गतम् अहं तु मुनेर्वचो हृदि कृत्वा देशकालप्रतीक्षोऽस्मि । अत्र पूर्वोक्तानुरोधेन शतशब्दस्य अनन्तवाचकत्वं स्वीकृत्य किंचिदधिकाष्टवर्षसहस्राणीति भट्टैर्व्याख्यातम् ॥ ३ ॥

गो० टी०—अद्य त्विति । पूर्वं निशाकरमुनिप्रयाणानन्तरम् अष्टौ वर्षसहस्राणि व्यतीतानीत्युक्तवान् अतः साग्रं वर्षशतं गतमित्येतदष्टवर्षसहस्रोपलक्षणम् ॥ ३ ॥

४ ] ति० टी०—वितर्कैर्विचारैः । संतापः पक्षादिहीनजीवनजः ॥ ४ ॥

रा० टी०—महेति । महाप्रस्थानं पुनरावृत्तिरहितयात्रामासाद्य प्राप्य निशाकरे स्वर्गते सति बहुभिरनेकविधैः वितर्कैः रामकार्यसाधनविषयकविचारैर्वृतं मां संतापो मुनिवियोगजनितखेदो दहति ॥ ४ ॥

गो० टी०—महाप्रस्थानमिति । वितर्कैः विविधविचारैः ॥ ४—८ ॥

५ ] ति० टी०—निवर्तये स्मेति शेषः । मम प्राणाना रक्षणे तेन या मे बुद्धिर्दत्तेत्यन्वयः ॥ ५ ॥

रा० टी०—उदितामिति । मरणे उदितां उत्थितां बुद्धिं मुनिवाक्यैः निवर्तये । अर्धं पृथक् । बुद्धिरिति । मम प्राणानां रक्षणे रक्षणार्थं मुनिना या बुद्धिर्मे मह्यं दत्ता सा तमोन्धकारदीप्ताग्निशिखेव मे दुःखमपनयते दूरीकरोति । अर्धद्वयमेकान्वयि ॥ ५ ॥

६ ] ति० टी०—रावणस्य वीर्यं बुध्यता मत्पुत्रवीर्यादल्पमिति जानता ॥ ६ ॥

रा० टी०—बुध्यतेति । रावणस्य वीर्यं बुध्यता मया मैथिली त्वया कथं न त्रातेत्यादिभिर्वाग्भिः पुत्रो मया संतर्जितः एतेन स्वपुत्रबलापेक्षया रावणबलस्याल्पत्वं व्यञ्जितम्, तेन भवद्भिर्न भेतव्यमिति सूचितम् ॥ ६ ॥

७ ] ति० टी०—कथं न त्रातेति संतर्जितः । ननु सीतेत्यज्ञानादरक्षणमत आह—तस्या इति । हा राम ! हा लक्ष्मणेत्येवमात्मकं तस्या विलपितं श्रुत्वा तौ रामलक्ष्मणौ सीताविनाकृताविति सिद्धानां वचः श्रुत्वाऽनया विना कृतौ रामलक्ष्मणाविति सुज्ञानम् एषा रामपत्नीति च सुज्ञानमिति भावः ॥ ७ ॥

रा० टी०—स्वपश्चात्तापमाह—तस्या इति । तस्याः सीताया विलपितं श्रुत्वा तौ रामलक्ष्मणौ सीतावियोजितौ श्रुत्वा सिद्धानां वचनादवगत्य मे दशरथस्नेहात् दशरथस्नेहं संस्मृत्य पुत्रेण मे प्रियं मैथिलीत्राणजनितप्रीतिः नोत्पादितमिति संतपामीति शेषः ॥ ७ ॥

८ ] ति० टी०—तस्माद्दशरथस्नेहादवश्यकर्तव्यं प्रियं मे पुत्रेण नोत्पादितम् ॥ ८ ॥

रा० टी०—तस्येति । तदा तद्वचनकथनावसरे वनचारिणां समक्षं संहतैः संघीभूतैर्वानरैः सह एवं ब्रुवाणस्य संपातेः पक्षौ उत्पेततुः आरुरुहतुः ॥ ८ ॥

९–१२ ] ति० टी०—अरुणच्छदैररुणवर्णपत्रैः ॥ ९–१२ ॥

रा० टी०—स इति । अरुणच्छदैः आरुण्यावृतै रक्तैरित्यर्थः,

१ साग्रं वर्षशतमिति गो. पाठः । २ रक्षणाय त्विति गो. पाठः । ३ अर्धमेतत् रा. नास्ति । ४ विनाकृताविति गो. पाठः । ५ संपाते इति गो. पाठः । ६ ऋषेर्निशाकरस्येव प्रभावादमितात्मन इति गो. पाठः । ७ मे पुनरुत्थिताविति गो. पाठः । ८ अन्विति गो. पाठः ।

पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः । इत्युक्त्वा तान्हरीन्सर्वान्संपातिः पतगोत्तमः ॥ १३ ॥
उत्पपात गिरेः शृङ्गाज्जिज्ञासुः खगमो गतिम् । तस्य तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ॥
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ १४ ॥
अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्धपौरुषाः ।
अभिजिदभिमुखां दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः ॥ १५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ।

दुस्तरसागरदर्शनेन विषीदतः कपिवीरानङ्गदोऽस्ति कस्यापि योजनशतविस्तीर्णसमुद्रलङ्घनसामर्थ्यमिति पप्रच्छ । अप्राप्तोत्तरश्च तत्पराक्रमप्रशंसापूर्वकं स्वस्वोत्प्लवनसामर्थ्यं वर्णयितुं प्रोत्साहयति ।

आख्याता गृध्रराजेन समुत्प्लुत्य प्लवङ्गमाः । संगताः प्रीतिसंयुक्ता विनेदुः सिंहविक्रमाः ॥ १ ॥
संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् । हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥

उद्गतैः पक्षैः उपलक्षितां स्वां तनुं दृष्ट्वा अतुलं प्रहर्षं लेभे वानरान् अब्रवीच्च ॥ ९ ॥

रा० टी०–तद्वचनाकारमाह–निशाकरस्येति । निशाकरस्य प्रसादात् दग्धौ पक्षौ पुनरुपस्थितौ यौवने वर्तमानस्य मम यः पराक्रम आसीत् तं बलं पौरुषं च अवगच्छामि प्राप्नोमि । अर्धचतुष्टयमेकान्वयि ॥ १० ॥ ११ ॥

रा० टी०–सर्वथेति । अयं मम पक्षलाभः वो युष्माकं सिद्धिप्रत्ययकारकः सिद्धिविषयकविश्वाससंपादकः अतः सर्वथा यत्नः क्रियतां सीतामधिगमिष्यथ ॥ १२ ॥

गो० टी०–स दृष्ट्वेति । अरुणच्छदैः अरुणबर्हिष्पत्रैः ॥ ९—१४ ॥

१३ ] ति० टी०–सिद्धिप्रत्ययः कार्यसिद्धिविश्वासः ॥१३॥

रा० टी०–इतीति । संपातिरिति हरीन् वानरानुक्त्वा खगमः पक्षिणो गतिं पूर्ववद्गमनं जिज्ञासुः सन् गिरेः शृङ्गात् उत्पपात उड्डिड्ये ॥ १३ ॥

१४] ति० टी०–गतिं जिज्ञासुरुत्थितपक्षैः प्रागवत्खगतिं विज्ञातुमिच्छुः विक्रमसाध्येऽभ्युदये सीताधिगमनरूप उन्मुखाः १४

रा० टी०–तस्येति । तस्य संपातेः तद्वचनं श्रुत्वा प्रतिसंहृष्टमानसाः हरिशार्दूलाः विक्रमाभ्युदयोन्मुखाः विक्रमकारणीभूताभ्युदयविशिष्टाः बभूवुः ॥ १४ ॥

१५] ति० टी०–प्रतिलब्धं प्राप्तं पौरुषं पौरुषप्रवृत्तिकालो यैस्ते । अभिजिदभिमुखामभिजिन्नक्षत्रसंमुखां दिशं दक्षिणाम् । यद्वाभिजित् बाहुलकात्कर्मणि क्विप् । अभिजेतव्यो रावणः संमुखो यस्यां तां दिशम् ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥६३॥

रा० टी०–अथेति । प्रतिलब्धपौरुषाः सीतावृत्तान्तश्रवणेन प्राप्तस्वस्वबलाः पवनसमानविक्रमा वायुवेगाः अत एव जनकसुतापरिमार्गणोन्मुखाः प्लवङ्गवराः अभिजित् रामकर्तृकसर्वराक्षसविजयः अभिमुखः संमुखं प्रचलितो यां तां दक्षिणां दिशं ययुः ॥ १५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०–अथेति । अभिजिदभिमुखाः अभिजिन्मुहूर्तप्रतीक्षकाः ॥ १५ ॥

एवं प्रक्षिप्ताः पञ्च सर्गा गताः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

१ ] ति० टी०–आख्याता आख्यातसीतावृत्तान्ताः । संगता मिलिताः ॥ १ ॥

रा० टी०–वानराणां वृत्तान्तमाह–आख्याता इत्यादिभिः । गृध्रराजेन आख्याताः उक्तसीतावृत्तान्ताः अत एव प्रीतिसंयुक्ताः सङ्गताः संघीभूताः प्लवङ्गमाः समुत्प्लुत्य विनेदुः हर्षसूचकस्वजातीयशब्दं चक्रुः ॥ १ ॥

गो० टी०–एवं कृतोदकं संपातिं स्वस्थानमानीय प्रकृतकार्याय वानरा गता इत्याह—आख्याता इति । समुत्पत्य हर्षेण तत्र लङ्घनं कृत्वा संगम्य पुनरन्योन्यं समेत्य विनेदुः॥१॥

२ ] ति० टी०–रावणक्षयं रावणनाशं रावणगृहं चोरिश्योक्तं वचनं श्रुत्वा ॥ २ ॥

रा० टी०–सम्पातेरिति । रावणस्य क्षयं विनाशगृहोभयविशिष्टं संपातेर्वचनं श्रुत्वा सीतादर्शनकाङ्क्षिणो हरयः सागरमाजग्मुः ॥ २ ॥

१ स इति गो. पाठः । २ प्रीतिसंहृष्टेति गो. पाठः । ३ समुत्पत्येति गो. पाठः । ४ संगम्येति गो. पाठः ।

अभिगम्य[1] तु तं देशं ददृशुर्भीमविक्रमाः । कृत्स्नं लोकस्य महतः प्रतिबिम्बमवस्थितम् ॥ ३ ॥
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् । संनिवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥ ४ ॥
[ सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्विविधैर्जले । व्यत्यस्तैः सुमहाकायैरूर्मिभिश्च समाकुलम् ]
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः । क्वचित्पर्वतमात्रैश्च जलराशिभिरावृतम् ॥ ५ ॥
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः । रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ६ ॥
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः । विषेदुः सहिताः सर्वे कथं कार्यमिति ब्रुवन् ॥ ७ ॥
विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात् । आश्वासयामास हरीन्भयार्तान्हरिसत्तमः ॥ ८ ॥
[ तान्विषादेन महता विषण्णान्वानरर्षभान् । उवाच मतिमान्काले वालिसूनुर्महाबलः ॥ ]
न विषादे मनः कार्यं विषादो दोषवत्तरः । विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ९ ॥
यो विषादं प्रसहते विक्रमे समुपस्थिते । तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १० ॥
तस्यां रात्र्यां व्यतीतायामङ्गदो वानरैः सह । हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ ११ ॥
सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ । वासवं परिवार्येव मरुतां वाहिनी स्थितम् ॥ १२ ॥
कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् । अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १३ ॥

गो० टी०–संपातेरिति । हरयः संपातेर्वचनं श्रुत्वा सीतादर्शनकाङ्क्षिणः सन्तः रावणक्षयं रावणनिलयभूतं लङ्काद्वीपमुद्दिश्य सागरं तन्मार्गभूतं सागरम् आजग्मुरिति संबन्धः ॥ २ ॥

३ ] ति० टी०–तं देशं सागरतीररूपं देशमभिगम्य । यत्रेत्यादिः । यत्र महतो लोकस्य सचन्द्रार्कग्रहस्य कृत्स्नं प्रतिबिम्बं स्थितं तं समुद्रं ददृशुः । 'प्रतिबिम्बमवस्थितम्' इति प्राचीनः पाठः । 'प्रतिबिम्बमिव स्थितम्' इत्याधुनिकपाठो न युक्तः कृत्स्नलोकप्रतिबिम्बभावाप्रसिद्धेः ॥ ३ ॥

रा० टी०–अभीति । तत्प्रसिद्धं देशं समुद्रतीरमभिगम्य महतो लोकस्यालोककारणभूतस्य सूर्यचन्द्रादेः कृत्स्नं प्रतिबिम्बं यत्रावस्थितमेव तं समुद्रं भीमविक्रमाः वानराः ददृशुः इव एवार्थे ॥ ३ ॥

गो० टी०–अभिक्रम्येति । प्रतिबिम्बमिव प्रतिनिधिमिव । इदं तटविशेषणं सर्वलोकस्थसमस्तवस्तुसंपूर्णमित्यर्थः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥' इत्यमरः ॥ ३ ॥

४ ] ति० टी०–तस्य च दक्षिणसमुद्रस्योत्तरां दिशमाश्रित्य संनिवेशमवस्थितिस्थलं चक्रुः ॥ ४ ॥

रा० टी०–दक्षिणस्येति । दक्षिणस्य समुद्रस्य उत्तरां दिशमासाद्य प्राप्य ततस्तत्र संनिवेशमुपवेशनस्थानं हरिवीराः चक्रुः ॥ ४ ॥

गो० टी०–दक्षिणस्येति । सन्निवेशं स्थानम् ॥ ४ ॥

५–६ ] ति० टी०–प्रसुप्तमिव चान्यत्र निस्तरङ्गप्रदेशे । अन्यतोऽन्यत्र पर्वतमात्रैस्तत्सदृशैर्जलराशिभिरूर्मिभिः ॥५॥६॥

रा० टी०–प्रसुप्तमिति । क्वचित्तरङ्गाभावस्थले प्रसुप्तं निश्चलत्वात् प्रसुप्तसदृशम् अन्यत्र अल्पतरङ्गस्थले क्रीडन्तमिव क्वचिन्महातरङ्गस्थले पर्वतमात्रैः गिरिपरिमितैः जलराशिभिरावृतं दानवेन्द्रैः संकुलम् अत एव रोमहर्षकरं सागरमिति शेषः, कपिकुञ्जराः दृष्ट्वा विषेदुः विषादं प्रापुः । श्लोकद्वयमेकान्वयि ५-६

गो० टी०–सत्त्वैरित्यादि । विषादेन विषादकारणेन । विषादोऽयं प्रसहते अभिभवति । न सिद्ध्यतीत्यनन्तरम् इतिकरणं बोध्यम् ॥ ५–२२ ॥

७ ] ति० टी०–ब्रुवन्नब्रुवन् ॥ ७ ॥

रा० टी०–आकाशमिति । वानराः आकाशमिव दुष्पारं दानवेन्द्रादिरूपविघ्नवत्त्वेन तरितुमशक्यं सागरं प्रेक्ष्य विषेदुः कार्यं सीतान्वेषणं कथं सिध्येदिति शेषः, इति ब्रुवन् अब्रुवंश्च ॥ ७ ॥

८ ] ति० टी०–हरिसत्तमोऽङ्गदः ॥ ८ ॥

रा० टी०–विषण्णामिति । वाहिनीं वानरसेनां सागरस्य निरीक्षणात् विषण्णां दृष्ट्वा भयार्तान् हरीन् यूथपांश्च हरिसत्तमोऽङ्गद आश्वासयामास ॥ ८ ॥

९ ] ति० टी०–विषादो दोषवत्तर इत्यस्य विवरणम्—विषादो हन्तीत्यादि ॥ ९ ॥

रा० टी०–आश्वासनप्रकारमाह–नेति । विषादः दोषवत्तरः अतिदोषवान् भवतीति शेषः, अत एव बालं क्रुद्धमुरग इव विषादः पुरुषं हन्ति अतः विषादे मनो न कार्यम् ॥ ९ ॥

१०–१३ ] ति० टी०–विषादं प्रसहते प्रसह्य विषादे प्रवर्तते । तेजसा हीनस्य विषादवशादिति भावः ॥ १०–१३ ॥

रा० टी०–य इति । विक्रमे पराक्रमसमये यो विषादं प्रसहते आश्रयते तेजसा हीनस्य तस्य पुरुषार्थो न सिध्यति १०

१ क्रम्येति गो. पाठः । २ इवेति गो. रा. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे । ४ सहमेति गो. पाठः । ५ अधिकोऽयं श्लोकः गो. पाठे । ६ तम इति गो. पाठः । ७ विषादो यमिति गो. पाठः । ८ स्थितेति गो. रा. पाठः ।

ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिन्दमः । अनुमान्याङ्गदः श्रीमान्वाक्यमर्थवदब्रवीत् ॥ १४ ॥
क इदानीं महातेजा लङ्घयिष्यति सागरम् । कः करिष्यति सुग्रीवं सत्यसंधमरिन्दमम् ॥ १५ ॥
को वीरो योजनशतं लङ्घयेत प्लवङ्गमः । इमांश्च यूथपान्सर्वान्मोचयेत्को महाभयात् ॥ १६ ॥
कस्य प्रसादाद्दारांश्च पुत्रांश्चैव गृहाणि च । इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥ १७ ॥
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् । अभिगच्छेम संहृष्टाः सुग्रीवं च वनौकसम् ॥ १८ ॥
यदि कश्चित्समर्थो वः सागरप्लवने हरिः । स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ १९ ॥
अङ्गदस्य वचः श्रुत्वा न कश्चित्किंचिदब्रवीत् । स्तिमितेवाभवत्सर्वा सा तत्र हरिवाहिनी ॥ २० ॥
पुनरेवाङ्गदः प्राह तान्हरीन्हरिसत्तमः । सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ॥
व्यपदेशकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ॥ २१ ॥
नहि वो गमने सङ्गः कदाचित्कस्यचिद्भवेत् । ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

रा० टी०–तस्यामिति । रात्र्यां व्यतीतायां सत्यां हरिवृद्धैर्वानरैः सह अङ्गदः समागम्य मन्त्रं सर्वसंमतिम् अमन्त्रयत् अकरोत् ॥ ११ ॥

रा० टी०–सेति । वासवमिन्द्रं परिवार्य मरुतां देवानां स्थिता वाहिनी सेनेव वानराणां ध्वजिनी सेना अङ्गदं परिवार्य बभौ ॥ १२ ॥

रा० टी०–क इति । वालितनयात् अन्यत्र अन्यः हनमतश्चान्यत्रान्यः कोऽन्यस्तां विविधरचनया संस्थितां वानरीं सेनां स्तम्भयितुं शक्तः समर्थो न भवेत् ॥ १३ ॥

१४ ] ति० टी०–अनुमान्याभिपूज्य ॥ १४ ॥

रा० टी०–संमतिकरणप्रकारं वर्णयन्नाह–तत इति । ततः ससैन्यसर्ववानरसङ्गमनानन्तरं हरिवृद्धान् तत्सैन्यं च अनुमान्य सत्कृत्य अर्थवद्वाक्यम् अङ्गदोऽब्रवीत् ॥ १४ ॥

१५–२० ] ति० टी०–सत्यसंधं सत्या संधा सीताप्रत्यर्पणप्रतिज्ञा यस्य तादृशम् ॥ १५–२० ॥

रा० टी०–तद्वचनाकारमाह–क इत्यादिभिः । को महातेजाः सागरं लङ्घयिष्यति, अत एव सुग्रीवं सत्यसंधं करिष्यति ॥ १५ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–क इति । कः प्लवङ्गमः योजनशतं सागरं लङ्घयेत्, अत एव इमान् यूथपान् महाभयात् राजभीतेः को मोचयेत् ॥ १६ ॥

रा० टी०–कस्येति । कस्य प्रसादात् कृपातः सिद्धार्थाः प्राप्तसीतादर्शनाः अत एव सुखिनः वयम् इतो निवृत्ताः सन्तः दारादीन् पश्येम ॥ १७ ॥

रा० टी०–कस्येति । कस्य प्रसादात् रामादीन् अभिगच्छेम ॥ १८ ॥

रा० टी०–यदीति । सागरप्लवने वो युष्माकं मध्ये यदि कश्चित्समर्थः तर्हि अभयदक्षिणां ददातु सागरं तरिष्यामीति वदत्वित्यर्थः ॥ १९ ॥

रा० टी०–अङ्गदस्येति । अङ्गदस्य वचः श्रुत्वा कश्चिद्वानरः किंचिन्नाब्रवीत्, अत एव सर्वा हरिवाहिनी सेना स्तिमिता निश्चलैवाभवत् । इव एवार्थे ॥ २० ॥

२१ ] ति० टी०–व्यपदेशकुले विगतोऽपदेशः कलङ्को यस्मात्तादृशे कुले । पूजिता राज्ञा महाबलत्वेन सत्कृताः ॥२१॥

२२ ] ति० टी०–सङ्गः प्रतिबन्धः । ब्रुवध्वं ब्रूध्वम् ॥२२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥६४॥

रा० टी०–पुनरिति । हरिसत्तमोऽङ्गदः हरीन् पुनः प्राह । तद्वचनाकारमाह–सर्वे भवन्तः दृढः पराभावितुमशक्यः विक्रमो येषाम् अत एव बलवतां श्रेष्ठाः अत एव पूजिताः सर्वैः सत्कृताः व्यपदेश्यकुले जाताः कलङ्करहितवंशे उत्पन्नाः यूयं स्थेति शेषः, अत एव वो युष्माकं मध्ये कस्यचित् कदाचिदपि गमने सङ्गः प्रतिबन्धो न भवेत्, अतः हे प्लवगर्षभाः यस्य वानरस्य या शक्तिस्तां ब्रुवध्वं ब्रूध्वम् । सार्धश्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

गो० टी०–पुनरेवेत्यादि । सङ्गः प्रतिहतिः । ब्रुवध्वमित्यार्षो निर्देशः ॥ २३ ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

१ लङ्घयेच प्लवङ्गमा इति गो. पाठः । २ मोक्षयेदिति गो. पाठः । ३ प्रभावादिति गो. पाठः । ४ महाबलमिति गो. पाठः । ५ व्यपदेश्येति गो. पाठ । ६ कंचिदिति गो. पाठः ।

## पञ्चषष्टितमः सर्गः ।

अङ्गदपृष्टा गजादयः कपियूथपा एकैकेनोत्तरोत्तरं दशयोजनवृद्धिक्रमेण दशयोजनतो नवतियोजनपर्यन्तां प्लवने स्वस्वशक्तिं न्यवेदयन् । तेनैवपृष्टो जाम्बवान्स्वीयां शतयोजनोल्लङ्घनशक्तिं निवेद्य प्रतिनिवर्तने सशयमदर्शयत् । स्वीयलङ्घननिवर्तनशक्तिं वर्णयन्तं तं भृत्योचितेऽस्मिन्कार्ये न स्वामिना प्रयतितव्यमिति जाम्बवान् निषेधति । गत्यन्तराभावात्पुनः प्रायोपवेशनमेव वरमिति निर्णीय प्रकृतकार्यसाधनेऽङ्गदेन पृष्टो जाम्बवाँस्तदङ्गीकृत्य हनुमन्तं प्रवर्तयति ।

[1]अथाङ्गदवचः श्रुत्वा ते सर्वे [2]वानरर्षभाः । स्वं स्वं गतौ समुत्साहमूचुस्तत्र यथाक्रमम् ॥ १ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव [3]अङ्गदो जाम्बवांस्तथा ॥ २ ॥
आबभाषे गजस्तत्र प्लवेयं दशयोजनम् । गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥ ३ ॥
[4]शरभो वानरस्तत्र वानरांस्तानुवाच ह । त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः ॥ ४ ॥
[5]ऋषभो वानरस्तत्र वानरांस्तानुवाच ह । चत्वारिंशद्गमिष्यामि योजनानां [6]न संशयः ॥ ५ ॥
[7]वानरांस्तु महातेजा अब्रवीद्गन्धमादनः । योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥ ६ ॥
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह । योजनानां परं षष्टिमहं प्लवितुमुत्सहे ॥ ७ ॥
ततस्तत्र महातेजा द्विविदः प्रत्यभाषत । गमिष्यामि न संदेहः सप्ततिं योजनान्यहम् ॥ ८ ॥
सुषेणस्तु [8]महातेजाः सत्त्ववान्कपिसत्तमः । अशीतिं [9]प्रतिजानेऽहं योजनानां पराक्रमे ॥ ९ ॥
तेषां कथयतां तत्र सर्वांस्ताननुमान्य च । ततो वृद्धतमस्तेषां जाम्बवान्प्रत्यभाषत ॥ १० ॥
पूर्वमस्माकमप्यासीत्कश्चिद्गतिपराक्रमः । ते वयं वयसः पारमनुप्राप्ताः स्म सांप्रतम् ॥ ११ ॥

१-३ ] ति० टी०-अथेति ॥ १-३ ॥

रा० टी०-अङ्गदवचनश्रवणानन्तरकालिकं वानरकर्तृकस्वस्वपराक्रमवचनमुपक्रमते-अथेति । अङ्गदवचः श्रुत्वा गजादयः सर्वे वानरर्षभाः गतौ गमने स्वस्वं समुत्साहं यथाक्रममूचुः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

रा० टी०-गमनोक्तिक्रममाह-आबभाष इत्यादिभिः । तत्र तेषु वानरेषु मध्ये दशयोजनं प्लवेयमेकवारोत्प्लुत्यादशयोजनं स्वभावतो गच्छामीत्यर्थः । गजः तन्नामा आबभाषे एवमुत्तरेष्वप्यर्थो बोध्यः ॥ ३ ॥

गो० टी०-ततोऽङ्गदवच इत्यादि । गतौ गमनविषये । यद्यपि गजादयोऽपि शतयोजनलङ्घने शक्ताः 'भूतले सागरे वाऽपि शैलेषु च वनेषु च । पातालस्यापि मध्ये वा न ममाच्छिद्यते गतिः ॥' इति सुग्रीवसंनिधौ वानरयूथपैः स्वस्वशक्तेः ख्यापितत्वात् 'नहि वो गमने सङ्गः कदाचित्कस्यचित्क्वचित्' इति पूर्वमङ्गदोक्तेश्च । तथापि रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणादिकं दुष्करमन्येनेति तत्साधकहनुमत्प्रोत्साहनाय तथोक्तवन्त इति ध्येयम् ॥ १-९ ॥

४-८ ] ति० टी०-त्रिंशदित्यर्थे त्रिंशतमित्यार्षम् ॥४-८॥

रा० टी०-योजनानां विंशतिं गमिष्यामीति गवाक्ष आह । शरभ इति । त्रिंशतं गमिष्यामीति शरभ आह त्रिंशतमित्यार्षमिति भट्टाः ॥ ४ ॥

रा० टी०-ऋषभ इति । ऋषभः चत्वारिंशत् उवाच ॥५॥

रा० टी०-वानरानिति । गन्धमादनः पञ्चाशत् अब्रवीत् ॥ ६ ॥

रा० टी०-मैन्द इति । मैन्दः षष्टिमाह ॥ ७ ॥

रा० टी०-तत इति । द्विविदः सप्ततिं प्रत्यभाषत ॥ ८ ॥

९ ] ति० टी०-पराक्रमे गमने ॥ ९ ॥

रा० टी०-सुषेण इति । सुषेणः 'अशीतिं प्रतिजाने' इति प्रत्यभाषतेत्यनुकर्षः ॥ ९ ॥

१० ] ति० टी०-वृद्धतमस्तेषामिति निर्धारणे षष्ठी ॥१०॥

रा० टी०-तेषामिति । कथयतां तेषां मध्ये वृद्धतमः जाम्बवान् तान् कथयतः सर्वान् अनुमान्य सत्कृत्य प्रत्यभाषत ॥ १० ॥

गो० टी०-तेषामिति । तेषां कथयतां तेषु कथयत्सु सत्सु ॥ १०-१३ ॥

११ ] ति० टी०-स्म स्मः इत्यर्थः ॥ ११ ॥

रा० टी०-तत्प्रतिभाषणप्रकारमाह-पूर्वमिति । येषामस्माकं कश्चित् यत्किंचित् परिमितः गतिपराक्रमः पूर्वमासीत् ते वयं वयसः पारं वृद्धत्वमित्यर्थः, अनुप्राप्ताः । एतेन इदानीं गतिपराक्रमस्य अल्पत्वं सूचितम् ॥ ११ ॥

१ तत इति गो. पाठः । २ वानरोत्तमा इति गो. पाठः । ३ सुषेण इति गो.पाठः । ४ गवय इति गो. पाठः । ५ शरभस्तानुवाचाथ वानरान्वानरर्षभ इति गो. पाठः । ६ प्लवङ्गमा इति गो. पाठः । ७ वानर इति गो. पाठः । ८ हरिश्रेष्ठः प्रोक्तवान्कपिसत्तमानिति गो. पाठः । ९ योजनाना तु प्लवेयं प्लवगेश्वरा इति गो. पाठः ।

किं तु नैवं गते शक्यमिदं कार्यमुपेक्षितुम् । यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२ ॥
सांप्रतं [1]कालमस्माकं या गतिस्तां निबोधत । नवतिं योजनानां तु गमिष्यामि न संशयः ॥ १३ ॥
तांश्च[2] सर्वान्हरिश्रेष्ठाञ्जाम्बवानिद[3]मब्रवीत् । न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४ ॥
मया [4]वैरोचने यज्ञे प्रभविष्णुः सनातनः । प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रि[5]विक्रमः ॥ १५ ॥
स इदानीमहं वृद्धः प्लवने मन्दविक्रमः । यौ[6]वने च तदासीन्मे बलमप्रतिमं प[7]रम् ॥ १६ ॥
संप्रत्ये[8]तावदेवाद्य शक्यं मे गमने स्वतः । नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति ॥ १७ ॥
अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा । अनुमान्य तदा प्राज्ञो जाम्बवन्तं महाक[9]पिम् ॥ १८ ॥
अहमेतद्गमिष्यामि योजनानां शतं महत् । निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चि[10]तम् ॥ १९ ॥
तमुवाच हरिश्रेष्ठं जाम्बवान्वाक्यकोविदः । ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम ॥ २० ॥
कामं शतसहस्रं वा नह्येष विधिरुच्यते । योजनानां भवाञ्शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१ ॥

---

१२ ] ति० टी०—एवंगते कृच्छ्रप्राप्तौ । यदर्थं कृतनिश्चयावस्मत्प्रतिष्ठिततयैतद्विषये कृतनिश्चयौ ॥ १२ ॥

रा० टी०—किमिति । एवमनेन प्रकारेण गते वयसि व्यतीतेऽपि यदर्थमुद्दिश्य कपिराजो रामश्च कृतनिश्चयौ तत्कार्यमुपेक्षितुमनादर्तुं न शक्यम् ॥ १२ ॥

१३-१६ ] ति० टी०—सांप्रतं कालं संप्रति काले ॥ १३—१६ ॥

रा० टी०—सांप्रतमिति । सांप्रतं कालं संप्रतिकाले या गतिः गमनसामर्थ्यं तां निबोधत । बोध्यमेवाह—योजनानां नवतिं गमिष्यामि ॥ १३ ॥

रा० टी०—तानिति । तान् उक्तस्वगमनपरिमाणान् हरिश्रेष्ठान् जाम्बवानिदमब्रवीत् । तद्वचनाकारमाह—गमने मे पराक्रमः एतावदेव नासीत् अधिक आसीत्, इत्यर्थः ॥ १४ ॥

रा० टी०—तदाधिक्यमेवाह—मयेति । पूर्वं वैरोचने विरोचनसुतानुष्ठिते यज्ञे त्रिविक्रमं शीघ्रं त्रिलोकीगमनवत् यथा भवति तथा क्रममाणः वर्धमानचरणेन सह गच्छन् प्रभविष्णुः सर्वत्र व्याप्तः सनातनो विष्णुः मया प्रदक्षिणीकृतः, एतेन स्वस्याप्रतिहतगमनवत्त्वं सूचितम् ॥ १५ ॥

रा० टी०—स इति । यस्य मे अप्रतिमम् उपमारहितं तद्बलमासीत् सोऽहमिदानीं वृद्धः अत एव प्लवने मन्दविक्रमोऽस्मीति शेषः ॥ १६ ॥

गो० टी०—न खल्वित्यादि । त्रयाणां विक्रमाणां समाहारः त्रिविक्रमम् ॥ १४–१९ ॥

१७–२० ] ति० टी०—एतावता प्लवनेन ॥ १७—२० ॥

रा० टी०—संप्रतीति । संप्रति अस्मिन् काले स्वतो गमने एतावत्पूर्वोक्तमेव शक्यं सामर्थ्यमस्तीति शेषः, अतः एतावता अस्य सीतादर्शनरूपस्य कार्यस्य सिद्धिर्न भविष्यति १७

रा० टी०—अथेति । अथानन्तरमुदारार्थं विपुलार्थकम् उत्तरं श्रेष्ठमिदं वचः महाकपिं जाम्बवन्तमनुमान्य अङ्गदोऽब्रवीत् । ऋक्षाणामपि कपिजातिविशेषात् न सामानाधिकरण्यविरोधः । आकपिं कपिमभिव्याप्य महः पूजा यस्येत्यर्थो वा, महांश्चासौ अकपिः कपिसदृशः ऋक्ष इत्यर्थः, तमिति वा ॥ १८ ॥

रा० टी०—तद्वचनाकारमाह—अहमिति । एतत्सागरसंबन्धि योजनानां शतमहं महत्प्रशंसनीयं यथा भवति तथा गमिष्यामि निवर्तने तु मे शक्तिः स्यात् न वा इति न निश्चितम् एतेन स्वकर्तृकराक्षसकर्मकजये संशयो ध्वनितः समुद्रान्तरेषु मध्ये मध्ये गिरिद्वीपानां सत्त्वात् एतादृशभयङ्कराक्षसैरासेवितत्वाच्च नान्यदिग्गतवानराणामेवं विचार इत्यूह्यम् । किंचेदं स्वस्य वीर्याणां न्यूनत्वेन वर्णनं हनुमत्पराक्रमदर्शनविषयकोत्कटेच्छया बोध्यम् अत एव 'त्वद्वीर्यं द्रष्टुकामा हि सर्वा वानरवाहिनी ' इति वक्ष्यमाणजाम्बवद्वाक्यं सानुकूलम् ॥ १९ ॥

रा० टी०—तमिति । वाक्यकोविदो जाम्बवान् तमङ्गदमुवाच । तद्वचनाकारमाह—हे हर्यृक्षसत्तम ! तव गमने शक्तिर्ज्ञायते अस्माभिरिति शेषः ॥ २० ॥

गो० टी०—ज्ञायत इति । हर्यृक्षसत्तमेति ऋक्षत्वं वानरावान्तरजातिः अतः सुग्रीवादे. ऋक्षराजत्वमिति ॥ २० ॥

२१ ] ति० टी०—काममिति । शतसहस्रमपि योजनानां गन्तुं त्वं कामं समर्थः, तथापि स्वामिनस्तवैष विधिः प्लवनं न युक्तमित्युच्यते, अस्माभिरिति शेषः । इममेवार्थं प्रपञ्चयति—योजनानामिति । शतसहस्रमिति शेषः । गन्तुं प्रतिनिवर्तितुं च शक्त इत्यर्थः ॥ २१ ॥

रा० टी०—ज्ञानमेवाह—काममिति । योजनानां शतसहस्रं शतं सहस्रं वा गन्तुं प्रतिनिवर्तितुं च कामं यथेच्छं भवान् शक्तः तथापि एषः भवन्मात्रोत्प्लवः विधिर्न उच्यते अस्माभिरिति शेषः ॥ २१ ॥

गो० टी०—काममिति । भवान् योजनानां शतं सहस्रं वा गन्तुं प्रतिनिवर्तितुं च कामं शक्तः । एष विधिः भृत्यैः स्वामिप्रस्थापनं नोच्यते न विधीयते ॥ २१ ॥

---

१ कालमेदनेति गो. पाठः । २ त्विति गो. पाठः । ३ पुनरिति गो. पाठः । ४ महाबलेश्चैव यज्ञे इति गो. पाठः । ५ त्रिविक्रममिति गो. पाठः । ६ यौवनमिति रा पाठ. । ७ पौरेति गो.पाठ. । ८ एतावती शक्तिं गमने सर्केयाम्यहमिति गो.पाठः । ९ कपिरिति गो.पाठः । १० निश्चितेति गो.पाठः ।

नहि प्रेषयिता तात स्वामी प्रेष्यः कथंचन । भवताऽयं जनः सर्वः प्रेष्यः प्लवगसत्तम ॥ २२ ॥
भवान्कलत्रमस्माकं स्वामिभावे व्यवस्थितः । स्वामी कलत्रं सैन्यस्य गतिरेषा परंतप ॥ २३ ॥
अपि [2]वै तस्य कार्यस्य भवान्मूलमरिंदम । [3]तस्मात्कलत्रवत्तात प्रतिपाल्यः सदा भवान् ॥ २४ ॥
मूलमर्थस्य संरक्ष्यमेष कार्यविदां नयः । मूले हि सति सिध्यन्ति गुणाः [4]सर्वे फलोदयाः ॥ २५ ॥
तद्भवानस्य कार्यस्य साधनं सत्यविक्रम । बुद्धिविक्रमसंपन्नो हेतुरत्र परंतप ॥ २६ ॥
गुरुश्च गुरुपुत्रश्च त्वं [5]हि नः कपिसत्तम । भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २७ ॥
उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महा[6]कपिः । प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २८ ॥
यदि नाहं गमिष्यामि [7]नान्यो वानरपुङ्गवः । पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २९ ॥
नह्यकृत्वा हरिपतेः संदेशं तस्य धीमतः । तत्रापि गत्वा प्राणानां [8]न [9]पश्ये परिरक्षणम् ॥ ३० ॥
[10]स हि प्रसादे चा[11]त्यर्थकोपे च हरिरीश्वरः । अतीत्य तस्य संदेशं विनाशो गमने भवेत् ॥ ३१ ॥
तत्तथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः । तद्भवानेव दृष्टार्थः संचिन्तयितुमर्हति ॥ ३२ ॥
सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः । जाम्बवानुत्तमं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३ ॥

२२ ] ति० टी०—प्रेषयिता स्वामी न प्रेष्यः । प्रेष्यैद्गिति शेषः ॥ २२ ॥

रा० टी०—विध्यभावमेव द्योतयन्नाह—नहीति । हे तात! प्रेषयिता प्रेषणशीलः स्वामी प्रेष्यः कथंचन न अतः सर्वोऽयं जन एव भवता प्रेष्यः ॥ २२ ॥

गो० टी०—तदेव विवृणोति—नहीति ॥ २२ ॥

२३ ] ति० टी०—भवान्कलत्रम् । कलत्रवद्दृढस्वीयत्वबुद्ध्या यावत्स्वप्राणबलं परिपाल्य इत्यर्थः । स्वामिभावे स्वामित्वे एतेन लोके कलत्रस्य भर्ता संसारव्यवहारविषये आज्ञाप्यस्तत्प्रभुत्वं च कलत्रस्येति दर्शितम् तस्मात्स्वामी सैन्यस्य कलत्रवत्परिपाल्यः स्वामिना च कलत्रेण भर्तेव सैन्यमाज्ञाप्यम् एषा गतिः लोकस्येति शेषः ॥ २३ ॥

रा० टी०—भवानिति । स्वामिभावे स्वामित्वे व्यवस्थितो भवान् अस्माकं कलत्रं स्त्रीवत् रक्ष्यः किंच कं सुखं लाति ददाति तदेव त्रं रक्षाकर्तृ सुखदाता त्राता चेत्यर्थः, सामान्ये नपुंसकम् । एवं सैन्यस्य स्वामी सेनाधीशः कलत्रम् अर्थद्वयं पूर्ववत् । एषा गतिः महतां पन्थाः ॥ २३ ॥

गो० टी०—भवानिति । कलत्रं रक्षणीयं वस्तु ॥ २३–२३ ॥

२४ ] ति० टी०—तदेव स्पष्टमाह—तस्मात्कलत्रवदिति ॥ २४ ॥

रा० टी०—अपीति । एतस्य सीतान्वेषणरूपस्य कार्यस्य भवानेव मूलं तस्माद्धेतोः भवान् कलत्रवत् सदा प्रतिपाल्यः । किंच कलत्रयोः सुखदानत्राणयोर्वत् स्थैर्यं यस्मिन् तत्संबोधनम् । वन्ध्यावद्द्वयोरैक्यम् ॥ २४ ॥

२५ ] ति० टी०—नयो निश्चयः । गुणा गुणभूताः अप्रधानभूता इति यावत् । तादृशाः फलोदयाः फलोत्पत्तयः सिध्यन्ति ॥ २५ ॥

रा० टी०—मूलरक्षणे शिष्टाचारं प्रमाणयति—मूलमिति । मूले द्रव्यादौ सति फलोदयाः प्रमोदादिफलप्रापकाः सर्वे गुणाः रूपादयः सिध्यन्ति अतः अर्थस्य कार्यस्य मूलं रक्ष्यमेषः कार्यविदां नयः नीतिः ॥ २५ ॥

२६] ति० टी०—साधनपदस्यैव व्याख्या—हेतुरिति ॥ २६ ॥

२७–२८ ] ति० टी०—गुरुर्युवराजत्वात् ॥ २७ ॥ २८ ॥

रा० टी०—निगमयति—तदिति । बुद्धिविक्रमसंपन्नो गुर्वादिर्भवान् अस्य कार्यस्य साधनं साधयिता अत एव हेतुरस्तीति शेषः, अत एव भवन्तमाश्रित्य अर्थसाधने वयं समर्थाः । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

रा० टी०—उक्तेति । जाम्बवन्तमुत्तरं वाक्यमङ्गद उवाच ॥ २८ ॥

२९ ] ति० टी०—यद्यहं न गमिष्यामि, अन्यश्च न गमिष्यति, तदा पुनर्मरणमेव ज्याय इति भावः ॥ २९ ॥

रा० टी०—तद्वचनाकारमाह—यदीति । यदि अहं न गमिष्यामि अन्यो वा नरपुङ्गवो वा न गमिष्यति तर्हि अस्माभिः पुनः प्रायोपवेशनं कार्यम् ॥ २९ ॥

३० ] ति० टी०—तस्य धीमतो हरिपतेः संदेशमकृत्वा प्राणानां परिरक्षणं न पश्यामि । तत्रापि लङ्कायामपि गत्वा गमनशक्त्यभावात्तत्र पश्यामीत्यन्वयः ॥ ३० ॥

रा० टी०—तत्र हेतुमाह—नहीति । हरिपतेः सुग्रीवस्य संदेशमकृत्वा असंसाध्य तत्र सुग्रीवसमीपे गत्वा प्राणानां परिरक्षणं न पश्ये पश्यामि ॥ ३० ॥

३१ ] ति० टी०—सुग्रीवः प्रसादेऽत्यर्थकोपे चेश्वरः निग्रहानुग्रहाधिकृत इति भावः । गमने किष्किन्धागमने ॥ ३१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । हरिः सुग्रीवः प्रसादे कोपे च ईश्वरः समर्थः तस्य संदेशमतीत्य अकृत्वा गमने सति विनाशो भवेत् ॥ ३१ ॥

३२–३३ ] ति० टी०—तत्तस्मादस्य कार्यस्य समुद्रलङ्घ-

१ एतदाद्यर्धद्वयं व्यत्यस्तं गो.पाठे । २ चेति गो.पाठः । ३ यस्मादिति रा.पाठः । ४ पुष्पेति गो.पाठः । ५ हित इति रा.पाठः । ६ कपिमिति रा.पाठः । ७ नान्ये वानरपुङ्गवा इति गो. पाठः । ८ पश्यामीति गो. पाठः । ९ नेति गो. पाठः । १० अत्यर्थमिति गो. रा. पाठः । ११ यथेति गो. पाठः।

तस्य ते वीरकार्यस्य न किंचित्परिहास्यते । एष संचोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३४ ॥
ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

जाम्बवान् हनुमन्तं वायोः सकाशादञ्जनायां सभवं हनुमन्नामप्राप्तिकारणं ब्रह्मादिभ्यो वरलाभं च तवेति कथयन्प्रभाववर्णनपूर्वकं कपिकुलविपदपनोदनाय जलधितरणे तं प्रवर्तयति ।

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् । जाम्बवान्समुदीक्ष्यैवं हनूमन्तमथाब्रवीत् ॥ १ ॥
वीर वानरलोकस्य सर्वशास्त्रविदां वर । तूष्णीमेकान्तमाश्रित्य हनूमन्किं न जल्पसि ॥ २ ॥
हनूमन्हरिराजस्य सुग्रीवस्य समो ह्यसि । रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥
अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः । गरुत्मानिव विख्यात उत्तमः सर्वपक्षिणाम् ॥ ४ ॥
बहुशो हि मया दृष्टः सागरे स महाबलः । भुजङ्गानुद्धरन्पक्षी महाबाहुर्महाबलः ॥ ५ ॥

नस्य गतिः प्राप्तिरन्यथा यथा न भवत्यसिद्धा यथा न भवति हि निश्चयेन तथा भवानेव तदुद्दिश्य संचिन्तयितुमर्हति यतो भवान्दृष्टार्थः बुद्धिमत्त्वाचिरदृष्टत्वाचापरोक्षीकृतसमस्तकृत्याकृत्यतत्त्वार्थ इत्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०–तदिति । तत् तस्मात् हेतोः अस्य सीतादर्शनरूपस्य कार्यस्य अन्यथा असिद्धिर्यथा न भवति तथा दृष्टार्थः विज्ञातसकलपदार्थः अत एव गतिराश्रयो भवानेव तत् कर्तव्यं संचिन्तयितुमर्हति ॥ ३२ ॥

रा० टी०–स इति । अङ्गदेन प्रत्युक्तो जाम्बवान् अङ्गदं प्रोवाच ॥ ३३ ॥

३४] ति०टी०–कार्यस्य न परिहास्यते शेषे षष्ठी अनुष्ठानमिति शेषो वा । एषः, एषोऽहमित्यर्थः । एनं तम् ॥ ३४ ॥

रा० टी०–तद्वचनाकारमाह–तस्येति । यस्ते कार्यं साधयिष्यति तमेनं हनुमन्तमेषोऽहं संचोदयामि अतस्ते कार्यस्य किंचित् अङ्गं न परिहास्यते गमिष्यति नङ्क्ष्यतीत्यर्थः ॥ ३४ ॥

३५ ] ति० टी०–एकान्तमाश्रित्येति । यूथाद्बहिः क्वचिदिति शेषः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०–तत इति । प्रतीतमतिविश्वस्तं प्लवतां वरिष्ठं हनुमन्तं हरिवीरो जाम्बवान् संचोदयामास ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०–तत इति । प्रतीतं प्रख्यातम् ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

१ ] ति० टी०–अनेकेति ॥ १ ॥

रा० टी०–हनुमन्तं प्रति जाम्बवतो वचनमेवाह–अनेकेत्यादिभिः । अनेकशतसाहस्रीं हरिवाहिनीं वानरसेनामेवं विषण्णां दुःखितां जाम्बवान् समुदीक्ष्य दृष्ट्वा हनुमन्तमथ मङ्गलमब्रवीत् ॥ १ ॥

गो० टी०–अनेकेत्यादि ॥ १–३ ॥

२ ] ति० टी०–एवमब्रवीदित्येवंशब्दार्थः–वीर वानरेति । वानरलोकस्य वीरेत्यन्वयः निर्धारणे षष्ठी । यद्वा हे वीर ! वानरलोकस्य कृत्यमुद्दिश्य किं न जल्पसीत्यन्वयः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–वीरेत्यादिभिः । हे वीर ! हनुमन् एकान्तमाश्रित्य तूष्णीं स्थित इति शेषः वानरलोकस्य कल्याणं किं किमर्थं त्वं न जल्पसि कल्याणमित्यध्याहृतम् ॥ २ ॥

३ ] ति० टी०–बलेन च सम इत्यनुकर्षः ॥ ३ ॥

रा० टी०–नन्वहं न तद्योग्य इत्यत आह–हनुमन्निति । हे हनुमन् ! त्वं तेजआदिना सुग्रीवादीनां समः सदृशोऽसि ॥ ३ ॥

४ ] ति० टी०–अरिष्टनेमिनः काश्यपस्य नान्तत्वमार्षम् । सर्वपक्षिणामुत्तमो गरुत्मानिव भवान्सर्वोत्तमो विख्यात इत्यन्वयः ॥ ४ ॥

५ ] ति० टी०–महाबल इत्येकत्र बलं शारीरं परत्रान्तरमिति भेदः ॥ ५ ॥

१ हीयते इति गो. पाठः । २ हनुमन्तमिति गो. पाठः । ३ विशारदेति गो. पाठः । ४ हनुमन्निति गो. पाठः । ५ इतीति गो. रा. पाठः । ६ भुजगानिति गो. पाठः । ७ महावेगो महायशा इति गो. पाठः ।

पक्षयोर्यद्बलं तस्य [1]भुजवीर्यबलं तव । विक्रमश्चापि [2]तेजश्च न ते तेना[3]पहीयते ॥ ६ ॥
बलं बुद्धिश्च तेजश्च सत्त्वं च हरिपुङ्गव । विशिष्टं सर्वभूतेषु किमात्मानं न [4]सञ्जसे ॥ ७ ॥
अप्सराऽप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥
विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि । अभिशापादभूत्तात [5]कपित्वे कामरूपिणी ॥ ९ ॥
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः । [ [6]कपित्वे चारुसर्वाङ्गी कदाचित्कामरूपिणी । ]
मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ॥ १० ॥
विचित्रमाल्याभरणा [7]कदाचित्क्षौमधारिणी । अचरत्पर्वतस्याग्रे प्रावृडम्बुदसंनिभे ॥ ११ ॥
तस्या वस्त्रं विशालाक्ष्याः [8]पीतं रक्तदशं शुभम् । स्थितायाः पर्वतस्याग्रे मारुतो[9]ऽपहरच्छनैः ॥ १२ ॥
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ । स्तनौ च पीनौ सहितौ सुजातं चारु चाननम् ॥ १३ ॥

रा० टी०–अरिष्टनेमिन इति । गरुत्मान् इति विख्यातः सर्वपक्षिणामुत्तमः महाबलः अतिबलवान् महाबलः स्वपक्षाभ्यां त्रिलोक्या आच्छादनसमर्थः पक्षी सागरे भुजङ्गान् महासर्पान् उद्धरन् बहुशोऽनेकवारं यो वैनतेयो मया दृष्टः तस्य पक्षयोर्यद्बलं तत् तव भुजवीर्यबलं भुजवीर्यबलसदृशं, तेन हेतुना ते विक्रमस्तेजश्च न अपहीयते केनापि दूरीक्रियते । श्लोकत्रयमेकान्वयि ॥ ४–६ ॥

गो० टी०–अरिष्टनेमिन इति । अरिष्टनेमिनः काश्यपस्य नकारान्तत्वमार्षम् ॥ ४ ॥ ६ ॥

६ ] ति० टी०–'भुजवीर्यबलं तव' इति प्राचीनपाठे तस्य पक्षयोर्यद्बलं तव च यद्भुजवीर्यबलम् । उभयं तुल्यमिति शेषः । ते विक्रमश्च तेजश्च तेन गरुत्मता नापहीयते न न्यूनो भवति ॥ ६ ॥

गो० टी०–पक्षयोरिति । अत्र समानपदमध्याहार्यम् । विक्रमादिकं तेन गरुत्मता समानं नावहीयते न न्यूनं भवति । तेनेति पञ्चम्यर्थे तृतीया ॥ ६ ॥

७ ति० टी०–विशिष्टमात्मानमभिजनबलपराक्रमवैभवविशिष्टमात्मानं किं न सज्जसे । समुद्रलङ्घनाय किं न सज्जीकरोषीत्यर्थः ॥ ७ ॥

रा० टी०–बलमिति । सर्वभूतेषु सर्वजनबलादिषु मध्ये तव बलादि विशिष्टमधिकमस्तीति शेषः, अतः आत्मानं स्वस्वरूपं किं किमर्थं न सज्जसे स्मरसि ॥ ७ ॥

गो० टी०–बलमिति । विशिष्टं श्रेष्ठम् ॥ ७ ॥

८ ] ति० टी०–तदेव बोधयति—अप्सराऽप्सरसामिति । अप्सरा इत्येकवचनान्तोऽपि । संधिरार्षः । अप्सरा इत्याबन्त आर्ष इत्यन्ये । पुञ्जिकस्थलेति नाम्ना या विख्याता सैव केसरिणः पत्न्यञ्जनेति नाम्ना ख्याता ॥ ८ ॥

रा० टी०–ननु कथं ममैवं बलादिप्राप्तिरित्यत आह–अप्सरा इत्यादिभिः । विख्याता प्रसिद्धा अप्सरसां श्रेष्ठा या पुञ्जिकस्थला अप्सरा सा अञ्जनेति परिख्याता सती केसरिणो हरेर्वानरस्य पत्नी अभवदिति शेषः । अप्सरा अप्सरसामित्यत्रैकत्वं संहिता चात एव निर्देशात् ॥ ८ ॥

गो० टी०–अप्सरेति निर्देश आर्षः ॥ ८–११ ॥

९ ] ति० टी०–तस्या वानरपत्नीत्वे हेतुः—अभिशापादिति । ऋषिशापाद्वानरीजन्मा । कपित्वे कपिशरीरत्वेऽपीत्यर्थः कामरूपिणी देवतास्वभावात्तच्छक्तेरिति भावः ॥ ९ ॥

रा० टी०–ननु अप्सरःश्रेष्ठा वानरस्य पत्नी कथमभवदित्यत आह–विख्यातेति । रूपेण अप्रतिमा असदृशी अप्सरःश्रेष्ठा अभिशापात् शापवशात् कपित्वे कपिजातौ जाताऽपीति शेषः, कामरूपिणी कथंचित् तदृषिप्रसादवशात् कामरूपधारणसमर्था अभूत् ॥ ९ ॥

१० ] ति० टी०–कुत्र तज्जन्मेत्यत्राह—दुहितेति ॥ १० ॥

११] ति० टी०–अम्बुदसंनिभे इति पर्वताग्रविशेषणम् ॥ ११ ॥

रा० टी०–दुहितेति । कुञ्जरस्य तदभिधस्य वानरेन्द्रस्य दुहिता विचित्रमाल्याभरणा क्षौमधारिणी पट्टवस्त्रविशेषधारणशीला अञ्जना कदाचित्कस्मिंश्चित्समये प्रावृडम्बुदसंनिभे प्रावृट्कालिकमेघसदृशे पर्वतस्याग्रे मानुषं विग्रहं देहं कृत्वा अचरत् । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

१२] ति० टी०–रक्ता दशाः प्रान्ततन्तवो यस्य तत् ॥ १२ ॥

रा० टी०–तस्या इति । पर्वतस्याग्रे स्थितायास्तस्याः अञ्जनायाः पीतरक्तदशं पीतरक्ताः दशाः प्रान्तभागा यस्य तत् वस्त्रं मारुतः शनैरपाहरत् स्थानादचालयत् ॥ १२ ॥

गो० टी०–तस्या इति । रक्तदशं रक्ताग्रम् ॥ १२–१४ ॥

१३ ] ति० टी०–सुसंहतौ सुसंश्लिष्टौ सहितौ परस्परसंसक्तौ पीनौ च स्तनौ ददर्श ॥ १३ ॥

रा० टी०–स इति । सः चालितवस्त्रः पवनः वृत्तौ सुसंहतौ अत्यन्तं संश्लिष्टौ तस्याः ऊरू सहितौ परस्परसंलग्नौ पीनौ स्तनौ च सुजातमाननं मुखं च ददर्श ॥ १३ ॥

---

१ तावद्भुजबलमिति गो. पाठः । २ वेगश्चेति गो. पाठः । ३ श्चवेति गो. पाठः । ४ बुध्यस इति गो. पाठः । ५ वानरीति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे । ७ महार्हक्षौमवासिनीति गो पाठः । ८ पीतरक्तेति रा. पाठः । ९ ऽपाहरदिति रा. पाठः ।

तां बलादायतश्रोणीं तनुमध्यां यशस्विनीम्[3] । दृष्ट्वैव शुभसर्वाङ्गीं[2] पवनः काममोहितः ॥ १४ ॥
स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत मारुतः । मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ॥ १५ ॥
सा तु तत्रैव संभ्रान्ता सुव्रता वाक्यमब्रवीत् । एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १६ ॥
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत । न त्वां हिंसामि सुश्रोणि माभूत्ते मनसो भयम् ॥ १७ ॥
मनसाऽस्मि गतो यत्त्वां परिष्वज्य यशस्विनि । वीर्यवान्बुद्धिसंपन्नस्तव पुत्रो भविष्यति ॥ १८ ॥
महासत्त्वो महातेजा महाबलपराक्रमः । लङ्घने प्लवने चैव भविष्यति मया समः ॥ १९ ॥
एवमुक्ता ततस्तुष्टा जननी ते महाकपे । गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभ[4] ॥ २० ॥
अभ्युत्थितं[6] ततः सूर्यं बालो दृष्ट्वा महावने । फलं चेति जिघृक्षुस्त्वमुत्पत्याभ्युत्पतो[5] दिवम् ॥ २१ ॥
शतानि त्रीणि गत्वाथ योजनानां महाकपे । तेजसा तस्य निर्धूतो न विषादं गतस्ततः ॥ २२ ॥

१४] ति० टी०—पवनः काममोहितः आसीदिति शेषः ॥ १४ ॥

रा० टी०—तामिति । आयतश्रोणीं दीर्घश्रोणीविशिष्टां तामञ्जनां बलात् दृष्ट्वैव पवनः काममोहितोऽभवदिति शेषः ॥ १४ ॥

१५ ] ति० टी०—मारुतस्तां पर्यष्वजत । मन्मथाविष्टसर्वाङ्गः कामाक्रान्तकृत्स्नज्ञानकर्मेन्द्रियः, अत एव तां गतात्मा तद्गर्भप्रविष्टात्मतेजा बभूव । देवत्वाद्विनापि योनिसंबन्धं निजतेजःप्रवेशनमिति बोध्यम् ॥ १५ ॥

रा० टी०—स इति । मन्मथेन आविष्टं सर्वमङ्गं यस्य अत एव गतः अञ्जनायां संसक्तः आत्मा मनो यस्य स पवनः अनिन्दितां तामञ्जनां भुजाभ्यां पर्यष्वजत ॥ १५ ॥

गो० टी०—स तामिति । तां गतात्मा तद्गतचित्तः तां पर्यष्वजतेति संबन्धः ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—एकः पतिर्यस्यास्तद्व्रतं तं धर्मम् ॥ १६ ॥

रा० टी०—सेति । तत्र तस्मिन्समये सुवृत्ता शोभनवृत्तविशिष्टा अत एव संभ्रान्ता दुष्कृतकर्मणा उद्विग्नचित्ता सा अञ्जना इदं प्रसिद्धमेकपत्नीव्रतम् एकः पतिर्यस्याः तस्याः मम व्रतं पुरुषान्तरासंस्पर्शनरूपसंकल्पं नाशयितुं विध्वंसितुं क इच्छतीति वाक्यमब्रवीत् ॥ १६ ॥

१७ ] ति० टी०—त्वां न हिंसामि योनिसंबन्धेन तावकमेकपत्नीव्रतं न नाशयामि । अनेन बलात्परपुरुषेणालिङ्गनादावपि न पातिव्रत्यभङ्गः, किं तु योनिभोगेनैवेति सूचितम् ॥ १७ ॥

रा० टी०—अञ्जनाया इति । मारुतः प्रत्यभाषत । तद्वचनाकारमाह—हे सुश्रोणि ! त्वामहं न हिंसामि हिनस्मि अधर्माश्रयत्वेन हिंसितप्रायां न करोमीत्यर्थः, अतस्ते मनसो भयं मा भूत् ॥ १७ ॥

गो० टी०—न त्वामिति । न हिंसामि पातिव्रत्यान्न प्रच्यावयामि ॥ १७ ॥

१८ ] ति० टी०—यद्यस्मात्त्वां परिष्वज्य मनसा मानसभोगेनैव त्वां गतोऽस्मि स्वतेजसा त्वद्गर्भं प्राप्तोऽस्मि, तस्मादीदृशस्ते पुत्रो भविष्यति ॥ १८ ॥

रा० टी०—तत्र गमकमाह—मनसेति । यद्यस्मात् त्वां परिष्वज्य मनसा गतः भोगकर्तृत्वेन प्राप्तः अतः वीर्यवान् बुद्धिसंपन्नः निखिलवृत्तान्तज्ञस्तव पुत्रो भविष्यति । मनसेत्युक्त्या व्रतभङ्गाभावो ध्वनितः ॥ १८ ॥

गो० टी०—न केवलं पातिव्रत्यभङ्गाभावः श्रेयोऽपि भविष्यतीत्याह—वीर्यवानिति ॥ १८—२० ॥

१९ ] ति० टी०—मया मारुतेन ॥ १९ ॥

रा० टी०—महेति । महासत्त्वादिविशिष्टस्तव सुतः लङ्घनादौ मया समो भविष्यति ॥ १९ ॥

२० ] ति० टी०—ततस्तुष्टा मनसा महादैवततेजःसंक्रमकथनात् गुहायां तत्पर्वतगुहायाम् तदानीमेवेति भावः ॥ २० ॥

रा० टी०—एवमिति । एवमुक्त्वा अत एव तुष्टा ते जननी गुहायां त्वां प्रजज्ञे जनयामास ॥ २० ॥

२१ ] ति० टी०—फलमिति । जिघृक्षुरुत्पत्योत्प्लुत्य दिवमभ्युत्पतः । 'उत्प्लुत्याभ्युत्थितो दिवम्' इति पाठान्तरे उत्प्लुत्य दिवमभ्युत्थित इति योजना । उदयकालिकभास्करस्याम्रफलवद्रक्तवृत्तत्वात्फलबुद्धिविषयत्वम् । यथा जातमात्रा जाद्बालकानां प्राचीनवासनया स्तनपानादौ प्रवृत्तिः तथैवास्य जातमात्रस्य वानरोचितफलादानप्रवृत्तिरिति बोध्यम् ॥ २१ ॥

रा० टी०—अभ्युत्थितमिति । ततः उत्पत्त्यनन्तरं महावने अभ्युत्थितं प्रकाशितं सूर्यं दृष्ट्वा फलमिदमिति बुद्ध्या जिघृक्षुर्बालस्त्वम् उत्पत्य उत्प्लुत्य दिवम् अभ्युत्थितो गतः ॥ २१ ॥

२२ ] ति० टी०—तस्य रवेस्तेजसा निर्धूतः क्षिप्तोऽपि ततो वायुबलवत्त्वान्न विषादं गतः ॥ २२ ॥

रा० टी०—शतानीति । अथानन्तरं योजनानां शतानि त्रीणि 'अङ्कानां वामतो गतिः' इतिन्यायेन शताधिकत्रिसहस्राणि गत्वा तस्य सूर्यस्य तेजसा निर्धूतः आक्रान्तोऽपि त्वं विषादं खेदं न गतः । शतानि त्रीणि इत्यस्य त्रिशतपरत्वेन व्याख्याने तु बहुयोजनसाहस्रम् इत्युत्तरकाण्डे वक्ष्यमाणं विरुध्येत । अनेकशतयोजनानाम् उपलक्षणमिति भूषणोक्तिस्तु न युक्ता त्रीणि इत्यस्य वैयर्थ्यापत्तेः ॥ २२ ॥

गो० टी०—शतानीति । शतानि त्रीण्येतदनेकशतयोज-

१ विशालेति गो. पाठः । २ सुभग इति गो.पाठः । ३ यशस्विनीमिति गो पाठः । ४ प्लवगर्षभमिति गो.पाठः । ५ उत्प्लुत्याभ्युद्गत इति गो.पाठः । ६ अभ्युत्थित इति रा. पाठः ।

त्वामभ्युपगतं तूर्णमन्तरिक्षं महाकपे । क्षिप्तमिन्द्रेण ते वज्रं [1]कोपाविष्टेन [2]तेजसा ॥ २३ ॥
तदा शैलाग्रशिखरे वामो हनुरभज्यत । ततोऽभि[3]नामधेयं ते हनुमानिति [4]कीर्तितम् ॥ २४ ॥
ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् । [5]त्रैलोक्यं भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ॥ २५ ॥
संभ्रान्ताश्च सुराः सर्वे त्रैलोक्ये [6]क्षुभिते सति । प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः ॥ २६ ॥
प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ । अशस्त्रवध्यतां तात समरे सत्यविक्रम ॥ २७ ॥
वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च । सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ॥ २८ ॥
स्वच्छन्दतश्च मरणं [7]तव स्यादिति वै प्रभो । स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ॥ २९ ॥
मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः । त्वं हि वायुसुतो वत्स प्लवने चापि तत्समः ॥ ३० ॥
वयमद्य गतप्राणा [8]भवानस्मासु सांप्रतम् । दाक्ष्यविक्रमसंपन्नः [9]कपिराज [10]इवापरः ॥ ३१ ॥
त्रिविक्रमे मया तात सशैलवनकानना । त्रिःसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३२ ॥
[11]तदा चौषधयोऽस्माभिः संचिता देवशासनात् । [12]निर्मथ्यममृतं याभिस्त[13]दानीं नो महद्बलम् ॥ ३३ ॥

नानारूपलक्षणं बहुयोजनसाहस्रं क्रामत्येष इत्युत्तरकाण्डे वक्ष्यमाणत्वात् ॥ २१—३० ॥

२३ ] ति० टी०—तूर्णं शीघ्रमन्तरिक्षमुपगतं प्राप्तं त्वां दृष्ट्वेन्द्रेण ते तव शरीरे वज्रं क्षिप्तम् ॥ २३ ॥

रा० टी०—तत्रेति । तत्र तेजोनिर्धूतत्वेऽपि तूर्णं शीघ्रं त्वमन्तरिक्षमुपगतः अत एव कोपाविष्टेन चेतसा उपलक्षितेन इन्द्रेण ते तुभ्यं वज्रं क्षिप्तम् ॥ २३ ॥

२४ ] ति० टी०—तदा तस्मिन्काले ॥ २४ ॥

रा० टी०—तदेति । तदा वज्रसंयोगसमये वामो हनुः तव वक्त्रैकदेशः अभज्यत ततस्तस्माद्धेतोः ते नामधेयं हनुमान् इति कीर्तितम् ॥ २४ ॥

२५-२७ ] ति० टी०—त्रैलोक्यं न ववौ न गच्छति स्म २५-२७

रा० टी०—तत इति । ततोऽनन्तरं त्वां निहतं दृष्ट्वा भृशसंक्रुद्धः प्रभञ्जनो वायुः त्रैलोक्ये न ववौ चचाल, स्वशक्तीः समाकृष्य एकत्रैव तस्थावित्यर्थः ॥ २५ ॥

रा० टी०—संभ्रान्ता इति । त्रैलोक्ये क्षुभिते वायुसंचाराभावात् क्षोभं प्राप्ते सति भुवनेश्वराः ब्रह्मप्रभृतयः संक्रुद्धं मारुतं प्रसादयन्ति प्रासादयन्त ॥ २६ ॥

रा० टी०—प्रसादित इति । पवने प्रसादिते सति समरे अशस्त्रवध्यतां शस्त्रवध्यत्वाभावं वरं ब्रह्मा तुभ्यं ददौ ॥ २७ ॥

२८-२९ ] ति० टी०—वज्रस्य निपातेन चाद्रिरौ निपातेन च । विरुजं तज्जनितपीडाभाववन्तम् तेनाप्यनुत्पादितव्यथमिति यावत् ॥ २८ ॥ २९ ॥

रा० टी०—वज्रस्येति । वज्रस्य निपातेनापि विरुजं रुजारहितं त्वां समीक्ष्य प्रीतात्मा सहस्रनेत्रः तव मरणं स्वच्छन्दतः स्वाधीनतया स्यात् इत्युत्तमं वरं ददौ । सार्धः श्लोक एकान्वयी ॥ २८ ॥

रा० टी०—स इति । त्वं केसरिणः क्षेत्रजः पुत्रः मारुतस्य औरसः पुत्रः अत एव तेजसा अपिना पराक्रमादिना च तत्समः वायुसदृशोऽसीति शेषः । अर्धद्वयमेकान्वयि ॥ २९ ॥

३० ] ति० टी०—मारुतस्यौरस इति तथा दर्शितं प्राक् ३०

३१ ] ति० टी०—कपिराजः सुग्रीवः ॥ ३१ ॥

रा० टी०—त्वमिति । दाक्ष्यविक्रमसंपन्नः अत एव अपरः कपिराजः सुग्रीव इव वायुसुतस्त्वं प्लवने अपिना पराक्रमादौ च तत्समोऽसीति शेषः, वयं तु अद्य गतप्राणाः अतः सांप्रतमिदानीं नोऽस्मान् भवान् त्रातु । सार्धश्लोक एकान्वयी॥३०॥३१॥

३२ ] ति० टी०—त्रिविक्रमे त्रिविक्रमावतारसमये ॥ ३२॥

३३ ] ति० टी०—देवशासनात्संचिताः याभिः सागरे प्रक्षिप्ताभिः यामृतं निर्मथ्यं निर्मथनेन लभ्यम् ॥ ३३ ॥

रा० टी०—ननु त्वमपि विख्यातपौरुषोऽसीति मामेव किमर्थं प्रोत्साहयसीत्यत आह—त्रिविक्रम इति । त्रिविक्रमे त्रिषु लोकेषु विक्रमे वामनचरणगमने सति सशैलवनकानना पृथिवी त्रिलोकीभूमिः त्रिःसप्तकृत्वः एकविंशतिवारं प्रदक्षिणं परिक्रान्ता तदा परिक्रमणसमये याभिः अमृतं निष्पन्नं ताः ओषधयः देवशासनात् संचिताः तदा नोऽस्माकं महद्बलमासीत् । श्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

गो० टी०—त्रिविक्रम इति । पृथिवीत्यनेनाण्डकटाहमध्य उक्तः । तस्याः त्रिःसप्तकृत्वः क्रमणं मध्यप्रदेशे । यद्वा यावती महाबलिभूमिः तावती पृथिवी अत्र विवक्षिता । तस्याः प्रदक्षिणं तद्बहिःप्रदेशेन संगच्छते । यद्वा क्रमणानन्तरं जाम्बवान् विजयघोषणार्थं पृथिवीमात्रप्रदक्षिणं कृतवानिति प्रसिद्धिः । अन्यत्सर्वमतिरोहितार्थम् ॥ ३१—३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

१ तावदापतत इति गो. तत्राप्युपगत इति रा. पाठः । २ क्रोधाविष्टेनेति गो. पाठः । ३ धीमतेति गो. पाठः । ४ हीति गो. रा. पाठः । ५ कीर्त्यते इति गो. पाठः । ६ त्रैलोक्ये इति गो. पाठः । ७ क्षोभिते इति गो. पाठः । ८ ते भूयादिति गो. पाठः । ९ भवान्नस्त्रात्विति गो. पाठः । १० पक्षिराज इति गो. पाठः । ११ तथेति गो. पाठः । १२ निष्पन्नमिति गो. पाठः । १३ तदासीदिति गो. पाठः ।

स इदानीमहं वृद्धः परिहीनपराक्रमः । सांप्रतं कालमस्माकं भवान्सर्वगुणान्वितः ॥ ३४ ॥
तद्विजृम्भस्व विक्रान्त प्लवतामुत्तमो ह्यसि । त्वद्वीर्यं द्रष्टुकामा [1]हि सर्वा वानरवाहिनी ॥ ३५ ॥
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् । परा हि सर्वभूतानां हनुमन्या गतिस्तव ॥ ३६ ॥
विषण्णा हरयः सर्वे [2]हनुमन्किमुपेक्षसे । विक्रमस्व महावेग विष्णुस्त्रीन्विक्रमानिव ॥ ३७ ॥
ततः [3]कपीनामृषभेण चोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं [4]पवनात्मजस्तदा ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ।

जलधिमुल्लङ्घयितुं धृतबृहद्रूपो हनुमान्कपिभयोत्सारणाय निजप्रभावमनुवर्णयन्महेन्द्राचलमारुह्य सागरमुत्तरितुं व्यवस्यति ।

तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् । [5]वेगेनापूर्यमाणं च सहसा वानरोत्तमम् ॥ १ ॥
सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः । विनेदुस्तुष्टुवुश्चापि [6]हनूमन्तं महाबलम् ॥ २ ॥

३४ ] ति० टी०—सांप्रतं कालमिति सप्तम्यर्थे द्वितीया । अस्माकमिति निर्धारणे षष्ठी । अस्मिन्कालेऽस्माकं मध्ये भवानेव सर्वगुणान्वित इत्यर्थः ॥ ३४ ॥

रा० टी०—स इति । सः प्रसिद्धबलोऽहमिदानीं वृद्धः अत एव परिहीनपराक्रमोऽस्मीति शेषः, अत एव सांप्रतं कालमस्मिन् समये अस्माकं मध्ये भवानेव सर्वगुणान्वितः अस्तीति शेषः ॥ ३४ ॥

३५ ] ति० टी०—तद्विजृम्भस्व निःसीमनिजबलविजृम्भणं कुरु ॥ ३५ ॥

रा० टी०—तदिति । विक्रान्तः अतिविक्रमविशिष्टः अत एव प्लवतामुत्तमः यतस्त्वमसि तत्तस्मात् विजृम्भस्व उत्प्लवस्व हि यतः वानरवाहिनी त्वद्वीर्यं द्रष्टुकामाऽस्तीति शेषः । एतेन पूर्वं स्वस्वपराक्रमाणां न्यूनतया वर्णनं त्वत्पराक्रमदर्शनार्थमेवेति ध्वनितम् ॥ ३५ ॥

३६ ति० टी०—उत्तिष्ठ लङ्घयस्वेत्यत्र हेतुः—परा हीति । हे हनुमन् ! परा श्रेष्ठतरा या तव गतिर्लङ्काद्वीपगमनं सा सर्वभूतानामुपकाराय न केवलमस्माकमेवेति शेषः ॥ ३६ ॥

रा० टी०—उत्तिष्ठेति । हे हरिशार्दूल ! त्वमुत्तिष्ठ महार्णवं लङ्घयस्व च हि यतः तव गतिः समुद्रमुत्प्लुत्य गमनं सर्वभूतानां परा रक्षिका ॥ ३६ ॥

३७ ] ति० टी०—विषण्णा अर्थस्य स्वासाध्यत्वाद्दीनाः । किमुपेक्षसे तानिति शेषः ॥ ३७ ॥

रा० टी०—विषण्णा इति । ये हरयो विषण्णाः तान् किं किमर्थमुपेक्षसे उपेक्षणं न युक्तमित्यर्थः, अतः त्रीन्विक्रमान् कर्ता विष्णुरिव त्वं विक्रमस्व ॥ ३७ ॥

३८ ] ति० टी०—कपीनामृषभेण । कपिशब्दोऽत्र छत्रिन्यायेन ऋक्षसाधारणः । रूपं समुद्रतरणोचितमहाविग्रहम् । प्रकृतेस्तद्द्वयत्वाद्रूपमहत्त्वस्वल्पत्वकरणं न तदुपपन्नम् । एवं जाम्बवता हनुमदभिजनपराक्रमादिज्ञापनं तस्य सहजबलाविर्भावाय । तथा ज्ञापनं हि तस्य तदाविर्भावकारणमिति दैवकृतः समयः । यद्यपीतरदिक्त्रयप्रेषितवानराणामपि सप्तसमुद्रपरवर्त्युदयास्ताचलादिपर्यन्तगमनमुपदिष्टं तथापि तन्मार्गे समुद्रमध्ये विंशतित्रिंशदादियोजनेषु पर्वतानां सत्त्वात्तदवलम्बेन प्लवने न तथा कष्टम्, इह तु निरवलम्बं शतयोजनप्लवनमन्यासाध्यमिति भावः । अन्यत्रा मध्यपर्वतास्तु राक्षसैर्भङ्क्त्वा मज्जिता दुर्गसिद्धये । प्लवाश्च मज्जिताः, अत एवात्र सुग्रीवेण ते नोक्ताः, अत एव चत्वारिंशे सर्गे पूर्वदिक्प्रेषितवानरान्प्रति समुद्रान्तरगतदेशमुपक्रम्य 'गिरिभिर्ये च गम्यन्ते प्लवनेन च' इत्युक्तम् ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०—तत इति । ततोऽनन्तरं कपीनामृषभेण जाम्बवता चोदितः प्रेरितः अत एव प्रतीतवेगः स्मृतस्ववेगादिः हनुमान् हरिवाहिनीं प्रहर्षयन् सन् आत्मनो महद्विशालं रूपं चकार ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

१–२ ] ति० टी०—अथ गृहीतमहाविग्रहस्य हनुमतो वानरबलाश्वासनाय निजबलप्रख्यापनपूर्वं समुद्रलङ्घनाय महे-

१ इयं सर्ववानरेति गो. पाठः । २ हनूमन्निति गो. पाठः । ३ तु वै जाम्बवता प्रेति गो. पाठः । ४ महदात्मन इति गो. पाठः । ५ वीर्येणेति गो. पाठः । ६ हनुमन्तामिति गो. पाठः ।

प्रहृष्टा विस्मिताश्चापि ते वीक्षन्ते समन्ततः । [2]त्रिविक्रमं कृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥
संस्तूयमानो हनुमान्व्यवर्धत महाबलः । समाविद्ध्य च लाङ्गूलं हर्षाद्बलमुपेयिवान् ॥ ४ ॥
तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः । तेजसाऽऽपूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५ ॥
यथा विजृम्भते सिंहो [4]विवृते गिरिगह्वरे । मारुतस्यौरसः पुत्रस्तथा संप्रति जृम्भते ॥ ६ ॥
अशोभत मुखं तस्य जृम्भमाणस्य धीमतः । अम्बरीषोपमं दीप्तं विधूम इव पावकः ॥ ७ ॥
हरीणामुत्थितो मध्यात्संप्रहृष्टतनूरुहः । अभिवाद्य हरीन्वृद्धान्हनूमानिदमब्रवीत् ॥ ८ ॥
आरुजन्पर्वताग्राणि हुताशनसखोऽनिलः । बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥
तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः । मारुतस्यौरसः पुत्रः प्लवनेनास्मि तत्समः ॥ १० ॥
उत्सहे य [9]हि विस्तीर्णमालिखन्तमिवाम्बरम् । मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥
बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे । समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२ ॥

न्द्रपर्वतारोहणमाह—तमिति । जृम्भमाणं वर्धमानम् । ते वानराः ॥ १ ॥ २ ॥

रा० टी०—प्रहर्षणप्रकारमाह—तमित्यादिभिः । शतयोजनं शतयोजनपरिमितं समुद्रं क्रमितुमुल्लङ्घितुं जृम्भमाणं वर्धमानमित्यर्थः वेगेनापूर्यमाणं तं प्रसिद्धं महाबलं हनूमन्तं दृष्ट्वा शोकमुत्सृज्य प्रहर्षेण समन्विता वानराः विनेदुः तुष्टुवुश्च । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—तं दृष्ट्वेत्यादि । जृम्भमाणं वर्धमानम्॥१–६॥

३] ति० टी०—कृतोत्साहम्, त्रिलोकीविक्रमणे इति शेषः॥

रा० टी०—प्रहृष्टा इति । ते वानराः कृतोत्साहं त्रिलोकविक्रमणाविषयकोत्साहविशिष्टं नारायणं प्रजा इव समन्ततो वीक्षन्ते हनूमन्तमिति शेषः ॥ ३ ॥

४–६ ] ति० टी०—समाविद्ध्यास्फाल्य ॥ ४–६ ॥

रा० टी०—संस्तूयमान इति । संस्तूयमानो वानरैरिति शेषः हनूमान् लाङ्गूलं हर्षात् समाविध्य प्रस्तार्य बलं स्वमहापराक्रममुपेयिवान् सस्मार ॥ ४ ॥

रा० टी०—तस्येति । तेजसा आपूर्यमाणस्य वर्धमानस्य तस्य हनुमतो रूपं स्वरूपमनुत्तममत्युत्तममासीत् ॥ ५ ॥

रा० टी०—यथेति । विवृते विस्तीर्णे गिरिगह्वरे यथा सिंहो विजृम्भते गात्रविनामं करोति तथा मारुतस्यौरसः पुत्रः संप्रति जृम्भते ॥ ६ ॥

७–८ ] ति० टी०—अम्बरीषं भ्राष्ट्रं तदुपमम्, अत एव दीप्तं प्रज्वलत्। अङ्गारवर्णप्रतप्तभ्राष्ट्रोपममिति यावत् । स्वयं च विधूमः पावक इवाशोभत । 'अम्बरीषोपमं दीप्तं विधूम इव पावकः' इति प्राचीनः पाठः ॥ ७ ॥ ८ ॥

रा० टी०—अशोभतेति । तस्य हनूमतः विधूमः पावक इव दीप्तं मुखम् अम्बरीषोपमं सूर्यसदृशं यथा भवति तथा अशोभत । अम्बरीषशब्दार्थस्तु अम्बरिणामाकाशवतां नक्षत्रगणानामीषः तेजसा पराभूतत्वं यस्मादिति अम्बरिणः सर्वलोकान् आकाशचारिणो वा ईषति स्वतेजसा प्राप्नोतीति वा॥७॥

रा० टी०—हरीणामिति। हरीणां मध्यात् उत्थितो हनूमान् हरीन् अभिवाद्य प्रणम्येदमब्रवीत् ॥ ८ ॥

गो० टी०—अशोभतेति । आदीप्तमम्बरीषमिव स्थितम् जृम्भमाणस्य तस्य मुखं विधूमः पावक इव अशोभत । अम्बरीषं भ्राष्ट्रम् 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—आरुजन्नत्यन्तं भि[10]न्दमानः । हुताशनस्य सखोच्यमानगुणो यो वायुर्गमनशीलोऽनिलोऽस्ति ॥ ९ ॥

१० ] ति० टी०—तस्य मारुतस्याहमौरसः पुत्रः प्लवनेन गुणेन तत्समोऽस्मि ॥ १० ॥

रा० टी०—अरुजन्निति । पर्वताग्राणि अरुजन् अत्यन्तं विदारयन् न निलीयते इत्यनिलः नित्य इत्यर्थः, यो वायुः तस्यौरसः पुत्रोऽहं प्लवनेन धर्मेण तत्समोऽस्मि । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०—अरुजदित्यादि । अनिलः गमनशीलः "अन प्राणने" इत्यस्मादौणादिक इलप्रत्ययः । शीघ्रवेगस्य शीघ्राः वैनतेयादयः तेषां वेग इव वेगो यस्य सः तस्य । तत्साम्यमसहमानस्ततोऽप्याधिक्यमाह—शीघ्रगस्येति । यद्वा शीघ्रवेगस्य अत एव शीघ्रगस्य ॥ ९ ॥ १० ॥

११–१२ ] ति० टी०—मेरुं गिरिमसङ्गेन मध्ये विश्रामाय क्वचित्क्षणमपि स्थितिराहित्येनैव सहस्रशः परिगन्तुमुत्सहे । एकेनैव वेगेन सहस्रवारं प्रदक्षिणं कर्तुं शक्नोमीत्याशयः॥११॥१२

रा० टी०—उत्सहेयमिति । अम्बरमाकाशमालिखन्तमिव विस्तीर्णं सहस्रशो मेरुम् असङ्गेन विश्रमाय किंचित्स्पर्शराहित्येन परिगन्तुं लङ्घयितुम् उत्सहेयम् ॥ ११ ॥

रा० टी०—बाह्विति । बाहुवेगेन प्रणुन्नेन चालितेन सागरेण लोकं समाप्लावयितुमहमुत्सहे ॥ १२ ॥

१ चैव वीक्षन्ते स्मेति गो. पाठः । २ त्रिविक्रमकृतोत्साहमिति गो. पाठः । ३ च बलमेयिवानिति गो. पाठः । ४ विवृद्ध इति गो. पाठः । ५ अम्बरीषमिवादीप्तमिति गो. पाठः । ६ हनुमानिति गो. पाठः । ७ अरुजदिति गो. पाठः । ८ प्लवने नास्ति मत्सम इति गो. पाठः। ९ स्विति रा .पाठः। १० भिन्दान इति युक्तं भाति ।

ममोरुजङ्घावेगेन भविष्यति समुत्थितः । समुत्थितमहाग्राहः समुद्रो वरुणालयः ॥ १३ ॥
पन्नगाशनमाकाशे पतन्तं पक्षिसेवितम् । वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४ ॥
उदयात्प्रस्थितं वापि ज्वलन्तं रश्मिमालिनम् । अनस्तमितमादित्यमहं गन्तुं समुत्सहे ॥ १५ ॥
ततो भूमिमसंस्पृष्ट्वा पुनरागन्तुमुत्सहे । प्रवेगेनैव महता भीमेन प्लवगर्षभाः ॥ १६ ॥
उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् । सागराञ्शोषयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७ ॥
पर्वतांश्चूर्णयिष्यामि प्लवमानः प्लवङ्गमः । हरिष्याम्युरुवेगेन प्लवमानो महार्णवम् ॥ १८ ॥
लतानां विविधं पुष्पं पादपानां च सर्वशः । अनुयास्यति मामद्य प्लवमानं विहायसा ॥ १९ ॥
भविष्यति हि मे पन्था स्वातेः पन्था इवाम्बरे । चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव च ॥ २० ॥

गो० टी०—उत्सहेयमिति । विस्तीर्णमिति मेरुविशेषणम् । वानरसेनाभयनिवृत्त्यर्थं स्वोत्कर्षमपि स्वयं निवेदयति ॥ ११-१३ ॥

१३ ] ति० टी०—समुत्थितोऽतिक्रान्तवेलः ॥ १३ ॥

रा० टी०—ममेति । समुत्थिता महाग्राहाः यस्मिन् स समुद्रः ममोरुजङ्घावेगेन समुत्थितः त्यक्तमर्यादो भविष्यति॥१३॥

१४ ] ति० टी०—पक्षिसेवितं पक्षिराजं वैनतेयमाकाशे पतन्तमहमपि सहस्रशः परिगन्तुं शक्तः । तस्यैकपातं यावदहं सहस्रवारं पतितुं शक्त इति यावत् ॥ १४ ॥

रा० टी०—पन्नगेति । पक्षिसेविते आकाशे पतन्तं पन्नगाशनं पन्नगभक्षकं वैनतेयं सहस्रशो वारं परिगन्तुं शक्तोऽहमस्मीति शेषः, यावत्कालेन यावद्देशं तेनैकवारमुत्पत्यते तावत्कालेन तावद्देशं सहस्रशो वारमुत्पतितुं समर्थोऽस्मीत्यर्थः॥१४॥

गो० टी०—पन्नगेति । पन्नगाशनं स्वोचिताहारलाभाय निरवधिकत्वरासंपन्नम्, यद्वा आहारग्रहणत्वरया सर्वेषां भयावहं पतन्तं न तु वर्तमानम् आकाशे स्वोचितक्षेत्रे । पक्षिसेवित इति स्वपारिकरसंपत्तिरुच्यते । वैनतेयं विनतापुत्रम् अनेन कौमारावस्थायां बलवेगोत्कर्षः सूच्यते । अहं तस्यापि प्राणदातुः पुत्रः । परिगन्तुं परितो गन्तुं प्रदक्षिणीकर्तुं सहस्रशः एकयत्नेन सहस्रशः परिगन्तुं शक्तः आजानसिद्धसामर्थ्योऽस्मि ॥ १४ ॥

१५ ] ति० टी०—उदयगिरेः प्रस्थितमनस्तमितमेव गन्तुं गत्वा स्प्रष्टुमुत्सहे ॥ १५ ॥

रा० टी०—उदयादिति । हे प्लवगर्षभाः ! महता प्रवेगेनोपलक्षितोऽहमुदयात् उदयाचलात्प्रस्थितं रश्मिमालिनं ज्वलन्तं मध्याह्नवर्तिनमित्यर्थः, आदित्यं गन्तुं गत्वा स्प्रष्टुं समुत्सहे ततः स्पर्शानन्तरं भूमिमागत्येति शेषः, असंस्पृष्ट्वा विश्रमार्थं भूमिस्पर्शमकृत्वा अनस्तमितं श्रमाभाववत् यथा भवति तथा आदित्यमागन्तुं प्राप्तुमुत्सहे । सविशेषणमादित्यमुभयान्वयि । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—उदयादिति । उदयात् प्रस्थितम् उदयगिरेर्निर्गच्छन्तम् आदित्यं स्वस्थानात् प्राप्य तेन सह गन्तुं प्रारभ्य ततः पूर्वमेवास्तगिरिमासाद्यानस्तमितं ज्वलन्तं रश्मिमालिनमादित्यमभिगन्तुं प्रत्युद्गन्तुं समुत्सहे । ज्वलन्तमित्यनेन मध्याह्न एवाभिगमनं सूच्यते ॥ १५ ॥

१६ ] ति० टी०—ततस्तं स्पृष्ट्वा पुनः प्रत्यावृत्य भूपर्यन्तमागत्य भुवमस्पृष्ट्वैव पुनस्तदभिमुखं गन्तुमुत्सहे । प्रवेगेन प्रस्तुतैकयत्नेन । एवं च शतयोजनगमनागमनयोर्न कश्चित्प्रयास इति ध्वनितम् ॥ १६ ॥

गो० टी०—तत इति । ततः सूर्यप्रत्युद्गमनानन्तरं भूमिमसंस्पृश्य कुत्राप्यविभ्रम्य भीमेन महता प्रवेगेन प्रारब्धवेगेनैव पुनरागन्तुं पुनरप्येकवारं सूर्यमभिगन्तुमुत्सह इत्यर्थः। शतयोजनस्थां लङ्कां गन्तुं किमुतेति भावः ॥ १६ ॥

१७-१८]ति०टी०—आकाशगोचरा ग्रहर्क्षादयः॥१७॥१८॥

रा० टी०—उत्सहेयमिति । आकाशगोचरान् अतिक्रान्तुमुत्सहे । सागरान् शोषयिष्यामि शोषयितुमुत्सहे शोषणपूर्वकोत्साहो धात्वर्थः एवमुत्तरत्रापि तत्तद्धात्वर्थपूर्वक उत्साहोऽर्थः अत एव न शोषादिप्रतिज्ञावाक्यत्वमेतस्य ॥ १७ ॥

रा० टी०—पर्वतानिति । उरुवेगेन महार्णवं प्लवमानोऽहं हरिष्यामि पारं प्राप्स्यामि ॥ १८ ॥

गो० टी०—उत्सहेयमिति । आकाशगोचरान् ग्रहनक्षत्रादीन् ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—लतानां विविधं पुष्पं पादपानां च पुष्पं हरिष्यामीत्यन्वयः । तच्च पुष्पं वायुवेगेनाहृतं मामनुयास्यति ॥ १९ ॥

रा० टी०—लतानामिति । लतादीनां पुष्पं विहायसा आकाशेन प्लवमानं मामनुयास्यति प्राप्स्यति पुष्पादीनि ग्रहीष्यामीत्यर्थः, अत एव अम्बरे आकाशे मम पन्थाः स्वातेः पन्थाः छायापथ एव भविष्यति गृहीतफलपुष्पादीनां छायापथगतनक्षत्रगणतुल्यतया उपमानोपमेयभावः । सार्धश्लोक एकान्वयी ॥ १९ ॥

गो० टी०—लतानामिति। पुष्पमिति जात्येकवचनम्॥१९

२० ] ति० टी०—स्वातेः पन्था इति । स्वातिपथश्छा-

१ जङ्घावेगेनेति गो. पाठः । २ उच्छ्रितेति गो. पाठः । ३ सेविते इति गो. रा. पाठः । ४ चेति रा. पाठः । ५ अमीति गो. पाठः । ६ संस्पृश्येति गो. पाठः । ७ सागरमिति गो. पाठः । ८ प्लवङ्गमा इति गो. पाठः । ९ वेति गो. पाठः ।

द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः। महामेरुप्रतीकाशं मां द्रक्ष्यध्वं प्लवङ्गमाः ॥ २१ ॥
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम्। विधमिष्यामि जीमूतान्कम्पयिष्यामि पर्वतान् ॥
सागरं शोषयिष्यामि प्लवमानः समाहितः ॥ २२ ॥
वैनतेयस्य वा शक्तिर्मम वा मारुतस्य वा। ऋते सुपर्णराजानं मारुतं वा महाबलम् ॥
न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ॥ २३ ॥
निमेषान्तरमात्रेण निरालम्बनमम्बरम्। सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २४ ॥
भविष्यति हि मे रूपं प्लवमानस्य सागरम्। विष्णोः प्रक्रममाणस्य तदा त्रीन्विक्रमानिव ॥ २५ ॥
बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा। अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ २६ ॥
मारुतस्य समो वेगे गरुडस्य समो जवे। अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥ २७ ॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः। विक्रम्य सहसा हस्तादमृतं तदिहानये ॥ २८ ॥
लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः। तमेवं वानरश्रेष्ठं गर्जन्तममितप्रभम् ॥ २९ ॥
प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः। तच्चास्य वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३० ॥

यापथ इत्युच्यते स तु प्रकीर्णबहुनक्षत्रः। मम पन्था अपि प्रकीर्णबहुपुष्पकः। चरन्तं मार्गमध्ये इत्याकाशं प्रत्युत्पतिष्यन्तमेव ॥ २० ॥

रा० टी०—चरन्तमिति। हे वानराः! आकाशं चरन्तं प्रस्थितवन्तम् उत्पतिष्यन्तम् उर्ध्वं गच्छन्तं निपतन्तं समुद्रपारदेशं प्राप्नुवन्तं मां सर्वभूतानि द्रक्ष्यन्ति। अर्धद्वयमेकान्वयि ॥ २० ॥

गो० टी०—भविष्यतीति। स्वातेः पन्थाः परिपूर्णताराच्छायापथः ॥ २०-२२ ॥

२१] ति० टी०—निपतन्तं परे पारे इति शेषः। द्रक्ष्यन्ति अनेनोत्पतनपतनयोरेककालत्वोक्त्याऽतिवेगः सूचितः ॥ २१ ॥

रा० टी०—महेति। अम्बरमाकाशं ग्रसमानमिव मां द्रक्ष्यध्वं द्रक्ष्यध्वे ॥ २१ ॥

२२ ] ति० टी०—अम्बरं ग्रसमानमिव मां द्रक्ष्यध्वमित्यन्वयः ॥ २२ ॥

रा० टी०—विधमिष्यामीति। सागरं शोषयिष्यामि २२

२३ ] ति० टी०—वैनतेयस्य वेति। त्रयाणामेवैषा सर्वभूतातिशायिनी शक्तिः, नान्यस्येति भावः। प्लुतं मां तौ ऋते यदनुव्रजेत्तद्भूतं न पश्यामि ॥ २३ ॥

रा० टी०—वैनतेयस्येति। शक्तिः प्लवनसामर्थ्यं वैनतेयादित्रयस्यैव अतः सुपर्णराजानं मारुतं वा ऋते विना प्लुतं मां यत्प्राणिमात्रमनुव्रजेत् तद्भूतमुत्पन्नं न प्रपश्यामि। सार्धश्लोक एकान्वयी ॥ २३॥ २४ ॥

गो० टी०—वैनतेयस्येति। मम या शक्तिः सा मारुतस्य वैनतेयस्य वेति संबन्धः ॥ २३-२४ ॥

२४ ] ति० टी०—विद्युदुपमया शैघ्र्येण बहुदेशव्याप्तिर्ध्वन्यते ॥ २४ ॥

रा० टी०—निमेषेति। निरालम्बनं शून्यमम्बरं घनात् उत्थिता विद्युदिव निमेषान्तरमात्रेण निपतिष्यामि व्याप्स्यामीत्यर्थः ॥ २५ ॥

२५ ] ति० टी०—तदा त्रिविक्रमावतारकाले ॥ २५ ॥

रा० टी०—भविष्यतीति। तदा बलिराज्यप्राप्तिसमये त्रीन् विक्रमान् लोकान् प्रक्रममाणस्य विष्णोः रूपमिव मे रूपं भविष्यति ॥ २६ ॥

२६ ] ति० टी०—'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति न्यायेनाह—बुद्ध्येति। निश्चयात्मकान्तःकरणेनेत्यर्थः। तथा मे मनश्चेष्टा मनोव्यापारोऽनुमानरूपः। किं पश्यसि किंविषया च ते मनश्चेष्टेत्यत्राह—द्रक्ष्यामीति ॥ २६ ॥

रा० टी०—बुद्ध्येति। अहं वैदेहीं द्रक्ष्यामि इति बुद्ध्या निश्चयात्मकान्तःकरणवृत्त्याहं प्रपश्यामि निश्चिनोमि। तत्र हेतुः—तथा निश्चयजनिका मे मनश्चेष्टा मनसोऽतीवप्रसादोऽस्तीत्यर्थः, अतः प्रमोदध्वम् ॥ २७ ॥

२७] ति० टी०—वेगजवौ पर्यायौ। अयुतमित्यनेनाप्रमेयबलत्वं प्रकाश्यते, न तु परिच्छेदः। वस्तुतस्तदभावात्। रावणोऽपि वक्ष्यति—'न मारुतस्यास्ति गतिप्रमाणम्' इति ॥ २७ ॥

रा० टी०—मारुतस्येति। योजनानामयुतमहं गमिष्यामि इति मे मतिर्निश्चयः ॥ २८ ॥

२८ ] ति० टी०—वासवस्येति। वासवहस्ते स्वर्गिभोग्यममृतं ब्रह्मणो हस्ते च योगिभोग्यममृतम्। तदानयनवचोऽत्युक्त्यलंकारपरम् ॥ २८ ॥

रा० टी०—वासवस्येति। वासवादेः हस्तात् तत्प्रसिद्धममृतमिह आनये आनयनसमर्थोऽस्मि ॥ २९ ॥

२९-३० ]ति० टी०—समुत्क्षिप्य स्वस्थानादुत्पाटनपूर्वकं गृहीत्वा। यद्वा ततः परतोऽपि गच्छेयमित्यर्थः ॥ २९॥३० ॥

---

१ मेघेति गो. पाठः। २ च द्रक्ष्यथ वानरा इति गो. पाठः। ३ सेति गो. पाठः। ४ येति गो. पाठः। ५ जवमिति गो. पाठः। ६ सागरे इति गो. पाठः। ७ वीति गो. पाठः। ८ अमितौजसमिति गो. पाठः। ९ तस्य तदिति गो. पाठः।

उवाच परिसंहृष्टो जाम्बवान्प्लवगेश्वरः । वीरकेसरिणः पुत्र [1]वेगवन्[2][3]मारुतात्मज ॥ ३१ ॥
ज्ञातीनां विपुलः शोकस्त्वया तात [4]प्रणाशितः । तव कल्याणरुचयः कपिमुख्याः समागताः ॥ ३२ ॥
[5]मङ्गलान्यर्थसिद्ध्यर्थं करिष्यन्ति समाहिताः । ऋषीणां च प्रसादेन कपिवृद्धमतेन च ॥ ३३ ॥
गुरूणां च प्रसादेन [6]संप्लव त्वं महार्णवम् । स्थास्यामश्चैकपादेन यावदागमनं तव ॥ ३४ ॥
त्वद्गतानि च सर्वेषां [7]जीवनानि वनौकसाम् । ततश्च[8] हरिशार्दूलस्तानुवाच वनौकसः ॥ ३५ ॥
[9]कोऽपि लोके न मे वेगं प्लवने धारयिष्यति । एतानीह नगस्यास्य शिलासंकटशालिनः ॥ ३६ ॥
शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च । येषु[10] वेगं [11]गमिष्यामि महेन्द्रशिखरेष्वहम् ॥ ३७ ॥
नानाद्रुमविकीर्णेषु धातुनिष्पन्दशोभिषु । एतानि मम [12]वेगं हि शिखराणि महान्ति च ॥ ३८ ॥
प्लवतो धारयिष्यन्ति योजनानामितः शतम् । ततस्[13]तु मारुतप्रख्यः स हरिर्मारुतात्मजः ॥
आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ३९ ॥
वृतं नानाविधैः [14][15]पुष्पैर्मृगसेवितशाद्वलम् । लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् ॥ ४० ॥
सिंहशार्दूलसहितं मत्तमातङ्गसेवितम् । मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलम् ॥ ४१ ॥

रा०टी०—लङ्कां समुत्क्षिप्यापि गच्छेयमिति मे मतिर्निश्चयः। अर्धं पृथक्—तमिति । तत्र तस्मिन्समये प्रहृष्टाः हरयस्तं हनूमन्तं विस्मिताः सन्तः समुदैक्षन्त ॥ ३० ॥

रा० टी०—तदिति । अस्य हनुमतो वचनं श्रुत्वा जाम्बवान् उवाच ॥ ३१ ॥

३१ ] ति० टी०—वेगवन्निति संबुद्धिः ॥ ३१ ॥

रा० टी०—तद्वचनाकारमाह—वीरेति । हे वीर ! ज्ञातीनामस्माकं शोकस्त्वया प्रणाशितः ॥ ३२ ॥

३२ ] ति० टी०—त्वत्संबन्धिन्यां कल्याणवृद्धौ रुचिरभिलाषो येषां ते । यद्वा तव कल्याणं वाञ्छितारः ॥ ३२ ॥

रा० टी०—तवेति । कल्याणरुचयः कल्याणसंपादकशोभाविशिष्टाः समाहिताः एकाग्रचित्ताः समागताः कपिमुख्यास्तव अर्थसिद्ध्यर्थं मङ्गलानि करिष्यन्ति ॥ ३३ ॥

३३ ] ति० टी०—वृद्धमतमाशीर्वादः ॥ ३३ ॥

रा० टी०—ऋषीणामिति । ऋष्यादिप्रसादादिना त्वं महार्णवं प्लव ॥ ३४ ॥

३४–३५ ] ति० टी०—तव यावदागमनमेकपादेन स्थास्यामः त्वरया प्रियं श्रोतुमेकपादेन स्थित्वा तपश्चरिष्याम इत्यर्थः ॥ ३४ ॥ ३५ ॥

रा० टी०—स्थास्याम इति । त्वद्गतानि गमनानि वनौकसां जीवनानि अतः यावत्तवागमनं तावत् एकपादेन स्थास्यामः ॥ ३५ ॥

रा० टी०—तत इति । ततः जाम्बवद्वचनश्रवणानन्तरं हरिशार्दूलो हनुमान् वनौकस उवाच । तद्वचनाकारमाह—प्लवने सति मे वेगं कोऽपि न धारयिष्यति निवारयितुं समर्थो न भविष्यतीत्यर्थः ॥ ३६ ॥

गो० टी०—स्थास्याम इति । स्थास्यामश्चैकपादेन तथा सत्वराः स्मेत्यर्थः ॥ ३५ ॥

३६–३७ ] ति० टी०—प्लवने सति मम वेगं न कोऽपि धारयिष्यति । शिलासंकटं शिलासमूहः अत एव एतानि स्थिराणि शिखराणीत्यन्वयः ॥ ३६ ॥ ३७ ॥

३८ ] ति० टी०—धातुनिष्पन्दो धातुसमूहः ॥ ३८ ॥

रा० टी०—एतानीति । धातुनिष्पन्दशोभिषु धातुसमूहशोभावत्सु येषु महेन्द्रशिखरेषु अहं गमिष्यामि तानि एतानि शिलासंकटशालिनः शिलासमूहविशिष्टस्य अस्य नगस्य महेन्द्रस्य गिरेः महान्ति शिखराणि स्थिराणि पुष्टाणि अतः इतः प्लवतो मम वेगमेतानि शिखरानि धारयिष्यन्ति । अर्धषट्कमेकान्वयि ॥ ३७—३९ ॥

गो० टी०—नेयमित्यादि । शिलासंकटशालिनः शिलातुङ्गप्रदेशभूयिष्ठस्य 'संकटो दन्तुरे तुङ्गे विपद्रोगविशेषयोः' इति विश्वः ॥ ३६–३९ ॥

३९ ] ति० टी०—मारुतप्रख्यस्तत्सदृशः ॥ ३९ ॥

रा० टी०—तत इति । मारुतप्रख्यः पवनसदृशोऽरिमर्दनो हनूमान् पुष्पैर्वृतं सलिलोत्पीडैर्निर्झरैः संकुलं व्याप्तं नगश्रेष्ठं महेन्द्रमारुरोह । अर्धषट्कमेकान्वयि ॥ ४०—४२ ॥

४०] ति० टी०—मृगैः सेवितं शाद्वलं तृणबहुदेशो यस्य ॥ ४० ॥

४१ ] ति० टी०—सलिलोत्पीडो निर्झरः ॥ ४१ ॥

गो० टी०—वृतमित्यादि । सलिलोत्पीडैः सलिलप्रवाहैः संकुलम् ॥ ४०–४४ ॥

१ हरिसत्तममिति गो. पाठः । २ हनुमन्निति गो. पाठः । ३ मारुतात्मजः इति रा. पाठः । ४ वीति गो. पाठः । ५ मङ्गलं कार्येति गो. पाठः ।
६ प्लवस्वेति गो. पाठः । ७ जीवितानीति गो. पाठः । ८ स्विति गो. रा. पाठः । ९ नेयं मम मही वेगं लङ्घने इति गो. पाठः । १० स्थास्यिति गो. पाठः ।
११ करिष्यामीति गो. पाठः । १२ निष्पेषं पादयोः प्लवतां वरा इति गो. पाठः। १३ तमिति गो. पाठः । १४ वृक्षैरिति गो. पाठः। १५ चरितमिति गो. पाठः ।

महद्भिरुच्छ्रितः शृङ्गैर्महेन्द्रस्य महाबलः । विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ॥ ४२ ॥
बाहुभ्यां पीडितस्तेन महाशैलो महात्मना । रराास सिंहाभिहतो महान्मत्त इव द्विपः ॥ ४३ ॥
मुमोच सलिलोत्पीडान्विप्रकीर्णशिलोच्चयः । वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ॥ ४४ ॥
नानागन्धर्वमिथुनैः पानसंसर्गकर्कशैः । उत्पतद्भिर्विहङ्गैश्च विद्याधरगणैरपि ॥ ४५ ॥
त्यज्यमानमहासानुः संनिलीनमहोरगः । शैलशृङ्गशिलोत्पातस्तदाऽभूत्स महागिरिः॥ ४६ ॥
निःश्वसद्भिस्तदा तैस्तु भुजगैरर्धनिःसृतैः । सपताक इवाभाति स तदा धरणीधरः ॥ ४७ ॥
ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानः शिलोच्चयः । सीदन्महति कान्तारे सार्थहीन इवाध्वगः ॥ ४८ ॥

स वेगवान्वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

४२ ] ति० टी०—उच्छ्रितो महाबलो हनुमान्महेन्द्रस्य महद्भिः शृङ्गैर्विचचार शृङ्गाच्छृङ्गान्तरं जगाम ॥ ४२ ॥

रा० टी०—महद्भिरिति । उच्छ्रितः ऊर्ध्वं प्राप्तो हनुमान् महेन्द्रस्य शृङ्गैर्विचचार शृङ्गेष्वेवोत्प्लुत्योत्प्लुत्य गच्छतीत्यर्थः ४२

४३-४४ ] ति० टी०—ररास स्ववर्तिप्राणिशब्देनेति शेषः ॥ ४३ ॥ ४४ ॥

रा० टी०—बाहुभ्यामिति । महात्मना तेन हनुमता बाहुभ्यां पीडितो महाशैलः सिंहाभिहतो मत्तो द्विपो गज इव ररास अतिभीतस्ववर्तिसिंहादिनादेन नादितोऽभूदित्यर्थः ॥ ४४ ॥

रा० टी०—मुमोचेति । विप्रकीर्णाः प्रक्षिप्ताः शिलोच्चयाः पाषाणसमूहा यस्य स महेन्द्राचलः सलिलोत्पीडान् निर्झरान् मुमोच निर्झरा द्रुतं पेतुरित्यर्थः ॥ ४५ ॥

गो०टी०—वित्रस्तमृगमातङ्ग इत्यादि । पानसंसर्गकर्कशैः पानसंसर्गदृढैः 'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' इत्यमरः । पानप्रवृत्तौ दृढाभिनिवेशैरित्यर्थः । उद्घातः समूहः ॥ ४५-४८ ॥

४५ ] ति० टी०—पाने संसर्गे च कर्कशैरत्यासक्तैः । गन्धर्वाणां तथात्वं च स्वभावः ॥ ४५ ॥

४६-४८ ] ति० टी०—शैलशृङ्गस्य शिलानामुत्पातः पतनं यस्मिन्सः ॥ ४६-४८ ॥

रा० टी०—नानेति । पानसंसर्गेण मादकरससंबन्धेन कर्कशैः उत्कटचित्तैः गन्धर्वमिथुनैः विहङ्गैश्च विद्याधरगणैश्च त्यज्यमानो महासानुर्यस्य सः शैलशृङ्गशिलानामुत्पातः पतनं यस्मात् स महागिरिरभूत् । अर्धचतुष्टयमेकान्वयि ॥ ४६ ॥ ४७ ॥

रा० टी०—निश्वसद्भिरिति । तदा तस्मिन् काले धरणीधरः स महेन्द्रः निश्वसद्भिः भीत्या निश्वासं प्राप्नुवद्भिः अत एव अर्धनिस्सृतैः कथमिदं जातमिति दर्शनाय निस्सारितोर्ध्वभागैः भुजगैः सपताकः पताकाभिः सहित इव आभाति ॥४८॥

रा० टी०—ऋषिभिरिति । त्राससंभ्रान्तैः त्रासहेतुभितद्भिः ऋषिभिस्त्यज्यमानः शिलोच्चयः पर्वतः महति कान्तारे सार्थहीनोऽध्वग इव सीदन्नास्त इति शेषः ॥ ४९ ॥

गो०टी०—ऋषिभिरिति । सार्थहीनः अभूदिति शेषः॥४९॥

४९ ] ति० टी०—मनसा जगाम सस्मारेत्यर्थः ॥ ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥६७॥

स रामः प्रीयतां मत्रमन्तर्यामी कुजाधवः ।
शबरी स्वपदं नीता येन पम्पाऽवलोकिता ॥

रा० टी०—स इति । वेगे समाहितः दृढीकृतः आत्मा मनो यस्य स वेगवान् महानुभावः अतिप्रभावविशिष्टो हनुमान् मनः समाधाय लङ्कां मनसा जगाम प्राप ॥ ५० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रामानुग्रहजन्येयं किष्किन्धाविवृत्तिः परा ।
समाप्तिमगमत् श्रीमान् रामायणशिरोमणिः ॥

गो० टी०—स इति । वेगसमाहितात्मा वेगविषये समर्पितमनाः । मनः समाधाय मनः समाहितं कृत्वा ॥ ५० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

इत्थं शठारिगुरुवर्यपदारविन्द-
सेवारसाधिगतसर्वरहस्यबोधः ।
गोविन्दराजविबुधः प्रमुदे बुधानां
कैष्किन्धकाण्डविषयां विततान टीकाम् ॥ १ ॥

१ उच्छ्रितमिति गो. पाठः । २ महेन्द्रं स इति गो. पाठः । ३ पादाभ्यामिति गो. पाठः । ४ महात्मन इति गो. पाठः । ५ रराजेति गो. पाठः । ६ नागेति गो. रा. पाठः । ७ च विहगैरिति गो. पाठः ८ चलेति गो. पाठः । ९ उद्घातेति गो. पाठः ।

## इति श्रीवाल्मीकिरामायणे विवृतित्रयसनाथं किष्किन्धाकाण्डं समाप्तम् ।